Thanjavur Sarasvati Mahal Series No. 175

# ॥ श्रीशिवरहस्यम् ॥

अंशाः ४–५–६

# SRI SIVARAHASYAM

## AMSAS IV-V-VI

Edited By

V. SWAMINATHA ATREYA
SIROMANI

THANJAVUR MAHARAJA SERFOJI'S

SARASVATI MAHAL LIBRARY
AND RESEARCH CENTRE

THANJAVUR

2016

Price: Rs. 280-00

# BIBLIOGRAPHICAL DATA

| | |
|---|---|
| Title of the Book | : Sri Sivarahasyam-Amsas iv-v-vi |
| Author | : V. Swaminatha Atreya |
| Publisher | : Director,<br>Sarasvati Mahal Library &<br>Research Centre,<br>Thanjavur. |
| Publication | : 175 |
| Language | : Sanskrit |
| Edition | : Second Edition |
| Date of Publication | : 2016 |
| Paper used | : T.NP.L. 18.6 kgs. |
| Size of the Book | : 25 x 19 c.m. |
| Printing Type used | : 16&12 pt. |
| Number of pages | : 518 |
| No. of copies | : 500 |
| Printer | : Sarasvati Mahal Library Press |
| Binding | : Cardboard |
| Subject | : Kavya |
| Price | : Rs. 280-00 |

# PUBLISHER'S PREFACE

The Sarasvati Mahal Library is a renowned institution and respository of manuscripts, maps, paintings and old books. This Library is a centre where research scholars and students community find immense source of literary wealth for their research work. The Library Manuscripts are in palm leaf and paper and they deal with various subjects on Philosophy, Medicine, Astrology, Grammar, Folklore and Mythology. The Publication of books from manucripts is being done with the help of eminent scholars and Pandits of the Library. Now published the second Edition of **SRI SIVARAHASYAM.**

Sivarahasyam Vol.III has been published with Amsas IV-V-VI. This Sivarahasya which is nearly equal to Mahabharata in length is comprising 12 Amsas. Dr. Burnel who was the first compiler of the manuscripts of T.M.S.S.M. Library had referred many of these manuscripts of this work. Subsequent collectionof manuscripts of this Library have also been compared for editing purposes which were recently acquired.

This volume given the stories of the devotees of Siva varrated by Lord Murugan in Amsa IV. Amsa V gives the description of pilgrimages and the places as narrated by Siva to Parvati. The Sixth Amsa is popularly known as Rupu Gita which was narrated by Siva to Ripu.

Our Thanks to the Editor Thiru. P.V. Varadaraja Sarma for his valuable services.

I am thankful to Government for sanctioning funds for publishing the book.

I thank Administrative Officer Thirumathi A. poongothai, M.A., Dr. S. Sudarshan, M.A., B.Lit., M.L.I.S., Ph.D., and Library staffs for having taken sincere efforts to bring out this reprint.

I am sure that this Library publication will be welcomed by the Scholars and the public and run into several editions.

Thanjavur
10.06.2016

**Dr. N. SUBBAIYAN, I.A.S.,**
District Collector and Director,
Sarasvati Mahal Library.

## ॥ श्रीशिवरहस्यम् ॥

## चतुर्थस्य शिवनाम्नोंऽशस्य प्रमेय सङ्ग्रहः ॥

नैमिशारण्ये शौनकादिभ्यः शिवमाहात्म्यप्रतिपादकं शिवरहस्येतिहासं स्कन्देन जैगीषव्याय महर्षय उपदिष्टं क्रममनुसृत्य श्रीसूत उपदिदेश। इतिहासेऽत्र द्वादशांशाः १ महेश २ भव ३ हर ४ शिव ५ भर्ग ६ शङ्कर ७ उग्र ८ भीम ९ सदाशिव १० ईश्वर ११ महादेव १२ ईशाः इति भगवत एव नाम्नाऽङ्किता विराजन्ते। तृतीयो हरांशः त्रयस्त्रिंशत्सहस्रग्रन्थपरिमितः प्रकाशितपूर्वो द्वितीय संपुटरूपेण। शिवभर्गशङ्कर-नामभिरङ्किताः चतुर्थादयस्त्रयोंशाः संप्रति तृतीयसंपुटात्मना प्रकाश्यन्ते येषामत्र क्रमेण प्रमेयपरिच्छेदः समुपदर्श्यते सङ्क्षयः।

तृतीयेंऽशे शिवमहिमश्रवणजातकौतुकेन जैगीषव्येण "कथं नन्दिकेशादयो गणाः गाणापत्यं प्रापुः? अन्ये च स्वस्वाभीप्सितानि?" इति पृष्टो भगवान् स्कन्दः "भगवदपेक्षयाऽपि भागवताः श्रेयांसः। तत्र प्रकारान्तरेण वैगुण्यचिन्तनं नोचितम्। शैला-दनादयः शिवभक्त्यैव श्रेष्ठाः प्रेष्ठाश्च बभूवुः भुक्तिमुक्ती च लेभिरे" इति सामान्यतो निरूप्य शिवभक्तिमाहात्म्यं विस्तरेण वर्णयितुमारेभे।

### नन्दिकेशचरितम् अ. ३–६

माहेश्वरकल्पे माल्यवत्पर्वते शिवभक्तो योगी परिणतवया अनपत्यो वीतहव्यः (शिलादः) चित्रवत्या भार्यया अपत्यलाभाय प्रार्थितो दशवर्षान् तपस्तेपे। "मां यजतस्ते हलाग्रादयोनिजः पुत्रो भविते"ति शङ्करेणानुगृहीतो सौम्यमाचार्यं लब्ध्वा यज्ञे दीक्षितः भूमिं कर्षन् हलाग्रलग्नायां मञ्जूषायां शयानं शिशुमुपलभ्य पत्न्या सह ननन्द। कुमारश्च बालक्रीडनकैरपि शङ्करमाराधयन् - उपनीतः - कृतविद्यो विवाहाय पित्रा प्रचोदितोऽपि तपसे ययौ।

भगवता गाणापत्येनानुगृहीतो हरेण सर्वदेवतासन्निधौ गाणापत्येऽभिषिक्तः गणेशस्कन्दसाम्यं दत्त्वा सभाजितः पितॄणां मानसीं कन्यां सुयशां मुद्वह पितरौ तोषयामास।

## चण्डीशोपाख्यानम् ७-८

कर्णभद्रो नाम गर्गगोत्रो विप्रो भार्यया सुनीत्या सह माल्यवत्पर्वते तपस्तेपे । बाल्यमित्रेण वेदर्मेण राज्ञा हयमेधेन शिवं यियक्षता होतृत्वे निमन्त्रितो दक्षिणारूपेण लब्धा गाश्चारयितुं पुत्रं चण्डीशं नियुयोज । मनोजवसश्चण्डीशोऽटव्यामलाबुपात्रे पयो दुग्ध्वा परमेश्वरमभिषिच्यापूजयत् । गृहागतासु गोषु काश्चिद्दोहविवर्जिता वीक्ष्य पित्रा हेतुं पृष्टः पुत्रः "प्रौढवत्सा गावो न दुहन्ति" इत्याचख्यौ । निलीय पुत्रचेष्टितं निर्वर्णयन् पिता कुपितः पादाभ्यां पार्थिवलिङ्गं विमृद्य पूजां विजघान । कुपितः पुत्रः समिदाहरणार्थेन कुठारेण पितुः पादौ चिच्छेद अनुतप्तः शिवं स्तुत्वा देवीचोदनेन प्रसन्नेन भगवता पितरमक्षतं सञ्जीव्य पितृभ्यामभिष्टुनेन भगवता गाणापत्ये नियोजितः ॥

## भृङ्गिचरितम् अ. ९-१०

मन्दरशैले भृङ्गी महामुनिः केनापि कामेन दिव्यं वर्षसहस्रं तपस्तेपे । नभोवाण्या "प्रदक्षिणं परमा पूजा । तथाऽऽराधये"ति चोदितः शिवमेवकेवलमहोरात्रैः प्रदक्षिणीचकार। भगवान् देव्या कुमाराभ्यां गणैश्च समेत आविर्भूय देवीं "कटाक्षयैमममनुगृहाण" इत्यादिदेश । प्रदक्षिणे स्ववर्जनेन कुपितां च तां प्रसाद्य-भृङ्गिणे च देव्याः स्वाभ्यतिरेकं निरूप्य — प्रणताय प्रसादकाय तस्मै गणपत्वं देव्या दापयामास ।

## उपमन्युचरितम अ. ११-१२

भुमन्युपुत्रो हुमन्युः बह्वृचः । वसिष्टानुजा तस्य भार्या । तयोः पुत्र उपमन्युः । दरिद्रा माता पिष्टोदकं क्षीरमाख्याय बालं पाययतिस्म । एकदा मातुलस्य वसिष्ठस्य गृहं गत उपमन्युररुन्धत्या मातुलान्या दत्तं होमशिष्टं स्वादुपयः पीत्वा विप्रलम्भप्रकुपितो मातरं निर्बबन्ध क्षीरार्थम् । अपूजितमहेशानां क्षीरान्नं न सुलभमिति माता निवेदितो महेशमहिमानं मातृमुखादवगत्य तथा कृतं रक्षाबन्धनमवाप्य पित्रा च सपर्यापद्धति मुपदिष्टस्त्रिकूटशिखरे शिवमाराधयामास। प्रसन्नेन भगवता गाणापत्यदानेनानुगृहीतोऽपि क्षीरान्नभुक्तिमयाचत । परमेश्वरस्तस्मै क्षीराब्धिमेव दद ।

## मार्कण्डेय चरितम् अ. १३-१७

मृकण्डुर्महर्षिः विशालाक्ष्या पत्न्या सह कालञ्जरपर्वते शिवमारराध । यदृच्छाऽऽगतेन नारदेनाचिरभाविनीं पुत्रोत्पत्तिं तस्य षोडशवर्षजीवित्वं च बोधितः तदुक्तमार्गेण

विशेषतः पूजाप्रवणो बभूव। कुमारोऽपि जातः शिवभक्तश्चकाशे । पञ्चदशे वयसि पूर्णे तस्य दुःखितयोः पित्रोर्मुखात् आत्मनो मृत्युमासन्नं श्रुत्वा शिवं तपसाऽतोषयत् । यथा समयं प्राप्ते मृत्यौ भगवता लिङ्गादाविर्भूय निगृहीते – प्राप्तदीर्घायुः पितरावतोषयत् । देवानां प्रार्थनया पुनरुज्जीवितः कालो भगवता शैवानां विषये मृत्योरनवकाशतां तद्विमुखानां नरकभाक्त्वंचानुशिष्टः कालो निवबृते ।

गौतमचरितम् (१८–१९) शाङ्करो गौतमो मुनिः कुशावर्तमधिवसन् इन्द्रधर्षिताहल्यां शप्त्वा त्र्यंबके शिवं पूजयामास । भगवतश्च गोदावरीस्नानेन पत्न्याः शुद्धिं शांभवसमाराधनावसरयोगं च वरत्वेन प्राप्य शापमुक्तया पत्न्या सह पुष्करयोगे शांभवेभ्योऽन्नसत्रमकल्पयत् । तस्मिन्नसूयालुभिः मुनिभिरितरैः तदीये शालिक्षेत्रे चारणाय मुक्तां गां क्षुत्क्षामां तृणैरेव क्षेत्रादपासारयत् । गौस्तु तदप्यसहमाना ममार । गोहत्यामपदिश्या भुक्त्वैव गतान् शांभवान् गौतमः शशाप ।

शुकचरितम् (२०) मैत्रावरुणौ वसिष्ठागस्त्यौ । वसिष्ठाच्छक्तिः । शक्तेः पराशरः । पराशराद्व्यासः । व्यासाच्छुकः इति परम्परा । शुकाय गर्भ एव ज्ञानं शम्भुरूपदिदेश । गर्भनिर्गत एव शम्भुं स्तुवन् शुको निर्ययौ । तस्येदं शुकमहिम्नः स्तोत्रमत्र ।

अगस्त्यसमुद्रपान चरितम् (२१) लोपामुद्रापतिरगस्त्यः अविमुक्तेऽगस्त्येश्वरं संस्थाप्य पूजयामास । देवासुरसंमर्दे देवान् पराजित्य तैरनुद्रुताः दैत्याः समुद्रे निलीय मुहुर्देवानुपारुधन् । देवैः प्रार्थितोऽगस्त्यः शिवप्रसादेन समुद्रं पीत्वा दैत्यानां निलयनस्थानं देवेभ्यो व्यवृणोत् ।

दधीच-क्षुपचरितम् (२२–२३) भृगुवंश्यस्य धुन्धुमूकस्य पुत्रो दधीचः पित्रैव ब्रह्मचर्यमुवास । सूर्यवंश्यः शर्यातिपुत्रः क्षुपश्च तमेव ब्रह्मचर्येणोपससाद । प्ररूढसख्यः क्षुपः सतीर्थ्याय दधीचाय भविष्यं यथाभिलषित वित्त विश्राणनं प्रतिजज्ञे । कालेन राज्येऽभिषिक्तं क्षुपमुपेत्य दधीचः कृतपूर्वां प्रतिज्ञां स्मारयतिस्म । क्षुपः परिजहास । क्रुद्धो दधीचः "क्षत्रियस्य वैष्णवी श्रीरनित्या – ब्राह्मणस्य तु शांभवी श्रीर्नित्ये"ति समाक्रुश्य तपसे ययौ । शिवेनानुगृहीतः । समृद्धलक्ष्मीको वने न्यवसत् । तं द्रष्टुमागतः क्षुपः दधीचेन सत्कृतोऽपि राज्यश्रिया मत्तः तमत्रैर्जेतुमियेष । दधीचो दर्भजालैस्तं प्रतिरुरोध । क्षुपपक्षपाती विष्णुर्दधीचाय सुदर्शनं प्रायुंक्त । तत्तु ममर्म् । तदा दधीचो नारायणाय शांभवानामजय्यत्वमुपादिशत् ।

रिटिचरितम् (२४) उद्दालकपुत्रो रिटिः पित्रा मूढ इत्यधिक्षिप्तः नीलाद्रौ नीलेश्वरं प्रतिष्ठाप्य पूजयन् तस्मात् गणाधिपत्वं प्राप्य शिवसरूपः शिवानुचरः गणेश-स्कन्दावप्यतिरिच्य शिवेन लालितोऽभूत् ।

## कण्वादिचरितम् (२५)

कण्व विश्वामित्र कपिल दुर्वासो भृगु सनन्द सानन्दाद्ययोः महर्षयः विविधैः स्वकीयैः मार्गैः परमेश्वरमाराध्य पारमैश्वर्यं लेभिरे ।

ब्रह्मानुग्रहचरितम् (२६-२८) जगत्सृष्टिकर्मणाऽवलिप्तस्य शिवनिन्दकस्य ब्रह्मणः शिरश्छेत्तुं परमेश्वरो रुद्रमादिदेश । छिन्नस्य पञ्चमस्य ब्रह्मशिरसः कपालेन हस्तलग्नेन खिन्नं रुद्रं श्रीरुद्रमावर्तयन् जगदटितुं—ब्रह्माणं च शिवार्चनं कर्तुमादिश्य भगवानन्तर्दधे । तथेति सर्वतः पर्यटन् रुद्रो वैकुण्ठे विष्वक्सेनेन निवारितः शूलाग्रेण विष्वक्सेनं निहत्यान्तः प्रविष्टो विष्णुना स्वस्य भिक्षया प्रसादितो विष्वक्सेनं प्रबोध्य विष्णुं चानुगृह्य ततः प्रस्थितो वाराणस्यां मणिकर्णिकातीर्थे ब्रह्मकपालं हस्तात् पतितं दृष्ट्वा तत्रैव स्नात्वा भर्गमाराध्य तेनानुगृहीतोऽभवत् । शिवाज्ञया ब्रह्मापि वाराणस्यां कपालमोचनतीर्थे निमज्ज्य शिवनिन्दा-ऽपराधान्मुक्तो बभूव ।

इन्द्र ब्रह्महत्या मोचनचरितम् ॥ २९ ॥ वृत्रहत्याजनितया ब्रह्महत्यया परीतः शतक्रतुः हालास्यक्षेत्रे श्रीमीनाक्षीसुन्दरेश्वरौ संपूज्य मुक्तोऽभूत् ।

तेजिनीवने विष्णोः चक्रप्राप्तिः अ. ३०—३१ ॥ दैत्यनिग्रहाय देवैः प्रार्थितो हरिः । स तेजिनीशमाराधयामास । कावेरी तत्सपर्यानुकूलं प्रावहत् । श्रीसहाया विष्णुः देवैर्महर्षि-मिश्र साश्चर्यं पर्यवेक्ष्यमाणः पञ्चाब्दान् यथावत्तपस्तप्त्वा शिवार्चनपरो भगवता तद्भक्ति-प्रकाशनाय सरोजपुष्पेष्वेकस्मिन्न्यूनीकृते स्वमेव नेत्रमुत्पाट्य सहस्रतमाम्भोजतया समर्प्य प्रसन्नस्य परमेश्वरस्य सकाशात् सुदर्शनं चक्रं प्राप्य दैत्यान् विजिग्ये ।

भगीरथचरितम् अ. ३२ भगीरथोऽपि हिमाद्रौ पितॄनुद्दिधीर्षुः केदारेशमाराध्य गङ्गामानिनाय ।

## वृषभानुग्रहचरितम् अ. ३३ ॥

भगवतो वाहनं धर्मरूपी वृषभोऽपि गोमुक्तीश्वरसन्निधौ चतुर्भिस्त्रिभिः द्वाभ्या-मेकेन च पादेन भुवमवष्टभ्य तिष्ठन् दीर्घं तपस्तप्त्वा तद्भक्तिमेव वव्रे । भगवता च नन्दा सुभद्रा कामा सुनन्देति चतस्रः धेनूः परिणायितः ।

वरुणादि देवानुग्रहचरितम् अ. ३४ ॥ कण्वशापात् जलरोगपीडितो वरुणः। भृगुशापेन सर्वभक्षो वह्निः। मतङ्गशापात् निर्वीर्यो वायुः। माण्डव्यशप्तो यमः। देव्येकान्तदर्शनापराधदुष्टः कुबेरः। छायापरित्यागदुष्कृती सूर्यः। दक्षशापात् यक्ष्म परिगृहीतश्चन्द्रमाः। एतेऽन्ये च देवाः शिवमाराध्य दुरितान्मुक्ता मुमुदिरे।

विश्वावस्वाद्यनुग्रहचरितम् अ. ३५॥ विश्वावसुप्रभृतयो गन्धर्वाः अश्विनौ मरुतः आदित्याः पितरः ग्रहाः अन्ये च देवाः कुम्भघोण मध्यार्जुन श्रीवाञ्छ्य छायावनादिक्षेत्रेषु भगवन्तमाराध्य परमामभीष्टसिद्धिमवापुः।

## ॥ भर्गाख्यस्य पञ्चमांशस्य कथासंग्रहः ॥

पञ्चमांशे गिरिशो गिरिजां प्रति द्वादश ज्योतिर्लिङ्गप्रभावमवर्णयत्। अत्र द्वादशज्योतिर्लिङ्गानां गणनविषये कश्चन भेदो दृश्यते। लोके प्रसिद्धं किञ्चन परिसंख्यानम्। तदनुसृत्य शङ्करभगवत्पादाचार्याः द्वादशज्योतिर्लिङ्गान्येवमस्तुवन्।

सौराष्ट्रदेशे वसुधावकाशे ज्योतिर्मयं चन्द्रकलावतंसम्।
भक्तिप्रदानाय कृतावतारं तं सोमनाथं शरणं प्रपद्ये ॥ १ ॥

श्रीशैलशृङ्गे विविधप्रसङ्गे शेषादिशृङ्गेऽपि सदावसन्तम्।
तमर्जुनं मल्लिकपूर्वमेनं नमामि संसारसमुद्रसेतुम् ॥ २ ॥

अवन्तिकायां विहितावतारं मुक्तिप्रदानाय च सज्जनानाम्।
अकालमृत्योः परिरक्षणार्थं वन्दे महाकालमहं सुरेशम् ॥ ३ ॥

कावेरिका नर्मदयोः पवित्रे समागमे सज्जनतारणाय।
सदैव मान्धातृपुरे वसन्तं ओंकारमीशं शिवमेकमीडे ॥ ४ ॥

पूर्वोत्तरे पारलिकाभिधाने सदाशिवं तं गिरिजासमेतम्।
सुरासुराराधितपादपद्मं श्रीवैद्यनाथं सततं स्मरामि ॥ ५ ॥

आमर्दसंज्ञे नगरेच रम्ये विभूषिताङ्गं विविधैश्च भोगैः।
सद्भुक्तिमुक्तिप्रदमेकमीशं श्रीनागनाथं शरणं प्रपद्ये ॥ ६ ॥

सानन्दमानन्दवने वसन्तं आनन्दकन्दं हतपापवृन्दम्।
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये ॥ ७ ॥

यो डाकिनी शाकिनिका समाजे निषेव्यमाणः पिशिताशनैश्च ।
सदैव भीमादिपदप्रसिद्धं तं शङ्करं भक्तहितं नमामि ॥ ८ ॥

श्रीताम्रपर्णी जलराशियोगे निबध्य सेतुं निशि विल्वपत्रैः ।
श्रीरामचन्द्रेण समर्चितं तं रामेश्वराख्यं सततं नमामि ॥ ९ ॥

सिंहाद्रिपार्श्वेऽपि तटे रमन्तं गोदावरीतीर पवित्रदेशे ।
यद्दर्शनात्पातकजातनाशः प्रजायते त्र्यंबकमीशमीडे ॥ १० ॥

हिमाद्रिपार्श्वेऽपि तटे रमन्तं संपूज्यमानं सततं मुनीन्द्रैः ।
सुरासुरैर्यक्ष महोरगाद्यैः केदारसंज्ञं शिवमीशमीडे ॥ ११ ॥

एलापुरीरम्य शिवालयेऽस्मिन् समुल्लसन्तं त्रिजगद्वरेण्यम् ।
वन्दे महोदारतरस्वभावं सदाशिवं तं विषणेश्वराख्यम् ॥ १२ ॥

एतानि लिङ्गानि सदैव मर्त्याः प्रातः पठन्तोऽमलमानसाश्च ।
ते पुत्रपौत्रैश्च धनैरुदारैः सत्कीर्ति भाजः सुखिनो भवन्ति ॥ १३ ॥

अस्मिन् सन्दर्भे—गोकर्णेशस्य प्रसङ्गो न दृश्यते । शिवरहस्ये तूपलभ्यते। शिवरहस्ये च प्रथमेऽध्याये यत्र द्वादश लिङ्गानि परिगणितान्येकशः तत्र सोमनाथो विसृष्टः । परन्तु विस्तरोपाख्याने पश्चात् चतुर्दशादि सप्त दशान्तेषु चतुर्ष्वध्यायेषु सोमनाथ महिमा प्रतिपाद्यते । तथाऽपि भीमशङ्करस्य प्रस्तावो नास्ति । परन्तु पश्चात् द्वादशलिङ्गानन्तर्गत क्षेत्रविवरणे भीमशङ्करः प्रस्तुतः । किमत्र विनिगमकम्? परमेश्वरः स्वस्य क्षेत्राणां महिमोपवर्णने इदन्तां इयत्तां वा नाङ्गीकरोति। अत एव दक्षिण देशे प्रसिद्धस्य कालहस्ती क्षेत्र माहात्म्यान्तर्गतस्य कण्णप्प चरितस्य श्रीवैद्यनाथ क्षेत्र उद्धारः सङ्गच्छते ।

एवमुपोद्घृत्य पञ्चमस्य भर्ग नाम्नोंऽशस्य प्रमेयं सङ्गृह्णीमः ।

## महाकालक्षेत्रम् अ. १–६

उज्जयिन्यां महाकालक्षेत्रे क्षिप्रानदीप्रान्ते सूर्यवंश्यश्चित्ररथो नाम राजा । तस्य रूपवत्यो बहवो भार्याः । सुरथादयो दशोत्तरशतं पुत्राः। समृद्धं राज्यम् । विल्ववन-परिवृतं महाकालस्यालयं निर्माय सदा सपर्यापरो बभूव। सनकादयस्तं द्रष्टुमाजग्मुः। तस्योदारां शिवभक्तिं विलोक्य तत्पूर्वजन्मवृत्तान्तमबोचन् ।

दरिद्रो मातापितृहीनः सभार्यः कणयाचको दुःखितः सर्वैरुत्सार्यमाणः कश्चित् ब्राह्मणोऽत्रैव क्षेत्रे मरणेनाप्युपेक्षितोऽवात्सीत् । "शिवक्षेत्रे मृत्युर्नायात्येव । अत्रैव बलिभोजनेन जीवाव" इति भार्यावचनेन तत्रैव निवसन् कमपि शाम्भवं ददर्श । "प्राक्तने जन्मनि शिवानर्चनादियं ते दुर्गतिः । पञ्चाक्षरमुपदिशामि । तमभिजपन् सिद्धोभवे"ति तेनानुकम्पितः दीक्षाऽऽदानानुपदमेव धूमपटलात्मना निर्गतेन दुष्कृतेन मुक्तस्तेजस्वी ब्रह्मादीनामपि विस्मयजनको महाकालमाराधयत् ।

शाम्भवश्च जैगीषव्याय नन्दिना प्रोक्तं देवीदेवसंवादलब्धं १ भस्म २ रुद्राक्षधारण ३ पञ्चाक्षर ४ श्रीरुद्रावर्तन ५ अर्चनरूपं शैवधर्मपञ्चकं यथावदनुष्ठेयं ब्राह्मणायाख्याय ययौ । स एव भूसुरस्त्वं राजाधिराजोऽसि — इति । अत्रान्तरे तत्र समागता ब्रह्मादयो देवाश्च राज्ञा चित्ररथेन सादरं सत्कृतास्तस्य भक्तिं प्रशस्यैवमवादिषुः ।

"राजन्! कुमुदपर्वते भार्यया वसुमत्या सह वसत उतथ्यस्य महर्षेः पुत्रः — महाकाल इति ब्रह्मणैव कृतनामधेयो महाकालक्षेत्रे साम्बं तपसा तोषयामास । ब्रह्मादयस्तस्य तपसा विस्मिताः कैलासमुपेत्य तस्मै वरं प्रदातुं परमेश्वरं प्रार्थयामासुः । भगवानपि तस्मै प्रसन्नो गाणापत्यमदात् । त्वमपि महाकालेश प्रसादेन गाणापत्यमवाप्स्यसि" इति । ईदृशो महाकालेशमहिमा ।

## ओङ्कारक्षेत्र प्रभाववर्णनम् अ. ७-१०

नर्मदातीरे प्रसिद्धमोङ्कारक्षेत्रम् । तत्रोङ्कारकुण्डे पावने तीर्थे जलक्रीडा प्रसक्त इन्द्रो गणैः सागरे क्षिप्तः । इन्द्राणीप्रभृतिभिः प्रसादित परमेश्वरो लिङ्गादाविर्भूय पुरुहूतममोचयत् । कृतयुगे देवासुरविमर्दे देवैः पुनः पुनरुद्धास्यमानादैत्याः शुक्रमुखात् वेदापहारमुपायं विचिन्त्य शङ्खासुरं तत्र व्ययूयुजन् । अपहृतेषु वेदेषु विह्वला देवाः ओङ्कारेशं शरणं ययुः । भवेन सन्दिष्टो नन्दी त्रिविष्टपं सत्यलोकं चातीत्य वैकुण्ठमुपेत्य शंभोः सन्देशमुक्त्वा विष्णुमानिनाय । यथा शिवनिर्देशं मीनरूपेण शङ्खं विजित्य वेदान् प्रत्यानीय ददौ विष्णुः । वेदानात्मनि प्राविलापयत् शिवः । ओङ्कारनाद एवावशिष्टः । वेदाभावविसंस्थुले जगति खिन्ना देवाः ओङ्कारेशं ब्रह्मणे वेदान समर्पयितुं ब्रह्माणं च वेदानादातुमुपच्छन्दयामासुः । बाणलिङ्गसंपूरिते ओङ्कारकुण्डे स्नात्वा मासमेकं मामाराध्य वेदान् गृहाणेति भवेन प्रचोदितो ब्रह्मा तथैव कृत्वा वेदान् जग्राह । विश्वेश्वर सन्निधानेन गङ्गेव नर्मदा लोकपावन्यभवदोङ्कारेश्वरसामीप्येन ।

बलिविजयगर्वितो वामनस्त्रिविक्रमः कालञ्जरसमीपस्थे तीर्थे शम्भुना विजिग्ये। तत्तीर्थं वामनपाताभिधम्। बलेः पुत्रो बाणः सहस्रलिङ्गार्चकः। अथाऽप्यवलिप्तः। तन्निवर्हणाय शिवेनैव प्रेरितेन श्रीकृष्णेन बाहुचतुष्टयावशेषं छिन्नबाहुर्नष्टदर्पो बाणः ओङ्कारेश्वमुपास्य गणपो बभूव। किरातवेषेण पार्थं प्रतियुध्यन् भगवान् पार्थप्रहाराङ्कित ललाटो बभूव। तादृशानि बाणलिङ्ग मुहूर्तानि कुण्डेऽत्र लभ्यन्ते यानाराध्य सर्वे श्रेयोभाजो भवन्ति।

## केदारेश्वरम् अ. ११–१३.

हिमवद्गिरेः पूर्वशिखरे केदारेश्वरं क्षेत्रम्। ब्रह्मादिभिर्देवैः मौद्गल्यादिभिर्महर्षिभिः शिवभक्तैरन्यैरपि सदाऽध्युषितम्। स्वल्पयाऽपि सपर्यया कोटिगुणित महाफलप्रदम्। परमपावनमतीव प्रसिद्धं च। तस्य दक्षिणे भागे गौर्या अन्धकासुरं हत्वा तद्धस्तात् शूलमादाय सर एकं स्वानितम्। तत्रैव गौरीश्वराख्यं लिङ्गं प्रतिष्ठाप्य देवी तपस्तेपे। तल्लिङ्गदर्शनादिन्द्रो वृत्रहत्यादुरितान्मुक्तः। वरुणः उतथ्यभार्याहरणजं पापमपोहयामास। शनैश्वरोऽपि माण्डव्यशापान्निवृत्तोऽभूत्। कुबेरः धनाध्यक्षतां केदारेश्वरप्रसादेन लेभे। त्र्यङ्गिरः प्रभृतयोऽन्ये च महर्षयः सत्पुत्रादीन् वरानवापुः।

देवी प्राक्तने जन्मनि दाक्षायणी। पित्रा यज्ञे कृतं भर्तुरवहेलनमसहमाना देहं हित्वा हिमवतः पुत्री व्यजायत। तत्रैव गिरेः शिखरे स्वलाभाय तपश्चरन्तं भगवन्तमेव भर्तारमाप्तुं नारदोपदेशेन गौरीशिखरे तपसा भगवन्तं प्रीणयित्वा भर्तारमवाप। ततो भगवान् गणेशस्कन्दाभ्यामुमया च सह मन्दराद्रौ रजताचले च विहर्तुं प्रवृत्तो गौरीविरहाक्षमेण हिमवता प्रार्थितः केदारशिखरे नित्यवासमङ्गीचकार। केदारेश्वरस्योर्ध्वभागे नन्दीश्वर, उदीच्यां स्कन्देश्वरः, पश्चिमे गणनाथेश्वरश्चेति नाम्ना केदारेश्वर लिङ्गसन्निभानुभावानि लिङ्गानि विराजन्ते।

## सोमनाथम् १४–१७।

सौराष्ट्रदेशे चन्द्रवंश्यो बृहद्बलोनाम राजा बभूव। अनपत्यः स सपरिवारः कदाचित् पयोष्णीतीरे महर्षेर्मुद्गलस्याश्रममुपेत्य तेन शिवदीक्षापुरःसरं श्रीशिवपञ्चाक्षरीमनुमुपदिष्टः। मन्त्रिषु राज्यं न्यास्यत्। वर्षत्रयं शिवबरिवस्याक्रममनुसृत्य सोमनाथक्षेत्रे परमेश्वरमाराधयामास। तस्य भवे भक्त्यतिशयमवलोक्य सोमनाथक्षेत्रगताः शाम्भवास्तमतीव बहुमन्यन्त। ईषदूने वत्सरत्रये भगवता प्रहिता नन्द्यादयो गणमुख्यास्तस्याश्रम-

मागत्य तेन सविशेषं सत्कृताः सोमस्य दक्षजामातुः तारानायकस्य रोहिण्यामत्यासक्तस्य विषममितरास्वाचरतो राजयक्ष्मरोगाभिभवं सोमनाथाराधनेन तन्निवृत्तिं चावेद्य वृन्दवलस्य शिवभक्तिमुत्तेजयामासुः । अथ तीव्रेण तस्य तपसा प्रसन्नो भगवान् महारथादिनामकं पुत्रशतमत्युत्तमप्रभावं तस्मा अनुजग्राह ।

## नागनाथेश्वरम् अ. १८

आवर्तकक्षेत्रे भगवान् सदाशिवो नागनाथनाम्ना विराजते । तत्र नागकुण्डतीर्थं पातालविवरतया प्रसिद्धम् । तेन समागतः शेषस्तदभिमुखः श्रीरुद्रमावर्तयन् धराधरणसामर्थ्यं वरं वव्रे । छलेन सुपर्णीं (विनतां) दासीकृत्य गर्विता कद्रूः पश्चात् स्वपापविमोचनाय नागनाथमाराध्य स्वपुत्रान् सुपर्णभयान्मोचयामास । भगवतेश्च कम्बलाश्वतरौ नागौ कुण्डले । वासुकितक्षकौ कङ्कणे । शङ्खपालैरुपत्रकौ नूपुरे । धृतराष्ट्र पिच्छिलौ हारौ । एवं पुत्रान् समार्पयत् कद्रूः भगवते ।

घुसृणेशम् – अ. १९ । भीमरथ्या नद्या उदग्भागे त्रिंशत्क्रोशदूरे घुसृणेश क्षेत्रं विराजते । अन्धकासुरं हत्वा भगवान् रक्ताक्तमपवित्रं शूलमनार्यमिति घुसृणेशसन्निधावपातयत् । तत्र शूलपातं नामतीर्थमुदभूत् । अमृतमथनात्परं नीरसताद्दुःखिताक्षीर-समुद्रादयोऽब्धयः शिवं तपसाऽऽराध्य अनर्घानन्तरत्नैश्वर्यं पुनर्वरं लेभिरे । उद्दालको मुनिश्चात्र मोक्षकामः शिवं तपसा तोषयामास । तस्मात् वैराग्यदार्ढ्यार्थं संसारासारता-ऽऽविष्करणपूर्वकं ज्ञानोपदेशं च प्राप्य कृतार्थो बभूव ।

वैद्यनाथम् – अ. २० । वनखण्डनाम्नि प्रसिद्धे क्षेत्रे भगवान वैद्यनाथनाम्ना सन्नि-धत्ते । अतिदुर्गमे तत्र वनप्रदेशे भगवता सखित्वेन संभावितः कश्चन भिल्लो जपादिभि-स्त्रिसहस्रैः भिल्लैः परिवृतो मत्स्यमांसादिभिः भगवते सपर्यामाचरन् भगवता च त्रिरोङ्कार-ध्वनिनाऽऽवेदितप्रीतिरुवास । तदतिचारशङ्किभिस्तद्वनवासिभिर्महर्षिभिः प्रार्थितो भगवान् भिल्लभक्तिं निरूपयितुकाम एकदा महतीं वृष्टिमुत्पाद्य मुनिगणान् पूजार्थमागतान् आलय एव निरूध्य समनन्तरसमागते भिल्ले स्वोचितां पूजामाचरति, स्वाङ्गीकारसूचकमोङ्कारं नोद-चरत् । स्वनेत्रकं स्वनेत्रं च तस्मा अदर्शयत् । भिल्लश्च दुःखितः स्वनेत्रं स्वयमुत्पाट्य शिलीमुखेन, तत्स्थाने समर्पयत् । लिङ्गादाविर्भवन् भवो भिल्लमन्यांश्च महर्षीननुजग्राह ।

इदं चरितं दक्षिणदेशे कालहस्ती क्षेत्रे निर्वृत्तमिति प्रसिद्धिः । श्रीशङ्कर-भगवत्पादाचार्यास्तु "मार्गावर्तितपादुका पशुपते" रिति क्षेत्रविशेषमनुद्दिश्यन्त एव वृत्तमिदं स्मरन्ति ।

त्र्यम्बकम् – अ. २१–२२ ॥ मन्दरः कैलासो मेरुरन्ये च पर्वता गिरिशस्यावासभूताः। त्र्यम्बकस्तु भगवत्स्वरूपो गिरिः। शक्रधर्षितामहल्यां परित्यज्य दुरितनिवारणार्थो गौतमः कोकामुख केदारोङ्कारामरकण्टक कुरुक्षेत्र प्रभास पुष्करादीनि क्षेत्राण्यटन् शान्तिमप्राप्यैव काश्यां मणिकर्णिकायां स्नात्वा विश्वेशमभिपूज्य तेन "त्र्यंबकं गच्छ, सिंहयुक्ते बृहस्पतौ गोदावर्यां स्नाही"त्यनुगृहीतः। सुदीर्घं तपश्चरन् प्रसन्ने भगवति मत्पावनाय पुण्यं तीर्थं देहीति ययाचे। तदा च भगवता जटाञ्चलाद्विनिर्मुक्ता गङ्गावृद्धगङ्गेत्यभिधीयमाना गौतममहल्यां च परिपूय तीर्थेभ्यः सर्वेभ्य उत्कृष्टा वरीवर्ति। गोदावरी शम्भुशिरोधृताया गङ्गायाः बाणोत्पत्तिभूमिभूताया नर्मदायाश्चोत्कर्षमात्मन आकांक्षमाणा गङ्गाधरं तपसा प्रसाद्य वृद्धगङ्गेत्यभिधां कैवल्यदानशक्तिं गङ्गा गोदावरीमिश्रजलाभिषेकस्य परमपावनत्वं च बर्लेभे।

गोकर्णक्षेत्रम् – अ. २३–२६ ॥ पश्चिमसमुद्रतीरे गोकर्णक्षेत्रम्। दर्शनादेव मुक्तिदम्। साधकानां सर्वसिद्धिप्रदम्। वामदेवादिः शिवभक्ताग्रेसरैः विशिष्य जामदग्न्येन चाध्युषितम्। पुरातनं क्षेत्रम्। भार्गवोऽत्र क्षत्रियवधपापमपौहयत्। वामदेवादयोऽत्र ज्ञानमवापुः। शक्रं दुर्वासः शापो विससर्ज। चन्द्रो गुरुतल्पगमनपापमक्षालयत्। भानुरत्र छायात्यागदुरितान्निववृते। बाणादयोऽसुराः अत्र तपस्सिद्धिमवापुः। विदर्भाधिपो वसुमना नामनृपः क्षेत्रेऽस्मिन् प्रदोषव्रतमाचर्य गणाधिपो बभूव।

भार्गवो रामोऽत्र भगवतो धनुर्वेदं परशुं च लब्ध्वा पितृघातकं कार्तवीर्यं तथा क्षत्रियांश्च सर्वान् त्रिःसप्तकृत्वो हत्वा काश्यपाय भूमिं दत्त्वाऽत्र स्थलेशूर्पाकरं नामाश्रमं निर्माय प्रशान्तोऽद्यापि तपश्चरति गूढः। ज्ञानार्थिनां वामदेवादीनामनुग्रहायाघोरमुखात् मूर्तिमानाविर्भूय शङ्करो ज्ञानं तेभ्य उपदिदेश। ते च उपनिषत्साररभूतयास्तुत्या (पृ. २२९–२३८) अस्तुवन्।

श्रीशैलम्–अ. २७ ॥ श्रीशैलक्षेत्रे घण्टाकर्णो नाम भक्तस्त्रिपुरान्तकलिङ्गमस्थापयत्। तस्य च घण्टाकर्णेश्वरलिङ्गस्य पुरतः सुधाकुण्डम्। श्रीशैलेश लिङ्गस्याग्रे विभूतिकुण्डम्। हाटकेशलिङ्गस्याग्रे हाटकेशकुण्डम्। देव्याः भ्रमराम्बिकेति नाम। कामदहनदुःखिता श्रीः स्वपुत्रं तपसा श्रीशैलेशप्रसादस्योदजीवयत्। ततः श्रीशैल इति क्षेत्रनाम। श्रीशैलमाहात्म्यं भगवानेवमाह। "देवासुरयुद्धे स्कन्देन तारकाद्यसुरनिबर्हणं ज्ञात्वा कुपितः शुक्रः 'फणिरूपः षष्ठीप्रियो मुग्धो भवेति" स्कन्दं शशाप। स्कन्दश्च फणिरूपः भारमाराध्य

वीतकिल्बिषो 'बभूव' काव्यश्च कुपितेन मया ग्रस्तो जठरे वसन् मामभिप्लूय शुक्ररूपेण निर्जगाम ॥"

सेतुबन्धक्षेत्रम् – अ. २८ ॥ त्रिपुरासुरसंहारात् परं शिवो धनुषः कोट्या लीलया सागरसिकतासु रेखामकरोत् । सा धनुष्कोटिः । अत्रेदं चिन्त्यम् । "रामेण या कृता रेखा धनुषा क्षारसागरे"– इति किल धनुष्कोटिक्षेत्र पूजां कारयन्ति क्षेत्रपुरोहिताश्चिरेण । तत्र च प्रमाणं श्रीमद्रामायणम् । अन्यादृशीयं कथा शिवकृताया रेखाया रामेणाम्रेडनं कृतमिति धनुष्कोटिक्षेत्रस्य प्रभावमुच्छ्राययति ॥

तत्र गन्धमादनपर्वते भगवान् लिङ्गाकारो वसति । चतुर्मुखोऽत्र तिलोत्तमाधर्षण-पापमजहात् । ईशानः ब्रह्मशिरः खण्डनाघं निस्ततार । नारायणः भृगुशापान्मुमुचे । भार्याहरणकर्शितो रामः कुम्भजं गुरुं लब्ध्वा श्रीशिवपञ्चाक्षर्युपदेशमवाप्य गन्धमादनेश्वर-मभ्यर्च्य सेतुबन्धं विधाय रावणं विजित्य सीतामवाप्य रावणवधपापनिवृत्तये गन्धमादनात् पश्चिमतो रामेश्वरं प्रतिष्ठाप्य निर्वृतः । सेतुमाधवरूपेण नारायणोऽपि परमेश्वरं नित्यमर्चति ।

हरिद्वारादि गङ्गासागरान्तक्षेत्राणि अ २९–३१ ॥ केदारात्पश्चिमे हरितपर्यर्या-भूमिः हरिद्वारम् । तत्र शिवभक्तस्य मुरासुरस्य लक्ष्मीविषये सापराधस्य दननादुद्भूतं पापं परिहर्तुं नारायणो लक्ष्म्या सह तपस्तेपे ॥ विष्णोः प्रार्थनया च हरिद्वारेश्वरलिङ्ग-पीठात् गङ्गा निर्जगाम । हरिद्वारात् कुरुक्षेत्रं ततो मधुवनं प्रयागं अयोध्यां अभिसरन्ती गङ्गा सागरं गता देव नदी । प्रयागे सरस्वती तीरे शम्भुप्रीत्यै यज्ञमकरोत् ब्रह्मा । नदी भूता सरस्वती तु भूलोकवासमात्मनो नारोचयत् । ब्रह्मा तामदृश्या भवेति शशाप । सरस्वती सङ्गमस्य पश्चिमतः अक्षयवटः ततः पश्चात् प्रयागेशः । तच्च त्रिवेणी तीर्थमतीव पुण्यप्रदम् । ततोऽयोध्यायां सरय्वा सङ्गता देवनदी । अयोध्यायां सुधेश्वर लिङ्गमति-प्रसिद्धम् । ततो गङ्गासागरसङ्गमदेशे सागरेश्वर नाम लिङ्गम् । तस्य पूजनेन तदर्थं बिल्ववनपरिपालनेन भिल्लः कश्चित् गणाधीशतामवाप ।

चन्द्रवंश्यः कुरुसंवरणो नाम राजा मृगया प्रसङ्गेन कञ्चित् जाङ्गल प्रदेशं प्रविष्टो हरिमेधसो मुनेराश्रममुपजगाम । पूर्वमेव हरिमेधाः शिवेनाबोधि "कुरुसंवरणो नाम चन्द्रवंश्यो राजा जाङ्गलेऽस्मिन् स्वनाम्ना क्षेत्रमावासयिष्यति । तत्र कुरुक्षेत्रधराख्यं लिङ्गंस्थापयिष्यति" इति । राजानं दृष्ट्वा तां कथामन्ववदद्दृषिः । तदनुसारेण कुरु-

संवरणो विश्वकर्मणा भगवत आलयं क्षेत्रे च प्रकल्प्य परमेश्वर माराधयामास । तत्रैव च परशुरामः समन्तपञ्चकह्रदमखानयत। तदिह परमपावनं पित्र्यं तीर्थम् । तस्य पश्चिमतो वेणिका नदीतीरे भगवतो भासमाकर्षणात् प्रभास नाम्ना प्रसिद्धं क्षेत्रम्। तत्र सर्वसिद्धि प्रदः सिद्धेशो नाम देवश्चकास्ति । मङ्कणको मुनिः शिवभक्तः सिद्धः । तत्करादविरता प्रसृता क्षीरधारा । तेन मुदितो नृत्यन् स जगदेवानर्तयत्। ब्रह्मादिभिर्देवैः स्तुतः शङ्करः स्वाङ्गुष्ठचोटकेन मङ्कणकाश्चे भस्म राशिमुद्भाव्य तद्भसास्तन्त्यानुग्रजाह । इन्द्रपुत्रो जयन्तः। स ऐरावतपुत्रे कलभमारुह्य मञ्चग्न तत्पादलग्नात् मृते गोतर्णके तत्स्वामिना शप्तः "श्वित्रीभवे"ति । स प्रभासे सिद्धेश्वरं संपूज्य शापादमुच्यत ।

पुष्करक्षेत्रम्—अ.-३५ ॥ अश्वमेधेन यियक्षतो दुहिणस्य हस्तात् यत्र पुष्करं पतितम्—तत् पुष्करक्षेत्रम्। तत्रस्थं पुष्करेश्वरलिङ्गं सर्वाभीष्टप्रदम् । विश्वकर्मा ब्रह्मण आदेशेन तस्यालयं निर्मिमाय। तत्र गङ्गासरस्वती सङ्गमे यज्ञशालामारचयत् । सावित्री ब्रह्मणः पत्नी न शालामाजगाम । विलम्बेन जातक्रोधो ब्रह्मा शक्रं पत्न्यन्तरसंपादने नियुयोज । तेनानीतो काञ्चिदाभीरकन्यां दृष्ट्वा अत्रिमध्वर्युं "दीक्षये" त्यादिदेश। तदा सावित्री तत्र समाजगाम । तदा ब्रह्माणमनुनयतिस्म सावित्रीं पत्नीस्थाने स्वीकर्तुम्। ब्रह्मात्वाभीरकन्यामेव दीक्षायितुं पुनरादिशत् । तथैव चकारात्रिः । सावित्री क्रुद्धा। इन्द्रमभिशशाप "नहुष इन्द्रो भवेत । तमुपतिष्ठतां शचीति" । पुत्रहीनो भवेत्यग्नि मशपत् । "हरः शिरस्ते छिनत्तु" इति भर्तारमपि । द्वापरे आभीरवंशे जन्म ते भूयादिति हरिं च । दक्षयज्ञे रुद्रेण दण्डिताभवथेति ब्राह्मणान्। अथ विष्णुना सान्त्विता सावित्री आभीरकन्यां सखीत्वेन परिगृह्य यज्ञे सहयोगमाचचार ।

परन्तु तत्र शंभवा न पूजिताः । तेषां प्रार्थनया ब्रह्मकपालपाणिः यज्ञवाट-मुपेतो रुद्रः तस्मिन्नशुचित्वभावनया पराङ्मुखा विप्रा अभवन् । ब्रह्मणा प्रार्थितोऽपि रुद्रः "सरस्वत्यां स्नात्वा पुष्करेशं दृष्ट्वा भोक्ष्य" इत्युक्त्वा ब्रह्मकपालं तत्रैव निधायान्तर्दधे। ब्रह्मकपालमपसारयितुं प्रवृत्ताः परिचारकाः पुनः पुनस्तत्रासन्नं कपालं दृष्ट्वा श्रान्ताः। अथ सर्वैः स्तुतः पुष्करेशः शम्भवानां महिमानमनुवर्ण्य तत्पूजनाय ब्रह्माणमादिदेश। यज्ञश्चाविकलः समपद्यत ।

भीटेश्वरम् — अ. ३६ ॥ पश्चिमाम्भोधितीरे कुणिकुम्भेश्वरक्षेत्रं (पाण्डुरङ्गक्षेत्रं) वर्तते । कुणि महर्षिणा प्रतिष्ठितं तत्क्षेत्रम् । यत्र श्वेतो नामा कालमृत्युपीडितो राजा

शिवमभ्यर्च्य मृत्योर्मुक्तः । अतश्च तस्य कालञ्जरमित्यपरं नाम । तत्र विष्णुः विष्णुसत्र-मन्वतिष्ठत् । शिवमतोषयत् । भीमरथ्याश्च दक्षिणेतीरे स्ववासमरोचयत् । गोनन्दकनाम्नो गोपालकस्य धेनवः स्वपयसा तत्र शिवमभ्यषिञ्चन् । तत्रैका नन्दिनी नाम । तस्याभाव-परीक्षणाय तामेकाकिनीं शार्दूलरूपधरो जग्राह । वत्सं पाययित्वा मातरमापृच्छय प्रत्या वर्तेयेति प्रतिज्ञाय तथैव प्रत्यागतां धेनुं स्वविनिमयेन मातरं मोचयितुमुद्युक्तं वर्णकं च दृष्ट्वा कृपापरवशस्तां धेनुं तं वर्णकमन्याश्च गाः अनुजग्राह महेशः ।

सुदर्शनचरितम् अ. ३७–३९ ॥ आवन्तिको द्विजः सन्मार्गाद्भ्रष्टः सकृत्स्वगृहे केनापि ब्राह्मणेनानुष्ठितस्य शिवपूजनस्य दर्शनरूपेण पुण्यलेशेन सह यमभटैर्नीतो नरकेषु यात्यमानः भगवत्प्रेरितैः गणैः मोचितः ।

प्रसङ्गाचेन सहैव नरकमनुभवद्भिः सकृदसकृच्च शिवनामोच्चारण सुकृतभाग्भिः जनैरनुगतः कैलासं नीतः । ताननुसृत्यागतान् यमभटान् स्वगणांश्चोद्दिश्य भगवान् शिव-नामोच्चारण पूजनादि प्रभावमुपदिदेश ।

शिवनामसहस्रम् — अ. ४० ॥ अन्तिमेऽध्याये देव्या प्रार्थितो भगवान् शेषेण वदनसहस्रोदितं नामसहस्रमवर्णयत् ।

## शाङ्करनामांशः षष्ठः ॥

श्रीशिवरहस्यस्यास्य षष्ठमंशं ऋभुगीतासंहितामुपलक्षयन् अस्य ग्रन्थस्य प्रकाशन-संपादकोऽहं प्रेक्षावद्भ्यः किंचिद्वक्तव्यं वक्तुमुत्सुकोऽस्मि । श्रीशिवरहस्यास्य प्रकाशनाय प्रेरणामकुर्वन् श्रीकाञ्ची कामकोटिपीठाधिपतयः श्रीचन्द्रशेखरेन्द्र सरस्वती श्रीपादाः । तेषामाज्ञां शिरसि कुर्वन् ग्रन्थपर्यवेक्षणं यथाशक्ति कृत्वा कृत्यमपारंबुध्वा पुनस्तेषां सन्निधौ प्रणम्य श्रीशिवरहस्यनामाकथयम् ।

तस्मिन्नेव क्षणे महतोत्साहेन मामन्वगृह्णन्ते तैर्वचोभिः । तेषां वचांसि यथामति यथास्मृति सङ्गृह्णामि । "श्रीशिवरहस्यस्य प्रकाशनं कर्तव्यमिति किमयं मया प्रेरित-मित्यवधृतं त्वया किम् ? तदेवैतद्वक्तव्यमासीच्च । इदानीं वदामि । श्रीमहाभारतस्य श्रेष्ठयं — तस्मिन् भगवद्गीताऽन्तर्गतेति । एवं श्रीशिवरहस्यस्य श्रेष्ठयं — तस्मिन्षष्टेंऽशे ऋभुगीताऽन्तर्गतेति । काऽत्र सङ्गतिरिति विचारय । शिवपारम्यं महता परिकरबन्धेन

S. 4

महत्वाऽवष्टम्भेन निरूपयत्ययं ग्रन्थः श्रुतिभिर्गीयमानं परमं दैवतं परमेश्वर एवेति निष्कर्षमपि षष्ठेंऽशे ऋभुगीतायां श्रुत्यन्तविचारे प्रसक्ते – सकलोपनिषत्सारभूतं सिद्धान्ततत्वेन समैरभ्युपेतमद्वैततत्त्वमेव कुले कथं विचार्य निर्गुणं ब्रह्मैव सत्यमित्युपबृंहयति । तदेतदन्यादृशं महिमास्य ग्रन्थस्य । शिवपारम्यवादिनाऽपि ग्रन्थेन परमं तत्त्वं नापलप्यते इति विशेषः ।

अन्यच्च । अयमितिहासः पुरातनोऽपि न प्रसिद्धः । तत्र तत्र तालपत्रेषु हस्तलिखिता मातृका उपलभ्यन्ते । महीसुरराज्यस्थितेन पुरातनग्रन्थ प्रकाशनस्थापनेन कन्नडलिप्यां कन्नडानुवादपूर्वकं मुद्रितं लभ्यते । नागरी लिप्यां मुद्रापयितुं प्रवृत्ताः केचन श्रेष्ठिवर्याः प्रथमं द्वितीयं चांशं मुद्राप्य निवृत्ताः । ग्रन्थलिप्यां तु न कुत्रापि मुद्रितमिति स्थितिः । अस्यां परिस्थित्यां अस्मिन्नन्तर्गता ऋभुगीता द्रविडदेशे कांश्चन द्रविडपण्डितानावर्जयदिति किं जानासि ?

"नाहं जानामि"

द्रविडदेशस्थितेन केनचन द्रविडमठाधिपतिनाऽस्य ग्रन्थस्य माहात्म्यं प्रामाणिकतां चोपलभ्य कथं चिदयं ग्रन्थः प्रकाशनीय इति मत्वा जनानां प्ररोचनाय प्रथमं ऋभुगीता द्रविडानुवादमापादनीयेति श्रद्धाय केनचित् पण्डितेनानुवाद्य प्रकाशिताभूत् । प्रथममुद्रणं झटिति सर्वैर्गृहीतमिति पुनर्मुद्रणमपि कृतम् । एतेन किं ज्ञायते ? नातिप्रसिद्धोऽयं ग्रन्थः तत्र तत्र शिवभक्तैः हस्तलिखितो रक्षितः । विद्वांसः केचनास्य प्रामाणिकतायां कृतावष्टम्भाः स्वग्रन्थेषु अस्य वचनान्युदाहरन् । यद्यपि श्रीमद्रामायणमहाभारतादिवत् पण्डितपामरनिर्विशेषं सार्वजनीनो नासीदयं ग्रन्थः तथाऽपि संस्कृतविद्वज्जनानतीत्य द्रविडादिपण्डितेष्वपि तस्य महानादर आसीदिति निरवद्यस्वयं प्रकाशरूपता ब्रह्मण इव श्रीशिवरहस्यस्याप्यस्तीति तस्य प्रकाशनां कर्तव्यम्" इति ।

तादृशमहिमपोषकोऽयं षष्ठोंशः । तस्यायं प्रमेयसंग्रहः ।

सूतः शौनकादीनां कृते जैगीषव्य गुहसंवादं अनुवदति । कैलासे शङ्करः निजभक्ताग्रेसराय ऋभवे औपनिषदं ज्ञानं संगृह्योपादिशत् । अद्वैतानन्दभरितो जीवन्मुक्त ऋभुः तत्र तत्र सञ्चरन् केदारमवाप । तत्र सन्निहिताः निदाघशुकादयो महर्षयः तमुपसद्य "भगवतः सकाशादवाप्तं ज्ञानमस्मभ्यं वितरयेति प्रार्थनामकुर्वन् । ताननुजिघृक्षु ऋभुः" शाम्भवानां विषये किमपि नास्ति गूहनीयं नाम ।

तस्माद्यथागृहीतं वच्मीति प्रारभत । अ. १ ॥

त्वमेव ब्रह्मेत्युपदेशः अ. २ ॥

दृश्यं सर्वं मिथ्या चिदाभासरूपम् । ब्रह्मैव सत्यम् । निर्गुणस्य ब्रह्मणः पूजा एवं कर्तव्येति प्रकार उपदिश्यते अ. ३ ॥

अखण्डैकरसं ब्रह्मेत्यखण्डानुभूत्युपदेशः अ. ४ ॥

दृश्यं सर्वं शशविषाणवत्परमार्थतोमिथ्या प्रतीयमानः सर्वोभ्रम एवेत्युपदेशः अ. ५ ॥

परस्मिन् ब्रह्मणि निमज्जनं तीर्थस्नानम् । नान्यत् । निरधं निष्कल्मषं ब्रह्म अ. ६ ॥

ब्रह्मैव सत्यमिति निश्चयात्मकं ज्ञानम् ब्रह्म तर्पणम् । ब्रह्मैवाहमिति ब्रह्मण्यात्माहुतिः होमः अ. ७ ॥

जीवन्मुक्तो लक्ष्यते अ. ८ ॥

विदेहमुक्तो लक्ष्यते अ. ९ ॥

सर्वमात्मस्वरूपम् इति निरूपणम् अ. १० ॥

सर्वमात्मा । सोहम् इति बोधः अ. ११ ॥

निखिलं ब्रह्मैव । नान्यस्य सत्ता अ. १२ ॥

प्रतिभासमानं सर्वमसत् । सत्यमवशिष्टं चिन्मात्रम् अ. १३ ॥

अखण्डस्वरूपानुसन्धानमार्गः अ. १४ ॥

चित्तजयोपायः अ. १५ ॥

चित्तशान्तिर्लक्ष्यते अ. १६ ॥

परस्वरूपज्ञानेन परस्वरूपात्मनास्थितिः अ. १७ ॥

अखण्डस्वरूपध्यानमार्गः अ. १८ ॥

ज्ञानिनामनुभवः अ. १९ ॥

परस्वरूपनिश्चयेन परामुक्तिः अ. २० ॥

ब्रह्मात्मचिन्तनम् अ. २१ ॥

अखण्डस्वरूपनिश्चयः अ. २२ ॥

अद्वैतस्वरूपम् अ. २३ ॥

आनन्दस्वरूपभावनयाऽऽनन्दावाप्तिः अ. २४ ॥

शुद्धब्रह्मभावना अ. २५ ॥

अद्वैतेऽभेदनिष्ठा अ. २६ ॥

शुद्धस्वरूपानुसन्धानेन शान्तिलाभः अ. २७ ॥

महावाक्यार्थविचारः अ. २८ ॥

सन्मात्रस्वरूपनिदिध्यासनम् अ. २९ ॥

परब्रह्मनिश्चयेन परानन्दानुभवः अ. ३० ॥

चतुःषष्टिभिरुदाहरणैरद्वैतोपबृंहणम् अ. ३१ ॥

प्रत्यक्परयोर्द्वैतमित्यद्वैतशब्दार्थविचारः अ. ३२ ॥

अखण्डात्मज्ञानविवेकः अ. ३३ ॥

ऐतदात्म्यमिदं सर्वम् । सर्वं खल्विदं ब्रह्मेति वचनविचारः अ. ३४ ॥

अद्वैतनिश्चयेनात्मसमाधिः अ. ३५ ॥

अखण्डपरस्वरूपभावनया मनोविलयः । अहं ब्रह्मभावनयाऽज्ञाननाशः–इत्युपदेशः अ. ३६ ॥

सकलोपनिषत्सारभूतमद्वैततत्त्वमिति निर्देशः अ. ३७ ॥

ऋभुगीतोत्कर्षः अ. ३८ ॥

ऋभुर्गुरुः शिष्यं निदाघं पृच्छति कीदृशस्तेऽध्ययनानुभव इति निदाघ आत्मनः परब्रह्मैकतानतां विवृणोति अ. ३९ ॥

स्वभिन्नेतरविलयेन गुरुमप्यात्मनि विलीनं पश्यन् वन्दनोपचारादिकं सर्वं कृत्रिमं निरर्थकमनुसन्धाय निदाघः स्वस्थोऽभवदिति अ. ४० ॥

निदाघः अहं ब्रह्मास्मीति प्रत्येति अ. ४१ ॥

निदाघः ऋभुगीतायाः प्रभावं गुरोः प्रभावं चानुसन्धाय परमेश्वर कृपयैवालोकं सर्वं सर्वेभ्यः सिद्ध्यतु इत्याशास्ते अ. ४२॥

निदाघस्य जीवन्मुक्तिः अ. ४३ ॥

ऋभुः पुनरपि गीतामखिलां सङ्गृह्णाति । जैगीषव्यः गुहस्य कृपां ऋभुगीतोपदेशरूपामनुसन्दधाति । सूतोऽपि शौनकादिभिरेतदुपदेशाय सभाजितः अ. ४४ ॥

एवं परिसमाप्नोति षष्ठोंऽशः शङ्कराभिधः ।

ग्रन्थस्यास्य शोधनाय तञ्जपुरी सरस्वतीमहालय उपलब्धा मातृका एव संवीक्षिताः । बहवो मातृकाः शिथिलाः काश्चनापूर्णाः तत्र तालपत्रेषु आन्ध्रलिपिमय्यः मातृकाः पञ्चशतवत्सरेभ्यः प्राग्लिखिताः संपूर्णाः ॥ A ॥

तासामेवोद्धाराः नागरीलिपिमय्यः काकदलिखिताः पूर्णाः । A ॥ तथा महीसुरपुरशासनेन कन्नडलिप्यां मुद्रिताः कन्नडानुवाद सहिताः । ता अपि शुद्धाः पूर्णाः ॥ B ॥

एतासु प्रायशो न भूयान् पाठभेदः । परन्तु आयुर्वेदाचार्य वा वा नटराजशास्त्रिभिः सरस्वतीमहालयायोपहृताः मातृकास्तु क्वचन सार्थकं पाठभेदं वहन्ति । एतासां चतसृणामनुसन्धानेन परिष्कृतमिदं मुद्रितं प्रकाशनम् । तत्र ग्रन्थमूले दत्तः पाठः आन्ध्रलिपि तदुद्धारमातृकास्थः । पृष्ठपादेषु B सङ्केतेनोद्धृतः पाठः महीसरपुर प्रकाशनात् कन्नडाक्षरमयादुद्धृतः । C सङ्केतितः वा. वा. न. कोशादुद्धृतः ।

उच्छ्वसितमीदानीं महान्तमिममपारणीयं भारमवरोप्य पत्रेषु । भूयान् विलम्बो जातोऽस्य प्रकाशने । तथाऽपि भगवतः परमेश्वरस्य कृपयैव पूर्तिमगादिदं कर्म । अधमर्णोऽस्मि प्रथमं सरस्वतीमहालय निर्वाहकाय श्रीयुतस्य A पञ्चनाद महोदयाय—यः प्रकाशनस्यास्यापतितानन्तरायानुदधार तदा तदा । तथा मम भ्रातरौ श्रीशिवे बालकृष्णशास्त्रि राधाकृष्णशास्त्रिणावपि मम बहूपाकुर्वाताम् । प्रथमः पाठशोधने मुद्रणाय ग्रन्थलेखने च । तथा द्वितीयो मुद्रितानामक्षर शोधने च । ताभ्यां विना ममेदं कर्म दुःसाधमेवाभूत् ।

प्रार्थये भगवन्तं श्रीशिवरहस्य द्वादशांशरूपमात्मन इतरानप्यंशान् प्रकाशयितुमिमं जनं समर्थयतु—इति ।

तञ्जपुरी,
२५-७-१९८३.

स्वामिनाथ आत्रेयः
सरस्वती महालयस्य,
अतिथिसंपादकः.

# AN APPEAL

Manuscripts on Palmleaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The Manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar King of Tanjore, **Rajah Serfoji,** has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world famous **"Sarasvati Mahal Library".** It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

**DISTRICT COLLECTOR AND DIRECTOR**
**Sarasvati Mahal Library,**
**Thanjavur.**

# EDITORIAL INTRODUCTION

## to Volume Three.

This is the third volume of Sri Sivarahasyam comprising the **Amśas IV, V** and VI-published for the first time in Devanagari script by the **T. M. S. S. M.** Library of Thanjavur. The second volume published in the year 1971 **(A. D )** contains Amśa III in two parts

### Amśa IV Śiva

Suta continues his discourse to Saunaka and others at Naimiśa forest relating what he heard from Skanda-who expounded the greatness Śiva to Jaigiṣavya.

### Nandikesvara Caritam chap. 1 to 6.

*Maheśvara Kalpa* is a concept of time in Hindu lore counting back to many million years. In those days there was a sage by name '*Śilāda*' son of *Vitahavya* in the Malava mountains. His wife *Citrāvati* pleaded with her husband to worship Lord Śiva and beget a son. Reciting 'Śrīrudra' many times Śilāda worshipped Sankara Sankara was pleased; appeared before him and directed him to perform a yagṇa and assuerd him that when ploughing the land, for the performance of the yagṇa he would find a child. It so, happened. Śilāda completed the yagṇa and brought up the child in Vedic tradition. The boy was very pious from the childhood. He was initiated into Vedic lore in time. Discarding marrige he went into an intense penance. Śiva appeared before him and offered him many boons. But the boy preferred only service of the lord. He was anointed the leader of his Gaṇas in the presence of all Devas by Śiva. He was known as Nandi and was treated as equal to Gaṇeśa and Subrahmanya. Then he married the daughter of Pitṛs-by name Suyagṇā and stood in constant attendance before Śiva in the form of a Bull, wherever Śiva would choose to appear.

### Caṇḍiśa (7–8)

Karṇabhadra of garga gotra was doing penance with his wife at the top of the hill Mālyavān. He was requested by his friend (since boyhood) the king of *VIDARBHA* to assist him in his *AŚVAMEDHA* (Horse sacrifice). He was given at the end of the sacrifice many cows as Dakṣiṇa. He entrusted the cows to the care of his son *Caṇḍiśa*. The boy *Caṇḍiśa* an ardent devotee of Śiva, milked the cows in the shell of a bottle gourd and poured the entire, milk on the head of a Śivalinga, which he worshipped in the grazing field. Finding the cows barren his father inquired of him the reason. The boy attributed maturity of the calves as the reason, for their barrenness. The father would not believe the boy, so watched him and found out the truth. In anger

he ran towards the Linga and kicked it. At the very moment the boy cut off the leg of his father. And then he realised his mistake, pleaded with his Lord for rectification of his misdeed. Śiva was pleased with the boy and restored the leg of his father. CAṆḌISA was taken into the fold of chief GAṆAS by Śiva.

## Bhṛṅgi (9-10)

A Sage by name BHṚṄGĪ was in constant penance of Siva. A voice was heard by him that 'going around me (PRADAKṢIṆA) would be pleasing to me very much'. He made his rounds of Siva day and night. Śiva accompanied by his spouse PĀRVATĪ and sons Gaṇeśa and Subrahmaṇya appeared before him and asked Pārvatī to bless the sage. She was already angered by the Ṛṣi, ignoring and avoiding her in his PRADAKṢIṆA. Śiva enlightened him of his inseparable unity with Devi. Bhṛṅgī realised the truth and prayed for pardon. He was also taken into the fold of Gaṇas on the recommendation of Devi.

## Upamanyu (11-12)

*BHUMANYU* had a son *Humanyu* who was well versed in Vedic lore, and married to the sister of Vasiṣṭha. They begot a son by name *UPAMANYU* The poor lady fed the child with the diluted paste of corn flour in the place of milk. Once, when the child happened to visit the hermitage of his uncle Vasiṣṭha, he was given the milk of the divine cow *KĀMADHENU* by ARUNDHATĪ wife of Vasiṣṭha. The child insisted on pure milk, when he returned home. The mother explained to the child that nobody who had not worshipped Śiva as ordained by Vedas could aspire for pure milk food. The boy learnt the method from his father and worshipped Śiva accordingly. Śiva appeared before him and took him in his fold of Gaṇas. Yet the boy wanted milk. He was given the ocean of milk.

## Mārkaṇḍeya (13-17)

The sage MṚKAṆḌU was in deep penance with his wife Viśālakshi in KĀLANJARA mountains. Narada came by his way and told him about the imminent birth of a boy, who would live for only sixteen years. He continued to worship Śiva. A boy was born to them. At the age of fifteen, the boy learnt from his parents the prospect of his death in the near future Undaunted he worshipped Lord Śiva more vigorously. The lord of Death came in time, but was prevented by Lord Śiva. Śiva blessed Mārkaṇḍeya with long life. The Lord of Death learnt the lesson of his life, that he should not play with the lives of ŚIVABHAKTAS.

## Gautama (18-19)

Gautama, the husband of Ahalyā, discarding the fetish of married life, was worshipping TRYAMBAKA on the hills of *KUŚAVARTA*. Ordained by Śiva

he took *Ahalyā* to *GODĀVARĪ* to cleanse herself of her sins. Then he wanted to feed thousands of devotees of Śiva on the day of Puṣkara, on the banks of Godāvari. But many of them out of jealousy manovred a cow to graze his field. When Gautama tried to drive out the cow, by a sprout of the corn, the cow died on the spot. Dispising him for cow slaughter, they refused to take food at his camp. Enraged by their wanton hatred, Gautama cursed them.

## Śuka (20)

*VASIṢTHA - ŚAKTI - PARĀŚARA - VYĀSA - ŚUKA* is the order of chronology of great seers Śuka was given the benediction of realisation of supreme truth in the womb of his mother by Lord Śiva. His out pourings of BHAKTI is called "SUKAMAHIMNAS STOTRA" a gem of poetry.

## Agastya (21)

Agastya the husband of Lopāmudrā established a Linga in Avimukta (Vārānasi) and worshipped him. There was a war going on between Devas and Asuras intermittently, at times Devas winning and at other times Asuras. When Asuras were defeated, they plunged themselves into the depth of ocean and caused trouble to Devas. They could not be reached in the wilderness of the ocean Devas prayed to Agastya for help. He just gulped the whole water in three spoons and left the ocean dry. The asuras were brought out of their hide out and vanquished.

## Dadhichi - Kṣupa (22-23)

Dadhica, son of *DHUNDHUMUKA* of *BHṚGU-CLAN* studied under his father. His class-mate was *Kṣupa*, son of *ŚARYĀTI* of *SURYA-CLAN*. In a weak moment of their friendship, *KṢUPA* promised *DADHICHA*, so much of wealth as he would desire. Later *Dadhica* wanted to cash in the promise, but was turned down by *KṢUPA*. Angered at the insult *DADHICA* went in dedicated penance of Śiva and was blessed with much more wealth than he asked for from *KṢUPA*. *KṢUPA* was enticed to see his rival's wealth. A fight ensued in which *VIṢṆU* took the side of the king and Śiva that of the Brahmin. VIṢṆU'S *SUDARŚANA CAKRA* was nullified. VIṢṆU standing aghast at the defeat was enlightened by Dadhica of the greatness of Śiva.

## Riti (24)

Riṭi, the innocent son of UDDĀLAKA was called a fool by his own father. Dejected, he went out and prayed fervantly for Siva's grace at Nila hills. Siva was pleased with the simpleton's devotion and fondled him with greater affection than that he would bestow on Gaṇeśa and Subrahmanya.

## Kanva and Others (25)

*KANVA, VIŚVĀMITRA, KAPILA, DURVĀSA,* BHṚGU and SANANDA attained Sivahood by their intense devotion.

## Brahma (26–28)

Brahma the creator of the world, with undue pride of his work, spoke about Śiva in a belittling manner. Śiva let loose, a part of himself Rudra, to pluck the head of Brahma, the fifth one. The skull of the head got stuck in the hand of Rudra. Rudra was asked to go round the world chanting Sri Rudra.

Brahma was advised to go on worshipping Śiva, at holy places. Rudra was blocked on the way to Vaikuṇṭha by *VIṢVAKSENA, RUDRA* killed *Viṣvaksena* by his Sūla (trident). Entering Vaikuṇṭha, he was pleased with the *BHIKṢA* offered by *VIṢNU* and restored *VIṢVAKSENA* to life. Further on his journey, suddenly the skull fell down from his hand, while he was at *MANIKARNIKĀ GHAT* at *VĀRĀNASI*. He took bath at *Manikarnika* and joined His supreme being. Śiva. Brahma too bathed at the ghat and got purified of his sin of belittling Siva.

## Indra (29)

Got rid of his Brahmahatyā sin (the sin of killing Vṛtra, the great warrier Brahmin) by worshipping Lord Sundareśa at Madurai.

## Tejinivanam (30-31)

This is the place where Viṣnu worshipped Lord Śiva with thousand lotuses and completed the worship by offering one of his eyes when he found that he was short of one lotus. Pleased with his devotion Lord Śiva gave him SUDARŚANA. With this weapon, he killed many mighty Asuras.

## Bhagiratha (32)

Worshipped Lord *Kedāranātha*. With his benevolent help he brought *Ganga* to earth and relieved his forefathers of their sins by immersing their dead bodies with Ganga flow

## Vṛṣabha (33)

DHARMA the eternal rhythm - *ṛta* - of the world was born in the form of a bull to carry Lord Śiva on his back. He worshipped Lord *GOMUKTIŚVARA* to attain his position and incidentally got married to four cows by name *NANDA, SUBHADRA, KAMA,* and *SUNANDA.*

## Varuna and others (34)

*Varuṇa* was cursed by the sage *Kaṇva* for his misbehaviour to suffer Dropsy. *Agni* the lord of fire was cursed by *BHṚGU* to eat himself up along with the fire-wood. *Vayu*, the lord of air, was punished by *Matanga* to lose his visibility. *Yama* was cursed by *Mandavya* to have a cycle of births. Then *KUBERA* who looked at *Devi* with passion, *SŪRYA* who left his wife *CHĀYĀ* in the lurch. and *CANDRA* with tuberculosis. These and other Devas got rid of their ill predicaments after worshipping Lord *Śiva* at many places.

## Viśvāvasu and the other lesser Gods (35)

Worshipped Lord parameswara at *KUMBHAKONAM*, *THIRUVIDA-MARUDUR*, *SRĪVĀNCHYA*, *CHĀYĀVANAM* and other places.

## Amśa V called Bharga

In this Amśa Lord Śiva narrates the greatness of the famous Jyotirlingas numbering twelve. They are:—

1. KEDĀRA
2. OMKĀRA
3. VAIDYANĀTHA
4. GHUSṚṆEŚA
5. NĀGANĀTHA
6. MAHĀKĀLA
7. BHIMEŚA
8. TRYAMBAKA
9. VIŚVEŚA
10. SRISAILA
11. GOKARṆEŚA
12. RĀMEŚVARA

Here is a discrepancy in identifying twelve *Jyotir Lingas*. There is a popularly recognised cluster of twelve *Jyotir Lingas* which is acclaimed by *Śankara Bhagavatpāda* in his *Dvādaśa Linga Stotra*. This *ITIHĀSA* differs *GOKARNA* does not find a place in the popular version. Here in this *Itihāsa* in the initial enumeration in the first chapter the famous Somanātha is left out. In the detailed exposition, Somanātha is included, but BHIMEŚA is left out of the cluster, though mentioned later in the course of dealing with other holy places. Perhaps *Parameśwara* who identifies these places to *Pārvati* does not attach much importance to confining himself to twelve places. Hence in the initial enumeration he omits the famous *Somanātha* and in the detailed exposition he gives pride of place to Somanātha and leaves out *Bhimesa*. Even in the detailed exposition, the story of *Kannappa*, popular in Tamilnadu, which is linked to *KĀLAHASTI*, is dealt with elaborately here with reference to Vaidya-nātha, the lord of Physicians, who submits himself to the treatment of the hunter for his eye ailment. Nothing is strange in god's ways.

## MAHĀKĀLA (1-6)

On the bank of *Ksiprā*, *Ujjain* is one of the oldest cities of India. There was a king by name CITRARATHA. He had many wives and one hundred and

ten sons. In that flourishing Kingdom, he raised a big temple for *Mahākāla*, planted *Bilva* trees around the temple and worshipped the Lord with fervour.

Once the enlightened Ṛṣis, Sanaka and his brothers came to him, praised him for his *ŚIVABHAKTI* and expounded his earlier birth in detail. He was a poor brahmin in his previous birth. Losing his parents in early life he was just living with his wife on alms. People dispised him. He wanted to die. But his wife cautioned that death would not occur out of turn in a *ŚIVAKṢETRA* and any attempt at death would cause unnecessary illness or mutilation of limbs. "Let us pray. The Lord will help us". She encouraged him. There came a devotee of *ŚIVA*, took pity on them and initiated them into *PANCĀKṢARA* with *ŚIVADĪKṢĀ*.

At the very moment of initiation, they found elation and hope in life. They began to chant *ŚIVAMANTRA*. Slowly they regained confidence and adoration of people. Again they met their Guru. The Guru discoursed to them the conversation of *JAIGIṢAVYA*, and NANDI regarding the greatness of *ŚIVA*. (Here the efficacy of *Vibhūti, Rudrākṣa, Pañcākṣara, Sri Rudra, Śiva Pūjā*, the five *Śivadharmas*, are expounded in detail). Adopting all these in his life, the poor brahmin, was again born as *CITRARATHA*.

While learning this revelation, of his previous birth from Sanaka, the King Citraratha, was blessed with the appearance before him of all Devas led by Brahma. Brahma extolled to him, the greatness of Mahākāla.

The sage Utathya lived with his wife *Vasumati* at *Kumuda* mountains. He had a son by name Mahākāla, who was an ardent devotee of Mahākāla. His devotion was much appreciated by Brahma and other Devas, who appraised of the same to *Śiva*. He took him into his fold of Gaṇas. Brahma told Citraratha, "such a distinction awaits you".

## OMKARAM (7-10)

On the lofty bank of Narmadā, flanked by hills all around, the temple of OMKARA, attracts many devotees. On the bed of Narmadā, there is an "Omkāra Kuṇda". Many Śiva Lingas are found there. Once Indra brought his harem and began to play in the holy water of Narmadā. The army of *Śiva-Gaṇas* threw them away.

Realising their folly, the ladies of the harem of Indra worshipped *Omkaresvara* and got pardoned. Intermittent fight between Devas and Asuras resulted in Asuras, taking the cue from their Guru Sukrācārya, stealing the Vedas (the strength of the Devas) and dumping them into the depth of the sea with the help of *Śankhāsura*. At the loss of the Vedas, Devas were powerless. They prayed at *Omkara* for relief. Omkāresvara sent word to Narayana. Narayana in the form of great fish, entered

## ॥ तृतीयोऽध्यायः ॥

स्कन्दः –

[1]शिलादन तपश्चर्यां प्रसादं परमेष्ठिनः । शृणु त्वं मुनिशार्दूल कथ्यमानं गणैः सह ॥ १ ॥
यच्छ्रुत्वा लभते मुक्तिं शिवपादाम्बुजे मुने । अगजानायके यस्य भक्तिः किं तस्य कर्मभिः ।
सर्वसंपत्प्रदा भक्तिः सर्वापद्विनिवारिणी । सर्वभाग्यप्रदा नृणां भक्तिः स्वर्गापवर्गदा ॥ ३ ॥
माहेश्वरे पुराकल्पे माल्यवाख्ये महीधरे । नानावृक्षसमाकीर्णे नानापक्षिगणावृते ॥ ४ ॥
पुष्पवल्लीगणभरैः मन्दमारुतसंयुते । नदत्सु देवतूर्येषु गन्धर्वेषु तपस्विषु ॥ ५ ॥
सरोवरयुते रम्ये फुल्लाम्बुजसमन्विते । देवोद्यानोपमे तत्र गिरिकन्दरसुन्दरे ॥ ६ ॥
पर्णाम्बुभोजी फलभुक् नित्यं वातसुधारणः । उवास चोटजे विप्रः पत्न्या स तपसा मुनिः ॥
निनाय नियमेनायुः महर्षिः संशितव्रतः । जुह्वदग्निं सदा काले कुर्वन्नतिथिसत्क्रियाम् ॥ ८ ॥
शिवार्पितेन जीवन् स रुद्रलिङ्गार्चनप्रियः । पत्रैः पुष्पैर्वन्यफलैः भस्मरुद्राक्षभूषणः ॥ ९ ॥
वीतहव्यात्मजो योगी शिवयोगिजनार्चकः । तस्यैवं वर्तमानस्य वयः परिणतं बहु ॥ १० ॥
तमाह भार्या विनयात् वीतहव्यं महामुनिम् । नाम्ना चित्रवती हृद्या विचित्रार्थविशारदा ॥
प्रणम्य रहसि स्वैरं प्रस्विन्नाननपङ्कजा ॥ १२ ॥

चित्रवती –

किञ्चिद्विज्ञप्तुमिच्छामि तदिहैकमनाः शृणु  नावमान्यास्मि विप्रर्षे सारं मे वचनं हितम् ॥
कुरु कर्णे मुनिश्रेष्ठ तपसैवाशु साधय । तपसा प्राप्यते भोगो भक्तिर्मुक्तिश्च शाश्वती ॥ १४ ॥
तपसा मुनयः पूर्वं लेभिरे वांछितानि हि । तपसा परमेशानं शरणं व्रज शङ्करम् ॥ १५ ॥
भक्त्याऽऽराध्य महादेवं को न काममवाप्नुयात् । यस्य लिङ्गं समभ्यर्च्य मुनयस्तत्करे स्थिताः ॥
ब्रह्मा ब्रह्मत्वमापन्नो महेशस्य प्रसादतः । विष्णुर्विष्णुत्वमापन्नो रुद्रो रुद्रत्वमाप्नुयात् ॥ १७ ॥
इन्द्रादयो देवसङ्घा विद्याधरवराप्सराः । किन्नराः ऋषयः सर्वा यक्षगन्धर्वकाः खगाः ॥ १८ ॥
मुनयो मनवो ये च भूतभव्यग्रहा गणाः । असुरा यक्षरक्षांसि दैत्यनाथाः सहस्रशः ॥ १९ ॥
प्रजानां पतयः सर्वे राजानो भूरिदक्षिणाः । समाराध्यैव तपसा महेशं सर्वकामदम् ॥ २० ॥

---

१ शिलाशन D.

लेभिरे वांछितान्यत्र तं समाराधयेश्वरम् । अनपत्यत्वमुभयोर्लोकयोर्गर्हितं खलु ॥ २१ ॥
नापुत्रस्य हि लोकोऽस्ति इति संश्रूयते श्रुतिः । पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ॥
जराशिथिलदेहौ च तपसा कर्शिताङ्गकौ । न दृश्यतेऽद्य सन्तानं कुलहेतुकरं तव ॥ २३ ॥
इत्थं स भार्यावचसा मुनिर्दुःखादुवाच ह । किं मे तपस्यभिरतिः नापुत्रः सुखमेधते ॥ २४ ॥
पुत्रहीनस्य हि गृहं धनधान्यसमृद्धिमत् । भवनं तद्वनं प्राहुः वनं पुत्र्यं गृहायते ॥ २५ ॥
पश्यैणबालकानन्ते मातृभिः सह शेरते । पश्य वानरनार्योऽपि कटिबद्धस्तनन्धयाः ॥ २६ ॥

पुत्रप्रेमान्विताः सर्वे पक्षिणो नीडमास्थिताः ।
दिग्भ्यः कणान् समादाय पोषयन्ति सुतान् स्वकान् ॥

किमप्राप्यं महेशार्चानियतानां शिवात्मनाम् । भुक्तिमुक्तिप्रदो देवो भक्तवश्यो महेश्वरः ॥
सम्यगाराधितो भक्त्या कुलहेतुकरं मम । ददाति पुत्रमीशानं सर्वसौभाग्यवारिधिः ॥ २९॥
मा नो महान्तमुतमा इति रुद्रेषु गीयते । स्तूयते परया भक्त्या स मे कामं विधास्यति ॥ ३०॥
तदा पुनश्चित्रवत्या वीतहव्यो महामुनिः । गिरिमौलौ गिरीशस्य लिङ्गमाराधयंस्तदा ॥ ३१ ॥
गृहीतनियमस्तत्र दश वर्षाणि सोऽचिरात् । भस्मस्थण्डिलमध्यस्थः भस्मरुद्राक्षभूषणः ॥ ३२ ॥
रुद्रमावर्तयन् मौनी पञ्चाक्षरजपादरः । वर्षं शिलाशनो विप्रो फलमूलाम्बुभोजनः । ३३ ॥
निराहारस्ततो वर्षं वर्षं पवनभोजनः । तस्यैवं तपसा तुष्टो देवः कष्टनिवारकः ॥ ३४ ॥
अष्टमूर्तिः पुरस्तस्थौ वृषारूढः सहोमया । गणगन्धर्वदेवैश्च सेवितोवाच तं प्रति ॥ ३५ ॥
स्तुवन्ति परितो देवं रुद्रविष्णुपितामहाः ॥ ३६ ॥
जयेतीशेति शर्वेति तदा प्राञ्जलयो मुदा । दृष्ट्वा देवं विरूपाक्षं अस्तौषीद्भक्तिभावतः ॥ ३७ ॥

मुनिः —

तमेकरुद्रमीश्वरं विजानतां तमेकधा न चैव भेदसन्ततिर्भयं न चैव तस्य हि ।
तमेकमेव सन्तमप्यनेकधाऽवदच्छ्रुतिः सुरेन्द्रनायकादिनामभिस्तमेव तं भजे ॥ ३८ ॥

न हि द्वितीयसंभवं महेश्वराज्जगद्गतं द्वितीयकल्पनावशाद्भयं भवेत तस्य हि ।
द्विधैव देहभेदतो भजेऽद्य कृष्णपिङ्गलं सुमङ्गलं शिवायुतं दिवाकरान्तरं सदा ॥ ३९ ॥

गुणत्रयातिदूरगं त्रिलोचनं त्रिमूर्तिगं त्रिधामभूमसामभिस्त्रिलोकवासमीश्वरम् ।
भजे त्रिमात्रसङ्गतं तथोमिति श्रुतीरितं अहा वुहा वु इत्यथो सुसामवेदबोधदम् ॥ ४० ॥

चतुर्भुजाङ्गदेऽङ्गजप्रदग्धमस्मधारकं चतुःश्रुतीभिरीड्यमानपादुकं परं शिवम् ।
चतुर्विधार्थभोगदायकं चतुर्दिशाम्बरं चतुर्मुखस्तुतं भजे चतुर्थमद्वयं सदा ॥ ४१ ॥

भजामि कोशपञ्चकादिकाशमीश्वरं प्रभुं [1]प्रपञ्च पञ्चभूतहृत्सुपञ्चबाणहृत्तमोनिवारकम् ।
सुपञ्चवर्णमन्त्ररूपिणं महाप्रपंचवारणं नमःशिवायमन्त्रतः प्रसन्नमीश्वरं सदा ॥ ४२ ॥

स्कन्दः —

तत्स्तुत्या परमप्रीतो वरेणाच्छन्दयत् द्विजम् ॥ ४३ ॥

शिवः —

[2]भृणु कामान् वीतहव्य तत्ते संपूरयाम्यहम् । महेशं तपसा प्राह विप्रो त्रिपकुलेश्वरम् । ४४ ॥

मुनिः —

त्वद्भक्तिमेव याचेऽहं सर्वकामप्रदायिनीम् । पुत्रं वंशकरं मेऽद्य दिश शम्भो चिरायुषम् । ४५ ॥

सूतः —

देवो विप्रवचः श्रुत्वा तमाह प्रहसन्निव ॥ ४६ ॥

ईश्वरः —

वृद्धोऽसि सांप्रतं ब्रह्मन् यज यज्ञेन मां शिवम् । यज्ञेश्वरं विरूपाक्षं सर्वदेवशरीरगम् ॥ ४७ ॥

हलतः कर्षतो भूमिं सुपुत्रस्ते ह्ययोनिजः । भवेच्च मत्समो विप्र नाम्ना त्वं च शिलादनः ॥

गणेन्द्रश्च महायोगी इत्युक्त्वाऽदर्शनं गतः । अन्तर्हिते महादेवे दम्पती हर्षितौ तदा ॥ ४९ ॥

प्रणम्य स्वगृहं यातौ स्मरन्तौ शिवशासनम् । संभृत्य सर्वसंभारं यज्ञायैव मनो दधे ॥ ५० ॥

इत्थं शङ्करवाक्यतः प्रमुदितः पत्न्या मुनिः स्वं गृहं
यातः पातकवर्जितोन्नतमतिः यज्ञाय दध्रे मनः ।
पुण्यैर्विप्रवरैर्गिरीशतटिनीतीरे पवित्रे तदा
शालां शीलयदग्रिषु द्विजयुतो जुह्वन्नपीन्निशः ॥ ५१ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे शिलाशनतपश्चर्या शिवानुग्रहवर्णनं नाम तृतीयोऽध्यायः ॥

---

१ सुपञ्चबाणहृत्तमोनिवारकं परं शिवं । इति D. कोशे । अतः प्रपञ्चपञ्चभूतहृत् इत्यधिकं भाति ।

२ पृच्छेत्यर्थः । तपसा प्रीतं इति शेषः ।

## ॥ चतुर्थोऽध्यायः ॥

जैगीषव्यः —

कथं समभवत् तस्य पुत्रोऽनल्पपराक्रमः । वैतहव्यस्य यजतः परमेश्वरतुष्टये ॥ १ ॥
मालवाद्रौ मुनिगणैस्तन्मे कथय विस्तरात् ॥ २ ॥

सूतः —

इति तद्वचनं श्रुत्वा तमवोचत षडाननः । वैतहव्यसुतावाप्ति यज्ञं तस्य शिवप्रियम् ॥ ३ ॥

स्कन्दः —

वैखानसैर्वालखिल्यैर्भर्गगर्गकुलोद्भवैः । मुनिभिः स मुनिश्रेष्ठो ऋत्विग्भूतैर्गिरौ तदा ॥ ४ ॥
चतूरात्रं पुरारातिप्रसादाय समाहरत् । दीक्षयामास तं धौम्यो ब्रह्मा तस्याभवत् कृणिः ॥ ५ ॥
भार्गवश्चाभवत् होता उद्गाता तत्र तुम्बुरुः । सदस्यश्चानमित्रोऽभूत् प्रवर्ग्यैरुपमन्युखैः ॥ ६ ॥
स तदा ववृधे यज्ञो विश्वेशेनानुमोदितः । लेखमोदैकजनकः स्वाद्वन्नो बहुदक्षिणः ॥ ७ ॥
तस्य तत्र महाविप्रैः कृषतो यज्ञभूतलम् । ऋत्विग्भिर्लाङ्गलेनैव ततः सीतामुखोत्थिताम् ॥ ८ ॥
मञ्जूषां पिहितां तत्र भूमिस्थां सन्ददर्श ह । हिरण्मयीं द्युतियुतां वैतहव्यो द्विजैः सह ॥ ९ ॥
तां गृहीत्वा सदोमध्यमाजगाम महामुनिः । उत्पाट्य दर्शयांचक्रे सर्वेषां शर्वतोषकृत् ॥ १० ॥
पत्न्या समन्वितस्तत्र बालमुत्तानशायिनम् । पूर्णचन्द्रप्रतीकाशं द्विभुजं भूषणान्वितम् ॥ ११ ॥
तं गृहीत्वाऽथ पर्यङ्के निवेश्याप्तमनोरथः । पत्न्या ऋत्विग्वरैस्तत्र शिवदत्तोऽयमित्युत ॥ १२ ॥
तदा ब्रह्मादयो देवा इन्द्राद्याः समरुद्गणाः । विद्याधराश्च गन्धर्वा यक्षकिम्पुरुषादयः ॥ १३ ॥
मुनयश्च तथैवान्ये नारदाद्या जगुः कलम् । ववर्ष वासवः पुष्पैः मेघगर्भसमुद्भवैः ॥ १४ ॥
देवतूर्याण्यवाद्यन्त यज्ञवाटे मुनेस्तदा । चित्रवत्यपि स्वस्तन्यं पाययत् प्रस्नुतं तदा ॥ १५ ॥
जातेष्टिप्रमुखास्तत्र क्रियाश्चक्रुर्मुनीश्वराः । अष्टमूर्तिमयान् देवान् यजन्नष्टाकपालतः ॥ १६ ॥
गोधनानि च धान्यानि प्रादाद्विप्रेषु हर्षितः । ब्रह्मेन्द्रप्रमुखान् देवान् पूजयामास वै मुनिः ॥
तमाह विधिरिन्द्रेण शिलाशनमुनेः सुतम् ॥ १८ ॥

ब्रह्मा —

सर्वानन्दमयो यस्मात् नन्दीशाख्यामवाप्य वै । नाम चक्रुर्मुनिगणाः शैलादिरिति चापरे ॥

अनुज्ञाप्य सुरान् सर्वान् संपूज्य मुनिसत्तमान् । समाप्य यज्ञशेषं च विश्राण्य बहु दक्षिणाः ॥
गावश्चान्नं तथा वासो ययौ साग्निसुतो गृहान् । विप्रानुमोदितः पत्न्या वैतहव्यो निजाश्रमम् ॥
पुत्रं वीक्ष्येन्दुसंकाशं वर्धमानं दिने दिने । जातहर्षौ तदा तत्र दम्पती शिवमार्चितौ ॥ २२ ॥
तं विद्या ग्राहयामास चतुःषष्टिकलात्मिकाः । कलाधरोरुचूडस्य प्रसादादेव सोऽग्रहीत् ॥ २३ ॥
विश्वानन्दमये बाले तस्मिन्नेवं स्थिते सति । वर्धमाने पितुर्मातुः प्रीत्यै चन्द्रकलेव तम् ॥ २४ ॥
उपनाय्य च तं काले शालङ्कायनगोत्रजम् । मुनिभिर्विनयोपेतं वेदानध्यापयत् क्रमात् ॥
सोऽगृह्णात् चतुरो वेदान् सषडङ्गपदक्रमान् । ईशदत्तान् पुरा वेधाः चतुर्वक्त्रैर्यथाग्रहीत ॥ २६ ॥
तथायं वेदसारज्ञो ह्यभवत् भवपूजकः । तमुपादिश्य सन्मन्त्रं पञ्चाक्षरमसौ पिता ॥ २७ ॥
समुपादिश्य लिङ्गार्चां भस्मरुद्राक्षभूषितम् । अनुशास्याथ धर्मेषु गुरुवृत्तो भवेति तम् ॥ २८ ॥
पितरौ परमानन्दहृत्सागरतरङ्गकैः । पूर्णौ पुत्राननेन्दूत्थदर्शनानन्दमेदुरौ ॥ २९ ॥
सोऽपि विप्रसुतैः सार्धं सदा गुरुकुले वसन् । विद्या वेदानुगाः सर्वा जगृहे गुरुसेवया ॥ ३० ॥
गुरुगेहे वसन् नन्दी द्वादशाब्दं शिवार्चकः । बभौ सर्वकलोपेतः पूर्णिमायां शशी यथा ॥ ३१ ॥
तस्यार्चतो महादेवं सहाध्यायकुमारकाः । फलानि पुष्पाण्याजह्रुः स्वादूनि विमलानि च ॥
बिल्वपत्राणि चाप्यन्ये भस्मरुद्राक्षभूषणाः । संपूज्य परमात्मानं स्तुवन्नित्थमवर्तत ॥ ३३ ॥

नन्दिकेशः—

विचितुङ्गकपालजालमालं सुरसालायितबाहुधृक्त्रिशूलम् ।
गरनीलगलं कलेशमौलिं भज कङ्कालशिवं कृपालबालम् ॥ ३४ ॥
भज कालानलशैलजातकन्याकलनालोकनविप्रबालपालम् ।
कलधौतामलशैलमूलवासं जितकालं कुमुदोत्पलोरुमालम् ॥ ३५ ॥
करीन्द्रपूज्य पूजितं करीन्द्रचर्मधारकं करीन्द्रमौलिनृत्तकं करीन्द्रदैत्यघातकम् ।
करीन्द्रवाहसंस्तुतं करीन्द्रपूज्यपादुकं भजे करीन्द्रकाननाधिपं महेश्वरं सदा ॥ ३६ ॥

एवं स्तुवन् विप्रसुतैर्वसन् गुरुकुले तदा । वेदवेदान्तसर्वस्वं विद्यास्तत्र कलायुताः ॥ ३७ ॥
अध्यगीष्ट तदा नन्दी अष्टमूर्तिप्रसादतः । गुरवे दक्षिणां दत्वा पित्रोराप गृहं तदा ॥ ३८ ॥
नत्वा स पितरौ तत्र तावानन्दपरिप्लुतौ । यथा कुमारसन्दर्शे जगतां पितरौ तदा ॥ ३९ ॥
तं दृष्ट्वा पूर्णचन्द्राभं पितरौ तोषमापतुः । समुल्लसिततारुण्यं नन्दिनं विश्वनन्दिनम् ॥ ४० ॥
तस्योद्वाहविधिप्राप्त्यै कृतकौतुकमङ्गलौ । तावुवाच प्रणम्याशौ नन्दी नन्दितसद्गुणः ॥ ४१ ॥

नन्दीशः –

तपस्यभिरतं चेतो नियुक्तं मे शिवार्चने । प्रसाद्य देवं भवतां पूरयिष्यामि हृद्गतम् ॥ ४२ ॥

स नन्दिनो वचः श्रुत्वा तं पिता प्राह खिन्नधीः ॥ ४३ ॥

शिलाशनः –

नन्दिन् कुसुमसङ्काशा [1]तनुस्तपति तेऽद्य हि । न बाल्ये रमते चेतो युवाऽसि चलचित्तकः ॥

तपोविघ्नकरा देवा मा तेऽभूद्बुद्धिरीदृशी । वार्धके तपसि स्वैरं भवतो रमतां मनः । ४५ ॥

चिरलब्धोऽसि पुत्र त्वं तपसेशप्रसादतः । पुत्र मा साहसं कार्षीः वत्सलां पश्य मातरम् । ४६ ॥

बध्वा विहर जीवात्र ममानन्दप्रदायकः । इत्युक्तस्तौ प्रणम्यैव सान्त्वयामास वाग्रसैः ॥ ४७ ॥

नन्दिकेशः –

किमसाध्यं भगवति प्रीते शम्भौ सनातने । न देवपदमाकांक्षे त्र्यक्षभक्त्युत्थिताशयः ॥ ४८ ॥

देवदेवे विरूपाक्षे तपसा परितोषिते । किं ममालभ्यमस्तीह इति चित्तविनिश्चयम् ॥ ४९ ॥

हृदये परिमुञ्चन्तु ज्वरमेतं सुदारुणम् । इत्युक्त्वा तत्र हि गिरौ चकाराश्रममुत्तमम् ॥ ५० ॥

तस्मिंस्तपस्यभिरते मुनिवर्यसङ्घाः विस्मायितोरुहृदयाः सदयास्तदानीम् ।
भस्मत्रिपुण्ड्रनिटिले वररुद्रनेत्रहारावलीकलितदेहवरे मनोज्ञे ॥ ५१ ॥

बिल्वीदलार्चनरते परमेशलिङ्गे पञ्चाक्षरावृतिपरे वररुद्रजाप्ये ।
देवा अपि त्रिनयनार्चनजातहर्षं तर्षैर्विहीनमवलोक्य नमन्ति तं वै ॥ ५२ ॥

शिलादः – वितर पुरहराद्य शम्भो (?) तव सारूप्यधरं कुमारतुल्यम् ।
इति शम्भुः प्रजगाद वाक्यजातं मुनये भक्तियुताय देवदेवः ॥ ५३ ॥

शिवः – मम सारूप्यधरस्त्वयोनिजातः कृष भूमिं मखकर्मणे द्विजाशु ।
तदुपश्रुत्य गते शिवे प्रणम्य द्रुतमेवाशु चकर्ष लाङ्गलैः ॥ ५४ ॥

मुखभूमौ निहितां विलोक्य पात्रीं शिवदत्तामवलोकयन् मुनीन्द्रः ।
तव गुणगणना गणाधिनाथं गुणवन्तं त्रिगुणाधिकं तनूजम् ॥ ५५ ॥

सिकताशनकामनां महेशो गणवर्यो भवितेति ते तनूजः ।
इति पूरयदञ्जसा मुनेः इममेव मृणुयान्नरः [2]सुखाप्त्यै ॥ ५६ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे शिलाशनयागान्नन्दिकेशोत्पत्तिचरितवर्णनं नाम चतुर्थोऽध्यायः ॥

---

1 न तपोर्हति इति युक्तम् 2 सुताप्त्यै – D.

## ॥ पञ्चमोऽध्यायः ॥

स्कन्दः —

नन्दी रुद्रमना मौनी भस्मरुद्राक्षभूषणः । हेमन्तग्रीष्मवर्षासु स चाकाशतनुच्छदः ॥ १ ॥
फलमूलाशनस्तीव्रं तपश्चक्रे सुदारुणम् । भस्मच्छन्नो भस्मनिष्ठो रुद्रमावर्तयन् सदा ॥ २ ॥
त्रिकालं प्रसन्नेन चेतसा पूजयन् हरम् । निद्रातन्द्रादिरहितः शिवे विन्यस्तमानसः ॥ ३ ॥
शतवर्षाणि नियतं तपश्चक्रे सुदारुणम् । तपस्यभिरतं दृष्ट्वा सर्वे तत्र मुनीश्वराः ॥ ४ ॥
विष्णुब्रह्मादयो देवाः व्यस्मयन्त तपस्यया । दृष्ट्वा तस्य तपो घोरं रुद्रविन्यस्तचेतसः ॥ ५ ॥
सुरविलासजनकं देवानां भयमाविशत् । ततोन्तिमे गते वर्षे तस्मै प्रादुर्बभौ हरः ॥ ६ ॥
वृषारूढो महादेवो देव्या तत्र त्रिलोचनः । ब्रह्मविष्ण्वादिभिर्देवैः सुरासुरगणान्वितः ॥ ७ ॥
नन्दिनं प्राह विश्वात्मा वत्सालं तपसा तव । कामप्रदोऽहं संप्राप्तः त्वत्कामान् पूरयाम्यहम् ॥
दृष्ट्वा देवं ततोन्मील्य नयने कोटिभास्करम् । उद्यन्तमिव चाद्राक्षीत् त्र्यक्षं देवं सहोमया ॥
नन्दी तदा प्रणम्येशं तुष्टावैवं कृताञ्जलिः ॥ १० ॥

नन्दी —

जयान्धकान्तक मखपुरस्मरगजान्तक । जय षण्मुख विघ्नेश सुन्दरस्मित संमुख ॥ ११ ॥
जय प्रणवनादादिवेदान्तवचनातिग । जय विश्वाधिकाशास्य घनवाहाघभेदक ॥ १२ ॥
जय धीरतरामेयपन्नगाकल्पसच्छद । जय कल्याणशैलोग्रद्वरिवाण महाभुज ॥ १३ ॥
जय झङ्कारफूत्कारकृताहीश्वरसिञ्जित । जय विश्वजनाधार चन्द्रचूड चराचर । १४ ॥
जय टङ्कमहाहस्तनृत्यद्भ्रमहानट । जय नृत्यभ्रमग्रोरुधराघोत्थितकामठ ॥ १५ ॥
जयाहीशमणीजालफणाविश्राणिताम्बर । जय मन्दरकैलासमौलिसञ्चारपावित ॥ १६ ॥
जय त्रिदशकार्योघनेत्रोज्ज्वलितमन्मथ । जय कामद कालारे भक्तशैवजनाधिप ॥ १७ ॥
जय दीनदयापार गणवीर धनाधिप । जय मन्दारसन्तान पारिजात सुचन्दन ॥ १८ ॥
जय भूनभरापार दिग्गजाधिप देवप । जय पावितलोकादे फणीश फणमौलिक ॥ १९ ॥
जय विश्वजनोद्बोध बन्धहृद्बन्धकारक । जय भद्रद भस्माङ्ग जगद्रक्षणतत्पर ॥ २० ॥
जय मायामयातीत मातृमानविवर्जित । जय यन्त्रपराजय्य यजमानहराव्यय ॥ २१ ॥
जय रात्रिचराक्षय्य महेश शिवशङ्कर । जय विश्वविधानादिविनाशन महाबल ॥ २२ ॥

जय साममहानन्दस्तोमसंभवहर्षित । जय शम्भो शिवामेय शमनान्तकर प्रभो । २३ ॥
जय दोषविषाकारदग्धदेवाभयप्रद । जय सर्वसुराधीश सर्वज्ञ परमेश्वर । २४ ॥
जय हेतिवरापार हरहन्तहनाहन । जय ब्रह्म महाक्षेत्रसंमक्षाध्वरशिक्षक ॥ २५ ॥
मदनदमन शम्भो कालकाल प्रसीद मधुमथनकटाक्षोद्भूतपादाब्ज शंभो ।
वरधरगिरिकन्यानायकाबाधमुग्ध त्वयि सदय घनाब्धौ कामिता कामिताऽनः । २६ ॥

द्विरदानन तात वीतशोक सुरजम्भान्तकमौलिवन्द्यपाद ।
पुरवर्गानलनेत्रपालिकीलानलतूलायितकाम कामिताङ्ग । २७ ॥

मदमुदितकरेणुयूथनाथोद्धृतचर्माम्बर साक्षिफाल शम्भो ।
गलतरलगल प्रसीद विश्वाधिक कालान्तक पाहि मामनाथम् । २८ ॥

सूतः —

उपलशकलकणाशनात्मजो महेशं प्रणनामेन्दुकलाधरं महात्मा ।
वचसा मनसा मुनिर्महेशं करणानन्यगतेन भक्तियुक्तः ॥ २९ ॥

सुरसायनवाक्यपुष्पमालासुरमालायितशम्भुपादपद्मे ।
विरचय्य स चन्दनादि वन्द्ये जगदाद्ये भगवत्यर्थत नन्दी ॥ ३० ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे नन्दिकेशतपः-शिवप्रादुर्भाव-शिवस्तुति वर्णनं नाम पञ्चमोऽध्यायः ॥

---

## ॥ षष्ठोऽध्यायः ॥

स्कन्दः —

तत्स्तुत्या संप्रसन्नोऽसौ महादेव उवाच तम् ॥ १ ॥

ईश्वरः —

वत्सालं परिखिन्नोऽसि तपसा वृणु यद्धृदि । तत्ते संपूरयाम्यद्य अलं खेदेन सत्तम ॥ २ ॥
पुनर्नन्दी प्रणम्येशमुवाच च कृताञ्जलिः ॥ ३ ॥

नन्दी —

देव देव महादेव शरणागतवत्सल । त्वत्पादाम्बुरुहद्वन्द्वे निश्चला भक्तिरस्तु मे ॥ ४ ॥
रुद्रलिङ्गार्चने रुद्रजपे भस्मावधारणे । निश्चलैव भवेद्भक्तिः तेन किं दुर्लभं मम । ५ ॥
तथेति तं विश्वनेता अनुमान्य तिरोदधे : देवदेवो विरूपाक्षो देवैः सार्धं जगत्पतिः ॥ ६ ॥

पुनस्तताप शरदां शतं वाय्वम्बुभोजनः । रुद्रं जपन् हृष्टमनाः शिवलिङ्गं समर्चयन् ॥ ७ ॥
ततोऽन्तिमे पुनर्वर्षे देवदेव [1]उमापतिः । प्रादुर्भूय महादेवः कृपया तमुवाच ह ॥ ८ ॥

श्रीशिवः —

वत्सालं तपसा तेऽद्य दत्ता तव गणेन्द्रता । प्रशाधि गणशान् मेऽद्य त्वं हि सर्वशासकः ॥ ९ ॥
नत्वा स्तुत्वा महादेवं नान्यत् किञ्चिदयाचत । लिङ्गार्चनाद्रुद्रजप ब्रुसरुद्राक्षधारणात् ॥ १० ॥
तथेत्युक्त्वा ययौ साम्बो नन्दिनः पश्यतः सुरैः । पुनस्तताप शरदां शतमाहारवर्जितः ॥ ११ ॥
रुद्रमाराधयंस्तीव्रं रुद्राध्यायजपादरः । तस्मै प्रादुरभूत् साम्बो वृषारूढः सुरैर्वृतः ॥ १२ ॥
संस्तुतो वेदसङ्घैश्च मरुद्भिर्यक्षकिन्नरैः । दृष्ट्वोत्थाय तदा नन्दी प्राञ्जलिः स्तौति शङ्करम् ॥

नन्दी —

रमानाथनेत्राब्जपूज्याङ्घ्रिपद्मं महाकालकूटोज्ज्वलन्नीलकण्ठम् ।
सुधाधामखण्डोर्ध्वमौलिं त्रिनेत्रं भजे कामिनीदेहभागार्धमूर्तिम् ॥ १४ ॥
महाजह्नुकन्याजटाजूटकं टिं तडित्कूटकर्पूरखण्डाभदेहम् ।
सदाऽहीश्वरौघावलीविस्फुरं तं नटन्तं भजेऽहं भवान्या समेतम् ॥ १५ ॥
सुहेरम्बतातं षडास्यैकदृष्टि भवाम्भोधिपोतं कुरङ्गास्यहस्तम् ।
सुधाधामखण्डोर्ध्वमौलिं त्रिनेत्रं भजे कामिनीदेहभागार्धमूर्तिम् ॥ १६ ॥
स्तम्बेरमाधीशचर्मैकवस्त्रं भजे देवदेवं महेशं चिदाभम् ।
असङ्गं चिदङ्गं भुजङ्गं भवान्याः महादेवहृद्यं प्रसङ्गं जनानाम् ॥ १७ ॥
विनिर्धूतकामं सदा स्वात्मरामं महाधामदेवादिसामैकसीमम् ।
घनानन्दभस्मैकधामानमीशं भजे विस्मृतापारसर्वेन्द्रियार्थम् ॥ १८ ॥

तत्स्तुत्या तोषितः शम्भुः चारुचन्द्रकलाधरः । उमादेहार्धललितः तमुवाच कृपानिधिः ॥ १९ ॥

ईश्वरः —

नित्योऽसि सर्वदा सर्वैः सेव्यः स्तुत्योऽसि सांप्रतम् । गणेन्द्रोऽस्यमराधीशः समाहूय महेश्वरः ॥ (१)
सारूप्यं च ददौ तस्मै देवदेवो महेश्वरः । कपर्दचन्द्रार्धधरं नीलकण्ठं त्रिलोचनम् ॥ २१ ॥
चतुर्भुजं चैणपाशखट्वाङ्गपरिशोभितम् । द्वीपिचर्मपरीधानं सर्वाभरणभूषितम् । २२ ॥
भस्मरुद्राक्षसंपन्नं तं तदा काञ्चनैर्घटैः । भद्रासने चोपवेश्य गणेन्द्रमभिषेचयत् ॥ २३ ॥

---

1 उवाच तम् । D उमापतिरित्यादि सपदमर्धं नोपलभ्यते ।

गाणपत्ये गणेन्द्राणां नन्दिनं विश्वनन्दिनम् । विष्णुब्रह्ममहेशांश्च वीक्ष्य प्राह महेश्वरः ॥ २४ ॥

ईश्वरः –

एष सर्वगणेन्द्राणामधिकः कल्पितो मया । गणेशस्कन्दतुल्योऽयं पूज्यः सर्वदिवौकसाम् ॥२५॥

शैवाचार्योऽयमतुलः शिवज्ञानैकभाजनम् । अपर्णातनयो नित्यो मम सारूप्यभाजनम् ॥ २६ ॥

ममापरा तनुर्नन्दी विश्वस्याज्ञाप्रवर्तकः । इत्युक्त्वा च महादेवो गणेन्द्रं तत्र भूधरे ॥ २७ ॥

मण्डपे रत्नसंकीर्णे देवपुष्पविराजिते । नदत्सु देवतूर्येषु नृत्यन्तीष्वप्सरस्सु च ॥ २८ ॥

पितॄणां मानसीं कन्यां सुयज्ञां नाम सुन्दरीम् । सर्वाभरणसंपन्नां तत्पाणिं ग्राहयच्छिवः ॥ २९ ॥

देवी स्नुषां समालिङ्गय चक्रे वैवाहिकं विधिम् । देवैः सह तदा देवो देव्या विघ्नेशनन्दिना ।
स्कन्देन गणसङ्घैश्च ययौ कैलासपर्वतम् ॥ ३० ॥

एवं शिलादतनयं शशिशेखरोऽसौ दत्वा गणेन्द्रपदवीं च विवाह्य देवैः ।
रुद्रादिजात्यपरितोषणतो मुनीन्द्र गौर्या विराजितवपुः प्रययौ गिरीन्द्रम् ॥ ३१ ॥

इति श्रीशिवरहस्ये शिवालये चतुर्थांशे नन्दिकेशगाणपत्याभिषेको नाम षष्ठोऽध्यायः ॥

---

## ॥ सप्तमोऽध्यायः ॥

जैगीषव्यः –

श्रुतं ते तारकाराते नन्दिनश्चरितं शुभम् । नन्दिकेशस्य भक्तस्य चरितं संश्रुतं मया ॥ १ ॥

त्वत्तः षडवक्त्र शुभदं देवदेवप्रसादजम् । न तृप्तिरस्ति भक्तानां शम्भोः संशृण्वतो मुहुः ॥ २ ॥

चरितं परमं पुण्यं त्रिनेत्रप्रियकृत्तमम् । चण्डीशः परमो योगी चण्डं पापं महत् पुरा ॥ ३ ॥

कृतवान् पितरं हत्वा स कथं गणपो भवेत् । देवदेवप्रसादेन चरितं वक्तुमर्हसि ॥ ४ ॥

सूतः –

इति तस्य मुनेर्वाचं श्रुत्वा पञ्चास्यसंभवः । षडकस्तमथोवाच जैगीषव्यं शिवार्चकम् ॥ ५ ॥

स्कन्दः –

पुरा गर्गकुलोत्पन्नः कर्णभद्रोऽभवद्द्विजः । माल्यवच्छिखरे साधुः वर्णाश्रमरतो युवा ॥ ६ ॥

सुनीतिर्नाम तद्भार्या छायेवादित्यमन्वगात् । शीलेन भर्तुर्निरता शुश्रूषन्ती पतिं सदा ॥ ७ ॥

देवाग्निमुनिविप्रेषु अतिथौ भर्तृतत्परा । काले पुष्पं फलं चान्नं निवेदितवती सती ॥ ८ ॥

स्वाध्यायशीलिनं विप्रं सेवन्ती भक्तितत्परा । माल्यवच्छिखरे रम्ये वननिर्झरकन्दरे ॥ ९ ॥

नानापक्षिमुखापारनदीनिर्झरशोभिते । मृगसारसमंघुष्टसरोजातोत्पलाबृने ॥ १० ॥
नवशाद्वलसंयुक्तगोप्रचारवनस्थले । निनाय दिवसान् विप्रो भार्यया तपसि स्थितः ॥ ११ ॥
कदाचित्तपसा स्वैरं वर्तमाने महामुनौ । आजगामाथ तन्मित्रं वैदर्भो नृपसत्तमः ॥ १२ ॥
रथेन तं मुनिं याज्यो याजकं मुनिसत्तमम् । माल्यवच्छिखरे तत्र दृष्ट्वा राजानमत्रिज ॥ १३ ॥
स्वागतेनाभिनन्द्याथ विष्टरेणोपमन्त्र्य तम् । सोऽनमित्रोऽथ वैदर्भो गार्ग्यं तं प्रणिपत्य हि ॥
उवाच कुशलं विप्रं तपोऽग्निषु वने तथा । मृगपक्षिगणे पुत्रे तपस्विषु नृपस्तदा ॥ १५ ॥

राजा—

भगवंस्तव पादाब्जं द्रष्टुमभ्यागतः पुरात् । सनाथं कुरु मे गार्ग्य त्वत्समागमतो मुने ॥ १६ ॥
यियक्षुरस्मि भगवन् हयमेधेन शङ्करम् । तत्र होता भवान् मेऽद्य समायातु रथेन मे ॥ १७ ॥
इति वैदर्भवचसा हृष्टो विप्रोऽभ्युवाच तम् । प्रसन्नमानसो विप्रः प्रीतिस्निग्धं हितं वचः ॥ १८ ॥

विप्रः—

याज्यो भवांश्च नृपतिर्दक्षिण्यो दक्षिणो नृप । त्वमपूजो महामर्गं भद्रं ते नृपसत्तम ॥ १९ ॥
राज्याङ्गेषु समस्तेषु भवतः कुशलं नृप । शङ्करस्य प्रसादेन आरोग्यं विद्यते न वा ॥ २० ॥
तदा मुनिवचः श्रुत्वा प्राञ्जलिः प्राह तं नृपः ॥ २१ ॥

राजा—

अनुध्यातस्त्वया स्नेहैः किं ममावद्यतां व्रजेत् । इत्युक्त्वा तौ तदा तत्र नृपगार्ग्यौ महामती ॥
तं भोजयन्नृपं विप्रः स्वाद्वन्नैः परमैस्तदा । कथाभिरनुरूपाभिर्देवपित्र्यैर्नृपोत्तमम् । २३ ॥
एवं विप्रेण नृपतिः प्रत्यागात्पुग्मोजसा । रथेन जवनाश्वेन यज्ञवाटं महर्द्धिमत् ॥ २४ ॥
दीक्षितः स नृपस्तत्र ऋषिभिर्वेदपारगैः । विससर्जाश्वमतुलं पुनः प्राप्ते तुरङ्गमे ॥ २५ ॥
अयजद्धयमेधेन शास्त्रदृष्टेन कर्मणा । दक्षिणाश्च तथा गावो भूमिस्वर्णधनादिकम् ॥ २६ ॥
नियुतं प्रयुतं चैव प्रादात् स नृपसत्तमः । ऋत्विग्भ्यश्चाथ विप्रेभ्यः संपूज्यान्नैस्तथा नृपः ॥२७॥
विसर्जयामास मुनीन् गार्ग्यंश्चामन्त्र्य तं नृपः । गोभिर्हिरण्यभारैश्च माल्यवच्छिखरं ययौ ॥
तत्र गाश्चारयामास वनभूमिषु सर्वतः । पुत्रैः शिष्यैर्महाभागो धर्माय दुदुहेऽथ गाः ॥ २९ ॥
तस्य पुत्रोऽभवत् तत्र चण्डीशाख्योऽथ वर्णिकः । स पितुर्वाक्यतस्तत्र स सहाध्यायिभिस्तदा ॥
चारयामास ता गावो दण्डहस्तः श्रुतीः पठन् । मेखली च तथा दण्डी आषाढी भस्मभूषणः ॥
रुद्राक्षभूषणो नित्यं वनलिङ्गेष्वपूजयत् । प्रदुग्धगावस्तत्रैव चण्डीशाख्यो वटुस्तदा ॥ ३२ ॥
अलाबुदारुपात्रे च अभिषिच्य महेश्वरम् । वनलिङ्गे च स तदा स गवां पयसा तदा ॥ ३३ ॥

रुद्रसूक्तैस्तथा कैश्चिद् द्रोणपुष्पैर्वनोद्भवैः । वन्यैः फलैर्निवेद्येशं तुष्टाव परमेश्वरम् ॥ ३४ ॥

चण्डीशः —

त्वं धर्मभृद्धर्मवहोऽसि शम्भुः सारङ्गधृक् तद्भवचर्मवस्त्रः ।
त्वं शम्बरारिहुतभुक् धृतशम्बराङ्कः त्र्यम्बकाऽम्बराम्बरपूज्य पाहि ॥ ३५ ॥

स्कन्दः —

स सहाध्यायिभिः सर्वैः सायमायाति वै गृहम् । स पितुश्च तथा गोभिः पितुः पादावुपस्पृशन् ॥
प्रदुग्ध्वाऽथ पुनर्गावो निवेद्य पयसो घटीः । अग्निहोत्रार्थमुद्युक्तः स समिद्भिः पितुर्मुदे ॥ ३७ ॥
एवं निवसतस्तस्य काश्चिद्दोहविवर्जिताः । गावो दृष्ट्वा तथा गार्ग्यश्चुक्रुधे पुत्रमोजसा ॥ ३८ ॥
न दुहन्ति तथा गावः काश्चित्पुत्र किमद्य ते । चरित्रं च विचित्रं ते सदा चारयतो वने ॥ ३९ ॥
स पितुर्वचनं श्रुत्वा चण्डीशः पितरं तदा । प्राह तं विनयोपेतः प्राञ्जलिर्भीतभीतवत् ॥ ४० ॥

चण्डीशः —

न जानेऽहं पितः किञ्चित् प्रौढवत्सा दुहन्ति न । तस्य तद्वचनं श्रुत्वा किञ्चित् काले गते मुनिः ॥
स सहाध्यायिभिस्तस्य ज्ञापितो वनमध्यगः । निलीय वृक्षषण्डस्थस्तच्चेष्टां ददृशे तदा ॥ ४२ ॥
स दुदोह तदा गावः तत्पयोभिर्महेश्वरम् । अभिषिच्य महादेवं पुष्पैर्वन्यफलैस्तदा ॥ ४३ ॥
संपूज्य परया भक्त्या भस्मरुद्राक्षभूषणः । निमील्य स्तौति देवेशं प्रणामप्रक्रमादिभिः ॥ ४४ ॥
तत्तादृशं विलोक्यैव क्रोधान्धीकृतलोचनः । पूजां मन्त्रकृतां लिङ्गे नाशयामास पादतः ॥ ४५ ॥
विलोक्य पितरं तत्र वरिवस्याविनाशकम् । समिदाहरणार्थाय कुठारं स्वपुरः स्थितम् ॥ ४६ ॥
गृहीत्वा छेदयामास पितुः पादौ शिवद्रुहौ । विलुठन्तं तदा भूमौ पितरं साश्रुलोचनम् ॥ ४७ ॥
भग्नसक्थिं च रक्ताङ्गं वाचा संसज्जमानया । तुष्टाव देवदेवेशं तल्लिङ्गाग्रे महेश्वरम् ॥ ४८ ॥

स कठोरकुठारधारया निजघानाशु तदूरुमूलभागे ।
शिवलिङ्गे निहितौ तवैव पादौ कथमित्येव चुकोप चण्डिकेशः ॥ ४९ ॥
सालं यथा भुविगतं परिकृत्तशाखं काष्ठार्थिना वरकुठारकरेण दीनम् ।
भूमौ तदा विलुलितं पितरं स दृष्ट्वा सञ्जातवेपथुरसृक्क्षतलोलनेत्रम् ॥ ५० ॥
सन्तुष्टुवे च जगतां पितरं महेशं गङ्गाधरं श्रुतिवचोमनसोरगम्यम् ।
व्याघ्राजिनाम्बरमुमाकरगाढगूढ वाचाऽतिसन्नहृदयो भयभावयुक्तः ॥ ५१ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे चण्डिकृतस्वपितृपादच्छेदनं नाम सप्तमोऽध्यायः ॥

## ॥ अष्टमोऽध्यायः ॥

चण्डीशः —

जगज्जनक शङ्कर प्रमथनाथ विश्वाधिक प्रसीद सदयाधुना भयहराव्ययेश प्रभो ।
महीरथ गराशन त्रिनयनारविन्दानन तुरङ्गनिगमाधिकं मयि महाघमेतद्धर ॥ १ ॥

द्विरदरदनिकाशदेह शम्भो उरगाधीशमहोरुहार पाहि ।
करिचर्माम्बर शूल एणहस्त शम्भो तटिनीचारुकलाधरोरुमौले ॥ २ ॥

उक्षाधीश्वर चारुकेतन महाविश्वाधिकेशान ते पादद्वन्द्वपयोजपूजनपरं लोके पवित्रं हि माम् ।
वीक्ष्य त्र्यक्ष दयारसार्द्रसुदृशा पाहीन्दुमौले हर वामाङ्काम्ब महेश्वर प्रथय मां पुण्यैश्च पापैर्विना ॥

कक्षाणां च पते रमापतिलसन्नेत्राङ्घ्रिपङ्केरुह त्वद्ध्यानामृतधारया जगदिदं संप्लावयामि द्रुतम् ।
त्वन्नामोच्चरणेन भर्जितभवः पापौघपातैर्विना त्वत्पादाम्बुरुहार्चनेन भगवन् मुक्तो भवेयं त्वघैः ॥

रविशशिहुतभुक्त्रिधामनेत्रो ज्वलशूलानलदग्धकालकाल ।
कृतहालाहल नीलकण्ठ शम्भो परिपाहीश्वर देवसार्वभौम ॥ ५ ॥

भव भर्ग महेश भीम शङ्कर त्रिदशाधीश्वर सर्पजालमाल ।
अव भव दयया रसार्द्रलोकैः परिमुक्तोऽस्म्यघतः तवेश शम्भो ॥ ६ ॥

हर हर भगवन् पुरप्रहर्तः कुरु करुणां शशिधामचूड शम्भो ।
गरधर हरिशर गिरिवाह परिपाहीश्वर देवसार्वभौम ॥ ७ ॥

[1] संक्रन्दन भुजखण्डन वरतर करुणारुणाक्ष देव प्रथितामोद पदाब्ज देव शम्भो ।
यमभटपटलीविदूरिताघ ज्वलधीरामरदेवसार्वभौम ॥ ८ ॥

मन्दारवृन्दमुनिवेदकदम्बगीत गोविन्दपूज्यपदपद्म सनन्दवन्द्य ।
मन्दारसुन्दरसदम्बुरुहोरुमाल देव त्वमेव निखिलेन्दुकलाललाम ॥ ९ ॥

अहीशमणिकुण्डलं रविजमण्डलान्तर्गतं गणेन्द्रकृतताण्डवप्रियमपारपिण्डोज्ज्वलम् ।
भजामि कनकाचलोल्लसितवामहस्ताम्बुजं मुरारिशरकाण्डतोज्ज्वलसुदक्षपाणिं भजे ॥

उरगतुरगहेषहारप्रतुष्टं घनवाहामरवृन्दसार्वभौमम् ।
अजगजनिधनं प्रकृष्टनृत्तं भज फालस्फुरदुज्ज्वलत्रिपुण्ड्रम् ॥ ११ ॥

---

१ अयं श्लोकः अननुगतवृत्तः दृश्यते ।

करुणावरुणालयं महेशं शरणं यामि शरण्यमीश्वरम् ।
अरुणाधिपकारणं महेशं धरणीधृग्वरदारमीशितारम् ॥ १२ ॥

कुमुदकमलगन्धवाहमित्रनेत्रं दहराकाशगतं भजामि शम्भुम् ।
श्रुतिशतविनुतापदानमीशं हरिपद्मासनमार्गितोत्तमाङ्गमूलम् ॥ १३ ॥

सूतः –

ततस्तुत्या तोषितः शम्भुः भगवानगजापतिः । वृषारूढोऽम्बिकायुक्तः श्वेताद्रिशिखरोपमः ॥१४॥
गणवृन्दैः परिवृतो ब्रह्मविष्ण्वादिभिः सुरैः । त्रिनेत्रो नीलकण्ठश्च जटाबद्धेन्दुखण्डधृक् ॥ १५ ॥
कुण्डलीशमहाहारकुण्डलद्वयमण्डितः । चण्डताण्डव सन्नाह नटभृङ्गिरिटिः पुरः १६ ॥
स्तुवतां देवसंघानां जयेशेति मुहुर्मुहुः । नारदोद्गीतसुभगवीणानिक्कणसंस्तवैः ॥ १७ ॥
छत्रचामरपङ्क्तीभिः पताकाभिरलंकृतः । चण्डिकेशमथाद्राक्षीत् तदा नेत्रेण शङ्करः ॥ १८ ॥
लुठन्तं पितरं तस्य भग्नसक्थिमसृग्युतम् । असृगाक्तं तदा वीक्ष्य करुणाभिरतः शिवः ॥
तद्देव्यै दर्शयामास भक्तिं तां चण्डिकेशजाम् ॥ १९ ॥

शिवः –

पश्य त्वं चण्डिकेशानं करुणारसलोचनैः । मद्भक्त्या पितरं चापि हतवानयमुत्तमः ॥ २० ॥
मद्भक्त्यैवायमधुना रक्षणीयस्त्वया शिवे । तवामृतालोकनेन समुज्जीवेत् पिताऽस्य हि ॥ २१ ॥
भग्नसक्थिश्च विप्रोऽसौ कणभद्रो महामुनिः । गाणपत्यं दिशाम्यस्मै चण्डिकेशाय सांप्रतम् ॥
इत्युक्तमात्रो (त्रे) देवेन प्राञ्जलिः परमेश्वरम् । [1]त्वं पिताऽसथवा माता बन्धुर्भ्राता त्वमेव हि ॥
नास्य भक्त्या समः कोऽपि न दृष्टो नैव विश्रुतः । कृपावलोकनाच्छम्भोः उत्थितस्तत्पिता मुनिः ॥
पस्पर्श चण्डिकेशानं शन्तमेनाथ पाणिना । प्रमथाधिपतेस्तस्य पाणिस्पर्शेन सत्तमः ; २५ ॥
शिवसंस्पर्शनादेव स बभूव गणोत्तमः । गङ्गातरङ्गमालाढ्यः [2]तज्जटामलमण्डनः ॥ २६ ॥
त्रिणेत्रो नीलकण्ठोद्यद्दृढचबाहुचतुष्टयः । महाहीन्द्रमहाहारः सोमखण्डैकभूषणः ॥ २७ ॥
भस्मत्रिपुण्ड्ररुद्राक्षपुण्डरीकाजिनोज्ज्वलः । सारूप्यं देवदेवस्य प्राप्यायं चण्डिकेश्वरः ॥ २८ ॥
शिवं नत्वावतस्थे स पित्रा सविनयाञ्जलिः । पुरः स्थितं च पित्रा तं महादेव उवाच ह ॥ २९ ॥

ईश्वरः –

चण्डक्रोधोऽसि चण्डीश पितरं हतवानसि । चण्डिकेशेति ते नाम भविष्यति गणोत्तम ॥ ३० ॥
अगणय्य पितृस्नेहं पितृत्वं श्रुतिसंमतम् । मद्भक्त्यैव हतो यस्मात् समुत्तीर्णोऽसि पापतः ॥ ३१ ॥

---

१ देवी जगादेत्यर्धकं श्लोकार्धमपेक्ष्यते। २ जटामण्डलमण्डन (C)

मातापितृगुरुद्रोहैः पञ्चपापोपपातकैः । मद्भक्तिभावयुक्तश्चेद् मुच्यते नात्र संशयः ॥ ३२ ॥
भक्तानां मम पापैश्च न लेपो विद्यते गण । इत्युक्तं तत् शिवेनोक्तं श्रुत्वा तौ दम्पती तदा ॥
प्रणम्य परमेशानमनुज्ञाप्यान्यमुत्तमम् । ययाचेऽन्यं सुतं स्वस्य वंशकर्तारमीश्वरात् ॥ ३४ ॥
तस्मालिङ्गयाथ चण्डीशं नतौ तत्राभिजग्मतुः । ततो देवेन तौ चापि प्रीत्या तत्रानुमोदितौ ॥
यावत्कालं विहृत्यैव यातं कैलासमेव मे । यत्र शैव पिता वास्य जननी वा तदुद्भवाः ॥ ३६ ॥
सर्वेषां मम कैलासे वास इष्टफलप्रदः । पुत्रोऽस्तु वां चण्डिकेशो गणपोऽस्तु सदा मम ॥ ३७ ॥
ब्रह्मविष्णुप्रभृतिभिः पूजितः सन्निधौ मम । यत्र कुत्रालये मेऽद्य कैलासे नित्यमेव हि ॥ ३८ ॥
एतस्य दर्शनेनैव फलदं दर्शनं मम । इति देववचः श्रुत्वा तावूचतुरवन्दितौ ॥ ३९ ॥

मुनिमुनिपत्न्यावूचतुः—

देवदेव करुणा[1] वरुणाब्धे पाहि पाहि दयया तव सूनुम् ।
पाहि नौ तव पदाम्बुजार्चकौ देहि वाऽन्यमपि मे कुमारकम् ॥ ४० ॥

तथेति विनयाननावनुसुगृह्य देवोऽपि तौ तमाह विनयानतं निखिलदेवमौलिः शिवः ।
दयाघन दृशानया मुनिवरात्मजं सुस्थितं [2]विलोक्य मजवामसौ भवदवाग्निनाशो हरः ॥

ईश्वरः —

धन्यश्चैव पिता पितामहपिता माता तथा भ्रातरः
तन्मातामहपङ्क्तिरप्यतुलिता लब्धान्धवास्तन्सुताः ।
एतन्मे क्षणमात्रमप्यगसुताकान्ताङ्घ्रिपङ्केरुहं
ध्यातं पूजितमन्वहं त्रिजगतां मुक्तिं ददाति ध्रुवम् ॥ ४२ ॥

गोघ्नो वापि कृतघ्नतस्करवरौ मातापितृघ्नोऽपि वा
नित्यं शङ्करलिङ्गपूजनमतिर्धन्यो मदन्यो न हि ।
तस्मै तां वितरामि मुक्तिमतुलां वेदान्तसंघस्तुतां
भुक्तिं चापि सुरेन्द्रवन्दितविनुतां भक्तिप्रभावान्मयि ॥ ४३ ॥

मद्भक्तः श्वपचोऽपि वा यतिवरो लिङ्गार्चकश्चद्वरो
रुद्राक्षामलभस्मपुण्ड्रनिलयो मान्यो द्विजानामसौ ।
विप्रोऽप्युज्झितभक्तिसारहृदयो ज्ञेयो भुवो भारवत्
विद्वान् वेदचतुष्टयोत्तममतिः पापी परं रासभः ॥ ४४ ॥

---

१ वरुणालयेत्यर्थे प्रयोगः प्रतिभाति ।　　२ सुमेध इव शांभवं (C)

धन्यो मान्योऽसि भूमौ दिविवरगणपैः स्वीशपादानुरक्तः
मत्पादाब्जं प्रपन्नो मम निजमहिमाधामसंस्थः सदा त्वम् ।
मल्लिङ्गोत्तमदर्शनेऽपि फलदः त्वं चण्डपापापहः
चण्डीशान भवाद्य सर्वजगतां मान्यः सदा त्वं नृणाम् ।। ४५ ।।

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे चण्डीशस्तुतिचण्डीशसारूप्य-गाणपत्य-शिवदर्शनफलप्रदत्वादिवरदानं नामाष्टमोऽध्यायः ।।

## ।। नवमोऽध्यायः ।।

स्कन्दः —

पुरा मन्दरशैलेन्द्रशिखरे रम्यकन्दरे । नानाप्रस्रवणोपेते मृगपक्षिगणाकुले ।। १ ।
रम्ये मन्दरशैलाग्रे भृङ्गी नाम महामुनिः । यत् किञ्चित् काममालम्ब्य मनसि द्विजपुङ्गवः ।।२।।
दिव्यं वर्षसहस्रं तु तपस्तेपे सुदारुणम् । ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षास्वाकाशसंश्रयः ।। ३ ।।
हेमन्ते जलमध्यस्थो जितक्रोधो जितेन्द्रियः । एवं स तपसा विप्रो ह्यनैषीद्वत्सरायुतम् ।। ४ ।।
नैवासौ दृष्टवान् शम्भुं तेनातप्यत दुर्मनाः । तत्रान्तरेऽभवद्वाणी शम्भोराकाशमध्यगा । ५ ।।

वाणी —

वदाम्यहमुपायं ते शुद्धचित्तस्य सांप्रतम् । यथा शीघ्रं प्रसन्नः स्यात् देवदेवो महेश्वरः । ६ ।।
भक्तोऽसि त्वं महेशाने पात्रभूतोऽसि चानघ । ब्रह्मचर्येण वा किं ते गुरुशुश्रूषयाऽपि वा । ७
समस्तदेवान् धर्मांश्च उत्सृज्य नियमादिकम् भक्त्याराधय देवेशं करुणामृतवारिधिम् ।। ८ ।।
भक्त्यैव परया देवस्तोषं याति महेश्वरः । रहस्यं ते वदाम्यद्य तस्यैवाराधनक्रमम् । ९ ।।
येन शीघ्रं स तुष्टः स्यात् महेशः पार्वतीपतिः । प्रदक्षिणं हि परमा पूजा शम्भोर्महात्मनः ।।
कुरु प्रदक्षिणं शम्भोर्नित्यं भक्त्या द्विजोत्तम । प्रसन्नस्त्वयि देवेशः सर्वान् कामान् प्रयच्छति ।।
इत्युक्त्वा विररामाथ शम्भोराकाशवाक् तदा । तदा प्रभृति भृङ्गीशो भृङ्गवत् पुष्पलिप्सया । १२।।
बभ्राम लिङ्गागारे स भस्मरुद्राक्षधृक् सदा । अहोरात्रमविश्रान्तो यथा मेरुं हि भास्करः । १३ ।।
संस्तुवन् देवदेवेशं शिवमेव निरन्तरम् । रुद्रमावर्तयंस्तत्र चकारासौ प्रदक्षिणम् । १४ ।।
हित्वा च देवीं स्कन्दं च गणपं चण्डिकेश्वरम् । प्रदक्षिणैकपरमो भृङ्गी भृङ्गवदास ह ।। १५ ।।

संस्तुवन्नेवमीशानं तत्स्तुतिं शृणु सत्तम ॥ १६ ॥

भृङ्गी—शम्भो सङ्गतकामिनीनवसुधाभृग्धुर्यमौर्वीधनो
धेनूनांपतिवाहन प्रमथपाधीशान विश्वार्चित ।
वैकुण्ठात्मजकुण्ठितोरुसुशरापारव्यथां संहर
शम्भो देव दयानिधे करुणया मां पाहि विश्वेश्वर ॥ १७ ॥

पौलस्त्यात्मजबाहुतोलितमहाकैलासमूलस्थितापारोद्दाहपरिश्रमार्तभुजभग्नार्तिस्तवाम्रेडित ।
स्वर्गङ्गापतनोरुगर्वकुलिशाखर्वीकृपर्दोल्लपल्लीक्षेवाशुधृताव्ययेश्वर महादेवाद्य मां पालय ॥

[1]भूमिस्यन्दनवाहने सुनिहिता वेदाश्च ते वाजिनो
मौर्वी ते धनुकुध्रको शरवरो भूमेः सुतानायकः ।
सूर्येन्दू रथकर्षणाङ्कगयुतौ यन्ता स्वयं ते विधिः
लक्ष्यं ते त्रिपुरं तथापि यमिनां चित्ते ह्यलक्ष्यो भवान् ॥ १९ ॥

तव शङ्कर किङ्कराहता हरिपद्मासननेत्रसंभवाः ।
वृषवाहाध्वरदक्षशिक्ष शम्भो करटित्वग्धृगहीश्वरोरुमाल ॥ २० ॥

गिरिपरिवर्तितसागरोदरोद्यद्गरलीलानिहताः सुरासुराद्याः ।
भवता भवतापहारिणा गरभुक्त्या सुखिनः सुरासुराः ॥ २१ ॥

एवं संस्तूयमानश्च भृङ्गिनः पुरतः शिवः । प्रादुरासीद्वृषारूढो नीलकण्ठस्त्रिलोचनः ॥ २२ ॥
देव्यालिङ्गितवामाङ्गो गणवृन्दनिषेवितः । दृष्ट्वा प्रणम्य देवेशं सामिचन्द्रकलाधरम् ॥ २३ ॥
दृष्ट्वा तत्पार्श्वगांस्तत्र गणेन्द्रान् वारणप्रभान् । त्रिनेत्रान् नीलकण्ठांश्च भस्मदिव्यत्रिपुण्ड्रकान् ॥
नन्दिकेशश्चण्डिकेशो महाकालोऽथ बाणकः । कालामुखः शङ्कुकर्णो वीरभद्रो मयूरकः ॥ २५ ॥
गजकर्णस्ताम्रवक्त्रो वृद्धसेनो विदूरथः । सोमनन्दी महानन्दी तुहुण्डश्चैव डुण्डकः ॥ २६ ॥
छत्रचामरकोटीभिर्ध्वजनैश्च पताककैः । गणानां शतसाहस्रैः अयुतैर्नियुतैः पुनः ॥ २७ ॥
कोटिकोटिभिरन्यैश्च विविधायुधभूषणैः । वृतं महेशं तुष्टाव भृङ्गी चन्द्रकलाधरम् ॥ २८ ॥

भृङ्गी—शम्भो स्फार तटीद्वयोरुतटिनीगर्वादिनिर्वापणो
वीर्योत्तेजिजटानिटालनयनस्त्वं धूर्जटिः पाटकः ।
घोराकलिमगोसहायुतमहाकण्ठीरवोद्यत्प्रभा
कव्यां त्वत्करटीभवं वरशयः शूलानलेनाहितः (?) ॥ २९ ॥

---

१ मौर्वीमूर्ध्नि रथः इति श्रीनीलकण्ठदीक्षितविरचितशिवोत्कर्षमञ्जरीगतपद्यभावच्छाया दृश्यते ।

[1]त्वं खण्डपर्शो शशिखण्डचूड खट्वाङ्गखड्गशरहेतिमहोरुबाहो ।
आखण्डलादिसुरवन्दित पुण्डरीकचर्माम्बराम्बुज अहीश्वरोरुहार ॥ ३० ॥
कुण्डलीशकनकुण्डल गण्डफालनील नलिनामलमाल ।
शूलमूलकरहस्तकपाल द्योतितामलझलंझलपाद ॥ ३१ ॥

सूतः —
तत्स्तुतिं शङ्करः श्रुत्वा प्राह तं भृङ्गिनं मुनिम् । त्रैलोक्यजननीं दृष्ट्वा तामूचे भक्तवत्सलः ॥

ईश्वरः —
देवि त्वद्दर्शनेनायं गणपो भवतान्मम । मम सारूप्यभाङ् नित्यमेष भृङ्गी महामतिः ।
सदाशिववचः श्रुत्वा देवी प्राह महेश्वरम् ॥ ३३ ॥

देवी —
देवदेव महेशान सर्वज्ञ करुणानिधे । त्वया वरो न दातव्यो मुनये चन्द्रशेखर ॥ ३४ ॥
वदामि कारणं चास्य भृङ्गी नामैष दुर्मतिः । प्रदक्षिणं ते प्रचरन् मां चाद्य कुरुते बहिः ॥
श्रुत्वा देव्यास्तदा वाक्यं देवदेवो महेश्वरः । तां दृष्ट्वा कुपितां शम्भुः प्रत्यूचे हिमशैलजाम् ॥

ईश्वरः —
शृणु देवि ममैवायं कुरुतेऽद्य प्रदक्षिणम् । मामेव शरणं यातः तस्मान्नो मन्युमर्हति ॥ ३७ ॥
प्रसादं कुरु भक्तस्य शरणं च गतस्य माम् । [2]इति प्रसादयन् देवीं प्रोवाच हिमशैलजाम् ॥
दृष्ट्वा चापि मुनिं तत्र प्राञ्जलिं विनयानतम् ॥ ३८ ॥

ईश्वरः —
अहं विश्वाधीशो भुवनमखिलं शैलतनया अहं वह्निः सोमो गिरिशतनया भूतनिवहः ।
अहं पञ्चार्णस्थः शृणु द्विज नवार्णा भगवती नचावां वै भिन्नौ जगदखिलमाभ्यां सुविहितम् ॥
यथोदुम्बरडम्बरः फलभरैरेवं महेशाङ्गजाद्रोमाग्रेषु अनन्तकोटिगणनाहीनाङ्गकोट्यो मुने ।
भिन्ना लोकपरंपरा हरिहरब्रह्मादयो वै सुराः विश्वं भूतमिदं विचित्रजनकं विश्वेशमाह श्रुतिः ॥
प्रालेयाचलकन्यके तव मनः पद्मोत्पलाभं कथं
अस्मिन् भृङ्गिमुनौ ममान्तरतनौ कोपः कथं ते वद ।

---

१ श्लोकेऽत्र वृत्तभेदो दृश्यते ।

२ इति देव्या वचः श्रुत्वा सर्वज्ञो भगवान् हरः । प्रसादयन् पुनर्देवीं प्रोवाच हिमशैलजाम् इति C D कोशयोः पाठः ।

संप्राप्नोतु पतन्नपि त्रिपदतां त्वद्दृक्पयोजांचितः
सर्वेषां गणमौलिरेष इति मे वांछा परं जायते ॥ ४१ ॥
इत्युक्तं गिरिजा शिवस्य वचनं श्रुत्वा प्रहृष्टा मुनिं
वत्सोत्तिष्ठ गिराऽधुना प्रपत मा भूमाविति प्राह तम् ।
त्वं मे पुत्रवरोऽसि मां च शिवतो भिन्नां न संपश्य भो
किञ्चित् द्रोणमरीचिकाविरहिता सूर्यप्रभा सूर्यतः ॥ ४२ ॥
मायाऽहं प्रकृतिः परा स भगवान् मायी महेशः शिवः
विद्याधीश्वर एव विश्वजनको लोकातिगः शङ्करः ।
मुक्ताः कालकलाविलासकलितः ब्रह्मेन्द्रनारायणाः
श्रीमृत्युञ्जय एव कालकलनातीतो महेशः परः ॥
लोकानुग्रहरूपतो हि समया कैलासमौलौ स्थितः ॥ ४३ ॥
न वेद वेदोऽपि शिवप्रभावं स्वात्मानमेवाद्वयमीशितारम् ।
सर्वेन्द्रियाणां पुरुषं परायणं को वेद यो वेद शिवः सनातनः ॥ ४४ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे भृङ्गिप्रसादार्थं देवीसान्त्वनं नाम नवमोऽध्यायः ॥

---

## ॥ दशमोऽध्यायः ॥

स्कन्दः —
हृष्टां देवीं तदा वीक्ष्य भृङ्गिः साम्बं महेश्वरम् । तुष्टाव देव्या देवेशं स भृङ्गी विनयात् तदा ॥
भृङ्गी —
क्रूरं दुष्टतमं विनष्टमनसं भ्रष्टं शठं निष्ठुरं
निर्लज्जं कृपणं कृतघ्नमशुचिं बह्वाशनं हिंसकम् ।
आशापाशशतप्रबन्धमनसं दुष्कीर्तिभाजं जडं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ २ ॥
क्षुद्रं दुर्भगमल्पसत्वमलसं भग्नव्रतं रागिणं भीरुं डांभिकमक्षमं व्यसनिनं पापात्मकं सूचकम् ।
आधिव्याधिनिपीडितं जडधियं सद्भिः सदा निन्दितं कारुण्याकर .... पाहि माम् ॥ ३ ॥
मूर्खं बालमतिं स्वधर्मरहितं धर्मार्थहीनं खलं कामान्धं क्षणिकं तदर्थनपरं दौःशील्यजन्मस्थलम् ।
सर्वलुब्धमसत्यनिष्ठमधमं प्रज्ञायशोवर्जितं कारुण्याकर ... पाहि माम् ॥ ४ ॥

आकांक्षाशमार्यवृत्तिविमुखं क्षीणं गुरुद्वेषिणं धूर्तं दुर्गुणमत्यशुद्धहृदयं सर्वत्र सन्देहिनम् ।
दीनं पापरतं समस्तविषयेष्वासक्तमन्यायिनं कारुण्याकर ... पाहि माम् ॥ ५ ॥

स्वप्नेऽप्युत्तमगन्धपुष्पनिकरैरीशार्चनावर्जितं ध्यानध्येयविचारणाविरहितं तुच्छं सदोच्छृङ्खलम् ।
दारिद्र्यास्पदमात्मवैरिविवशं तापत्रयस्यास्पदं कारुण्याकर ... पाहि माम् ॥ ६ ॥

मायाग्रस्तसमस्तवृत्तिकुशलं सत्सङ्गविद्वेषिणं दुःसङ्गप्रियमप्रतिष्ठवचनं कामातुरं तस्करम् ।
शैवज्ञानपराङ्मुखं खलजनव्यापारपारं गतं कारुण्याकर ... पाहि माम् ॥ ७ ॥

दुर्मर्यादमतिप्रवृद्धजरसं[1] सद्वृत्तिसेवारिपुं सद्धर्मादिसमुत्सुके गुरुजने मान्येषु चात्युद्धतम् ।
शिष्टानिष्टकरं क्रियापरिचितं दुष्टप्रतुष्टिप्रदं कारुण्याकर ... पाहि माम् ॥ ८ ॥

कर्मादिस्तुतिकारणं परमहानिन्दाकरं निन्दितं लुण्टाकं पतितं विपर्ययगतस्वान्तं सदा याचकम् ।
[2]वैकल्यापगतं सुकार्यनिचयं सर्वापदां संचयं कारुण्याकर ... पाहि माम् ॥ ९ ॥

कृत्याकृत्यविचारवर्जितमतिं व्रात्यं महाकातरं दुर्बुद्धिं मदपानमत्सरधियं दुर्वृत्तवृत्त्याश्रयम् ।
मिथ्याज्ञानिनमात्मकण्टकमलं लोकत्रये निन्दितं कारुण्याकर .... पाहि माम् ॥ १० ॥

दुष्कर्मप्रचयप्रभिन्नहृदयं क्लेशैश्च संपीडितं चार्वाकं कुमतिं कुशीलमनसं कार्पण्यजन्मस्थलम् ।
भार्यापुत्रगृहादिसक्तमनसं गांभीर्यधैर्यद्विषं कारुण्याकर .... पाहि माम् ॥ ११ ॥

आत्मज्ञानविहीनमात्मविमुखं सर्वात्मभावद्विषं संकल्पैर्बहुभिर्विभिन्नहृदयं द्वैतप्रसक्तं सदा ।
मर्मच्छिद्वचनं कठोरहृदयं मित्रद्रुहं क्षुद्रकं कारुण्याकर ... पाहि माम् ॥ १२ ॥

चित्तक्षोभकरं कलत्रहृदयं शङ्कापदं लोलुपं सारासारविचारहीनमनसं नीचक्रियं नीरसम् ।
मत्तोन्मत्तनिकृष्टदुष्टचरितं शोच्यं वृथालापिनं कारुण्याकर .... पाहि माम् ॥ १३ ॥

सत्यत्यागदयाक्षमाशमदमाद्यर्थानभिज्ञानकं देवब्राह्मणगोप्रजातिथिपितृज्ञानात्मकापूजनम् ।
विश्वस्तेष्वपकारतश्चनपरैर्मैत्रीपरं दुर्जयं कारुण्याकर ... पाहि माम् ॥ १४ ॥

मत्वाऽधर्ममतिं कदर्थनपरं को मत्समोऽस्मिन् भवेदित्येवं बहुजल्पिनं कुवपुषं पापाश्रितं राक्षसम् ।
दृष्ट्वा दृष्टसुखेषणं तव मदात् त्यक्त्वा शिवाराधनं कारुण्याकर ... पाहि माम् ॥ १५ ॥

दुष्पूरस्वककुक्षिपूरणपरं भारं भुवः केवलं दासीमेपखरस्वभावमपटुं संमाननाभाजनम् ।
रिक्तं बालमदीर्घमूलिणमलं हृच्छल्यभूतं सतां कारुण्याकर ... पाहि माम् ॥ १६ ॥

मार्जाराखुवृकश्वकुक्कुटकपिक्रोडाभिवृत्तिं सदा तीर्थस्नानक्षमनर्थकम्पिनि हिते सन्तापिनं दुःसहम् ।
त्यक्तोपायमपायकांक्षिणमहोऽशुद्धप्रियं चापलं कारुण्याकर ... पाहि माम् ॥ १७ ॥

---

१ रजसं इति C कोशपाठः संगतः । २ वैकल्यापगताशुकार्यनिचयं C

अस्पृश्यं विकलं कदर्यमखिलैः दोषैः स्वकीयैर्युतं
पापिष्ठं विषयेषु सक्तमनसं त्याज्यं विवादास्पदम् ।
चिन्ताशोकपरीतचेतसमलं सर्वाशुभानां पदं
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ १८ ॥

सत्यावेशनमुच्चमस्थितिमतां सत्याश्रिनां नास्तिकं रन्ध्रान्वेषणमन्धमूकबधिरं शंभोस्तु विश्वात्मनः।
माहात्म्यश्रवणस्तुतिक्षणविधौ माहेश्वरावत्सलं कारुण्याकर ... पाहि माम् ॥ १९ ॥

भ्रष्टं सर्वजुगुप्सितं परहितव्याघातिनं तामसं संभ्रान्तं चपलं विचारविहितव्यापारविद्वेषणम् ।
शम्भो त्वत्पदभक्तिहीनमनसं मूढं समात्मद्विषं कारुण्याकर .... पाहि माम् ॥ २० ॥

दोषावासमतिं प्रमादितमतिं क्षुत्तृड्ज्वराभ्यर्दितं स्वप्नेऽप्यत्र परोपकाररहितं सर्वाहितं दुर्बलम् ।
लोके सत्परिहार्यनिन्दितमहादुःखप्रदैकेन्द्रियं कारुण्याकर ... पाहि माम् ॥ २१ ॥

किं वाचा बहुविस्तरेण भगवन् मत्सन्निभो भूतले
भूतो नास्ति विभो भविष्यति पुमान् निर्भाग्यचूडामणिः ।
तस्मादीदृशमात्मवंचनपरं त्रैलोक्यरक्षामणे
कारुण्याकर ... पाहि माम् । २२ ॥

सर्वश्रेष्ठगुणैकभाजनमहो सर्वोत्तमेषूत्तमं संख्येयार्थगुणैकभाजनमलं कष्टातिकष्टप्रियम् ।
श्रीकाश्रीकमतेन्द्रियस्य वशगं निःसंशयं सङ्गिनं कारुण्याकर ··· पाहि माम् ॥ २३ ॥

विण्मूत्रक्रिमिमांसशोणितमयं मेदोऽस्थिमज्जात्मकं दुर्गन्धैकनिधिं जरापरिगतं वातादिदोषास्पदम् ।
दृष्ट्वापि स्वकलेबरं कुशमयं तत्राविरक्तं पशुं कारुण्याकर ... पाहि माम् । २४ ॥

विष्ठाविष्टकृजन्तुनिष्ठमशुचिं स्वाभाव्यतो नश्वरं कुष्ठक्षौण्यविषूचिकाज्वरशिरः शूलादिवेगास्पदम् ।
ज्ञात्वाऽपि स्वशरीरमत्र तु सदा संप्रीतियुक्तं पशुं कारुण्याकर ... पाहि माम् ।. २५ ॥

स्वात्माधारतया स्थितां निजतनुं बाल्ये तथा यौवने
वृद्धत्वेऽपि बहुप्रकारविकृतिं प्राप्तां समीक्ष्यापि च ।
तत्रात्मन्यतिरागिणं त्वयि कृते स्वान्यानुरक्तं पशुं
कारुण्याकर ··· पाहि माम् ॥ २६ ॥

देहं क्षालनलेपनादिविधिना संस्पृश्य योग्यार्थवत्
छिन्नं क्लिन्नमहाव्रणं नवमुखं नित्यं स्रवन्तं मलम् ।

तं दृष्ट्वाऽप्यतिरागिणं च नरके नूनं सरागं पशुं
कारुण्याकर ··· पाहि माम् ॥ २७ ॥

लोकेऽत्यन्तपवित्रतामुपगतं यत् पञ्चगव्यादिकं तद्देहोत्थकफास्थिरोमरुधिरस्नाय्वादिसंस्पर्शतः ।
स्यादेवाशुचि तद्विबुध्य च सदा तद्देहसक्तं पशुं कारुण्याकर ··· पाहि माम् ॥ २८ ॥

स्वस्यायुर्निचयस्य मध्यत इमौ नित्यं निशावासरौ जाग्रत्स्वप्नसुषुप्तिषु स्थितिमतः स्वल्पायुषः खण्डकं ।
गच्छन् तावदबुद्ध्य च स्वहितसत्कर्मण्यरक्तं पशुं कारुण्याकर ··· पाहि माम् ॥ २९ ॥

सर्पिःखण्डपयोमधुप्रभृतिकं त्यक्त्वा तृणान्यत्ति गौः यद्वत् शाश्वतशांभवोक्तमहिमानन्दानपेक्षं सदा ।
शम्भो वैषयिके सुखेऽतिविरसे तुच्छेऽतिसक्तं पशुं कारुण्याकर ··· पाहि माम् ॥ ३० ॥

धूमे कुंकुमगन्धकांक्षिणमहो तोयार्थिनं वा मरौ तैलान्वेषिणमश्मचूर्णनिचये मैत्र्यर्थिनं दुर्जने ।
दुर्बुद्धिं त्रिगुणात्मके मलनिधौ क्षेत्रे सुखेप्सुं पशुं कारुण्याकर ... पाहि माम् ॥ ३१ ॥

देवानामपि मारुतस्य च विभो गम्यं न यत् तत्र तु
स्वैरं गच्छति मे मनो नहि तदा चित्तं तवांघ्रिद्वये ।
धर्तुं त्वच्च नियन्तुमुच्चसुखदो नैवासमर्थं पशुं
कारुण्याकर ... पाहि माम् ॥ ३२ ॥

वेदैरप्यखिलैर्महेश बहुशो वेदान्तशास्त्रादिभिः
व्यापी चिन्मय एक ईश्वर इति प्रोक्ते त्वयि त्वत्पदे ।
चित्तं धर्तुमशक्तमात्मवचनैः व्यापारहीनं पशुं
कारुण्याकर ··· पाहि माम् ॥ ३३ ॥

ज्ञानाज्ञानदयादयाशमदमासंमोहमोहानतिख्यात्यख्याति भयाभयासुखसुखाहिंसामनस्तुष्टयः ।
भूतानां भवदाज्ञयैव विधिना नित्यं भवन्ति ध्रुवं कारुण्याकर ··· पाहि माम् ॥ ३४ ॥

भावाभावभवाभवामृतविषासत्सत्समस्ता क्रिया दिव्यत्वं च निरामयत्वनिखिलाभीष्टार्थसंपच्चयः ।
भूतानां भवदिच्छयैव भगवन् जायन्त एवानिशं कारुण्याकर ··· पाहि माम् ॥ ३५ ॥

योगैश्वर्यसमस्तदानपरता श्रद्धात्मभक्तिर्दृढा वैराग्यं परमं महेश परमे धर्मे मतिश्चारुता ।
भूतानां भवतः प्रसादत इमे जायन्त एव ध्रुवं कारुण्याकर ··· पाहि माम् ॥ ३६ ॥

नालं चालयितुं तृणं च पवनः शंभो त्वदाज्ञां विना
दग्धुं तं न समर्थ एव हुतभुक् शक्रोऽपि नो वज्रतः ।

शक्तः छेत्तुमपि प्रभो जगदिदं सर्वं त्वदाज्ञावशं
कारुण्याकर ... पाहि माम् ॥ ३७ ॥

चित्तं चेतयते मनश्च सकलं संकल्पयत्याज्ञया सर्वार्थानभिमन्यते ननु महादेवाज्ञयाऽहंकृतिः।
स्वे स्वे त्विन्द्रियवर्ग एव विषयेच्छास्ते तवैवाज्ञया कारुण्याकर .... पाहि माम् ॥ ३८ ॥

ब्रह्मा सृष्टिकरो हरिः स्थितिकरो रुद्रस्तु कालात्मकः
संहर्ता जगतां श्रियं जनयति श्रीयुग्मविद्यां पुमान् ।
गायत्री च तवाज्ञयैव नरकात् सन्तारयत्याश्रितान्
कारुण्याकर .... पाहि माम् ॥ ३९ ॥

वायुर्वाति तवाज्ञया शशिरवी नित्यं जगद्भासकौ
आहारं पचते च कुक्षिसदने वह्निः सदा प्राणिनाम् ।
देवानां वहतीव हव्यमपि यः पाकं करोत्यत्ति यः
कारुण्याकर ... पाहि माम् ॥ ४० ॥

भूतान्याप इहाज्ञयैव भवतः संजीवयन्ति प्रभो वाचा वाग् विपुलं ददाति जगतां यत्तेखिलं पुंनभः ।
भूतानामवकाशदं त्रिजगतां शीतोष्णशङ्कास्पदः कारुण्याकर ... पाहि माम् ॥ ४१ ॥

सेन्द्राः सर्वसुरासुरादय इह त्वच्छासने संस्थिताः
ब्रह्माण्डानि इहात्मवस्तुनि परे सन्धारकाः सन्ततम् ।
त्रैलोक्यानुगतानपीह सुबहून्याज्ञावशादेव ते
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४२ ॥

हर्तासौ महदादिकं प्रकृतिरप्याज्ञावशा ते विभो कालश्च प्रकृतिः पुरः पुरुष इत्येतत् त्रयं सर्वदा।
शम्भो देव भव त्वमेव च तथा भूतं भविष्यत् भवं कारुण्याकर ... पाहि माम् ॥ ४३ ॥

[1]त्वयोपरि तमो धृतं तव महाब्धिलीलार्थमेव
त्वयोन्नतिप्रेरणयैव ते तच्च विषयेष्वत्र प्रवृत्तं जगत् (?) ।
तापश्चापि रवेः समस्तजगतां दुःखार्तिहारिन् प्रभो
कारुण्याकर भो पितः पशुपते दोषाकरं पाहि माम् ॥ ४४ ॥

बन्धच्छेदविधौ त्वमेव भुवनेष्वेकः समर्थो भवेः त्वं पाशैर्भवबन्धमेतदखिलं कर्मच्छलेनापि च ।
शंभो त्वां शरणागतं करुणया स्वं शंकरो येन वा कारुण्याकर .... पाहि माम् ॥ ४५ ॥

१ अत्र C कोशेपि वृत्तभङ्गानन्वयादिव्यञ्जकः प्रश्नसंकेतः (?) वर्तते ।

महामूर्ते महादेव त्वन्मूर्तौ सर्वदेवताः । यथा बीजाङ्कुरोत्पत्तिः तथेदं त्वय्यवस्थितम् ॥ ४६ ॥
जगज्जालमिदं शम्भो ससुरासुरमानुषम् । नित्य निर्माय नीरूप धुरन्धर सुनिर्मलम् ॥ ४७ ॥
मनोवाचां सुदूरात्मन् परमेश नमोऽस्तु ते । त्वत्तः सर्वं त्वया सर्वं त्वं सर्वं सर्वगोऽसि च ॥ ४८ ॥
नमस्ते देवदेवेश सर्वकारणकारण । कर्तव्या च दया दीने करुणाकर शङ्कर ॥ ४९ ॥
सर्वापराधं मे देव क्षमस्व जगतां पते । तव रूपं जगच्छम्भो अष्टमूर्तिरनीश्वरः ॥ ५० ॥
पिता त्वमेव भगवन् माता साक्षादुमा यतः । क्षमस्वागो ममेदानीं बहुनोक्तेन किं प्रभो ॥
त्वयि भक्तिं महादेव दृढां देहि मृडाव्यय ॥ ५२ ॥

स्कन्दः —
इत्युक्तां मुनिवचनस्तुतिं महेशः श्रुत्वा चागकुमारिकायुतो हरस्तम् ।
दत्त्वा रूपमपारदिव्यगणपस्येन्द्राधिपत्यं ददौ तेनैवोत्तमसद्द्विजेन विहरन् कैलासमौलौ शिवः ॥

यस्त्वेतच्छृणुयाद्वा पठेत् शम्भोः स्तव्यानां परमः स्तवोऽयमीशतुष्ट्यै ।
सोऽन्ते चाप्यचिरेण भृङ्गितुल्यः पादाब्जे परमेश्वरस्य युक्तभृङ्गः ॥ ५४ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे भृङ्गिकृतशिवस्तोत्रवर्णनं नाम दशमोऽध्यायः ॥

---

## ॥ एकादशोऽध्यायः ॥

स्कन्दः —
शृणु पुण्यं चरित्रं च उपमन्योर्महात्मनः । मुनौ कारुणिकः [1]प्रोक्तो यत्र देवो महेश्वरः ॥ १ ॥
तदद्य वर्तयिष्यामि चरितं पापनाशकम् । धौम्याग्रजस्यैव मुनेः शृण्वतामघनाशनम् ॥ २ ॥
पुरा ह्युमन्युश्च मुनेर्धुमन्योश्च सुतो महान् । बह्वृचो नियतो मौनी शिवध्यानपरायणः ॥ ३ ॥
अवर्तत मुदा युक्त उञ्छवृत्तिर्द्विजोत्तमः । तपसा शोषयन् गात्रं त्रिनेत्राराधनोद्यतः ॥ ४ ॥
तस्याभूद्गृहिणी साध्वी वसिष्ठस्यानुजा सती । हुमन्युं पूजयामास उञ्छसंस्थमपि द्विजम् ॥ ५ ॥
वाक्यैः शौचोपकरणैः पाकसम्पादनैस्तदा । तस्यैवं वर्तमानस्य तद्भार्या पतिदेवता ॥ ६ ॥
असूत तनयं काले कुमारमिव पार्वती । शुभर्क्षे सुमुहूर्ते सा सर्वसंपत्प्रदायके ॥ ७ ॥
तं दृष्ट्वा स सुतं विप्रो हुमन्युर्हर्षनिर्भरः । पुत्रजन्मप्रहृष्टात्मा धानामुष्टिं ददौ पिता ॥ ८ ॥

---

१ "प्रीतो C D कोशयोः ।

उपमन्युं ततोऽस्यैव चक्रे बालस्य नाम तैः। सोऽवर्धत दिनैस्तत्र तदा पितृगृहे सुखम् ॥ ९ ॥
स पञ्चवार्षिको जातो यतो मात्रा सहागमत्। तं माता न्यवसत् तत्र स्वगृहे नित्यमौरसम् ॥
जगौ च नियमेनैव पिष्टेनालोडितं पयः। क्षीरं पिबेति माता तं नित्यमेव मनोरमा ॥ ११ ॥
मन्वानः सोऽपिबत् क्षीरं मात्रा दत्तं दिने दिने। स मातुलगृहं मात्रा प्राप मासं तदोषितः ॥
मातुलान्याऽप्युरुःधत्या होमशेषं पिबन् पयः। दत्तं तन्मातुलेनापि पीतं सुस्वादु तत्पयः ॥
तत्क्षीरवासनायोगात् पुनः प्राप गृहं स्वकम्। स्वमातरं ययाचेऽथ स्वादु तत्सदृशं पयः ॥ १४॥
देहीत्येव लुठन् भूमौ रुदन् पुत्रः करौ शिरः। प्रहृत्य बाल्यान्मौर्ख्येन मातरं पितरं तदा ॥
सा माता दुःखिता तं वै प्राह शोकातुरं तदा ॥ १५ ॥

माता —

त्वं बाल कुरुषे दुःखं मौर्ख्यादज्ञानतो मुनेः। [1]भार्या दारिद्र्यविवशा नैव गौर्मे गृहे सुत ॥ १६ ॥
अपूजितमहेशानां क्व धनानि गृहाणि च। गावो धान्यानि वासांसि दारिद्र्यार्णवमध्यगा ॥
पिबैतदधुना पुत्र क्षीरं पिष्टविनिर्मितम्। इत्युक्तोऽपि रुदन् मौर्ख्यात् ययाचे क्षीरमेव हि ॥
मातुलान्या पुरा दत्तं क्षीरं तत्सदृशं मुधा। सा पुनर्दुःखिता देवी पुत्रं वीक्ष्य तदातुरा ॥ १९ ॥
कास्माकं वनसंस्थानां उञ्छवृत्त्युपजीविनाम्। अनर्चितमहेशानां क्वाद्यान्नं क्षीरमिश्रितम् ॥ २० ॥
इत्युक्तमात्रो मात्रा स प्राहाथो मातरं तदा।

उपमन्युः —

कोऽसौ महेशो जननि क्वाद्य संप्रति वर्तते। तमाराध्याहममलं क्षीरान्नं च लभे सदा ॥ २१ ॥
सा माता विस्मिता पुत्रं प्राह बालं तदा मुदा ॥ २२ ॥

माता —

यं देवा ब्रह्मविष्ण्वाद्या नैव जानन्ति तं शिवम्। यस्य रूपपरिज्ञानं वेदान्तैरपि दुर्लभम् ॥ २३ ॥
भक्त्यैव लभ्यो यो देवः पूजितः सर्वकामदः। तमाराध्यैव देवाश्च मुनयोऽपि महेश्वरम् ॥ २४ ॥
लेभिरे वांछितान्येव महादेवान्महेश्वरात्। तस्मिन् प्रसन्ने देवेशे किमलभ्यं शरीरिणाम् ॥ २५ ॥
इत्युक्तः स तदा मात्रा पितरं प्राह बालकः।

उपमन्युः —

अहमाराधयिष्यामि देवदेवमुमापतिम्। त्वत्तोऽनुज्ञातुमिच्छामि तपसेऽहं धृतव्रतः ॥ २६ ॥

---

१ कोष्ठान्तर्गतः पाठः D कोशे नास्ति।

इति पुत्रवचः श्रुत्वा तं पिता प्राह बालकम् । दीक्षयित्वा विधानेन ददौ पञ्चाक्षरं मनुम् ॥
पूजाक्रममुपादिश्य तपसे प्रैषयद्वनम् । सोऽपि नत्वा पितुः पादौ मातरं च गतो वनम् ॥ २८ ॥
आशास्त तदा माता तस्यैवाशिषमुत्तमाम् । २९ ॥

माता —

पूर्वतः पातु ते शम्भुः दक्षिणे नीललोहितः । पश्चिमे वामदेवोऽव्यात् उत्तरस्यां पिनाकधृक् ॥
दिवि ईशानकृत् पातु भूम्यां भूभारधृक् स्वयम् । विष्णुर्ब्रह्मा च रुद्रश्च वसवो मरुतस्तथा ॥ ३१ ॥
आदित्या अश्विनौ रुद्रा यमसूर्यानलेन्दवः गन्धर्वा गरुडा यक्षाः विद्याधरवराप्सराः ॥ ३२ ॥
नागाः किंपुरुषा गावो मातरो मरुदीश्वराः । मृगाश्च पक्षिणो ये च हिंसका भूतजातयः ॥ ३३ ॥
व्याघ्रादयो दुष्टसत्त्वाः पान्तु त्वां वनमध्यगम् । तपस्यभिरतं शंभुः शंकरः पातु सर्वदा ॥ ३५ ॥

स्कन्दः —

इत्यालिङ्ग्य मुदा पुत्रं मूर्ध्नि जिघ्रेऽभिनन्दिता । प्रस्नुतौ स्वस्तनौ माता तनयं पाययत् तदा ॥
आनन्दजाश्रु मुञ्चन्ती उपमन्योस्तदाननम् । पश्यन्ती चन्द्रसंकाशं चन्द्रचूडार्चकस्य च ॥ ३६ ॥
उपमन्युर्महावीरः क्षयद्वीरपदार्चकः । वनं जगाम मुदितो मुनीन् विस्मापयंस्तदा ॥ ३७ ॥
तं पिता प्राह हर्षेण हुमन्युर्भूरिदक्षिणः । वक्ष्ये हितं तवात्यन्तं शृणु मद्वचनं सुत ॥ ३८ ॥
भावलभ्यो महादेवो ब्रह्मादीनां च दुर्लभः । सुलभो भक्तिभाजां च सर्वेषां सर्वदेहिनाम् ॥ ३९ ॥
तवाद्योपदिशाम्यद्य मन्त्रं पञ्चाक्षरं परम् । इत्युक्त्वाऽथ तदा पुत्रं उपनीतं तदा पिता ॥ ४० ॥
भस्मरुद्राक्षसंपन्नं अग्निरित्यादिमन्त्रतः । लिङ्गार्चनमुपादिश्य स्तोत्रमेतदुपादिशत् ॥ ४१ ॥

हुमन्युः —

उपमन्यो शृणुष्वेदं स्तोत्रं सर्वेष्टदायकम् । स्तोत्रेणानेन देवेशं नित्यं स्तुहि महेश्वरम् ॥ ४२ ॥

कुरङ्गसङ्गार्धधरं दगञ्चलस्फुलिङ्गलेशैर्मदनोऽप्यनङ्गितः ।
सारङ्गमातङ्गहरं हर त्वां पतङ्गसंस्थं प्रणमाम्यसङ्गम् ॥ ४३ ॥

शिखिसखसुखभूनिदान शम्भो षण्मुखशिक्ष सुरक्षदीक्षिताङ्ग ।
वरगङ्गाजटशोभितोत्तमाङ्ग धृतरुद्राक्ष महोक्षवाह पाहि ॥ ४४ ॥

मातङ्गतुङ्गोत्तमकृत्तिवासः भुजङ्गभस्माङ्कजनान्तरङ्ग ।
त्वल्लिङ्गसङ्गे विहितान्तरङ्गे हरौ रथाङ्गप्रद देव पाहि ॥ ४५ ॥

दग्धान्धक त्रिपुरसूदन कालकाल व्यालेन्द्रनीलगलधृक् गलहालहाल ।
शूलानलानिलधराव्यय व्योमकेश कोशातिगाश्रितभवैकसमूह पाहि ॥ ४६ ॥
जटनट तटिनीवटोरुमूलस्थितकायामृतलंपटैश्च देवैः ।
खपट सुतभूतगणौघसंघैः नटचूड कपटं विहाय पाहि ॥ ४७ ॥

स्कन्दः —

[1]इत्युक्तः स तदा सुतो गुरुवराल्लब्ध्वा स्तुतिं तद्वनं
यातो बिल्वनवारुणैर्दलभरैः संफुल्लपुष्पैस्तदा ॥ ४८ ॥
स्नात्वा सुरुद्रवपुषा धृतभस्मभालो रुद्राक्षहारवलयः शिवलिङ्गदृष्टिः ।
बालस्तदा गिरिवरं प्रजगाम हर्षाद्रम्यं नवारुणदलैः विपिनैश्च बिल्वैः ॥ ४९ ॥
युक्तं त्रिकूटशिखरं तदतीव मोदप्रेमास्पदं मुनिजनप्रियमिष्टमीशम् ।
संपूजयन् गिरिशलिङ्गमनोज्ञमिष्टं रुद्राक्षभस्मनिरतो विषयेषु बालः ॥ ५० ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे उपमन्युतपोवनप्रवेशवर्णनं नामैकादशोध्यायः ॥

---

## ॥ द्वादशोऽध्यायः ॥

स्कन्दः —

पञ्चवर्षाणि बालोऽसावुपमन्युर्महाद्युतिः । चकार नियमं घोरं शोणाकूले जपन् तदा ॥ १ ॥
भस्मत्रिपुण्ड्ररुद्राक्षधारको मुनिसत्तमः । वर्षं पर्णाशनो बाल उपमन्युरीश्वराभिधम् ॥ २ ॥
प्रतिष्ठाप्यार्चयत् तत्र त्रिकालं बिल्वपल्लवैः । निवेद्य फलमूलानि वन्यपुष्पैर्महेश्वरम् ॥ ३ ॥
वर्षं फलाशनस्तस्थौ वर्षं वाताशनोऽभवत् । रुद्रमावर्तयंस्तत्र मुनिर्निश्चलमानसः ॥ ४ ॥
तताप परमं घोरं तपः परमदुश्चरम् । सुरवित्रासनकरं त्रिनेत्रपदपूजकः ॥ ५ ॥
ततो वर्षान्तिमे तत्र बालं दृष्ट्वा मुनीश्वराः । यतयश्च तदा सर्वे विस्मितास्तत्तपःक्रियाम् । ६ ॥
बालं च बालसंकाशं तपन्तमनलं यथा । देवा ब्रह्मादयश्चैव नारदाद्या महर्षयः ॥ ७ ॥
धन्योऽयमित्यवोचंस्ते महामन्युपदार्चकः । नान्यत्रास्य चलं चेतो महेशपदपूजनात् ॥ ८ ॥
भक्तिरस्य विरूपाक्षे ब्रह्मजन्मनगःफलम् । शिवभक्तोऽयमधुना सर्वदेवाधिकस्त्वयम् ॥ ९ ॥

---

[1] द्विपादयं श्लोकः

मुनीनामपि मान्योऽयं बालमानुपभोऽर्भकः। अर्भकोऽपि सदास्माकं मान्यो मर्णपदार्चकः॥
संसारभर्जकोऽत्यन्तं पापसङ्घकतर्जकः। एकस्य दर्शनेनापि महापातकराशयः॥ ११॥
विनाशमुपगच्छन्ति शाङ्करसङ्गावलोकनैः। इत्यमन्यन्त देवास्ते उपमन्युं महाद्युतिम्॥ १२॥
मुनयो मुनिपत्न्यश्च सर्वे विस्मयितान्तराः। तस्मिंस्तदा तप्यमाने उपमन्यौ मुनेः सुते॥ १३॥
तद्ध्यानधारासंक्रान्तो महादेवो महेश्वरः। जगाम दर्शनं तस्य उमायुक्तो वृषाधिपः॥ १४॥
त्रिनेत्रो नीलकण्ठश्च सर्वाभरणभूषितः। पूर्णेन्दुद्युतिसर्वाङ्गो गणवृन्दनिषेवितः॥ १५॥
संस्तुतो देवसङ्घैश्च मुनिभिस्तत्र शंकरः। आलोक्य स महादेवं ववन्दे बालको मुनिः॥ १६॥
उत्थाप्य तं मुनिवरं बालं शीतांशुभूषणः। पस्पर्श पाणिना वक्त्रं शन्तमेन महेश्वरः॥ १७॥
उपमन्युः करस्पर्शात् महेशस्यामितात्मनः। प्रणम्य देवं तुष्टाव भक्त्या नम्रशिरोधरः॥
प्रबद्धाञ्जलिहस्ताग्र उग्रदेवं कपर्दिनम्॥ १८॥

उपमन्युः —

जय शङ्कर पार्वतीपते मृड शंभो शशिखण्डमण्डन।
मदनान्तक भक्तवत्सल प्रियकैलास दयासुधाम्बुधे॥ १९॥
सदुपायकथास्वपण्डितो हृदये दुःखशरेण खण्डितः।
शशिखण्डशिखण्डमण्डनं शरणं यामि शरण्यमीश्वरम्॥ २०॥
महतः परितः प्रसर्पतः तमसो दर्शनभेदिनो भिदे।
दिननाथ इव स्वतेजसा हृदयव्योम्नि मनागुदेहि नः॥ २१॥
न वयं तव चर्मचक्षुषा पदवीमप्यभिवीक्षितुं क्षमाः।
करुणाऽभयदेन चक्षुषा सकलेनेश विलोकयाशु माम्॥ २२॥
त्वदनुस्मृतिरेव पावनी स्तुतियुक्ता नहि वक्तुमीश सा।
मधुरं हि पयः स्वभावतो ननु कीदृक् सितशर्करान्वितम्॥ २३॥
सविषोऽप्यमृतायते भवान् शवमुण्डाभरणोऽपि पावनः।
भव एव भवान्तकः सतां समदृष्टिर्विषमेक्षणोऽपि सन्॥ २४॥
अपि शूलधरो निरामयो दृढवैराग्यरतोऽपि रागवान्।
अपि भैक्ष्यचरो महेश्वरः चरितं चित्रमिदं हि ते प्रभो॥ २५॥
वितरत्यभिवाञ्छितं नृणां परिपृष्टः किल कल्पपादपः।
हृदये स्वत एव धीमते नमतेऽभीष्टफलप्रदो भवान्॥ २६॥

सहसैव भुजङ्गपाशवान् विनिगृह्णाति न यावदन्तकः ।
अभयं कुरु तावदाशु मे गतजीवस्य पुनः किमौषधैः ॥ २७ ॥

[1]सविषैरिव भीमपन्नगैः विषयैरेभिरलं परीक्षितुम् ।
अमृतैरिव संभ्रमेण मामभिषिञ्चाशु दयावलोकनैः ॥ २८ ॥

मुनयो बहवोऽथ धन्यतां गमिताः स्वाभिमतार्थलाभतः ।
करुणाकर येन तेन मां अवसन्नं ननु पश्य चक्षुषा ॥ २९ ॥

प्रणमाम्यथ यामि चापरं शरणं कं कृपणाभयप्रदम् ।
विरहीव विभो प्रियामयं परिपश्यामि भवन्मयं जगत् ॥ ३० ॥

बहवो भवताऽनुकम्पिताः किमितीशान न माऽनुकम्पसे ।
दधता किमु मन्दराचलं परमाणुः कमठेन दुर्धरः ॥ ३१ ॥

अशुचिं यदि मां नु मन्यसे किमिदं मूर्ध्नि कपालदाम ते ।
अथ शाठ्यमसाधुसङ्गमं विषलक्ष्मासि न किं द्विजिह्वभृत् ॥ ३२ ॥

विलुठाम्यवनौ किमाकुलः किमुरो हन्मि शिरो भिनद्मि वा ।
किमु रोदिमि रारटीमि वा कृपणं मां न यदीक्षसे प्रभो ॥ ३३ ॥

शिव सर्वग शर्व सर्वतः प्रणतो देव दयां कुरुष्व मे ।
नम ईश्वर नाथ दिक्पते पुनरेवेश नमो नमोस्तु ते ॥ ३४ ॥

क दृशं विदधामि किं करोम्यधितिष्ठामि कथं भयाकुलः ।
कनु तिष्ठसि रक्ष रक्ष मां मयि शम्भो शरणागतोऽस्मि ते ॥ ३५ ॥

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतः ॥ ३६ ॥

परलोकभयात् प्रतिक्षणं मे हृदयं मुह्यति मुग्धचन्द्रमौले ।
सदयं परिगृह्य साधु बन्धो कुरु मां निर्भयमर्मकं त्वदीयम् ॥ ३७ ॥

हर हर भव भीम भर्ग शंभो त्रिनयन रुद्र महेश विश्व शंभो ।
हर हर दुरितं त्रिशूलपाणे शिव शिव शङ्कर किंकरस्तवाहम् ॥ ३८ ॥

---

१ अयं श्लोको D कोशे नोपलभ्यते ।

यथा मृकण्डोस्तनयं यमारे यथैव पाण्डोस्तनयं मखारे ।
यथा शिलादस्य सुतं कृपाब्धे तथैव मां पाहि पिनाकपाणे ॥ ३९ ॥

सूतः —

उपमन्युकृतं स्तोत्रं यः पठेत् शिवसन्निधौ । शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ४० ॥

तत्स्तुत्या मोदितः शंभुः तं प्राह विनयानतम् ।
देव्याः पश्यन् मुखाम्भोजं गणानां पश्यतां तदा ॥ ४१ ॥

शिवः —

वत्सोपमन्यो कामं ते वृणु तं पूरयाम्यहम् । गाणपत्यं प्रदत्तं ते विद्यास्तत्र चतुर्दश ॥ ४२ ॥
प्रतिभान्त्वद्य ते वेदाः साङ्गोपाङ्गाः शिवागमाः । शैवाचार्यो भवानस्तु पार्वत्यास्तनयो ह्यसि ॥
इत्युक्ते शम्भुना तत्र विप्रोवाच महेश्वरम् । ४४ ॥

उपमन्युः —

मात्रा पित्रा महादेव सह भोक्तुं सदाशिव । क्षीरान्नं परमं मेऽद्य भक्तिं त्वत्पादयोर्दृढाम् ॥
याचेऽहं देवदेवेश इत्युक्तं तस्य शङ्करः । देवीं वीक्ष्य तथेत्याह महादेवोऽम्बिकायुतः ॥ ४६ ॥
तं प्राह पश्यतां तत्र मुनीनां भावितात्मनाम् ॥ ४७ ॥

ईश्वरः —

क्षीरोदार्णव एप ते सुविहितः त्वं शैववर्याग्रणीः
त्वं विष्ण्वादिगुरुर्भवस्यमिहितो मल्लिङ्गपूजादरः ।
त्वं नित्योसि सदा ममात्मजवरोऽपर्णाप्रियः स्कन्दवत्
त्वत्स्तुत्या नितरामभीष्टफलदो यः स्तौति मां लिङ्गगम् ॥ ४८ ॥

तस्मै तां वितरामि मुक्तिमखिलां भुक्तिं सदा [2]मानुष-
नन्दामोदपरंपरामिरिह ते (?) वर्धेत मत्पूजकः ॥ ४९ ॥

प्रालेयाचलसन्निभान्नगिरयो भक्ष्यैश्च भोज्यैर्युताः
प्राज्याज्यादिपरिप्लुताः सुमधुरं क्षीरोदधिं त्वं पिब ।
पश्याम्नाधिपपूजनेन विहिता वाञ्छाधिकास्त्वत्परो
भक्तिर्मेऽस्तु सजग्धिरप्यनुदिनं नैवेद्यशेषेण मे ॥ ५० ॥

---

२ मानुषानन्दान् मोदपरंपराभिरिह सो वर्धेत (C) ।

इत्युक्त्वा पुरसूदनः प्रमथपस्तत्रागमच्चाम्बया
कैलासं मुनिनन्दनोऽपि सहसा दैवैस्तदा पूजितः ।
पित्रा मात्रनुमोदितः स च गिरिं देवप्रसादोद्भवं
ज्ञानं सर्वसुपूजिताम्नकलितं क्षीराम्बुधिं चापिबत् ॥ ५१ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे उपमन्युतपःस्तेत्रगाणपत्य क्षीरसमुद्रप्रदानादिवर्णनं नाम द्वादशोऽध्यायः ॥

---

## ॥ त्रयोदशोऽध्यायः ॥

---

जैगीषव्यः —

मृकण्डुतनयः स्कन्द कथं जिग्येऽन्तकं पुरा । महादेवप्रसादेन तन्मे कथय सांप्रतम् ॥ १ ॥

न तृप्तिर्भगवद्भक्तचरितं शृण्वतो मम । भावा एव महोदारा भवपादार्चने रताः ।

अपारं सन्तरन्त्येव भवं भावेन शाङ्करे । २ ॥

सूतः —

जैगीषव्यवचः श्रुत्वा षण्मुखस्तारकान्तकः । संसारतारकं भक्तचरितं प्रावदत् तदा ॥ ३ ॥

स्कन्दः —

शृणु त्वं शांभवश्रेष्ठ शिपिविष्टार्चकस्य च । मृकण्डुतनयस्येदं चरितं पापनाशनम् ॥ ४ ॥

आसीत् प्रजापतिसुतो मृकण्डुर्मानसो मुनिः । कालञ्जरे गिरौ तत्र नानामुनिजनाश्रये ॥ ५ ॥

वनस्पतिमहावल्लीवेष्टितद्रुमसंकुले । वसन्तप्रमुखानेकऋतुभिः परिसेविते । ६ ॥

मयूरहंसचक्राह्वयुतकासारसंयुते । मृगेन्द्रैर्वारणेन्द्रैश्च सुमरैश्चमरैर्युते ॥ ७ ॥

उत्फुल्लह्लकहलारकुमुदोत्पलशोभिते । वनवृक्षैस्तथा सालतमालामलकावृते ॥ ८ ॥

रसालकृतमालाद्यैः मल्लभल्लातकैर्युते । नीपकेतकसिन्दूरकदम्बवकुलावृते ॥ ९ ॥

शाल्मलीश्रीफलोपेते नानावल्लीविराजिते । गोदावरीपरिसरे कृतोटजवरो मुनिः ॥ १० ॥

विशालाक्ष्याख्यया पत्न्या सोऽध्युवास कृताश्रमः । स तपोऽतपदत्युग्रमुग्रपादार्चने रतः ॥ ११ ॥

त्रिकालं भस्मरुद्राक्षत्रिपुण्ड्रपरिशोभितः । रुद्राध्यायजपासक्तः पञ्चाक्षरपरायणः ॥ १२ ॥

चन्द्रचूडमहालिङ्गपूजाचञ्चुरमानसः । एवं लिङ्गं समभ्यर्च्य नित्यं स्तौति महेश्वरम् ॥ १३ ॥

मृकण्डुः –

फालाक्षाध्वरशिक्ष कक्षवसते उक्षेन्द्रकेतो हर
त्र्यक्षाक्षय्यफलप्रदाक्षविहृते मां वीक्ष्य रक्षां कुरु ।
भक्ष्यप्रायगरादिपानसमदृग्लक्ष्येऽप्यलक्ष्यो भवान्
वीक्षाशिक्षितमन्मथान्तकरिपो लीलायितास्ते शुभः ॥ १४ ॥

असुरसुरवरैर्विमथ्यमानात् गिरिवरघर्षणतो हि सागरान्तात् ।
गरगुरुभीतिपराहतोर्जितोजोहरिविधिवलभित्प्रपन्न पाहि ॥ १५ ॥

पुरहर शरकर हेमनगोत्तमधारक शङ्कर परिपाहि ।
तुरगायितनिगमान्तकभीतिद उरगोत्तमभूषण शंभो । १६ ॥

मधुमथनाक्षिपदाम्बुजपूजित भगणाधिपभाकृतमौले ।
सजलजलप्रदनिभगल पुरहर भवभयतारक परिपाहि ॥ १७ ॥

इन्दुकलाधर मन्दरवस हर कुन्दसुमोत्तमनिभदेह ।
विन्दुकलार्णवपरवरविहृते कर्णदृगन्तधराव्यय पाहि ॥ १८ ॥

सूतः –

एवं संस्तुत्य देवेशं निनाय हायनं तदा । तस्यैवं वर्तमानस्य नारदोऽभ्यागमद्गृहान् ॥ १९ ॥
तं विष्टरेणानुमान्य स्वागतेनाभ्यनन्दयत् । कृतातिथ्यं च विश्रान्तं विष्टरश्रवसः सुतम् ॥ २० ॥
उपामन्त्र्येति होवाच मृकण्डुः प्रश्रयान्मुनिम् ।

मृकण्डुः –

कुतः समागतं ब्रह्मन् क्व वा गन्तुं मनस्तव । कौतुकेनाद्य पृच्छामि स्निग्धभावतया मुने । २१॥
त्वं सर्वदर्शी मुनिषु न तवाविदितं क्वचित् । इत्युक्तो मुनिना तत्र नारदो दिव्यदर्शनः ॥ २२ ॥
कथाश्चाकथयद्ब्रह्मन् वैष्णवीश्चेन्द्रमुख्यगाः । मुनीनां च नृपाणां च दैत्यासुरसमुद्भवाः ॥ २३ ॥

नारदः –

किन्त्वेकं तव वक्ष्यामि स्निग्धत्वेनामुना मुने । नैव शोके मनः कार्यं श्रोतव्यं मे हितं वचः ॥
तव भार्या विशालाक्षी जनयिष्यति सत्सुतम् । मुनिश्रेष्ठं महाभागं शिवपादार्चने रतम् ॥ २५॥
अद्यादिनवमे मासे षोडशाब्दं च जीवति । तेन पूजय देवेशं महेशं भक्तिभावतः ॥ २६ ॥
आयुर्दाता महादेवः सर्वश्रुतिषु कीर्तितः । तमाराधयतात पुत्रः तस्य मृत्युहरो हरः ॥ २७ ॥
नैतच्च कथनीयं ते विस्रंभेनापि कस्यचित् । इत्युक्त्वा स गतः स्वैरं नारदो ब्रह्मनन्दनः ॥ २८॥

ततश्च नवमे मासि तत्पत्न्यन्तर्वती तदा । सुषाव कालेन सुतं कुमारं कृत्तिका इव ॥ २९ ॥
सर्वलक्षणसंपन्नं पित्रोरानन्ददायकम् । श्रुत्वा दृष्ट्वा मुनिं पुत्रं दत्त्वा दानानि शक्तितः ॥ ३० ॥
तं पुत्रं भस्मनाऽऽलिप्य त्रिपुण्ड्राण्याचरत् तदा । ततश्च सूतिकागेहे तेनाराधयदीश्वरम् ॥ ३१ ॥
लिङ्गे जलं बिल्वपत्रं तेन संपातयत् तदा । नारदस्य वचः श्रुत्वा तेन पुत्रेण वै मुनिः ॥ ३२ ॥
चक्रे नामास्य स तदा मार्कण्डेयेति सादरम् तस्मिंस्तदा वर्धमाने बालचन्द्रमसीव हि ॥ ३३ ॥
उपनिन्ये सुतं तस्मै पञ्चाक्षरमुपादिशत् । पञ्चास्यप्रीतये तस्मै पञ्चत्वविनिवारकम् ॥ ३४ ॥
अग्निरित्यादिमन्त्रैश्च त्रिकालं धूलने रतम् । त्र्यायुषैः त्रिपुण्ड्राङ्कं फाले बाह्वोश्च वक्षसि ॥ ३५ ॥
रुद्राक्षधारिणं पुत्रं रुद्राध्यायजपादरम् । चकार नियमेनासौ सपुत्रेण मुनिस्तदा ॥ ३६ ॥
वेदानध्यजिगीष्टासौ वर्णी वर्णाश्रमोचिताः । क्रियाश्चाकारयत् तस्मात् स्वगृहे न्यवसन्मुनिः ॥
मार्कण्डेयोऽपि नियतश्चकार गुरुशासनम् । त्रिकालमर्चयन् साम्बं शिवलिङ्गे मनोहरे ॥ ३८ ॥
भस्मरुद्राक्षसंपन्नो बिल्वपत्रैः सदैव हि । संपूज्य लिङ्गं संस्तौति मार्कण्डेयः शिवं स्मरन् ॥ ३९ ॥

मार्कण्डेयः—

श्रीकालकालाय वृषध्वजाय स्कन्दार्चिताय करिचर्मधराय तुभ्यम् ।
वेदान्तबोधितपदाय सनातनाय देवोत्तमाय सततं भगवन्नमस्ते ॥ ४० ॥

ईशाय कोशनिवहाकृतिदूरगाय भीमाय उग्रशरकार्मुकधारिणे ते ।
भस्माङ्गरागतनवे नयनाग्निलेशदग्धान्धकत्रिपुरकाम हराय तुभ्यम् ॥ ४१ ॥

उमासहायाय भवोद्भवाय मारोरुकायदहनामललोचनाय ।
व्यालेन्द्रमालगरनीलगलाय तुभ्यं विश्वाधिकाय च शिवाय सदा नमस्ते ॥ ४२ ॥

यमदलदलनाय विशालदेहजालाय भूधरशयाय पिनाकिने ते ।
बालाग्रमात्रहृदयान्तरदीपकाय शुद्धाय ज्ञानतनवे भगवन् नमस्ते ॥ ४३ ॥

एवं स संस्तुवन् देवं मार्कण्डेयो महेश्वरम् । कलाः सर्वाः स जग्राह नियतो मुनिशासनात् ॥
ईशानार्चापरो नित्यं कुशलः सर्वकर्मणि । ऊनषोडशवर्षं तं पुत्रं वीक्ष्य सुदुःखितौ ॥ ४५ ॥
पितरौ तस्य तच्चारु गुणं वीक्ष्य दिने दिने । साश्रुपातं तदेकान्ते पश्यतस्तस्य तन्मुखम् ॥ ४६ ॥
त्रिपुण्ड्रविलसत्फालं रुद्राक्षकृतकङ्कणम् । युवानं चारुसर्वाङ्गं दण्डाषाढविराजितम् ॥ ४७ ॥
आषाढार्चनसंसक्तं तुषाराद्रिपदमीतिदम् । तौ प्रणम्य तदा प्राह खेदकारणमेतयोः ॥ ४८ ॥

मार्कण्डेयः –

विद्यमाने मयि ब्रह्मन् माता चेयं तपस्विनी। साश्रुपातं च मां वीक्ष्य किमर्थं दुःखितौ युवाम्॥
ब्रूत तत्कारणं मेऽद्य अपनेष्यामि तद् ध्रुवम् ॥ ५० ॥

सूतः–

इत्युक्तं तद्वचः श्रुत्वा नारदोक्तं तदा मुनिः। पुत्रायाकथयत् सर्वं तस्य तन्मृत्युकारणम् ॥ ५१॥

मृकण्डुः –

कदाचिन्नारदोऽभ्यागात् गृहं मे दिव्यदर्शनः ऊनषोडशवर्षे तु पुत्रे ते चान्तकाद्भयम् ॥ ५२॥
इत्युक्त्वा निर्जगामाथ देवलोकं यथागतम्। यातः पञ्चदशो वर्षः तेन खिन्नोऽस्मि मा शुचः॥

सूतः– इत्युक्तं पितृवचनं निशम्य हृष्टः पद्मोत्थामलसंभवस्य सूनुसूनुः।
तौ प्राहेत्थमपारशङ्करार्चाप्रभवोत्थामलहर्षतो महात्मा ॥ ५४ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे मार्कण्डेयचरिते मार्कण्डेयोत्पत्ति-नारदवाक्यवर्णनं नाम त्रयोदशोऽध्यायः॥

---

## ॥ चतुर्दशोऽध्यायः ॥

मार्कण्डेयः –

संस्थिते शङ्करे साम्बे का चिन्ता चान्तकान्मम। यस्य संस्मरणादेव जन्ममृत्युभयं नहि ॥१॥
तल्लिङ्गार्चाप्रभावेन मृत्योश्चाहं मृतिप्रदः। यस्यार्चनेन भगवान् विष्णुत्वं प्राप वै हरिः॥ २॥
पद्मासनोपि यस्यार्चाप्रभावात् सर्गमाप्तवान्। रुद्रोऽपि चान्ते संहारं कुर्वंस्त्रिजगतीतले ॥ ३॥
इन्द्रोऽपीन्द्रत्वमापन्नस्तथान्ये देवदानवाः। त्रियम्बकं विरूपाक्षं सुगन्धिं पुष्टिवर्धनम् ॥ ४॥
अमृतत्वं प्रयास्येव मृत्योर्मुच्येयमेव हि। इत्युक्त्वा स प्रणम्याम्बां पितरं बाष्पविक्लवम् ॥ ५॥
माशुचस्त्वमिति प्रोच्य जगाम तपसे वनम्। कालञ्जरं ततः प्राप्य त्रिकालं स्नानतत्परः॥ ६॥
भस्मत्रिपुण्ड्ररुद्राक्षो मालाकवचिताङ्गकः। बिल्वपत्रैस्तदा शम्भुमहर्निशमतोषयत् ॥ ७॥
रुद्रसूक्तैः पञ्चवर्णैः पञ्चब्रह्मभिरीश्वरम्। तुष्टाव कष्टनाशाय शिपिविष्टमुमासखम् ॥ ८॥

मार्कण्डेयः –

कालकाल करुणालवाल हे नीललोहित दशा जितकाल।
व्यालमालगल हस्तशूलधृक् व्योमजाल अनलामलफाल ॥ ९॥

तस्यैवं वर्तमानस्य तदन्तिमदिने द्विजम् । समानेतुमथाभ्यागात् क्रूरः पाशकरोऽन्तकः ॥ १० ॥
महाकुलायमास्थाय घनवर्णं दुरासदम् । मृत्युज्वरपरीवारो दंष्ट्राप्रकुटिलाननः ॥ ११ ॥
जिह्वया सृक्किणा चापि लेलिहानोऽन्तकस्तदा । कृष्णाङ्गैर्विकृतैर्घोरैः पाशमुद्गरपाणिभिः ॥ १२ ॥
ऊर्ध्वकेशैः करालास्यैः विवृत्तनयनारुणैः । भयस्य चापि भयदैः स दूतैः संवृतो ययौ । १३ ॥
मार्कण्डेयं मीलिताक्षं शिवपूजैकतत्परम् । बालं धृतव्रतं धीरमाजुहाव यमस्तदा ॥ १४ ॥

यमः —

किं मां भीषयसे बाल नाहं भीतः प्रतारणैः । मत्पाशपाशितानां च कश्चिन्नास्ति परायणम् ॥
किमनेन विचारेण निवर्तस्वाधुनाऽधम । तपस्विनां कोट्योऽत्र नृपाणामयुताष्टकम् । १६ ॥
चराचरं जगच्चात्र स्थितं मच्छासनेऽद्य हि । मद्दूतदर्शनेनापि भीतं सर्वं चराचरम् । १७ ॥
कस्ते कामो वृथा बालायाहि मत्सदनं ध्रुवम् । न मत्तः कश्चिदस्त्येव तव प्राणापहारकृत ॥
कस्ते त्राताद्य पश्यामि इत्युक्त्वामोचयत् स्वकान् । पाशांस्तदा यमश्चोग्रानाशीविषसमुद्भवान् ॥
तमासन्नगतं वीक्ष्य अन्तकं गणसंवृतम् । विवृत्तनयनं क्रूरं लिङ्गमालिङ्ग्य तस्थिवान् । २० ॥
तदा तुष्टाव भीतोऽथ मार्कण्डेयो महेश्वरम् ॥ २१ ॥

मार्कण्डेयः —

रत्नसानुशरासनं रजताद्रिशृङ्गनिकेतनं शिञ्जिनीकृतपन्नगेश्वरमच्युतानलसायकम् ।
क्षिप्रदग्धपुरत्रयं त्रिदशालयैरभिवन्दितं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ २२ ॥

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि मां । चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥

पञ्चपादपपुष्पगन्धिपदाम्बुजद्वयशोभितं फाललोचनजातपावकदग्धमन्मथविग्रहम् ।
भस्मदिग्धकलेवरं भवनाशनं भवमव्ययं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ २४ ॥

मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहरं पङ्कजासनपद्मलोचनपूजिताङ्घ्रिसरोरुहम् ।
देवसिन्धुतरङ्गशीकरसिक्तशीतजटाधरं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ २५ ॥

कुण्डलीकृतकुण्डलीश्वरकुण्डलं वृषवाहनं नारदादिमुनीश्वरस्तुतवैभवं भुवनेश्वरम् ।
अन्धकान्तकमाश्रितामरपादपं शमनान्तकं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ २६ ॥

यक्षराजसखं भगाक्षहरं भुजङ्गविभूषणं शैलराजसुतापरिष्कृतचारुवामकलेवरम् ।
क्ष्वेलनीलगलं परश्वथधारिणं मृगधारिणं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ २७ ॥

भेषजं भवरोगिणामखिलापदामपहारिणं दक्षयज्ञविनाशनं त्रिगुणात्मकं त्रिविलोचनम् ।
भुक्तिमुक्तिफलप्रदं सकलाघसंघनिबर्हणं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ २८ ॥

भक्तवत्सलमर्चितं निधिमक्षयं हरिदम्बरं सर्वभूतपतिं परात्परमप्रमेयमनामयम् ।
सोमवारिनभोहुताशनसोमपानिलखाकृतिं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ २९ ॥

विश्वसृष्टिविधायिनं पुनरेव पालनतत्परं संहरन्तमथ प्रपञ्चमशेषलोकनिवासिनम् ।
क्रीडयन्तमहर्निशं गणनाथयूथसमाकुलं चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः[1] ॥ ३० ॥

मार्कण्डेयस्तुतिं श्रुत्वा लिङ्गान्निर्गत्य शंकरः । नीलकण्ठो विरूपाक्षः कपर्दधृतचन्द्रकः ॥ ३१ ॥
शूलहस्तो महादेव उच्चैर्घोषेण वेगितः । शंपाकोटिमहार्णवैः भीषयंस्तं यमं तदा ॥ ३२ ॥
पदाम्बुजाग्रघातेन मकुटेऽताडयद्यमम् । शूलेन तीक्ष्णधारेण तं यमं व्यसुमातनोत् ॥ ३३ ॥
विसृज्य पाशं सुष्वाप महिषे पर्वतोपमः । विवृत्य नयने कालः कालकालेन पातितः ॥ ३४ ॥
पतितं तं समालोक्य तद्गणाः कां दिशं गताः । विसंत्यक्तायुधा जातास्ते दिशं नावलोकयन् ॥
पतिते च तदा काले अभूत् कोलाहलध्वनिः । देवानां च सुरारीणां पुष्पवृष्टिं च मुञ्चताम् ॥
महेशमौलिमालाभां चापतन्तीं नभस्तलात् । संप्रति प्रसभं देवाः तुष्टुवुर्नीललोहितम् ॥ ३७ ॥

देवाः —

श्रीवामदेव जितकाम सहस्रधाम स्तोमैकसीम निखिलागमसंस्तुताङ्घ्रे ।
भूमा त्वमेव शशिधामकलाललाम हृद्व्योमभूम भगवन् सततं नमस्ते ॥ ३८ ॥
अन्तकान्तक सदैव दान्तहृत्पद्मसद्मग महेश कृपाब्धे ।
कान्त शान्त गिरिजावरकान्त वेदान्तवेद्य भवतान्तमवाद्य शम्भो ॥ ३९ ॥

तस्मिन्नुपरते शब्दे सलुलायेऽन्तके हते । मुनिबालं समालोक्य बालचन्द्रावतंसकः ॥ ४० ॥
दण्डवत् प्रणतं भूमौ मा भैरिति तदाऽवदत् ॥ ४० ॥

ईश्वरः —

दत्तं गणाधिपत्यं ते मार्कण्डेय महामते । त्वं भक्तोऽतीव मत्पादयुग्माम्बुजसमर्चकः ॥ ४१ ॥
नीरजो जीव वर्षाणां षोडशात्माऽजरामरः । भव त्वं विगतापायः सदा लिङ्गार्चको मम ॥ ४२ ॥

---

१ मृत्युभीतमृकण्डुसूनुकृतस्तवं शिवसन्निधौ यत्र कुत्र च यः पठेन्नहि तस्य मृत्युभयं भवेत् ।
दीर्घमायुररोगतामखिलार्थसंपदमादरात् चन्द्रशेखर एव तस्य ददाति मुक्तिमपि स्थिराम् ॥
इति फलश्रुतिश्लोकः सांप्रदायिकः कोशेषु नोपलभ्यते ।

मल्लिङ्गार्चनतत्परे मुनिवरे को वान्तको वा सुराः
न ब्रह्मेन्द्रमरुद्गणाः हरिहराः पापाद्रिसंघेन किम् ।
सद्भीतिं जनिमृत्युरोगनिकरं चोन्मुच्य मुक्तिप्रभा-
कान्तं तं प्रकरामि तुष्टहृदयः शृण्वन्तु देवाः सदा ॥ ४३ ॥

मार्कण्डेय तवास्तु नित्यममराधीशाश्च ब्रह्मादयो
विष्ण्वाद्याः प्रतिकल्पनाशवपुषः कल्पान्तमेतत् परम् ।
नाशयास्त्वं त्वविनाशिदिव्यवपुषा नित्यो जरावर्जितो
यावन्मत्सदनं चिराय मम सद्भक्त्या प्रमोदस्व भोः ॥ ४४ ॥

देवाः —

इन्दुकुन्दधवलाङ्गमहोक्षापाङ्गसङ्गचरणाम्बुज पाहि ।
शाङ्गलिङ्गकृतसङ्ग महाङ्गाशास्खलोकन हराव्यय पाहि ॥ ४५ ॥

गङ्गातुङ्गतरङ्गरञ्जितजटाजूटेन्दुखण्डोज्वल ज्वालाजालविलोचनोत्तम महाकाकोदराकल्पक ।
लीलाचालितरञ्जितत्रिभुवनापारार्णवान्तःस्थित घोराशीविषनाथरञ्जितमहापादाम्बुजावाद्य माम् ॥

मुकुन्दनयनार्चितं पदयुगं प्रपन्नोऽस्मि ते सनन्दनसनातनाकलितवन्दनं नन्दनम् ।
हृदम्बुधितरङ्गकैः निखिलवेदवेद्यं सदा पदाम्बुजमरन्दपो भवतु मानसः षट्पदः ॥ ४७ ॥

कुलाचलकुमारिकाकुचतटीविहारादरं त्वदीयमधुना प्रभो मयि महाघदुःखैर्युते ।
निधेहि यदि मानसं तदिह मुक्तिकान्तापतिर्भवामि भुवनेपि सन् कुरु दयां त्वदीये शिशौ ॥

विश्राणय श्रमहरामनवद्यदृष्टिं कष्टौघमेदनविधौ विधिविष्णुवन्द्य ।
आद्योत्तमोत्तम भिभग्वरचन्द्रचूड संसाररोगहर रुद्र रुजं विनाशय ॥ ४९ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे मार्कण्डेयतपः-कालनिग्रह-मार्कण्डेयवर-
प्रदानवर्णनं नाम चतुर्दशोऽध्यायः ॥

---

## ॥ पञ्चदशोऽध्यायः ॥

---

स्कन्दः —

हरपादहते काले प्रार्थयन्ति महेश्वरम् । ततो ब्रह्मादयो देवाः विष्ण्वाद्याः सुरपुङ्गवाः ॥ १ ॥

प्रणम्य देवदेवेशं स्तुवन्तीशं सनातनम् । कालस्योज्जीवनार्थाय सदा प्राञ्जलयस्तदा ॥ २ ॥

कृतानलोज्ज्वलन्नेत्रं करालं शूलधारिणम् । कालान्तकं महादेवं घनघोषं सदाशिवम् ॥ ३ ॥
तदग्रे चास्थितं बालं मार्कण्डेयं च प्राञ्जलिम् । मुकुटेनापविद्धेन पतितं महिषोपरि ॥ ४ ॥
निर्यज्जिह्वं विवृत्ताक्षं मुक्तकेशं भयानकम् । शमनं शमितैः प्राणैः महिषेण निपातितम् ॥ ५ ॥
नीलाद्रिशिखराकारं दृष्ट्वेशं तुष्टुवुः सुराः । ६ ॥

देवाः –

मलमलिनजनान्तरङ्गसङ्गे तव सङ्गो नहि विश्ववन्दित ।
तव शाङ्करामलहृत्पयोजगे पदपद्मे प्रकटप्रभावयुक्ते ॥ ७ ॥

गरुडाशनमौलिरत्नमाल मदहस्तिप्रकटोरुचर्मशोभ ।
मधुमारोत्तमनेत्र पूजितांघ्रे शरणं यामि भवन्तमेकमेव ॥ ८ ॥

यामिनीरमणमौलिजालभृत्कामिनीकलितवामविग्रह ।
मेदिनीरमणवापि भाति सौदामिनीव तरला भुवि लक्ष्मीः ॥ ९ ॥

सामस्तोमैकभूमा तदुदितमनसां राशिभिः स्तोभसङ्घैः
भूमानन्दस्त्वमात्मा हृदि [1]सुधियजने भासि भानात्मकस्त्वम् ।
सामाम्नायादिषडास्यपुत्रविनतस्त्वं सोमवामाननो
मीमांस्योऽखिलवेदमौलिनिवहैः कस्ते समः शङ्कर ॥ १० ॥

वेदान्ते विहितोरुभावकलनैः [2]त्वां दान्तवर्याः द्विजाः
त्वामेकं हृदि सर्वगं भुवनपं जानन्ति नान्यं जगत् ।
यत्तत्त्वं तदिति प्रबोधवचनैरस्मीति वाक्यधिकं
शब्दोद्बोधमयं भवन्तमगजाकान्तं नितान्तं सदा ॥ ११ ॥

त्वत्कालानलकीलितो विनिहतो ज्वालावलीभस्मसात्
तूलोत्थामलशैलवच्च निहतः कालः कुतः शूलभृत् ।
हीने कालेऽनुलोके जगदिदमखिलं धर्मलेशैकहीनं
का वार्ता कलितुं महेश्वर महादेवेश रक्षाधुना ॥ १२ ॥

सहमान सहस्व मन्तुमेनं तव भक्ते च कृतं हि कालजन्यम् ।
जनिनाशप्रथनाय कालमेनं जगतो जीवय पाहि चन्द्रमौले ॥ १३ ॥

---

१ भुवि यजने D २ वेदान्तवर्याः D

सूतः —

इति वैधसवाक्यतोरुमन्योः प्रशशामैव तदाशुशुक्षणिः ।
शवमन्युप्रभृतीनवेक्ष्य दृष्ट्या मुनिबालं च हतं तदान्तकं च ॥ १४ ॥

पुनरुज्जीवयदाशु देवदेवः करुणावारिनिधिः सुधादिवाक्यैः ॥ १५ ॥

ततोत्थितः प्रणम्येशं कालो देवस्य पश्यतः । मार्कण्डेयस्य हि पुरो व्रीलावनतकन्धरः ॥ १६ ॥

तुष्टाव देवमष्टाभिः वाक्योत्कृष्टैश्च खिन्नधीः । कृताञ्जलिपुटो भूत्वा विश्वेशं शान्तमानसः ॥

कालः —

कालकाल सुरवन्द्य शङ्कर व्यालमाल गरनील महेश ।
व्योमकेश शशिचूड रक्ष मां पक्षपातरदृशा परिपाहि ॥ १८ ॥

दक्षमन्युकृतशिक्ष वीक्ष्य मां कुक्षिगाखिलजगत् त्रिपुरारे ।
पाहि मामतिदयावलोकनैः शाधि मामतिभयात् तव शम्भो ॥ १९ ॥

कुण्डलीशकृतकुण्डल शम्भो चण्डपापहरणं तव नाम ।
स्वकराण्डजगती मृगयन्तौ मौलिमूलमथ ते सुरनाथ ॥ २० ॥

मथितमदनकाय भीम शम्भो मधुमथनाम्बुरुहाक्षिपूज्यपाद ।
धृतगङ्गासुतरङ्गमौलिभागान्धकशत्रो परिपाहि मां दशाद्य ॥ २१ ॥

उक्षाधीश्वरकेतनोरुरुचिरापाङ्गावलोकेन मां पाहीशान दयानिधान भगवन् कारुण्यवारांनिधे ।
शाधीशान तवाज्ञयैव सहसा लोकं च रागात्मकं पुण्यैः पापवरैर्नियुक्तमवकं कुर्वे जगत् [1]स्वस्तितः॥

देवाज्ञापय देवदेव भगवन् सर्वज्ञ सांब प्रभो
के वा त्वत्पदपूजकाः प्रतिभवं क्षेत्राणि कान्यत्र ते ।
के शैवास्तव संमताः शिवरतास्तेषां वद त्वं प्रभो
त्वत्सेवां करवाणि शूलवरधृक्पाणे प्रियां शङ्कर ॥ २३ ॥

[2]नातस्ते प्रपदांबुजार्चनरतान् स्वप्नेऽपि मन्ये सदा ॥ २४ ॥

सूतः —

इति तस्य गिरं श्रुत्वा प्राह देवो महेश्वरः । पश्यतां देवसंघानां तं शासद्यमशासनः ॥ २५ ॥

---

१ स्वामितः C  २ एकपादमात्रं दृश्यते

ईश्वरः –

ये पूजयन्ति शशिखण्डशिखण्डलिङ्गं बिल्वीदलैश्च नियमात् महिते प्रदोषे ।
नित्यं त्रिकालमपि केवलमेककालं कालान्तकं तव यमान्त्वहमर्चनीयाः ॥ २६ ॥

भस्मत्रिपुण्ड्रनिटिलाः कुटिलापि पापैः रुद्राक्षवक्षसुगलाकरकर्णयुग्माः ।
पञ्चाक्षरैकनिरताः शतरुद्रमन्त्रजप्यानुरक्तहृदयास्तव पूजनीयाः ॥ २७ ॥

ये तुङ्गलिङ्गदृगपाङ्गितपाणिसङ्गिशाङ्गाः कृतार्थनवः तव लोकभङ्गाः ।
नो यान्ति यान्ति सदनं मम राजताद्रिपापाद्रिभङ्गकुलिशाः कुशला नरेषु ॥ २८ ॥

मद्भक्तपूजनपरा मम सर्ववर्णैः वर्णाश्रमादिरहिता अपि ते सुपूज्याः ।
वर्णाश्रमेषु निरता मम भक्तिहीना नैव भ्रमन्ति विविधा मम धर्मभासैः ॥ २९ ॥

तेषां त्वमेव फलदोऽसि सुधर्मवर्मा पापेषु दुर्मुखतया परिशासकोऽसि ॥ ३० ॥

हे चन्द्रचूड शरणागतदीनबन्धो विश्वेश शङ्कर मृडाव्यय पाहि शम्भो ।
ये कीर्तयन्ति सततं हिमधामचूडं ते शांकरास्तव यमान्त्वहमर्चनीयाः ॥ ३१ ॥

हे दक्षशिक्ष गजकालहरान्तकारे श्रीव्योमकेश परमेश्वर पञ्चवक्त्र ।
ये कीर्तयन्ति सततं हिमधामचूडं ते शांकरास्तव यमान्त्वहमर्चनीयाः ॥ ३२ ॥

[1]हे देवदेव जगतां जनकाव मां त्वं त्रिक्षाधिक त्रिदशनायक कामवैरिन् ।
ये कीर्तयन्ति ... ... मर्चनीयाः ॥ ३३ ॥

हे खण्डपर्शु वरकुण्डलकुण्डलीश वेतण्डशुण्डजनकोत्तमवेदगीत ।
ये कीर्तयन्ति .... .... मर्चनीयाः ॥ ३४ ॥

हे शूलपाणिकमलान्धकदैत्यशत्रो भर्ग त्रियंबक सदाशिव कालकाल ।
ये कीर्तयन्ति ... ... मर्चनीयाः ॥ ३५ ॥

ये देवदेव हर रुद्र उमासहाय ब्रह्मोत्तमाङ्गकलितामलस्रग्धरेति ।
ये कीर्तयन्ति ... ... मर्चनीयाः ॥ ३६ ॥

हे मन्मथान्तक महेश पिनाकपाणे ज्वालावलीनयन वेदकुलावतंस ।
ये कीर्तयन्ति ... ... मर्चनीयाः ॥ ३७ ॥

हे विश्वसर्जनविधानविनाशकेश आशावसान परमेति शिवेति नित्यम् ।
ये कीर्तयन्ति ... ... मर्चनीयाः ॥ ३८ ॥

---

१ इदमादिश्लोकत्रयं D कोशे नास्ति ।

वैकुण्ठनेत्रसरसीरुहपूज्यपाद मातङ्गसङ्गकटिचर्मवसेश्वरेति ।
ये कीर्तयन्ति ... ... मर्चनीयाः ॥ ३९ ॥

लुम्पन्ति धातृविहितानि ललाटभागे यान्यक्षराणि सुकृतेतरपाकदानि ।
तानि त्रिपुण्ड्ररचनेन समूलजाललूनानि शङ्कर कृपावशतो भवन्ति ॥ ४० ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे यमानुशासनं नाम पञ्चदशोऽध्यायः ॥

## ॥ षोडशोऽध्यायः ॥

स्कन्दः —

क्षेत्रवासानपि मुनेऽकथयत् परमेश्वरः । यमान्तको यमायाह क्षेत्राणां पतिरीश्वरः ॥ १ ॥

ईश्वरः —

क्षेत्रेषु वासनिरतान् धृतभस्मपुण्ड्रान् सम्मानयस्व गणवर्ययुतोऽप्यजस्रम् ।
आनन्दकाननपुरादनुरुद्रकोटि ओङ्कारपुष्करत्रियंबकदेवकोटौ ॥ २ ॥

केदारवृन्दावनसन्निविष्टान् श्रीशैलसप्तपुरिषु क्रमणान् विवर्जय ।
गोकर्णदक्षिणभवाम्बुधिकोटिपूर्वं गङ्गोरुसागरगया प्रथितः प्रयागः ॥ ३ ॥

पुण्ये महाकालसुनर्मदादि तीरस्थलिङ्गनिलये विहितोरुवासाः ।
नागेश्वरे भवहरे वरहस्तिशैले श्रीकालहस्तिनगरे परिवर्जयाशु ॥ ४ ॥

श्रीशूलपाणि चरणस्मरणानुरक्तान् पुण्यारुणाचलवसान् परिवर्जयाशु ।
एकाम्रधामाभ्रसभाविभासि मत्ताण्डवप्रियविलोकनजागरूकान् ॥ ५ ॥

वृद्धाद्रिगोपर्वतनीलकण्ठ सह्याद्रिजातटयुगोत्तमवासहृष्टान् ।
श्रीकण्ठगायतिशिलातृणेश रत्नेशमातृशिखरस्थितमीशलिङ्गम् ॥ ६ ॥

स्तम्बेरमेन्द्रविपिने धृतनाथपुण्य पञ्चापगेशशमिनायककुम्भकोणे ।
मध्यार्जुने विपिनवने वटबिल्वके च श्वेताब्जकाननमहाब्धिजसंगमे तु ॥ ७ ॥

वल्मीकवेदवनसेतुजमूलभागे कन्याशचीन्द्रवरवेणुजद्वादशान्ते ।
अन्येषु पुण्यविपिनेषु महेन्द्रमौलौ सह्योद्भवातटयुगे शिवलिङ्गसङ्गे ॥ ८ ॥

मा याहि शांभवगृहेषु च विप्रवर्गे भस्माक्षपुण्ड्रविहितोरुललाटकेषु ।
वर्णी यतिर्गृहिवनी च तथैव नीचाः जात्यन्तरा अपि सदा परिवर्जनीयाः ॥ ९ ॥

एषु क्षेत्रवरेषु शङ्करकृपापीयूषवारांनिधा-
वाराध्या हि स्वदूतवर्गनिकरैर्मा भीषयेथा हि तान् ।
दत्त्वैतेषु च गां हिरण्यरजतं धान्यं धनं योगिने
शैवायाशु भुवं समेति च सदा लिङ्गार्चको मां सदा ॥ १० ॥

मल्लिङ्गालयपालको यदि नृपः मह्यागारोधसि दीपोद्दामसुधूपदोऽन्ननिकरैर्नीराजनैर्नर्तनैः ।
वीणावेणुमृदङ्गकाहलमहाजीर्णोद्धृतैः सुन्दरः छत्रैश्चामरदर्पणादिनिकरैर्भेरीरथाद्युत्सवैः । ११ ॥

गोक्षीरं घृतशर्करामधुरसं रंभाफलं चूतजं इक्षुं निवदधि प्रकीर्णकुसुमं गन्धं च स्रग्गारलम् ।
यो दद्याच्छिवलिङ्गमूर्ध्नि स तदा शैलं च शुद्धोदनं वस्त्रं चासितनीरपानसफलं तस्मै च मुक्तिं ददे ।

यो विल्वोत्तमपुष्पवर्णनिकरं कृत्वा च संपूजयेत्
तत्पुष्पैः स तु वंशकोटिसहितः कैलासमौलौ वसेत् ॥ १३ ॥

ये विल्वमूलशिवलिङ्गकृतप्रणामाः संपूजकाः श्रुतिशतोत्थितमन्त्रजाप्याः ।
विल्वार्चकाः शिवमहेश्वरनाममात्रसङ्कीर्तनैकरसनास्तव वन्दनीयाः ॥ १४ ॥

युक्तानालयसंघकान् यदि नृपः कुर्यात् सदा पोषकान्
तस्यैवाशु विमुक्तिभाग्यमखिलं दातुं प्रवृत्तं मनः ।
शैवानां यतिनां मठोपकरणं ग्रामं पुरं वा द्विजैः
स्वाद्वन्नं जलदानपानकवरं विश्रामरम्यं स्थलम् ॥ १५ ॥

यो दद्यात् सुकृती शिवार्पणधिया तं पूजयान्ते यम
यो मे लिङ्गसदोर्ध्वदृष्टिरसकृत् शम्भो शिवेत्युन्मुकः ।
कुर्वन्नर्तकहस्ततालनिकरैः रुद्राक्षमालां दधत्
तस्मै वेदशिरस्सु कालविहितां मुक्तिं ददामि ध्रुवम् ॥ १६ ॥

चरमजनुषि निष्ठा तस्य सिद्ध्येत दैवात् मम सदय दयाब्धेः शीकरासारपात्रम् ।
भवति हि वरपापैर्वीतशोको विमुक्तो भवति विबुधमान्यो मुक्तिकान्तारसज्ञः ॥ १७ ॥

तुरङ्गमातङ्गभुजङ्गमश्ववाहप्रियादानकृताम्बरोऽपि ।
शताङ्गसद्धंसविहङ्गवाहप्रियादिदानैरपि सा न लभ्या ॥ १८ ॥

कुरङ्गपाणेर्मम चारुगङ्गातरङ्गमौलौ न भवेत भक्तिः ।
यस्मिन्ननुग्राह्यतमात्मिका मे बुद्धिः स मुक्तेः परमं हि पात्रम् ॥ १९ ॥

यस्त्वेतत्परिवर्जितो हि नृपतिः देवो द्विजो वा यतिः
मद्द्रव्याहरणे द्विजातिहनने तद्द्रव्यभागाशने ।
तस्मै तं नरकं अनन्तफलदं दुःखस्य किं वच्मि तद्
संप्राप्नोतु ममैव शासनमहो संश्रूयतां केवलम् ॥ २० ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे पुण्यक्षेत्रवासिशिवभक्तान् प्रति यमानुशासनं नाम षोडशोऽध्यायः ॥

## ॥ सप्तदशोऽध्यायः ॥

ईश्वरः –

कुम्भीपाकासिपत्रे क्रकचकिणतनुः पूयजाले मलाशी
भूयात् सोपि कृमिश्च कल्पनियुतं सन्तप्तशूलीश्वयः ।
यो रुद्राक्षविभूतिवर्जितशिरःफालादिवक्षःस्थलः
श्रुत्युक्तामलकर्मधर्मरहितो लिङ्गार्चनेनोज्झितः ॥ १ ॥

त्यक्त्वा रुद्रमपारपापहरणं पञ्चाक्षरं पावनं
यस्तूर्ध्वं विदधाति पुण्ड्रमफलं सन्तप्तचक्राङ्कितः ।
किं वक्ष्यामि महैनसां प्रतिदिनं राशिं समाप्नोतु सः
लालाजालविषाग्निवृश्चिककुले संपात्यतां तर्ज्यताम् ॥ २ ॥

मामीशं हरितुल्यतां वदति यस्तं भ्राष्ट्रमध्ये क्षिप
चक्रग्रावादितुल्यं ममजनिमवरं पूजयेद्योऽप्युताधिः ।
पापैस्तस्य न निष्कृतिश्च विहिता कल्पायुतं पीडितः ॥ ३ ॥

ध्वांक्षाक्षिवत् भ्रमजुषो मुनयोपि मन्दाः कुन्देन्दुसन्निभशरीरवरं महेशम् ।
खद्योतवत् द्युतिजुषो हरिवेधसादिसाम्येन चण्डतरणिं भ्रमतो वदन्ति ॥ ४ ॥

काकाक्षिवद्भ्रमपरं परयानुबन्धात् पुण्ड्रैस्त्रिपुण्ड्रशिवभक्तिविवर्जिताश्च ।
किञ्चित् कृपाधिकमहेश्वरवीक्षिताश्च व्रीडालवञ्च्य हरिं समतोऽर्चयन्ति ॥ ५ ॥

मल्लिङ्गालयनाशकोऽप्यनुदिनं मद्दीपतैलापहः सन्तप्तायसवायसोरुचरणैः खड्गैश्च खण्डीकुरु ।
तं पापिष्ठवरिष्ठ निष्ठुरवचोवीचीषु सूचीमुखे नेत्रे चाङ्गुलिपङ्क्तिवक्त्रनखरैः सर्वाङ्गसन्धावपि ॥

नानाशस्त्रभुशुण्डिकार्मुकशरैराविध्यतां भस्मसात् ।
कृत्वा [1]स्वच्छतरो मत्राशु सततं त्वेषा प्रतिज्ञा मम ॥ ७ ॥

सर्वं सहामि [2]सहसा न तथा यमाहं [3]त्वन्मोहनं वरकृतघ्नसुवर्णहारम् ।
तं भूसुरघ्नसुरादनसङ्गिसङ्गं विश्वंमराहरणकारणकं नृपं च ॥ ८ ॥

सद्विप्रतल्पहरणेऽप्यतिशिल्पयुक्तं कुल्यासु तप्ततिलतैलयुतास्त्रजस्रम् ।
दाहात् प्रदीप्तवपुषः परितो भ्रमन्तु मद्भक्तरञ्जनपरं न सहामि दुष्टम् ॥ ९ ॥

यो वै मदालयपरिभ्रमणप्रणामहीनोऽपि हीनकुलजोपरि शीलकश्चेत् ।
सोऽयं कृती नरवरः सुरपूजितश्च तस्योत्तमो हि जनकः स तु पुण्यशीलः ॥ १० ॥

ये निन्दन्ति शिवाश्रमेषु निरतान् भक्तांस्तथा पापिनो
मायाचारपरायणाः श्रुतिहितं ज्ञानं च वेदान्तजम् ।
वेदान् वेदविदो द्विजातिनिवहान् भस्म त्रिपुण्ड्रं मम
श्रीरुद्रं वरपञ्चपातकहरं पञ्चाक्षरं पावनम् ॥ ११ ॥

मत्प्रेमप्रकटैः पुराणसुकथासारं विनिन्दन्ति ये
रुद्राक्षानमलान् शिवक्षितितलं क्षेत्रं हि लिङ्गात्मकम् ।
मन्नामाद्यघनाशकं गुरुजनं ये वै विनिन्दन्ति तान्
तेषामामूलल्लूनां कुरु कुरु रसनां क्षारसारैः क्षुराग्रैः ॥ १२ ॥

मां निन्दन्त्यपि ये सुतैलविहितैः कार्पासशाणोद्भवैः
लाक्षादग्धवराङ्ग सर्ववपुषा संपूर्णविष्ठामुखान् ।
तान् कृत्वा नरकार्णवे शुनशतैराशीविषैर्दंशितान्
कृत्वा पातय कल्पकोटिषु चिरं दुःखं हि भुञ्जन्तु ते ॥ १३ ॥

मन्नैवेद्यसुधाशनादिरहितं रुद्राक्षभस्मोज्झितं लिङ्गार्चाविमुखं निपीडय चिरं यन्त्रैस्तिलाघर्षकैः ।
तज्जिह्वां सुरया प्रपूर्य सिकतैः सूचीमुखैः पूरय ॥ १४ ॥

ये लिङ्गालयसङ्गसुदृशापाङ्गोज्झिताः केवलं मरस्तुत्या प्रणतिप्रदक्षिणमहापूजारथालोकनैः ।
तत्पाषण्डकुलैकमुण्डसुमहाषंडानि खड्गैर्भृशं धावन् मण्डलवेगतस्त्वनुदिनं दण्डैश्च खण्डान् कुरु ।

---

[1] स्वस्थतरो D [2] सहमानतया D [3] त्वय्याहृतं

यो मत्सेवकथासुधाविमुखधीः पापात्मनां पापकृत्
मन्त्रप्रायपशुचिपूरितमहाशङ्कूरमश्रोत्रकृत् ।
दुर्गन्धाविलमानमोहितधिया रुद्राक्षमम्मोज्झितो
मल्लिङ्गालयदर्शनस्तुतिनमत्प्रक्रामणैर्वर्जितः ॥ १६ ॥

संकीर्णः श्वपचोऽपि तव श्रुतिहितं भस्माक्षधृक् पुण्ड्रयुक्
मल्लिङ्गालयकुम्भदर्शनफलैः पुण्यैस्तथाकर्णनैः ।
तेऽपि त्वद्भवनं न यान्ति सहसा देवादिभिः पूजिताः
इत्येतन्मम शासनं यम सदा संपालयतां मीतितः ॥ १७ ॥

हिमधामकलाविलासिमौलौ मयि कश्चिद्भवति प्ररूढभावः ।
सुकृतैर्बहुजन्मसंचितैः कृतकृच्छ्राचरणैः तपःकदम्ब ॥ १८ ॥

सूतः —

इति शिववचसा यमोऽपि नत्वा सुरसंघैर्भगवन्तमीश्वरम् ।
परितुष्टाव हि चन्द्रचूडमीशं स्वतिभक्त्या प्रणतोऽभ्युवाच देवम् ॥ १९ ॥

यमः —

सोमसामजकलावरकृत्तिधृक् भूधरोरुशिखराश्रय शम्भो ।
पारदोत्तमसुबीज सदारापारमारकलितान् परिपाहि ॥ २० ॥

सर्गरक्षणविधानदीक्षित ध्वान्तशिक्षक गदादिविनाश ।
देहि मोक्षपदवीमदवीयो वेदमौलिविहिते मृगयेऽहम् ॥ २१ ॥

परिहर पुरहर शम्भो मुरहरसायक दरहास ।
गुरु[1] भवरुग्धर घोरभवार्णवदुःखमपाकुरु शशिचूड ॥ २२ ॥

सुमशरखरशरदूषितहृत्पटं खपट वरोत्तम शिव पाहि ।
अकपटवचसां शिखासखं ते पदयुगमाशु भजामि सांब शम्भो ॥ २३ ॥

ताराराजकलाधरं पुरहरं श्रीराजराजार्चितं वेराजध्वनितोषितं भज शिवं श्रीशादिहारार्चितम् ।
भूभृद्राजकुमारिकासहचरं त्वां देवराजार्चितं राजद्राजनर्हिककविप्रियतमं राजानमीशं मुखे ॥ २४ ॥

स्वाराज्यं सुलभं लभेत सुकृतैस्त्वत्पादपद्मार्चकः
त्वामेवाशु भजामि सांब मनसा मन्तुं सहस्वाद्य मे ॥ २५ ॥

---

१ भवरुग्वर D

स्कन्दः —

इत्थं तत्स्तुतितोषितोऽगमदसौ गौर्या वृषेन्द्रेण वै
स्कन्दाद्यैर्गणपैर्वृतः स तु यमो यातः शिवाज्ञैव हि ।
नत्वा विष्णुविधीन्द्रदेवनिकराः स्थानं ययुस्ते परं
आशीर्भिः प्रतिनन्द्य तं द्विजवरं चण्डांशुपुत्रेण ते ॥ २६ ॥

याम्यैः स्वैर्गणपैर्वृतः प्रतिदिनं चक्रे शिवाज्ञां हि तां
हन्त्येवाशु जगत्त्रयीं सुविहितां लोकान् सुपुण्यैस्तथा ।
पापेनापि सुदुःखभोगनिकरैः पुष्णाति शर्वाज्ञया
...　　....　　...　　॥ २७ ॥

मार्कण्डेयमुनिस्तदा परवशो हर्षेण नत्वा शिवं
गत्वा स्वं भवनं प्रणम्य पितरावुद्वाह्य कन्यां शुभाम् ।
इष्ट्वा यज्ञवरैः शिवार्चनरतो लोकेषु सश्वार्यभृत्
देवानां कुशलानुरक्तहृदयः शैवो मुनिः संवसन् ॥ २८ ॥

लिङ्गालिङ्गनतत्परं द्विजसुतं मृत्योररक्षत् शिवो
भक्त्या भावितभावनाहृतभवं भावं भवानीपतिः ।
यस्त्वेतां शृणुयादपारविभवैः भक्त्यैव भुक्त्वा सुखं
यात्यन्ते शिवधाम वंशनियुतैः पुत्रैश्च पौत्रैरपि ॥ २९ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे मार्कण्डेयचरितवर्णनं नाम सप्तदशोऽध्यायः ।

## ॥ अष्टादशोऽध्यायः ॥

स्कन्दः —

जैगीषव्य महायोगिन् शांकरो गौतमो मुनिः । चकार तपसा देवान् हरपादार्चने रतः ॥ १ ॥
सभार्यो भीमपादाब्जस्मरणेन मुनिः परम् । भस्मरुद्राक्षसंपन्नः कुशावर्तेऽवसन्मुनिः ॥ २ ॥
तस्य रूपवती भार्या अहल्या शक्रधर्षिता । तां दृष्ट्वा स मुनिः क्रोधात् शापास्त्रैस्तं व्यताडयत् ॥
तां त्यक्त्वा स मुनिर्धीरस्त्र्यम्बके भूधरेऽवसत् । तत्पापशमनार्थाय तपसाराधयच्छिवम् ॥ ४ ॥
रुद्रपञ्चाक्षरासक्तो भस्मरुद्राक्षभूषणः । तुष्टाव देवं हृष्टात्मा स्वकष्टविनिवारकम् ॥ ५ ॥

गौतमः —

उक्षवाहमरविन्दलोचनेनार्च्यपादयुगलेन्दुसुचूडम् ।
वेदवृन्दकसनन्दनस्तुतं नन्दिवक्त्रकमलेक्षणं भजे ।। ६ ।।

स्कन्दतातमखिलार्थदायकं सुन्दराङ्गमखिलात्मकमेकम् ।
मन्दारमन्दिरनतप्रियवामदेवं सामाङ्गसंस्तुतमुमाधवमादिदेवम् ।। ७ ।।

कामदाहक सुरार्चित शम्भो व्योमकेश परिपालयाद्य माम् ।
पद्मनन्दनसनन्दवन्दित इन्दुकुन्दधवलाङ्गकिरीट ।। ८ ।।

बिन्दुनादरहितं प्रणवाद्यं छन्दसां च निलयं भज शम्भुम् ।
इभनिभवदनारविन्दलोभं भसितोद्धरभासमासिताङ्गम् ।। ९ ।।

भवभयहरणं भवोद्भवं तं प्रसभं स्तौमि भवं भवानिनाथम् ।
भव भवदीयकटाक्षसङ्गः मम हृत्सङ्गतरङ्गितो भवाब्धिः ।। १० ।।

ततस्तुत्या तु तदा प्रीतस्तमाह परमेश्वरः ।।

ईश्वरः —

कस्ते कामो मुनिश्रेष्ठ तत्ते संपूरयाम्यहम् । त्वत्स्तुत्या तपसा भक्त्या तुष्टस्ते कष्टनाशकः ।।

वृणु कामान् महाभाग गौतमोत्तममानस ।। १२ ।।

सूतः —

इत्थं शम्भोर्वचः श्रुत्वा नत्वा तं गौतमो मुनिः । प्रार्थयामास स स्नातुं स्वस्य भार्यायुतस्य च ।।
शुद्धये तं महादेवं सदाऽन्नं च गिरिप्रभम् । गृहे सिद्धं शंभवानां सदा भोजयितुं प्रियम् ।।
तदा तत्प्रार्थनायोगात स्वजटामूलतो हरः । विससर्ज तदा गङ्गां गौतमीं नाम नामतः ।। १५ ।।
संप्लावयन्ती देवाद्यैः संस्तुता निर्गता ततः । गोदावरी वरनदी नन्दा सप्तमुखाब्धिगा ।। १६ ।।
सिंहसंस्थे गुरौ माघे तत्र स्नात्वा महामुनिः भार्यया पापनिर्मुक्तो बभूव विजितेन्द्रियः ।।
देवास्तथान्ये मुनयः तत्कालस्नानमास्थिताः । गौतमोऽप्यवसत् तत्र भस्मरुद्राक्षभूषणः ।। १८ ।।
अर्चयन् त्र्यंबकेशानमक्षयान्नपदः सदा । विरूपाक्षप्रसादेन क्षयद्वीपपरेषु च ।। १९ ।।
तदुदन्तं द्विजाः श्रुत्वा सर्वे दुर्भिक्षपीडिताः । सर्वदेशस्थिता विप्राः कण्वकात्यायनादयः ।।
भार्गवः काश्यपश्च धौम्यहुण्डाश्च कङ्कताः । बालखिल्यास्तथा विप्राः वैखानससमुद्भवाः ।।
भारद्वाजवीतहव्याः तथैवाङ्गिरसास्तथा । साग्नयोऽनग्नयश्चैव विधुराः सधुगास्तदा ।। २२ ।।

गृहस्थाश्च वनस्थाश्च यतयो वर्णिनस्तथा । सहस्राणां तदाजग्मुर्नियता गौतमं मुनिम् ।। २३ ॥
त्र्यंबकं तेऽथ संप्राप्य स्नात्वा गोदावरीजले । भस्मरुद्राक्षसंपन्नाः बिल्वपल्लवपाणयः ।। २४ ॥
संपूज्य त्र्यंबकेशानं नत्वा वै संस्तुवन् शिवम् ।

विप्राः –

द्विजराजकलाधरं महेशं द्विजकुलपूज्यमुपास्महे शिवं त्वाम् ।
द्विजपतिवाहनपूजितांघ्रिपद्मं वरहारीकृतद्विजिह्वमीश्वरम् ॥ २५ ॥

सुब्रह्मण्यपितासि शङ्करविभो ब्रह्मण्यदेवो भवान्
किंचोक्तः श्रुतिषु त्वमेव भगवन् देवेश विश्वाधिकः ।
त्वां चैवोपनिवीतिकाः हृदि परं नान्यं हि भावामहे
तस्मात् त्वां द्विजराजशेखरधरं त्वामेव विप्रा वयम् ॥ २६ ॥

गौतमं ते समागत्य प्रणम्योपाविशंस्तदा । केचिदालिङ्गितास्तेन केचित् स्नेहेन भाषणैः । २७॥
परिप्रश्नैश्च कुशलैस्तं मुनिं ते समर्चयन् ।। २८ ॥

गौतमः –

भवतां भवभक्तानां दर्शनेन मनोरथाः । पूर्णास्तूर्णं स्वर्णवर्ण[1]पर्णादस्कन्दा द्विजाः (?) ॥ २९ ॥
बहूनां शाम्भवानां च समवायः सुदुर्लभः । नितरां परितुष्टोऽस्मि यथासंभवमद्य मे ॥ ३० ॥
विश्राम्यतां कियत् कालं नित्यं स्वाद्वन्नभोजनैः । सुवृष्ट्या वर्षपत्येव वर्ष्यो वेदे च गीयते ॥
भगवांस्त्र्यम्बकः साम्बो मां स्नेहेनानुपश्यत ।

सूतः –

इति गौतमवाक्येन प्रहृष्टा मुनिपुङ्गवाः । ऊचुः प्राञ्जलयः सर्वे गौतमं त्र्यंबकार्चकम् ।। ३२ ॥

मुनयः –

[2]भवश्च भवतापार्तिविनाशनपरायणः । त्वमन्नपतिपादार्च[3]प्रभावान्नसंचयान् । ३३ ॥
अक्षयांश्च विरूपाक्षप्रसादेनाप्नवानसि । क्षुत्क्षामपीडिताः सर्वे वयं त्वां वीक्ष्य निर्वृताः ॥ ३४ ॥
त्र्यक्षभुक्तोपभक्ष्येण क्षतपापा वसामहे । अनावृष्टिर्यं यावत् तावत् ते वशगा वयम् ॥ ३५ ॥
इत्युक्तं गौतमः श्रुत्वा मुनीनां भावितात्मनाम् । दुर्भिक्षपीडिते काले तैरुवास निजाश्रमे ॥३६॥

१ पर्णादाः कन्दाः द्विजाः (C)
२ भवाश्च भगवन्नार्तिविनाशनपरायणः । भवपादाम्बुजध्यानैः भवार्चन परायणः इति C कोशे ।
३ प्रभावान्नाव संशयः । अक्षयान्नम् (C)

तेऽपि गोदावरीतीरे तत्रावसथकल्पनैः । ऊषुस्त्र्यंबकमाश्रित्य पूजयन्तो मुनीश्वराः ॥ ३७ ॥

दक्षशिक्षविषमाक्षभक्षिते शेषभक्ष्यनिकरं परिधूय ।
स्वांक्षवद्बलिभुजो रटामहे पार्वणान्नविनिमग्नमानसाः ॥ ३८ ॥

संतृप्यच्छिवभुक्तशेषनिवहैरेषां द्विजानां मुदे चाहल्यासहितस्ततान शरदां षण्णां द्वयं वै मुनिः ।
इत्थं विप्रसहस्रकैः प्रतिदिनं त्र्यक्षप्रसादोद्भवं अन्नानां प्रतिपूजनेन सुतरां [1]साघ्यासुप्रीत्या द्विजान् ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे गौतमचरित्रे तपो-गङ्गानयन-द्विजसन्तर्पणादिवर्णनं नाम अष्टादशोऽध्यायः ॥

---

## ॥ एकोनविंशोऽध्यायः ॥

स्कन्दः —

तथा ते गौतममुनिं परिवार्य स्थिता द्विजाः । त्र्यम्बकार्चापरा नित्यं तदा ते द्विजसत्तमाः ॥ १ ॥
रुद्रपञ्चाक्षरासक्ताः भस्मरुद्राक्षभूषणाः । शिवनैवेद्यपुष्टाङ्गाः शिपिविष्टार्चने रताः । २ ॥
क्षामकष्टानि संत्यज्य निष्टान्तः सदा द्विजाः । भूसुरा भासुराचारा दुराचारविवर्जिताः ॥ ३ ॥
अक्षपादाक्षवीक्षातः कटाक्षेण महेशितुः । सदाराश्च सपुत्राश्च शालिकेदाररक्षकाः ॥ ४ ॥
गौतमस्यान्नपाकार्थे शूलिनः कृपया मुदा । गोदावर्यास्तटकुटीनिकटे कष्टवर्जिताः ॥ ५ ॥
करटित्वक्परीधानपदपङ्कजपूजकाः धूर्जटिप्रेमसदने गौतमान्नभुजः सदा ॥ ६ ॥
क्षामक्षोभं विहायैव भक्ष्यभोज्यभुजोऽमलाः । द्वादशाब्दावधि तदा सभार्योऽथ कुटुम्बिनः ॥
गौतमेनापि विनयैः परिप्रश्नान्नभोजनैः । पूजिता न्यवसन् विप्राः तत्र कष्टं विधूय च ॥ ८ ॥
कदाचित् तत्र देवस्य प्रसादेन महेशितुः । बभूव वृष्टिः कृपया पुरशासनशासनात् ॥ ९ ॥
भुवं तृणौषधियुतामकरोत् पाकशासनः । तृणौषधियुतामुर्वीं दृष्ट्वा ते स्वाश्रमं ययुः ॥ १० ॥
प्रयातुं गौतममुनिं अपृच्छन् विनयोज्ज्वलाः ।

मुनयः —

भवता भवपादार्चाप्रभावेनानुमोदिताः । स्वाद्वन्नैर्भक्ष्यभोज्यैश्च शम्भोर्नैवेद्यवत्तरैः ॥ ११ ॥

---

[1] सन्ध्या सप्रीत्येति पाठो युक्तो भाति ।

विकङ्कतस्वाम्रतरसैः पावनैः पाविता वयम् । स्वान् देशान् गन्तुमिच्छामः त्वमनुज्ञातुमर्हसि ॥

सूतः —

तदा मुनीनां वचनं श्रुत्वा वै गौतमो मुनिः । तान् प्रणम्य तदा प्राह विश्लेषभयकातरः ॥ १३

गौतमः —

यात यूयं स्वदेशांश्च स्वाश्रमाणि मुनीश्वराः । किञ्चित् कालं विहृत्यात्र सुखेन मुनिसत्तमाः ॥

शाङ्कानां भवतां सङ्गो भवभङ्गाय मेऽधुना । शाङ्काङ्गपङ्कवातोऽपि सुखसङ्गाय केवलम् ॥ १५

किञ्चित् कोपसमायुक्ताः गमने विघ्नकारिणम् । गौतमं तेऽब्रुवन् विप्रा गन्तुमेव द्विजं तदा ॥

द्विजाः —

भवतामप्रसादेन रक्षिताः स्नेहभावतः । बहुकालं निवसतामस्माकं गृहदर्शने ॥ १७ ॥

पशूनां बान्धवानां च गृहक्षेत्रादिवुद्धयः । गन्तुमिच्छाम भद्रं ते शिवपादार्चने रताः ॥ १८ ॥

गौतमः —

मासमेकं वसन्त्वद्य मयि स्नेहेन सत्तमाः । धनुःसंस्थो दिवानाथो ह्यत्र पूजा महेशितुः ॥१९

अस्मिन् संपूजिते मासि उषःकाले महेश्वरः । सेवन्तिकाभिर्बिल्वैश्च मुद्गान्नं विनिवेद्य च ॥ २०

नैवेद्यं शांभवान् भोज्य यथासंभवमद्य मे । विभाज्य घृतमुद्गान्नं भुञ्जन्तु सगुडं द्विजाः ॥ २१

एकस्मिन् भोजिते चास्मिन् मासि शांभवपुङ्गवे । कोटिशो भोजिता विप्राः तस्मान्मयि वसन्तु च

इत्युक्तवन्तं तं तत्र गौतमं विनयेन हि । पाश्चात्यवृद्धयो विप्रास्तपसा गां कृशां तदा ॥ २३ ॥

गौतमस्य तदा शालिक्षेत्रे सृष्ट्वाऽप्यचारयन् । गौतमो गां तदा दृष्ट्वा शालिभक्षणतत्पराम् ॥

उपरोधं प्रकुर्वन्तीं द्विजानां मुनिसत्तमः । तृणाग्रैर्वारयामास गच्छ गच्छेति गां तदा ॥ २५ ॥

सा तृणस्पर्शमात्रेण गौतमस्य कराग्रतः । पतिता शालिकेदारे गौः प्राणांश्च मुमोच ह ॥ २६

गौतमेन हतां दृष्ट्वा गां तदा मुनिसत्तमाः । गौर्हता गौतमेनेति गर्हयन्तो द्विजास्तदा ॥ २७

अघ्न्येत्येव गवां नाम वेदेषु प्रथितं सदा । नास्यान्नं भक्षितुं योग्यं इति विप्रा ययुस्तदा ॥

स्वदेशानाश्रमाण्येव निन्दन्तो मुनिसत्तमम् गौतमोऽपि तदा ज्ञात्वा दृष्ट्वा दौष्ट्यं द्विजैः कृतम्

कोपाच्छशाप तान् विप्रान् तच्छृणुष्व मुनीश्वर ॥ ३० ॥

गौतमः —

दुर्बुद्धयः सदा यूयं विप्राश्चयापरायणाः । अन्योन्यनिन्दका यूयं भवन्तु ब्राह्मणाधमाः ॥

परान्नेषु सदा तृप्ताः अतृप्ताः स्वगृहे सदा । शूद्रप्रतिग्रहरता वर्णाश्रमविवर्जिताः ॥ ३२ ॥

नष्टवेदा दुराचारा भवन्तु ब्राह्मणाधमाः । विष्णुभक्तिच्छलेनैव शिवसन्दूषणे रताः । ३३ ॥
तेनैव विष्णुर्विमुखो भवत्सु भवतात् द्विजाः । तप्तचक्राङ्किता यूयं भवन्तु ब्राह्मणाधमाः ॥ ३४ ॥
गोपीचन्दनलिप्ताङ्गाः श्वेतमृद्धारिणः सदा । दुष्टा दुराचाररता भवन्तु ब्राह्मणाधमाः ॥ ३५ ॥
त्रिपुण्ड्रनिन्दका यूयं वेदप्रोक्ते सनातने । रुद्राक्षनिन्दकाश्चैव तद्धारणविवर्जिताः ॥ ३६ ॥
वेदनिन्दारताश्चैव भवन्तु ब्राह्मणाधमाः । रुद्रे पञ्चाक्षरे चापि तज्जपे शिवपूजने ॥ ३७ ॥
लिङ्गसंस्पर्शने वापि शिवक्षेत्रानुवर्णने । भवन्तु विमुखा यूयं सदैव ब्राह्मणाधमाः ॥ ३८ ॥
शिवनैवेद्यभुक्तौ च यूयं विप्राः पराङ्मुखाः । प्रदोषसोमवारेषु भूतकालाष्टमीषु च ॥ ३९ ॥
सायं लिङ्गार्चने हीनाः दिवाभुक्तिरताः सदा । भवन्तु विमुखा यूयं द्विजाः पाषण्डिनः सदा ॥
शिवक्षेत्रे चाविमुक्ते शिवयोगिजनेषु च । शिवभक्तार्चने चापि भवन्तु विमुखाः सदा ॥ ४१ ॥
शिवाद्वैते च वेदान्ते गुरावपि महेश्वरे । भवन्तु विमुखा यूयं सान्वयाः कलिपीडिताः ॥ ४२ ॥
शिवप्रदक्षिणविधौ प्रणामस्तोत्रकर्मणि । भवन्तु विमुखा यूयं द्विजाः पाषण्डिनस्तथा ॥ ४३ ॥
शिवनाम्नि शिवध्याने शिवतीर्थनिषेवणे । भवन्तु विमुखा यूयं द्विजाः पाषण्डिनस्तथा ॥ ४४ ॥
शिवलिङ्गाग्रविहितवर्तने च पराङ्मुखाः । शिवलिङ्गसमं विष्णुं पूजयन्त्वतिपापिनः ॥ ४५ ॥
भवन्तु विमुखा यूयं द्विजाः पाषण्डिनः सदा । भवभावाहृताः सर्वे नरकं यान्तु सान्वयाः ॥
भवत्सङ्गे कुसङ्गापि नरकं यान्तु सान्वयाः । ४७ ॥

यूयं शिरोव्रतविधौ शिवभस्मपुण्ड्रवेदान्तवेदगुरुभक्तिविहीनसंस्थाः ।
काका इवातिचपलाः परितो भ्रमन्तु दारिद्र्यदुःखनिकरैः ससुताः सदाराः ॥ ४८ ॥

उक्षाधीश्वरकेतनं पशुपतिं लीक्षासमं वै हरं
मन्वानाः शिवमम्बिकासहचरं पुण्ड्रान्तरैः संयुताः ।
ध्वस्ता यात दिवानिशं जडधियः पापेन दुःखाविका-
स्तेनैवाशु विनश्य वंशसहिता घोरं हि दुःखार्णवम् ॥ ४९ ॥

दारिद्र्येण निपीडिताः प्रतिभवं रोगादिदग्धाङ्गकाः
अन्ते यान्तु यमालयं सुनिशितैः शस्त्रैर्हताः पापिनः । ५० ॥

ये भस्मरुद्राक्षविहीनगात्रा ते भूसुरा अपि सुरासमसंभवाः स्युः ।
शूद्रा अपि प्रमथनाथपदार्चका ये ते भासुरा भसितमात्रधराश्च पूताः ॥ ५१ ॥

स्कन्दः —

इत्थं गौतमवाक्यतो मुनिवराः शापान्विता लाञ्छनैः
युक्ताश्शोञ्छपरायणाः प्रतिभवं दारासुतान्नार्थिनः ।
भ्रान्ताः शान्तिविवर्जिताश्च नरकं यान्त्वद्य तप्ताङ्कका
रोगाक्रान्तपशुप्रमादविहिता घोरा हरद्वेषिणः ॥ ५२ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे गौतमशापवर्णनं नाम एकोनविंशोऽध्यायः ॥

---

## ॥ विंशोऽध्यायः ॥

---

जैगीषव्यः —

स्कन्दानन्दितमन्दारमन्दरप्रियहर्षितः । घटोद्भवो महायोगी शिवभक्तवरो द्विजः ॥ १ ॥
तरङ्गमालाकलितमपिबत् सागरं कथम् । कथं गर्भे वसन् योगी शिवज्ञानमवाप्तवान् ॥ २ ॥
व्यासस्य पुत्रो भगवान् शुकः शुभ्रहितो वद । तदद्य संप्रधार्याशु वद मे शूरसंहर ॥ ३ ॥

स्कन्दः —

अत्र ते वर्णयिष्यामि शांभवानां विचेष्टितम् । शम्भुभक्तः पुरा कुम्भसंभवोऽम्भोधिपानकृत् ॥
मित्रावरुणसंभूतः तत्पितुर्मेनकाप्सराम् । दृष्ट्वा चस्कन्द कुम्भे वै रेतस्तस्य महात्मनः ॥ ५ ॥
घटोद्भवोऽभवन्नाम्ना महर्षिः संशितव्रतः । वसिष्ठोऽपि महाविप्रो जातस्तस्मान्महामुने ॥ ६ ॥
कल्माषपादनिहतं स्वस्य शक्तितनूभवम् । तपसा शम्भुभक्त्या च व्यासः पौत्रात्मजोऽस्य हि
व्यासो जज्ञेऽमितप्रज्ञः तत्र विप्र पराशरात् । स वदर्यां तपस्तेपे वर्षायुतमनन्यधीः ॥ ८ ॥
भस्मरुद्राक्षसंपन्नः शिवलिङ्गार्चने रतः । पञ्चाक्षरपरो नित्यं रुद्रविद्याविपातकः ॥ ९ ॥
संस्तुवन् परमेशानं शुकं पुत्रमवाप ह । गर्भेऽप्युपादिशत् शम्भुः ज्ञानं तत्पारमेश्वरम् ॥ १० ॥

व्यासः —

उर्वी मौर्वी रथाङ्गौ शिखिशशिहरयो बाणतूणस्तथाब्धिः
यन्ता धाता विधाता उरगतुरगका वेदसङ्घार्कचन्द्राः ।
लीला तेऽद्यानुलोके लखितदगुदये ज्वालकीलावलीढं
मुग्धं मुग्धेन्दुचूडत्रिपुरवरपुरं संभृतैः किं तवान्यैः ॥ ११ ॥

धराधरकुमारिकावर कपालपाणे हर प्रसीद परमेश्वर स्मरहराद्य गङ्गाधर ।
पयोधिशयबाणधृक् गरधगुर्वीधर धराधरणधारण प्रणतहृत्पयोजान्तिक ॥ १२ ॥

अनाथजननाथ ते दिवसनाथ नेत्रेण मां विलोकय सनाथय प्रमथनाथ लिङ्गार्चकम् ।
समन्मथशराहतिप्रमथितान्तरङ्गं हि मां अनाथमगजापते अव हि विश्वनाथाधुना ॥ १३ ॥

इत्स्तुत्या तोषितः शम्भुस्तस्मै पुत्रं ददौ शुकम् । गर्भान्निसृष्टमात्रः स स्तुवन्नीशं वनं ययौ ॥

शुकः —

पदङ्गदगदाङ्गतो भवभुजङ्गभङ्गो भवेत् सफुल्लसितपल्लवैर्भजति मुक्तिवल्लीव माम् ।
कुरङ्गकिणसङ्गदकप्रसरतोऽद्य सांसारिकं रुजं हर दयाघनैर्वितर दृष्टिवर्षं मयि ॥ १५ ॥

निशाचरविकलाधरं कुलिशपाणिसंपूजितं सुशोभितजटजह्नुजामृडशिखण्डचूडाधुना ।
दृढं तव पदाम्बुजं शिव भजामि हृत्पद्मके शिवासख सुखं सदा शिखिसखाकृते पाहि माम् ॥

शान्तं दान्तहृदन्तरे सुविहितं यान्तं वृषेन्द्रेण तं
स्वान्तस्थं सकलेषु भान्तमखिलं तान्तं सदा पोषकम् ।
वान्तपायभवेषु तुच्छितधियं तं मुक्तिकान्ताप्रियं
देवं दान्तशमप्रशान्तमनसा यामीषणावर्जितः ॥ १७ ॥

अम्बरकेशसुशम्बरवैरिन् त्रिपुरहराम्बरहृदि विहर ।
मुरहर शङ्कर द्विरदवरानन शरवणभवनुत परिपाहि ॥ १८ ॥

एकैवास्मि न संशयस्त्रिभुवने नेहास्ति नाना जगत्
मिथ्यैवाहिमयं यथा मरुमरीच्यर्द्रीकृता भूर्भवेत् ।
शुक्तौ यत् कलधौतवन्मृदि महाकुम्भोपमानं तथा
वाचारम्भणमेव युक्तिजनकं कार्यं न वै कारणम् ॥ १९ ॥

यद्भासा जगदद्य भाति नितरां सूर्यानलौ वायवो
भीत्या भान्ति स्वतेजसामपि परं जानन्ति नो मां स्थिरम् ।
को मोहो मयि पश्यतां स्थिरचरं त्वेकत्वनानात्वधी-
र्भिद्यत्येव विभेदभावजनकं त्वज्ञानमेतत् स्फुटम् ॥ २० ॥

ईशावास्यमिदं जगत् श्रुतिशतैः प्रोक्तं च तद्भेदधीः
नो कश्चिद्विनिवर्तते च यतते मोक्षाश्रमे भ्रान्तियुक् ।
त्वद्भक्त्या विमुखः सदैव हि वृथा बोधाद्भवे भ्रश्यते
वृद्ध्या वृद्धधियो भवन्ति च वृथा किञ्चायुषोऽन्ते नराः ॥ २१ ॥

विद्या सुद्योतते ऽन्तर्हृदि जटिलतमो भिद्यते छिद्यते ऽन्तः
खद्योतद्युतिवत् सविद्युत इमा नो भान्ति चन्द्रानलाः ।
यूकाशूकसमो मयूखसमहामाली च लीला हि ते
घूकास्तर्कवितर्कजालजटिला विध्वंसितास्त्वद्दृशा ॥ २२ ॥

सीमाभूमा त्वमीशो दृढतरमहिमा त्वत्पदाब्जे किलैको
यस्त्वां ध्यायति ध्यानहीनवपुषा स त्वं त्वमात्मा परः ।
नो तत्र त्रिपुटीकुटीरकुटिलं चित्तं निरालेक्षण
लक्ष्यात्मा त्वपलक्ष्यलक्षितहृदा त्वं वेत्सि तं त्वामनु ॥ २३ ॥

शमितो मृगतृष्णिकेव भूमौ मृगदृष्ट्यैव स एव बन्धहेतुः ।
सुभवोद्भवपादसेविनां सुगमा वै निगमागमोरुशीर्षाः ॥ २४ ॥

पदजातप्रकटप्रभावबोधैरहमेव त्वमसि क्व भेदहेतुः ॥ २५ ॥

तन्त्रयन्त्रकृतमन्त्रनिमक्तैर्मान्त्रिकोऽहमिति धीर्न विमुक्त्यै ।
भेदमानकलनाविचारतः त्वां न जानत इमे पशवः स्युः ॥ २६ ॥

युक्तियुक्तमपि भुक्तमखेदं भक्तमेव त्रिगुणं न तु मुक्त्यै ।
मुक्तिमार्गफलने श्रुतिसूक्ता वक्ति तत्त्वमसि वाक्यतोऽर्थवत् ॥ २७ ॥

बहुत्वेऽप्येकत्वे भ्रमभवनतान्ताः किल नराः न चैकं द्वित्वं वा श्रुतिशिरसि वाक्यार्थकलने ।
न बन्धो मोक्षो वा न परमवरो नापि हि नरः चकास्ति ब्रह्मेदं परमशिव एको ध्रुवसुखः ॥

वित्तपित्तमपनीय चित्ततो हृत्तमो रसदृशा परिधूय ।
कर्तृतामपि निजात्मविद्यया भोक्तृतामपि सदात्मदर्शनात् ॥ २९ ॥

दर्शनं च हृदि तत्र विलाप्य प्राप्तकामकलनो दलिताशः ।
मूलकूलजनितामथ विद्यां इध्मेन परिधूय अविद्याम् ॥ ३० ॥

उमाजाने जाने तव भव यदावं जगदिदं न जाने तद्भिन्नं शिव भजनबोधैर्गुरुजनैः ।
रमाजानेर्जानि जनिमृतिनिदानादिविमुखं महीजानेः सौख्यं लवशतसुराणां मम कियत् ॥

तर्कैस्तर्कितुमप्यशक्तकरणैर्मीमांसमेतन्न वै शब्दैश्चापि जडैश्च तन्त्रनिवहैः दृश्यः किमात्मा भवान् ।
मनःकल्पास्तर्का गुणगुणजबुद्धिप्रतिभुवो विचारं चेतो यत् तदपि शिव मीमांसकमतम् ॥ ३२ ॥

यतः शब्दो वाग्भूर्मनवचनदूरे त्वमसि दृक् न वै जातं किञ्चिन्न च भवति संप्रत्यपि भवत् ।
न वै कार्यं तस्य प्रभुरणुरपि स्थूलमपि न न रूपं त्वग्गन्धो न रसरसना वापि भगवन् ॥ ३३ ॥

स्वमात्मा स्वे धाम्नि स्थित इव विभासीदमखिलं न चोपाधिर्भूतान्यखिलतनवः कल्पितधिया ।
महाविद्यामोहाद्विविधतरशास्त्रस्य विषयं अविद्यावन् सर्वं भवति त्वयि दृष्टे परतरे ॥ ३४ ॥

तदेतत् त्वं चापि त्वमहमिति दृश्यं च न हि दृक् अखण्डे पिण्डाण्डप्रभवविहिते बुद्धिकरणे ।
ततो जातं शास्त्रं तव शिवद बोधे कथमिदं जडं चेतोवाग्भिः प्रतिपदविमृश्यं भवशतैः ॥ ३५ ॥

कुतर्कैर्नैव प्रभवसि च भक्त्यैव सुकरः ॥ ३६ ॥

श्रद्धां ते श्रुतिराह सौम्यपुरुषेत्येनत् परे निर्गुणे
सांवे रूपगुणकवाग्विषयके नाम्न्यर्चने वा त्वयि ।
प्रारब्धान्तिमसंभवेन हि यथा योऽयं चकास्ते यथा
यावच्चाप्यधिकारसाधनपदं तस्य त्वमात्मा सदा ॥ ३७ ॥

कुटिलजटिलशब्दतर्कजालैः श्रुतिहरिणीं भषन्ति वाकश्वमास्ते ।
गुणगणविहिताः शुनां गणास्ते तव भक्त्या रहिताऽप्यबुद्धबोधाः ॥ ३८ ॥

मिथ्या जगद्युगभवाः प्रतिकल्पमेवं मूढा गुणप्रभवतो मुनयोऽपि चान्धाः ।
शास्त्राणि तन्वत जगत्परिवंचकास्ते पूर्वापरोरुवचनैः स्वधियैव मुग्धाः ॥ ३९ ॥

तस्मात् तान् परिवञ्चसेऽद्य भगवन् नानार्थशास्त्रभ्रमैः
मिथ्यावर्णनिबन्धनाश्रमगणश्रान्तान् वितर्के रतान् ।
तांस्तांस्तद्भवभावबोधसहितान् स्वर्गभ्रमे दुःखितान्
यातायातशतेषु दुःखभवने याम्ये च दुःखोत्कटान् ॥ ४० ॥

स्वमतिमनकुं वितत्य शास्त्रं परिनिन्दत्यनिशं विहाय वेदान् ।
तव मायामयपाशबद्धकीशाः फलजालेषु वृथैव वर्धिताशाः ॥ ४१ ॥

अशनवसनमात्रसाभिलाषाः श्रमतोऽन्योन्यमुपासकाश्च भण्डाः ।
गुणखण्डहृदा वदन्ति युद्धे मधुपाद्यन्मधुरा यथैव मण्डाः ॥ ४२ ॥

केचिन्मुण्डाः कुटिलजटिलाश्चक्रतप्तास्तथान्ये नग्ना बौद्धाः श्रमणनिचयास्तुच्छलिङ्गं वहन्तः ।
विप्रा वर्णाश्रमपरमता हिंसया स्वर्गकामाः कापाराती विमुखहृदया ज्ञानहीना भ्रमन्ति ॥ ४३ ॥

कुरङ्गा मोहान्धा मरुजलविबुद्धयाऽवपतपाः यथा धावन्तीश प्रशिथिलधिया तर्षितजलाः ।
तथेमे मोहान्धाः हृदयदहरे त्वामविधवर्त भवन्तं हित्वैव प्रभवमरणेभ्रान्तिवशगाः ॥४४॥

अमेयं मेयेषु प्रकटतरहृत्पद्मसदनं अविज्ञातं ज्ञातं निरवधिकसच्चित्सुखवपुः ।
भवन्मायामोहाद्भ्रमति परमानन्दविमुखं जगल्लोकालोकं ससुरवरतिर्यग्गतधिनम् । ४५ ॥

नाहं न त्वं न चेमे भव भवभवं वै गतभयं (?)
　सदानन्दं सान्द्रं विरलमपि भेदं नहि मनाक् ।
अखण्डं पिण्डाङ्गं न च भवति कार्यं च करणं
　न मोक्षो नो बन्धो भवति भवदालोकनवशात् ॥ ४६ ॥

अनुभवमिदमेव वेदवेद्यं यदि हित्वानुभवे भवोद्भवाद्यम् ।
अनुभवशतकोत्थकर्मचित्रं न हि नाशाय भवोद्भवेषु तस्य ॥ ४७ ॥

शान्तं वेदवचोभिरीडितपरः स्वान्तं निशान्ते सदा
　चिन्ताशान्तनितान्तशान्तमनसा कोऽहं कथं वै जगत् ।
नानास्तीति विचार्य वेदनिवहैर्मुक्तः स युक्तो भवेत्
　तद्ध्यानेऽपि च दुर्लभो यदि भवेत् रूपं तव प्रेमकृत् ॥ ४८ ॥

स्वान्तं शान्तमनन्तमव्ययमुमाकान्तं सदा चिन्तयेत्
　तेनैवाशु विनाशिताघनिचयो भूयात् प्रमोदाधिकः ।
कामाराति पदाम्बुजार्चनरतो भस्माक्षधृङ्मुक्तये ॥ ४९ ॥

यावत्कायमपाय दायकमिदं कामस्य यत् सायकैः
　भेद्यं वेद्यशतैः चिकित्सितवयः पाके उपायैरपि ।
तस्मादेवमुमासहायमधुना ध्याये विनाश्यं सदा
　हायं जन्मविनाशभोगरहितो यावद् दृढाङ्गः सदा ॥ ५० ॥

धनगणगणनाविनाशकाले त्रिगुणैवेह सदा मदीय देहे ।
गणगणविनतं यदा प्रपद्ये त्रिगुणातीतगुणस्तदा मुदाऽहम् ॥ ५१ ॥

शर्वाणीरमणार्चनेन हि सदा [1] वाताद्भयं सर्गतो
　गर्वेणापि अखर्वपातकवरैः किं नो भयं संसृतेः ।

---

१ पाताद्भयं स्वर्गतः (C)　पाताद्भयं सर्गतः (D)

मग्नानन्दपयोनिधौ सुरसरित्कूलाः प्रयान्त्येव ते
शम्भोः शम्भुव एव पादकमलामोदैकमाद्यं मनः ।। ५२ ।।

इति सन्ततमन्तकान्तकं विमृशन्तः स्वहृदा प्रकाशमानम् ।
शमितेतरसङ्गभङ्गतः स्वत एवात्र भवन्ति ते ह्यसङ्गाः ।। ५३ ।।

सूतः —

गर्भे वसन्नपि शुकः स तदा हि भर्गं स्वात्मानमेव कलयन् स जगाम मुक्तः ।
पित्रानुरक्तहृदयेन सहातिमात्रं व्यासाय सोऽप्यखिलगः प्रददौ हि वाचम् ।। ५४ ।।

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे शुकमहिम्नं (?) नाम विंशोऽध्यायः ।।

---

## ।। एकत्रिंशोऽध्यायः ।।

स्कन्दः —

अगस्त्योऽपि तदा जज्ञेऽङ्गुष्ठमात्रो महामुनिः । अविमुक्तं समासाद्य लोपामुद्रापतिस्तदा ।। १ ।।

अगस्त्येश्वरसंज्ञं च प्रतिष्ठाप्य महेश्वरम् । समर्चयन् बिल्वपत्रैः फलं मूलं निवेदयन् ।। २ ।।

स्तौति देवं सदा काले तत्स्तुतिं शृणु सत्तम ।

अगस्त्यः —

पतिस्त्वं सर्वस्य श्रुतिशिरसि रुद्रस्य वचसा नमोवाक्यैर्वक्ति प्रमथपतिभक्तांश्च नमसाम् ।
वदन्त्येवं वेदो शिवहरभवाद्यैश्च वचनैः कथं त्वन्ये तुल्यां परमशिव शेषा हि विहिताः ।। ३ ।।

यतो जाताः सर्वे विधिहरिहरेन्द्रार्कपवनो दिशां नाथा रुद्रा गिरिनदिसमुद्रा ग्रहगणाः ।
यमध्यास्ते विश्वं सुरनरवरं कर्म विविधं महाभूतैश्चान्ते विलयति महेशे शिवतरे ।। ४ ।।

भुवनगगनसंस्थं कोशकाशं महेशं सिततरमृदुकायं कल्पितं वेदसंघैः ।
दहनरयमिचित्तच्छेदकोशैकगम्यं विलयनमधुराद्यैः सच्चिदानन्दशब्दैः ।। ५ ।।

अहमहमिति सर्वप्रत्ययात्मानमाराद्विमृशत करुणानां भाजमाने हि साम्यम् ।। ६ ।।

हिरण्यबाहुं सुहिरण्यसन्दृशं गूढं सदानन्दघनं महेशम् ।
प्रियं प्रियाणां च सताहमान्तरं तं व्योमकेशं परमं च कश्च त्वम् ।। ७ ।।

देवमीशमगजामनोहरं कार्यकारणपरम्परातत्म ।
वृक्षबीजमिव वृक्षविस्तरैरेक एव भगवान् बहुत्वधृक् ।। ८ ।।

अपारमीशानचरित्रमेतत् कथञ्च वर्णात्मकतामियान्मुने ।
रूपावलोकेऽपि स रूपभाग्भवेत् यथा स्वभक्तैर्लवणं यथाब्धौ ॥ ९ ॥

तस्मिंस्तदा तप्यमाने देवा दैत्यैः पराजिताः। जित्वा देवांस्ततो दैत्याः सागरं समुपाविशन् ॥

अदृष्ट्वा ते ततो देवाः पुरस्तस्युरुदायुधाः। छिद्रेषु प्रहरन्त्येव देवान् दितिसमुद्भवाः ॥ ११ ॥

ते देवा गुरुणोद्बुद्धाः संस्तुवंस्ते महेश्वरम् । १२ ॥

देवाः –

भर्ग भीम भव गर्वविनाश गर्वपर्वतसुतर्जक शम्भो ।
शर्व खर्व हरिगर्वविनाश दुर्वयार्चित महार्णवसंस्थ ॥ १३ ॥

उमारमण त्रिदशनाथ विश्वाधिक त्रियम्बक सदाशिव त्रिपुरमारसंशोषक ।
विलोकय भवाब्धिगं प्रमथनाथ पूतोभव (?) प्रसीद करुणार्णव तरणिपुत्रनिर्मारण । १४

शिवेन प्रेषिता देवा घटजं प्राप्य चाब्रुवन् । दैत्यसंपीडनं तच्च सागरे तत्प्रवेशनम् ॥ १५ ॥

दैत्यानां स मुनिः श्रुत्वा शिवध्यानार्चने रतः। देवानामुपकाराय दैत्यानां निधनाय च ॥१६

अपिबत् सागरं तत्र पुनः संप्रार्थितोऽसृजत् ।

रिङ्गत्तुङ्गतरङ्गसागरमहाकोलाहलोल्लासि यत्
संप्राप्य त्रिपुरारिपादभजनादङ्गुष्ठमात्रो मुनिः ।
दैत्यानां निधनाय शङ्करकृपापीयुषतो बिन्दुवत्
तं चैवाम्बुधिमाचचाम स तदा चोत्सृष्टवान् शुक्लनः ॥ १७ ॥

आनन्दकाननमवाप्य तताप हृष्टो विश्वेश्वरार्चनरतः परिपूर्णकामः ।
विन्ध्योन्नतिप्रशमनाय सुरासुरौघैः संप्रार्थितो हि जगतामुपकारहेतौ ॥ १८ ॥

ईशाज्ञया हि स तु रुद्रगणौघसङ्घैः संस्ताविवस्तु स ययौ गिरिवृद्धिनाशः ।
संनामयन् भुवि गतं शिखरैश्चकार विन्ध्यं मदोद्धतमहो दिवि चन्द्रसूर्यौ ॥ १९ ॥

रुन्धन्तमम्बरमपारमहेन्द्रशैलमध्यास्त साद शिवपादयुगं स्मरन् सः ॥ २० ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशेऽगस्त्य (कृत) समुद्रयानविन्ध्योद्धतिनाशनवर्णनं नाम एकविंशोऽध्यायः ॥

## ॥ द्वात्रिंशोऽध्यायः ॥

स्कन्दः —

दधीचोऽपि महायोगी हरभक्तो जितेन्द्रियः । भार्गवो धुन्धुमूकाख्यः तपस्वी द्युमणिद्युतिः ॥
तस्य पुत्रोऽभवद्विप्रो दधीचो बाल एव हि । उपनीतस्तदा पित्रा वेदानप्यग्रहीद् तदा ॥ २ ॥
स्वाश्रमे निवसंस्तत्र हरपादार्चने रतः । शर्यातिपुत्रो मेधावी क्षुपो नाम महाबलः ॥ ३ ॥
सूर्यवंशसमुत्पन्नः पित्रा सोऽप्युपनायितः । सहाध्याय्यभवत् तस्य दधीचस्य मुनेस्तदा ॥ ४ ॥
स रथेनाजगमाशु पित्रा तस्यानुमोदितः । जग्राह स मुनेः पादौ धुन्धुमूकस्य सत्तमः ॥ ५ ॥
उवाच प्राञ्जलिर्वाक्यं क्षुपो नृपतनूद्भवः ।

क्षुपः —

अधीष्व मामपि गुरो तव पुत्रेण शाधि माम् । ब्रह्मचर्येण भवति निवत्स्यामि द्विजोत्तम ॥ ६ ॥
ओमित्युक्तेऽथ मुनिना दधीचेन सहादरात् । उवास नियतस्तत्र क्षुपः क्षत्रियनन्दनः ॥ ७ ॥
धनुर्वेदं च गान्धर्वं वेदान् वेदाङ्गमेव च । सरहस्यं स जग्राह सदधीचस्तदा मुनेः ॥ ८ ॥
धुन्धुमूकात् द्विजश्रेष्ठादुभावपि मुदा तदा । विप्रक्षत्रकुलोत्पन्नौ दधीचिः क्षुप एव च ॥ ९ ॥
तदा गुरुकुले तत्र वर्तमानौ सवर्णिनौ । दधीचिस्तत्र तनयं नृपस्याह तदा हसन् ॥ १० ॥

दधीचिः —

भवान् स्निग्धः सहाध्यायी गुरुभ्राताऽहमेव ते । त्वयि शासति तद्राज्यं त्वत्पितुर्नृपनन्दन ॥
तदा त्वया समेष्यामि त्वत्तः पूर्णमनोरथः । हिरण्यगोभिर्वासोभिः धनधान्यैर्मुदान्वितः ॥ १२ ॥
इत्युक्तं स दधीचस्य श्रुत्वा प्राह नृपात्मजः ॥ १३ ॥
भवता च सुखं दुःखं मम तुल्यं द्विजोत्तम । त्वया शासेऽहमतुलं स्फीतं जनपदं पितुः ॥
यदुक्तं तत् त्वया विप्र तत्कर्ताऽस्म्यविचारितम् । इत्यन्योन्यं मुदा युक्तौ दधीचिः क्षुप एव च ॥
ऊषतुर्द्वादशाब्दं तौ तस्मिन् विप्राश्रमे तदा । अनुज्ञाप्य ययौ दत्वा लब्धानुज्ञौ गुरोस्तदा ॥१६॥
धुन्धुमूकं दधीचस्य पितरं नृपनन्दनः । गोभिर्वासोभिरर्भूम्या रथैर्धनधान्यकैः ॥ १७ ॥
संपूज्य प्रययौ तत्र पितरं च दधीचिनः । आलिङ्ग्य साश्रु सस्नेहं ययौ स नृपनन्दनः ॥ १८ ॥
कदाचिल्लब्धविद्यं तं पुत्रं वीक्ष्याथ चिन्तयन् । शर्यातिः कन्यकामिष्टामुद्वाह्याथ स्वसूनवे ॥ १९ ॥
अङ्गस्यायं नृपस्याथ मालिनीं नाम नामतः । सर्वलक्षणसंपन्नां शुभे काले नृपोत्तम ॥ २० ॥

दधीचोऽपि तदा पित्रा धूम्धुमूकेन लक्षितः । लब्धविद्योऽथ जग्राह कन्यां वैरोचनस्य च ॥
मुनेर्गर्गस्य तनयां मित्राणीं नाम नामतः । कृतोद्वाहौ द्विजनृपौ लब्धपुत्रौ तदोषतुः । २२ ॥
भूभृत्कुले विप्रकुले द्विजराजकुमारकौ । पितर्युपरते तौ च तपोराज्यपरायणौ । २३ ॥
कदाचिदागान्नृगति वीक्षितुं स दधीचकः । सखा स नृपतेः पुत्रं प्राप्तराज्यं तदा मुदा । २४ ॥
दृष्ट्वा च स्ववयस्यं तं क्षुपः पूजामथातनोत् । विष्टरेणार्घ्यपाद्येन गामनुज्ञाप्य तं तदा ॥ २५ ॥
ऊषतुर्मुदितौ तत्र तस्मिन् नृपवरालये । प्राप्तराज्यं च नृपतेः पुत्रमाह रहोगतः ॥ २६ ॥
दधीचिस्तपतां वर्यः तपनामलभा मुनिः ॥ २७ ॥

दधीचिः –

सखे तपोवने पूर्वं पुनरुक्तं त्वया तदा । किमद्य स्मरसे राजन् आवयोः प्रसमं वचः ॥ २८ ॥
तत्सत्यं कुरु मा हासीः सर्वं सत्ये प्रतिष्ठिताः । लोका ब्रह्मादयो देवाः ऋक्षादित्याः सचन्द्रकाः ॥
परिभ्रमन्ति सत्येन अहोरात्रमतन्द्रिताः । नात्येति वेलामुदधिः भूमिः पर्वतधृक् स्वयम् ॥ ३० ॥
श्रुतिभिः कथितो राजन् ऋतं सत्यं महेश्वरः । स दधीचिवचः श्रुत्वा क्षुपो विप्रं हसंस्तदा ॥
स करास्फोटमत्युच्चं गर्वपर्वतमध्यगः । यौवनोन्मादसंवीतः प्राप्तराज्यश्च भूपतिः ॥ ३२ ॥

क्षुपः –

अहो द्विजस्य ते बुद्धिः दृष्टा कष्टप्रदायिनी । आढ्येन न दरिद्रो वै मित्रं नाविदुषो द्विजः ॥
विद्वांस्तथा श्रोत्रियेण विप्र ह्यश्रोत्रियो द्विजः । विप्राणां पश्चिमा बुद्धिरिति वार्ता गरीयसी ॥
या सा लोकेषु दृष्टा सा त्वयि मूढतमे मुनौ । इत्युक्तं तद्वचः श्रुत्वा सावज्ञं विप्रपुङ्गवः ॥ ३५
क्रोधामर्षाश्रुनयनः तमाह नृपनन्दनम् । ३६ ॥

दधीचिः –

धन्योऽसि कृतकृत्योऽसि यत्ते वाक्यमरुन्तुदम् । एष गच्छामि तपसा शर्वमाराधयाम्यहम् ॥
सर्वं संसाधयाम्येव भुक्तिं मुक्तिं च शाश्वतीम् । त्वं चैवाल्पप्रदो मूढ राज्यगर्वेण मोहितः ॥ ३
विनश्वरं धनं तेऽद्य को हि स्वल्पे समेधते । सेवां वीक्ष्यैव दातृत्वं तव मूढतमस्य हि ॥ ३९
खण्डभूम्यधिपस्त्वं हि किञ्चिज्ज्ञः क्षत्रबन्धुमान् । भूमेर्दातारमीशानं सत्पतिं मोक्षदायकम् ॥
अखण्डेन्दुकलामौलिं ब्रह्मविष्ण्वादिनन्दितम् । तमेव तपसाऽऽराध्य लप्स्ये सर्वमनोरथम् ॥ ४१
ब्राह्मणानामधिपतिः शिव एव सनातनः । क्षत्रियाणां हरिः प्रोक्तः सोऽपि शङ्करकिङ्करः ॥ ४२
तदर्चनेन नरकं राज्यान्ते त्वमुपाश्नुषे । किञ्चिद्विहृत्य भूमौ त्वं दुःखाधिक्यैः सुखभ्रमैः ॥ ४३

अहमीशप्रसादेन भुक्तिं मुक्तिमुपाश्नुयाम् । धिक् धिक् त्वां दुष्टराजानं वयस्येऽपि सुनिर्दयम् ॥
इत्युक्त्वा तं तिरस्कृत्य क्षुपं नृपवरात्मजम् । जगाम स्वाश्रमायैव दधीचिः क्रोधमर्षितः ॥ ४५ ॥
भस्मरुद्राक्षसहितः त्रिपुण्ड्रोज्ज्वलमस्तकः । तपसा तोषयामास रुद्रं पञ्चाक्षरेण हि ॥
लिङ्गार्चनरतः स्तौति रुद्रेण नियतं मुनिः । ४६ ॥

दधीचिः —

उक्षाधीश्वरकेतनं त्रिभुवनाध्यक्षं सुधाधामसन्खण्डोत्तंसितलोचनश्रवणजापारोरुहारप्रियम् ।
दिग्वासं वसतिप्रपञ्चहृदयागारप्रमोदास्पदं मारारातिमपारवेदशिखरैरीड्यं भजे शङ्करम् ।। ४७ ॥

हृदम्बुजचिदम्बरे दिवसनाथकोटिप्रभाविकासिकनकाम्बुजोद्भवपयोधितल्पान्तिमम् ।
प्रफुल्लनयनाम्बुजप्रथितपूज्यपादाम्बुजं भजामि यमिहृत्सुधाविकसिताम्बुजोद्भासितम्[1] । ४८ ॥

> मुधा सुधासाधनतोऽपि देवान् खिन्नाननानुरुगरोद्धतकीलदग्धान् ।
> मुग्धान् सुदुग्धप्रभवोऽम्बुधेस्तटे देवानरक्षत भयेऽशरणान् शरण्यः । ४९ ॥
>
> मुग्धेन्दुचूडकरुणातरणिं विहाय खद्योतवद्विविहरीन्द्रमुखान् सुरांश्च ।
> सेवन्ति गाढतमसैकविनाशहेतुं मूढा हि ते दृढतरं मृडभक्तिहीनाः ॥ ५० ॥

कन्दर्पदर्पशमनार्चनजातदर्पात् कायं नृपः क्व च हरिः क्व च देवसङ्घाः ।
नेक्षे तं क्षितिपाधमं क्षतसुखं सापेक्षमीक्षे सदा त्र्यक्षं दक्षसुपक्षपातसुरवासन्धुक्षिताधोक्षजम् ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे दधीचिक्षुपसंवादे दधीचितपः — शिवस्तोत्रवर्णनं नाम द्वाविंशोऽध्यायः ॥

---

## ॥ त्रयोविंशोऽध्यायः ॥

---

स्कन्दः —

सतस्तुत्या तुष्ट ईशानो ददौ तद्बुद्धिकाङ्क्षितम् । वृषारूढो महादेव्या गणौघैः पुरतः स्थितः ॥
तं प्रणम्य सुराधीशं स्तुत्वा विप्राध्वरेश्वरम् । जानुभ्यामवनिं गत्वा स्तोत्रमेतज्जगाद च ॥ २ ॥

> गङ्गाचन्द्रकलाधर त्रिजगतां कामान्नपूर्णाविधृक्
> तूर्णं मे हृदि चिन्तितं दिश विभो पाहीश माममकम् ।

---

१ 'सदम्बुजभवासुताम्बुजसुकायदाहेक्षणं' इति पादमात्रमधिकं मातृकासु दृश्यते ।

ऊर्णाचकनिकाशसंसृतिमहाचक्रेऽथ बद्धाङ्कं
त्वामेवाभिमुखं प्रयामि शरणं मामद्य सांब प्रभो ॥ ३ ॥

अगुणं भगणाधिपैकचूडं त्रिगुणातीतगुणं च निर्गुणं तम् ।
अरुणाविपक्षारणं सुराणां वरुणाच्यं [1]शरणं शरण्यमीड्यम् ॥ ४ ॥

धृतभसितभुजङ्गं भक्तचित्तैकसङ्गं करधृतमुकुरङ्गं तुङ्गलिङ्गैकसङ्गम् ।
मुनिजनभवभङ्गं कालकालं रथाङ्गप्रदमथ हरये तं संभजे शङ्करमीशम् ॥ ५ ॥

समुत्थाप्य तमाशीर्भिरभिनन्द्य सदाशिवः । कामं कामान्तकस्यैव प्रसादश्चास्तु शाश्वतः ॥ ६ ॥
स्वच्छन्दमरणं तेऽस्तु त्वं मे भक्तः सनातनम् । तत् प्रतिग्राह्य स मुनिरुवास निजकेतने ॥

गोभिर्धान्यगणैर्धनादिविभवैः रम्यैर्गृहैर्भूषणैः
स्वाद्वन्नैः शिवलिङ्गपूजनरतो विप्रोऽप्युवासाश्रमे ।
तच्छ्रुत्वा नृपतिः शिवप्रभवजं भाग्यं स विष्ण्वर्चना-
ल्लब्धां दर्शयितुं गजाश्वनिवहैरायान्मुनिं तं तदा ॥ ८ ॥

तेनान्नं बुभुजे सुषड्रसवरं संपूजितोऽसौ नृपः
द्रष्टुं तत्तपसः क्रियां तमाह विहसन् मौर्ख्यात् स विष्ण्वर्चनात् ।
प्रासं दर्शयदस्त्रजालनिकरं सो (?) दर्भमुष्ट्या बलात्
निर्वीर्ये निजशस्त्रजालनिवहैर्मत्तेभसङ्घाश्वकैः ॥ ९ ॥

सैन्ये नाशमुपागते स हि मुनिर्जिग्ये यदा तं नृपं
विष्णुः शार्ङ्गसचक्रधारगदयाऽभ्यागान्मुनीन्द्रं च तम् ।
भक्तं स्वं शिवभक्तवीर्यनिहतं दर्भाग्रमुष्ट्यैकया
चुक्रोध प्रसभं तदा मुनिवरे शस्त्राणि चैवोत्सृजत् ॥ १० ॥

चक्रं तं निहतारमीश्वरपरं नत्वाऽमितस्थेऽञ्जलि
दृष्ट्वाऽस्त्रेण विवर्जितः स तु मुनिर्याहीति चोक्त्वा हसन्
भक्तस्याद्य तवाद्य घातकरं किं धाष्टर्यमीशात्मके ॥ ११ ॥

दधीचीवचसा हरिर्विधुतकेशपाशं नृपं समीक्ष्य भुवि पातितं कुशशरैर्मुनेर्मन्त्रजैः ।
अदर्शयदथाञ्जसा मुनिवराय संदर्शनं जगज्जठरकल्पितं स तु मुनि[2]र्हरौ दर्शयत् ॥ १२ ॥

---

१ करुणं D २ हरिं दर्शयन् C

शिवाङ्घ्रिपदपूजनात् स्वयमपि प्रबोधं वचो जगाद हरये हृदा मदननाशपादार्चकः ।।१३ ॥

दधीचिः –

चक्रं शम्भुकृपावशात् तव महानेत्राम्बुजैः पूजनात्
संप्राप्तं मयि शम्भुभक्तिसुमनाः पश्याञ्जलिं संस्थितम् ।
एतद्दैत्यवधाय कल्पितमुमाकान्तेन शान्तात्मना
एतद्योगवशाद्भवान् जयकलायुक्तो जगत् पासि च ॥ १४ ॥

मा धाष्टर्यं कुरु शाङ्करेषु तदितो गच्छाधुना स्वं पदं
एषोऽजीवतु मे (सखा) स्वसैन्यनिवहैः स्वं राज्यमाप्तोचितम् ।
चोद्बुद्ध्वायतगर्वसर्वतवशो माभूः सदा त्वं हरे
इत्युक्ते मुनिना जगाद नृपतिः सुप्तोत्थितेवोत्थितः ॥ १५ ॥

सैन्येनाप्तपराभवं मुनिवरं नत्वा सविष्णुस्तदा
स व्रीडाविमुखो जगाम नगरं राजा तदा विष्णुना ॥ १६ ॥

विष्णुः –

मा धाष्टर्यं कुरु शांभवेषु नृपते ये शङ्करार्चापराः
देवाद्यैरपि पूजनीयचरिताः मायाहि (?) पूज्या मम ।
मद्भक्तैश्च मयापि पूजितमहापादाम्बुजास्ते सदा
शान्ताः शर्वपरायणा हरमहादेवेशपादार्चकाः ॥ १७ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे दधीचिवरप्रसादवर्णनं क्षुपगर्वहरणवर्णनं च नाम त्रयोविंशोऽध्यायः ॥

---

## ॥ चतुर्विंशोऽध्यायः ॥

स्कन्दः —

औद्दालको रिटिः पूर्वं भक्त्याऽऽराधितवान् हरम् । पित्रा स ताडितः पूर्वं सुदैत्युक्तो जगाम ह ॥

वनं तुङ्गं महासालतमालकदलीयुतम् । नीले तदा गिरिवरे रम्यसानुशिवालये ॥ २ ॥

तताप परया भक्त्या भस्मरुद्राक्षभूषणः । शिवार्चनैकसंपन्नशिवनैवेद्यभोजनः । ३ ॥

तस्यैवं वर्तमानस्य ईशो नीलेश्वरस्तदा । देव्या च युक्तो भगवान् नीलकण्ठ उमापतिः । ४ ॥

जगाम दर्शने तस्य शिवः सवृषभस्तदा । व्यालशोभिमहाहारो देवः शशिकलाधरः ॥ ५ ॥

स दृष्ट्वा देवदेवेशं शिवालोकनतुष्टधीः । प्रणम्यास्तुवदीशानं रिटिरुद्दालकात्मजः । ६ ॥

रिटिः —

असमकुसुमबाणपाणितातैकबाणः अनुमतिभवहीनः सोममामाललामः ? । ७ ॥

सामस्तोमैकभूमा रविशशिहुतभुग्धाम सीमा त्वमात्मा
सर्वेषां भूरिकामप्रदवरदगिरौ देवदेवोऽसि सोमः ।
उर्वीमौर्वीक दर्वीकर रथगिरिधृक् बाणबाणासनं ते
विष्णुर्जिष्णुस्त्वमेवागमवरतुरगोत्तुङ्गदैरर्च्यः ॥ ८ ॥

धाता यन्ता सुरान्ये तव हर सुकराः किंकराः शङ्कर त्वां
स्तं तु ज्ञातुं किलेशं मम वरकरणे कारणं त्वं महेश ॥ ९ ॥

वामदेव जितकाम सामजस्तोमसीम सुदिधीतिललाम ।
व्योमकेश कुशकाशपूजितोत्कृष्टकोशगणपञ्चकद्रुम ॥ १० ॥

अज गजवरमौलिकृत्तिधारिन् सुरगजराजसमर्चिताब्जपाद ।
अजगजकरणेषु कारणं त्वां भजतां नास्ति भवो भव प्रपञ्चे ॥ ११ ॥

मयि कुरु करुणां पिनाकपाणे भवमात्रेषु निमग्नमेनमीश ।
सुदयारससारया दृशा कृशमाधाऽद्य विलोकयेन्दुचूड ॥ १२ ॥

तत्स्तोत्रतुष्टो भगवांस्तस्मै स रिटये शिवः । गाणपत्यं ददौ देवो देव्याः पुत्रोऽपि कल्पितः ॥

स नमस्कृत्य देवेशं गृहमभ्यागतः पितुः । प्रणम्य पितरं तत्र [1]जटामुकुटवृन्दधृक् । १४ ॥

---

१ तयोरानन्दधृक् स्वयं C

अनुज्ञाप्य स्वपितरौ कैलासशिखरे तदा । शिवस्यानुचरस्तस्थौ शिवसारूप्यभागभूत् ॥ १५ ॥
राजत्कपर्दविलसद्गङ्गाचन्द्रकलाधरः । त्रिनेत्रो नीलकण्ठश्च भस्मरुद्राक्षपुण्ड्रकः ॥ १६ ॥
संशोभितमहावाताशनहारो गणोत्तमः गणैर्लक्षपरिमितैस्तादृशैरेव सेवितः ॥ १७ ॥
शिवं प्रणम्य तुष्टाव रिटिः स्तोत्रेण शङ्करम् ॥ १८ ॥

रिटिः –

स्वर्णवर्णकृतनेत्रकर्णजापापहार गगनार्णवसंस्थ ।
ऊर्णनाभिरिव जागतमेतत् त्वद्गतं विसृजसेऽत्सि च तूर्णम् ॥ १९ ॥

शर्व सर्वपरिपूरितकामस्तोमसाम्यगगना करुणाढ्य ।
लोकनेऽपि कलनेऽपि कालनः कामकोपदमनाव्ययमूर्ते ॥ २० ॥

श्रीमत्त्रियंबक सदाशिव वेदवेद्य वैद्योत्तम प्रमथनाथ सुरासुरेड्य ।
विश्वनाथ मम नाथ पाहि मां माम[1] नाथ गिरिजाधव नाथ ॥ २१ ॥

सूतः –

तत्स्तुत्याऽऽतीव सन्तुष्टो गणेन्द्राय महेश्वरः ।
ददौ संप्रार्थितान् कामान् ब्रह्मविष्ण्वादिदुर्लभान् ॥
गाणपत्यं च संप्राप शिवनामप्रभावतः ॥ २२ ॥

भस्माभ्यक्ततनुर्भवामि सितयुक्पुण्ड्राङ्कगात्रोऽभवं रुद्राक्षादिविभूषितः शिवमनुव्याहारमात्रादरः ।
रुद्राध्यायजपानुरक्तहृदयो लिङ्गार्चनात्यादरो भूयाज्जन्मशतेषु एष विहितस्त्वत्पादपद्मेऽञ्जलिः ॥

इत्थं तद्वचसा सुनन्दितहृदा स्मेराननः शङ्करः
प्राहाऽऽनन्दभरेण वाक्यमधुना संवीक्ष्य तं वै शिवः ।
तन्मूर्ध्नि स्वकराम्बुजं च न्यदधादुच्चैर्वदन्तं हरः
सर्वेषाम्रुपशृण्वतां सुरगणेन्द्राणां मुनीनामपि ॥ २४ ॥

ईश्वरः –

स्कन्दं विघ्नाधिपं वा तव सदृशगुणं नाभिनन्दामि पुत्रं
विश्वानन्दो रिटिस्त्वं मम गणवरो देवसंघैकवन्द्यः ।
गौर्याश्चापि प्रियस्त्वं तव वरतपसा नामजाप्यप्रियं मां
विद्धि त्वय्येव रक्तं गणवर विनुतः सत्यमद्य ब्रुवेऽहम् ॥ २५ ॥

---

१ न नाथो यस्येति व्युत्पत्तिः ।

मत्साक्षाद्रूपधरो वसात्र भुवने कैलासमौलौ मम
　कुर्वन् मत्पदपूजनं सुविहितश्चन्द्रोत्तमाङ्गो भव ।
विष्णुब्रह्ममहेन्द्रमुख्यमुकुटीनीराजितं मे पदं
　ध्यायन् भृङ्गिसखो भवाशु गणपश्रेष्ठः सदा मत्पुरः ॥ २६ ॥

एवंप्रभावः स मुनेः सुतोऽभवन् स धूर्जटिप्रेमयुतो रिटिस्तदा ।
ललाटनेत्रेण तदैव वीक्षितः कटाक्षकोट्या स भवद्गणोत्तमः ॥ २७ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे रिटीतिहासवर्णनं नाम चतुर्विंशोऽध्यायः ॥

## ॥ पञ्चविंशोऽध्यायः ॥

स्कन्दः —

कण्वोऽपि पूजयामास महादेवं महेश्वरम् । चारुचन्द्रकलाभूषं शिवार्धाङ्गं शिवङ्करम् ॥ १ ॥
ध्यानार्चनैर्वन्दनैश्च भस्मरुद्राक्षभूषणः । रुद्राध्यायजपासक्तो रुद्रलिङ्गार्चने रतः ॥ २ ॥
कुशाश्रमे पुरा विप्रः कुशकाशैः समर्चयन् । तुष्टावाष्टाकृतिं शम्भुं कण्वः कञ्जजपूजितम् ॥ ३

कण्वः —

　उरमन्युवरप्रदोरुमन्यो क्षतमन्यो कृतदक्षशिक्ष शम्भो ।
　सुरमूर्धसरिन्नगेन्द्रकन्यावर मन्येऽहमवैमि भक्तिधन्यम् ॥ ४ ॥
गिरिवरधनुरुग्रशरमुरहर वरकाकोदरहारमौर्वीक । उर्वीरथ रथिकाग्रे प्रविजेतः पुरहन् भवाद्य पाहि
　कुसुमशरारिपुरारिपादपद्मे प्रविश तरारिव शिव प्रकृष्टपार्थः ! ।
　मनसिजमनसा जगत् प्रमुग्धं हर मुग्धेन्दुकिरीटकोटिजूट ॥ ६ ॥
विश्वामित्रोऽपि देवेशं समाराध्य पुरा युगे । भस्मरुद्राक्षसंपन्नो रुद्रलिङ्गार्चने रतः ॥ ७ ॥
त्रिशङ्कुं शङ्कुभूतं च देवानां स्वर्गिणं व्यधात् । स्वयं विधातृपदवीं ससर्ज भुवनं मुनिः ॥
　शिवपूजाप्रभावेन तुष्टाव परमेश्वरम् ॥ ८ ॥

विश्वामित्रः —

　हेमाम्बुजोद्भवषडाननवारणास्यसंसेविताङ्घ्रिकमलं तरुणेन्दुचूडम् ।
　मन्दारवृन्दपरिवन्दिमुकुन्दनेत्रपादारविन्दमगजापतिमाश्रयामि ॥ ९ ॥

नागनागनगवासकृत्तिधृक् भूरिहारसुरवीरकुमार ।
मारमारकरवीरसुमाद्य स्रग्धगामरवराव महेश । १० ॥

कपिलोऽपि महायोगी शैवाचार्योऽभवन्मुने । ११ ॥

भस्मरुद्राक्षसंपन्नः शिवलिङ्गार्चने रतः । संस्तुवन् साम्बमीशानं [1] कपिलायतः ॥ १२ ॥

कपिलः —

गङ्गोत्तमाङ्ग शशिसङ्ग भुजङ्गसङ्ग तुङ्गोत्थिताङ्ग वृषभाङ्ग महेश भृङ्ग ।
श्रीव्योमकेश भवभङ्गभुजाङ्ग शम्भो पाहीश मां तव दयाप्रसरैरपाङ्गैः ॥ १३ ॥

यामिनीरमणखण्डधारिणं कामिनीविधृतवामविग्रहम् ।
स्तौमि देवमगजामनोहरं नौमि कायमनसा सदैव [2] तम् । १४ ॥

दुर्वासाऽपि महाशैवः शिवलिङ्गसमर्चकः । भस्मरुद्राक्षरुद्रादिपञ्चाक्षरपरायणः ॥

तुष्टाव देवमीशानं देवदेवमुमापतिम् ॥ १५ ॥

दुर्वासाः —

अभेद्य वेद्योत्तम वेदवेद्य विद्युत्प्रभोद्यत्सुकपर्द शम्भो ।
विद्याऽप्यविद्याऽपि च ते कटाक्षतः सुद्योततेऽद्यैव विनाशमेति ॥ १६ ॥

उडुगणपतिचूडं हृज्जडानां च दूरं मृडमजडमवेद्यं वेदवेदान्तसङ्घैः ।
दृढतरहृदयाब्जे गाढमालिङ्ग्य देवीं स्थितमनलशिखाग्रे शूलपाणे भजे त्वाम् ॥ १७ ॥

भृगुश्चापि समाराध्य देवमीशं कपर्दिनम् । भस्मत्रिपुण्ड्ररुद्राक्षधारकः शिवपूजकः ॥ १८ ॥

विष्णुं शशाप कोपेन स्वभार्यानिधने रतम् । दैत्यसाहाय्यकरणे तदा तुष्टाव शङ्करम् ॥ १९ ॥

भृगुः —

अजगजपुरमारदक्षशिक्षं यममगमुरवैरिगर्वनाशम् ।
जनवनपितरं ऋषिं महेशं मनसा यामि कलाधरोद्धमौलिम् ॥ २० ॥

जनकं श्रुतिगीतमेनमेकं विधिविष्णिवन्द्रयमानिलानलानाम् ।
मरुतां पितरं महेशमाद्यं श्रुतिवेद्यं परमं नतोस्मि पूज्यम् ॥ २१ ॥

तथैव च सनन्दोपि शिवलिङ्गं समर्चयन् । भस्मरुद्राक्षसंपन्नः तुष्टाव जगदीश्वरम् ॥ २२ ॥

---

१ कपिलः पिकलायतः D

२ इतः परं 'सौदामिनीव तरलायुषि शम्भुमीशम्" इति पादमात्रं कोशेषूपलभ्यते ॥

सनन्दः –

अनीशं त्वामीशं वदति रुशतीभिः श्रुतितमा सनाथं त्वामाद्यं भवहरमभेद्यं हि करणैः ।
असङ्गं सङ्गेषु प्रथितपरमानन्दमधुरं धरानीरव्योम्नां पवनतपनैरेव जगति ॥ २३ ॥

पशुपिशितहुताशतर्पिताशाः कथमधुना सुरा हि सप्रकाशाः ।
शरणाय भवन्ति नारकाणां करुणावारिनिधिं विहाय देवम् ॥ २४ ॥

सानन्दोऽपि पुरः पूज्य गणागत्यमत्राप सः भस्मत्रिपुण्ड्रनिटिलः सानन्दो नन्दितान्तरः ॥

सानन्दः –

अनशनमननैरुपायसङ्घैर्न हि मोदाय न वैनसां क्षयाय ।
अवनीतलपालसन्निधौ प्रणामः तव भक्त्या सुकरो हि बन्धमुक्त्यै ॥ २६ ॥

रमारमणकारणं विधिहरीन्द्रसन्तोषणं गरारुणगलान्तरं कुसुमबाणसंशोषणम् ।
भजामि परनाभिनप्रथितहारवाणासनी कृतागपतिकन्यकापतिमपारवेदेषणम् ॥ २७ ॥

इत्थं देवमुमापतिं पशुपतिं संपूज्य ते लेभिरे
कामान् कामाङ्गनाशप्रविहितदयया विप्रवर्या गणेन्द्राः ।
कण्वाद्या देवदेवं गिरिवरशिखरे कामदे वैद्यनाथे
श्रीशैले त्र्यम्बके च चिरगिरिशिखरे गोनगे कृत्तिशैले ॥ २८ ॥

आराध्यैव सदाशिवं त्रिजगतामाधारभूतं हरं
विश्वातीतमजेन्द्रविष्णुजनकं सोमं मृडं कामदम् ।
सर्वेषामघनाशनं गिरिधरं शर्वं पशूनां पतिं
मुक्ता एव भवांघ्रिपङ्कजरता भावाः कृतार्थाः पुरा ॥ २९ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे कण्वविश्वामित्र-कपिल-दुर्वासो-भृगु-सनन्द-सानन्दादिमहर्षि-तपोवर्णनं नाम पञ्चविंशोऽध्यायः ॥

---

## ॥ षड्विंशोऽध्यायः ॥

स्कन्दः —

[1]विधिर्विधिरशाद्विप्र कृत्वाऽऽगो दुष्करं पुरा । न निष्कृतिस्त्रिनेत्रस्य प्रसादेन विनास्य यत् ॥ १ ॥
ब्रह्मघ्नो मद्यपः स्तेनो गुरुतल्पगतस्तथा । तत्संयोग्युपपापाश्च कलौ ते मुक्तपातकाः ॥ २ ॥
भविष्यन्ति न निन्दन्तः शिवस्य परमात्मनः । नानिष्कृत्य विनाऽस्यं तदिति मत्वा प्रजापतिः ॥
पञ्चभूतात्मिकां सृष्टिं पञ्चकोशसमुद्भवाम् । स्वात्मजेषु निवेश्याथ स तदा विधिलङ्घनम् ।
निन्दनाच्छङ्करस्यापि पापं दुःखं महत्तरम् ॥ ४ ॥

जैगीषव्यः —

कथं किमर्थं देवेशं वेदेड्यं परमेश्वरम् । निनिन्द निन्दितमनाः केन कार्येण सत्तम ॥ ५ ॥
वदैतत् सविशेषेण(?)स्कन्दानन्दघनाव्यय ॥ ६ ॥

स्कन्दः —

पूर्वमेकार्णवे घोरे पञ्चवक्त्रः प्रजापतिः । वितत्य सृष्टिमखिलां तेन गर्वेण मोहितः ॥ ७ ॥
दृष्ट्वा साश्चर्यमत्युच्चैः जहासारुणलोचनः ।

ब्रह्मा —

मयेदं सृज्यते विश्वं कारणं जगतस्त्वहम् । प्रजापतिरहं साक्षात् कः समो मम सांप्रतम् ॥ ८ ॥
इति गर्वेण संयुक्तं रुद्रं वीक्ष्याऽऽह शङ्करः ॥ ९ ॥

ईश्वरः —

छिन्धि तस्य शिरो रुद्र ब्रह्मणः पञ्चमं महत् । कालाग्निरुद्रो निर्देशाद्भवस्य परमात्मनः ॥ १० ॥
ब्रह्मणश्च शिरस्तेन छिन्नं नियुतयोजनम् । तमाह पद्मजं खिन्नं प्रणष्टोरुशिरोधरम् ॥ ११ ॥
मन्निन्दनाच्च संप्राप्तं ब्रह्मंस्ते पश्य तत्फलम् । इत्युक्ते देवदेवेन प्रणम्यास्तुवदीश्वरम् ॥ १२ ॥

ब्रह्मा —

शशिधामकलाललाम फालानल नीलामलकण्ठ देव शम्भो ।
कृतमालतमालपुष्पमालाकलिताजैककपालशूल पाहि ॥ १३ ॥

यो देवः श्रुतिशेखरैर्मृगयते १,जानन्ति यं वै हृदा
जातं येन समस्तवास्तुविषयं यस्मै च सर्वे नताः ।

---

१ 'न निष्कृतिः' इत्यादिः चिन्ताप्रकारः। 'कृत्वा' इति पदं इति मत्वेति तृतीयश्लोके संबध्यते।

यस्मान्नापरमस्ति यस्य सततं लिङ्गार्चकास्ते सुराः
यस्मिन् विश्वमिदं प्रयाति च लयं वन्दे पशूनां पतिम् ॥ १४ ॥

स ब्रह्मवचसा रुद्रं गतगर्वं प्रजापतिम् । उवाच वाचा प्रसभं महेशो भक्तवत्सलः ॥ १५ ॥

ईश्वरः —

कपालपाणिर्हि भवानस्य ब्रह्मणो व्रतम् । द्वादशाब्दावधि सदा भस्मछन्नकलेवरः ॥ १६ ॥
रुद्रमावर्तयन् रुद्र देवलोकेषु संचर । भिक्षाशी विगतेनस्को [2]भविष्यसि विमुक्तये ॥ १७ ॥
पतिष्यत्यवशेनैव कपालं त्वत्कराग्रतः । ब्रह्माऽप्ययं मुक्तशापो भविष्यति मदर्चनात् । १८ ॥
सर्वेषां सर्वपापानां प्रायश्चित्तं श्रुतीरितम् । मद्द्रोहनिन्दनस्यास्य मदर्चैव गतिः परा ॥ १९ ॥
तच्छ्रुत्वा शाङ्करं वाक्यं प्राह रुद्रो महेश्वरम् । तव द्रोहः किंप्रकारः का वा त्वद्द्रोहिणो गतिः ॥
सा केन नाशमायाति कृपया वद मे प्रभो । तद्रुद्रायावदच्छम्भुर्ब्रह्मणः शृण्वतस्तदा ॥ २१ ॥

शिवः —

शृणु कालाग्निरुद्र त्वं ब्रह्मंस्त्वमपि सत्तम । अनिष्कृतिपरं(?)त्वेतन्मद्द्रोहाणां परम्परा ॥ २२ ॥
ब्रह्मघ्नो मुच्यते कल्पे तथान्ये तारतम्यतः । महापापोपपापेभ्यो मद्द्रोहे नैव निष्कृतिः ॥ २३ ॥
शास्ताऽहं मोचकस्तेषां न यमो भैरवो न हि । शृणु द्रोहं मदीयं त्वं ब्रह्मणा रुद्रसत्तम ॥ २४ ॥
मद्भक्तनिन्दनं रुद्र निन्दनं द्रोह एव मे । मद्भस्मनिन्दनं रुद्र मद्द्रोहः परमो मतः । २५ ॥
मद्रुद्राक्षमहानिन्दा मद्द्रोहः परमो मतः । त्रिपुण्ड्रधारिणां निन्दा मद्द्रोहः परमो मतः ॥ २६ ॥
रुद्राध्यायजपे निन्दा मद्द्रोहः परमो मतः । पञ्चाक्षरस्य निन्दा च अन्यमन्त्रसमत्वधीः ॥ २७ ॥
मन्नामजपनिन्दा च तथा मत्क्षेत्रवासिनाम् । अन्यक्षेत्रोपमानेन दर्शनं द्रोह एव मे ॥ २८ ॥
शिवलिङ्गस्य निन्दा च मद्द्रोहः परमो मतः । शिवलिङ्गार्चनासाम्याद्विष्णुरूपादिपूजनम् ॥
मद्द्रोह एव परमः सुघोरो नरकावहः । तप्तचक्राङ्कितालापभोजनं सहभाषणम् ॥ ३० ॥
ऊर्ध्वपुण्ड्राङ्कनं मोहात् मद्द्रोहः परमो मतः । अनुद्धूलितदेहेन अग्निरित्यादि भस्मना ॥ ३१ ॥
ऊर्ध्वलिङ्गेन लिङ्गार्चा मद्द्रोहः परमो मतः । रुद्राक्षभस्मपुण्ड्राङ्कविहीनेनार्चनं मम । ३२ ॥
शिवालयानां तीर्थानां भेदनं द्रोह एव मे । गावो धान्यं धनं वस्त्रं घृतं तैलं तथा मधु ॥
शिवोपकरणं द्रव्यं हृत्वा भक्तस्य वा विधे । अन्यधर्मेऽपि संयोज्य मद्द्रोहायैव कल्पते ॥ ३४ ॥

---

२ भविष्यस्य विमुक्तके C, D

स धर्मो धर्मनिर्मुक्तः पापायैवाशु कल्पते । मद्द्रोह एव परमः सुघोरनरकप्रदः ॥ ३५ ॥
ब्रह्मविष्ण्वादिसाम्येन मयि धीर्नरकावहा । मद्भक्तस्यान्यभक्तेन सादृश्येनाभिवीक्षणम् ॥
प्रदोषसोमवारेषु भूतकालाष्टमीषु च । वेदे गुरौ च वेदान्ते प्रद्वेषः शिवयोगिषु ॥ ३७ ॥
दिवैव भुक्तिर्मोहेन सुघोरनरकप्रदा । ३८ ॥

यथा मयोक्तं हृदि धार्यमेतत् न हि प्रकाश्यं भुवि मानुषेषु ।
मद्द्रोहनिष्ठालयमेव याम्यं घोरं परं मोहददुःखदं सदा ॥ ३९ ॥

सन्तप्तचक्रक्रकचैर्विषोल्बणै
राशीविषैर्माल्लमद्धृदाविलैः ।
पूयैः शोणितगन्धमेदुरमहाकाकोलुम तांडनैः
उत्कोशीकृतखड्गताडनमहाकुम्भादिपङ्कैरपि ॥ ४० ॥

सन्तप्तायसवालुकादिलुठनैर्घोरैर्व्रणासेचनैः
क्षारैः सूचिमुखैर्विलूनमुखजापादाङ्गसन्धावपि ।
मद्द्रोहप्रवणाः सदैव नरके सन्तप्तदुःखौघकाः
कल्पान्तेऽपि न मोचिता मम कृपालेशैः परं वर्जिताः ॥ ४१ ॥

यावद्ब्रह्मपरंपरा हरिहयश्चेन्द्रा मनूनां क्रमः संप्राप्यैव महौघदुःखमगजाकान्तार्चनावर्जिताः ।
एवं ते निवसन्ति सन्ततनिवृश्रान्तैकदुःखाकुला जाने नाहमपि प्रदातुमथवा हस्तावलम्बं मम ॥

का वा तेषु गतिर्भवे भवति वा नो वा कथं ते कियत्
कालं वा परिवर्तितार्तरुदितैर्जानन्ति तान् नो यमाः ।
मद्द्रोहो न कदापि कार्य इति मे उक्त्या च धीः स्वस्तये
तस्मान्मां शरणं प्रयाति यदि चेत् तद्द्रोहनाशो भवेत् ॥ ४३ ॥

इत्युक्त्वा स जगाम चारुवृषमारूढः सहांबो भवो
रुद्रो नन्दवनं जगाम रभसात् पापात् तदा मोचितः ।
ब्रह्मा ब्रह्मपुरे उवास नियतं ईशार्चनेनान्वितो
रुद्राक्षामलभस्मपुण्ड्रनिटिलो वक्त्रैः स्तुवन् शङ्करम् ॥ ४४ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे ब्रह्मशिरश्छेदनशिवद्रोहनिरूपणं नाम
षड्विंशोऽध्यायः ॥

## ॥ सप्तविंशोऽध्यायः ॥

:O:

जैगीषव्यः—

कथं कालाग्निरुद्रो वाऽऽचरद्ब्रह्महणो व्रतम् । ईशाज्ञया वद स्कन्द नन्दितामरवृन्दक ॥ १ ॥

सूतः—

इति तद्वचनं श्रुत्वा स चाह मुनिसत्तमम् । गजाननानुजः श्रीमान् भवस्य चरितं महत् ॥ २ ॥

स्कन्दः—

ईश्वराज्ञावशाद्रुद्रः स्वीचक्रे तां द्विजाहतिम् । दिगम्बरो जटामौलिर्भस्मच्छन्नाङ्गमस्तकः ॥ ३ ॥

पादुकाविलसत्पादः कपालं ब्राह्ममुद्वहन् । दधत् सव्येन शूलं च चश्चच्चन्द्रकलाधरः ॥ ४ ॥

व्यालयज्ञोपवीतश्च धृतनागसुकुण्डलः । डमरु वादयन् घोरं देवलोकांश्च पीडयन् ॥ ५ ॥

देवलोकांश्चचारासौ द्वादशाब्दं तदा द्विज । वेदांश्च श्वगणाकारान् कृत्वा कालाग्निरुद्रकः ॥

चचार भिक्षाव्याजेन मदद्विपगतिस्तदा । ब्राह्मे च वैष्णवे चैव कुबेरेन्द्रमरुत्सु सः ॥ ७ ॥

वायव्ये वारुणे याम्ये नैर्ऋताग्नि-पुरेषु च । शून्यालयेषु बभ्राम गजो नलवनेष्विव ॥ ८ ॥

तत्रत्यं मधुमैरेयं पिबन् कलशजालकैः । भक्ष्यानुच्चावचान् भक्षन् गन्धानालेपयंस्तदा ॥ ९ ॥

देवोद्यानस्रजा वर्ष्म शोभयन् भाति भूतपः । तं दृष्ट्वा भयवित्रस्ता देवा जग्मुर्यथागतम् ॥ १० ॥

सा चान्वगात् तदा वध्या कृष्णाङ्गी निर्णतोदरी । दंष्ट्राकरालवदना सृक्किणी लेलिहन् (?) मुहुः ॥

ऊर्ध्वोद्यद्विकृतातास्रकेशा रक्तारुणेक्षणा । दण्डहस्ताऽनुवव्राज रुद्रं कालाग्निसंभवम् ॥ १२ ॥

मुनिः—

ईशानेक्षणतः स्कन्द न नष्टा किं तदा हि सा । यस्य स्मरणमात्रेण तन्नामोच्चारणेन हि ॥ १३ ॥

शिवेति कीर्तनादेव ब्रह्महत्या विनश्यति । तं रुद्रमनुवव्राज तद्वै विस्तरतो वद ॥ १४ ॥

स्कन्दः—

लोकसङ्ग्रहणार्थाय ईशाज्ञावशतस्तदा । कालाग्निरुद्रस्तां वध्यां मानयामास विश्वपः ॥ १५ ॥

चचार देवलोकेषु तच्छृणुष्व मुनीश्वर । ऐन्द्रे च वारुणे याम्ये वैष्णवे ब्रह्मसद्मनि ॥ १६ ॥

कुबेरयक्षसदने गन्धर्वोरगसद्मनि । चचार भिक्षां रुद्रोऽसौ तैश्च संपूजितो मुदा ॥ १७ ॥

तं दृष्ट्वा कालदमनं शङ्करं कालभैरवम् । रूपलावण्यसंपन्नं नारीकुलमथाभ्यगात् ॥ १८ ॥

गायन्तं विविधं गीतं नृत्यन्तं ददृशुस्तदा । सस्मितं प्रेक्ष्य वदनं चलद्भ्रूभङ्गमेव च ॥ १९ ॥

स देवदानवादीनां लोकानभ्येत्य शूलभृत् । जगाम विष्णोर्भवनं यत्रास्ते पुरुषोत्तमः ॥ २० ॥
सहैव भूतप्रवरैः प्रवेष्टुमुपचक्रमे । अविज्ञाय परं भावं रुद्रस्य परमात्मनः ॥ २१ ॥
न्यवारयत् त्रिशूलाङ्कं द्वारपालो महाबलः । शङ्खचक्रगदापाणिर्विष्वक्सेनो गणोत्तमः ॥ २२ ॥
तं शूलमूलेनोद्भिद्य भ्रामयामास वेगतः । वमन् स रुधिरं वर्षं ववर्ष मुखतो द्विज ॥ २३ ॥
तत्याज जीवितं तत्र मृगो व्याघ्रहतो यथा । विवेश विष्णोर्भवनं तस्यादाय कलेवरम् ॥ २४ ॥
तं वीक्ष्य जगतो हेतुमीश्वरं जगतो हरिः । तुष्टाव प्रणतो भूत्वा तं रुद्रं हरिरव्ययः ॥ २५ ॥

विष्णुः —

करकलितकपालं ब्रह्ममुण्डोरुपालं गललसदहिमालं शूलकीलाविशालम् ।
मदगजवरलीलालोकनाटोकिपालं सुरकुवलयसोमं त्वां भजे कालकालम् ॥ २६ ॥
करधृतमृगबालं बालविप्रानुकूलं सुविहितगलनीलं शर्वपादाब्जलोलम् ।
सुखरदलनाद्यैर्मर्दनप्राणलीलं अनलकलितशूलं त्वां भजे कालकालम् ॥ २७ ॥

सूतः —

तदा विष्णुस्तुतो रुद्रो हर्षवर्षेण भूयसा । देहि भिक्षामिहोवाच यावन्मे तुष्टिरद्य भो ॥ २८ ॥
ततो ध्यात्वा तदा विष्णू रुद्रमाह गतव्यथः । गृहाणेदं हि भगवन्नान्यैस्तृप्तिरिहाद्य ते ॥ २९ ॥
तदा त्रिशूलमूलेन तच्छिरोद्भिद्य वैष्णवम् । तद्रक्तमपिबद्रुद्रो घनघोषो हसन्मुहुः ॥ ३० ॥
नीरक्तं माधवं दृष्ट्वा तमुज्जीवयदञ्जसा । ब्राह्मं कपालमादाय तद्व्रणं प्रमुमोच ह ॥ ३१ ॥
तेनानुज्ञापितस्तत्र ईशाज्ञावशतस्तदा । जगाम लीलया रुद्रो दिव्यां वाराणसीं पुरीम् ॥ ३२ ॥
ततः सर्वाणि तीर्थानि पुण्यान्यायतनानि च ।

स्कन्दः —

एवं भिक्षानुशिक्षा विधिहरिसुरगाद्यादमानाथलोके
याम्ये भीतैश्च देवैर्मुनिवरनिकरैर्भावितैर्वीक्ष्य रुद्रः ।
उच्चैर्घोषो हसंश्च हरिगणप्रवरं शूलमूले च प्रोतं
प्रेतं तद्रक्तधारां हरिशिरसिभवां ब्रह्ममुण्डेऽपिबत्ताम् ॥ ३३ ॥
भीत्या रुद्रस्य धावन् भुजगशमनवत् देहयुक्तः सुरेशः
तत्रापां पतिरप्यथाखुवरको ध्वांक्षोऽभवद्वै यमः ।
यक्षो भिक्षणशिक्षणेन सरमापुत्रोऽभवज्जीवितः
का वाऽन्यदत्र कथा सुरेषु विहिता वै कान्दिशीकाभवन् ॥ ३४ ॥

विश्वेशस्य पुरीमियाय गणपै रुद्रोऽपि शर्वाज्ञया
वध्या सापि तिरश्चकार सहसा रूपं स्वमापादरात् ।
तच्छैलोपममण्डलप्रतिनिभं भूमौ कपालं पतत्
स्नात्वाऽसौ मणिकर्णिकामलजले नत्वा च विश्वेश्वरं
तत्तीर्थं समभूत कपालशमनं पुण्यं च काश्यां [1]परम् ।। ३५ ।।

रुद्रः —

निर्वाणार्णवकर्णधार भगवन् त्वं शर्वरीशानन वामार्धाङ्गभुजङ्गसङ्ग महाभस्मैकसङ्ग प्रभो ।
यत्काश्यां विशतां महौघनिवहं दूरेऽप्यदूरः सतां त्वं चात्राधिपतिः सदैव मुदितो वेदेषु जेगीयसे

अत्राऽन्नप्रियदायिनी भगवतः पुत्रोऽप्यसौ ढुण्ढिराट्
दण्ड्यान् दण्डयति प्रतिक्षणमसौ श्रीदण्डपाणिः सदा ।
भीरूणां भयनाशनाय भवता श्रीभैरवः कल्पितः
श्रीकर्णी मणिकर्णिका विजयते लिङ्गालिसौधोत्तरा । ३७ ।।

विश्वेशान तव प्रभावमतुलं जानीत को दुर्जनो
यस्मिन्नन्तकभीतिलेशरहिते त्वं चान्त्यभूपाप्रदः ।
दिव्योंकारमहाध्वनिं ह्युपदिशन् मुक्त्यङ्गनाकामिनं
कृत्वा भोगिफणालिहारसुगलं चन्द्रार्धगङ्गाधरम् । ३८ ।।

भस्माभ्यक्ततनुं करीन्द्रजमहाचर्माम्बरोद्यत्कटिं हस्ते शूलकपालमौलिविहितं नेत्रत्रयेणोज्ज्वलम् ।
उक्षाधीश्वरकेतनं गरगलं कृत्वा नरं पावनं इत्युक्त्वा प्रणतो विधीन्द्रमहितो रुद्रस्तदा निर्ययौ

हृष्टो हर्षपरंपरानुभवतो धाम स्वमत्यादराद्गच्छंस्तत्र जगाद सूक्तिपरमैरानन्दवर्षैर्युतः ।
तच्चानन्दवनं मनन्दनमहायोगीन्द्रसेव्यं सदा यश्चात्र स्वतनुं जहाति स नरो धन्यो भवेन्नेतरः

रुद्रः —

वाराणसि त्वयि सदैव सरोगभूमावारोग्यभूमिरिति काममलीकवादः ।
सन्तप्यतां भवति यत्र वपुः सशूलं जन्मान्तरेऽपि जलभारवदुच्चमाङ्गम् ।। ४१ ।।

वाराणसीं प्राप्य बुधाः पितृभ्यो जलाञ्जलिं सादरमर्पयन्ति ।
बाणानि सर्वाणि ततः पितॄणां भवन्त्यहो दत्तजलाञ्जलीनि ।। ४२ ।।

---

१ पञ्चपादोऽयं श्लोकः

ये मृष्टान्नभुजो गजोत्तमहयारोहाः स्वगेहान्तरे
मत्ताभिर्महिलाभिरत्र विहरन्त्यामुक्तमुक्तास्रजः ।
ते घोरास्थिधरा विराजदनडुद्वाहाः विषाहारिणो
नर्तिष्यन्त्यवशात् श्मशाननिलये नीचैः पिशाचैः सह ॥ ४३ ॥

दत्तं शाम्भवपुङ्गवे किमपि तत् क्षेत्रप्रभावाद्भवेत्
दानं कोटिगुणान्वितं भवति तत् ख्यातं त्वयि त्वास्थया ।
वासं प्राप्य मुहुर्बहूनि ददतो वासांसि जन्मान्तरे
लोका हन्त भजन्ति दिग्वसनतां हे काशि तुभ्यं नमः । ४४ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे कालाग्निरुद्रब्रह्महत्याव्रतपालन-विष्णुरक्तपान-वाराणसीगमन-कपालमोचनतीर्थवर्णन-वाराणसीस्तुतिवर्णनं नाम सप्तविंशोऽध्यायः ॥

---

## ॥ अष्टाविंशोऽध्यायः ॥

स्कन्दः –

ब्रह्मापि शिवनिन्दायाः कारणेनातिदुःखितः । श्रुत्वा शिवस्य वचनं प्रणम्याह महेश्वरम् ॥ १ ॥

छिन्नशीर्षः स रुद्रेण व्रीडावनतकन्धरः । तुष्टाव परमेशानं कृतनिन्दापनुत्तये ॥ २ ॥

ब्रह्मा –

मदमुदितमदनदमन सदनीकृत गिरिवदन ?
संक्रन्दनकृतवन्दन यमुनानुजभवनशमन ।
सिकताशनतनयरक्षण भुवनाधिपगगनान्तर
[1](गहनाकृतिमनन) गिरिजानन कमलोद्भव परिगन्धितसंहनन ।। ३ ॥

अरुणानुचकृतवाहन परिपूजन परितोषण
तरणिप्रभदितिजान्तकखगवक्त्रक शंभो ।
[2](अरशोभितचक्रवरप्रद) वरुणालय कृतपारण मुनिपूजितचरण
अरुणाचलवसते शिव करुणां कुरु शंभो । ४ ॥

---

१, २ वृत्तपूरणे इदं कुण्डलद्वयं नापेक्ष्यते ।

सूतः —

ब्रह्मणः संस्तवं श्रुत्वा तमाह प्रसभं वचः । देवदेवो विरूपाक्षः प्राह पङ्कजसंभवम् ॥ ५ ॥

ईश्वरः —

माभैर्ब्रह्मंस्तवानेन स्तोत्रवर्येण पद्मज । मामेव तपसाऽऽराध्य प्रतिष्ठां लिङ्गसंभवाम् ॥ ६ ॥
मन्निन्दायाः फलं प्राप्तं कालरुद्रेण शिक्षितः । त्वत्कपालकरः सोऽपि नियुक्तो भिक्षणे सुरे ॥
आदाय भिक्षां देवेषु भीतेषु सुरसत्तम । गरुडध्वजमासाद्य तस्य वै रक्तधारया ॥ ८ ॥
अर्धपूर्णकपालेन शूलप्रोतं च तं गणम् । विष्वक्सेनं समादाय पश्य गच्छति शूलधृक् ॥ ९ ॥
शारदाभ्रघनप्रख्यो विमुञ्चन् भैरवस्वनम् । जटामौलिः सदा रुद्रो वेदसङ्घैर्वृतस्तदा ॥ १० ॥
अविमुक्तं प्रविष्टोऽसौ तत्कराग्रात् कपालकम् । सब्रह्मवध्यं पतति यत्र ते पतितं शिरः ॥ ११
कपालमोचनाख्यं तत् कपालेशसमीपतः । सरः पापौघशमनं स्नातानां संभविष्यति ॥ १२ ॥
त्वमपि श्रद्धया ब्रह्मन् शिवनिन्दाघशान्तये । मुक्तये चापि मामीशमाराधय महेश्वरम् ॥ १३
विरिञ्चिकाख्ये स्वपुरे लिङ्गाराधनकृत् सदा । भस्मरुद्राक्षसंपन्नो निरेनास्त्वं भविष्यसि ॥ १४
मद्द्रोहनिन्दापापानामहमेवाशु मोचकः । अनिष्कृतिपरं ह्येतदद्य मोघं भविष्यति । १५ ॥
नैतत्पापविनाशाय न यमो न हरिः सुराः । भक्त्या मामीशमाराध्य मुक्तपापो भविष्यसि ॥
नोचेत्प्रवर्धते नित्यं दुःखानन्तफलप्रदम् । मद्द्रोहपातकं घोरं यथा काश्यां कृतं त्वघम् ॥
तस्मान्मामेव शरणमुपयाहि विधेऽधुना ॥ १८ ॥

सूतः —

स धाता शिववाक्येन त्यक्तमोहो महेश्वरम् । नत्वा गते देवदेवे स्वयं चक्रे तपोऽद्भुतम् ॥ १९
वर्षाणां नियतात्मा सन् भस्मरुद्राक्षभूषणः । भारत्या च युतो वेधा रुद्रमावर्तयंस्तदा ॥ २० ॥
पञ्चाक्षरजपासक्तः पञ्चास्यध्यानतत्परः । विरिञ्चिपुरमासाद्य लिङ्गेऽपूजयदञ्जसा ॥ २१ ॥
पञ्चामृतासेचनैश्च गन्धपुष्पानुलेपनैः । धूपैर्दीपैश्च नैवेद्यैः वाद्यनीराजनोत्सवैः ॥ २२ ॥
त्रिकालं नियमाद्वेधा द्वादशाब्दव्रतं तदा । फलमूलाशनस्तत्र यतचित्तः समाचरत् ॥ २३ ॥
वाय्वाहारो जलाहारः फलमूलाशनो विधिः । स्तुवन् साम्बं हृदम्भोजे शिवलिङ्गं विलोकयन् ॥
निनाय कालं विनयात् कालकालार्चनाद्विधिः ॥ २५ ॥

ब्रह्मा —

भवं हरं मृडं शिवं महेशमीशशङ्करं उमाधवं रमाधवाब्जनेत्रपूज्यपादकम् ।
गराशनं शरासने गिरीन्द्रमौलिधारिणं पुराशनं स्मराशनं भजे सदाऽघमोचकम् ॥ २६ ॥

अजाद्यमुग्डपण्डधृग्ब्रह्माण्डकोटिमण्डलप्रचण्डताण्डवोल्लसत्सुगण्डकुण्डलीश्वरम् ।
शिखण्डखण्डसोमधृक्सुपुण्डरीकसंभवप्रकाशचर्मवासितं भजाम्यखण्डमीश्वरम् ॥ २७ ॥

सूतः —

तत्स्तुत्या तुष्टहृदयो वृषारूढोऽभ्यगाच्छिवः । राजद्भुजङ्गवलयो जटाहीन्दुविभूषितः ॥ २८ ॥
देव्यालिङ्गितवामाङ्गो गणवृन्दनिषेवितः । तमाह देवः प्रहसन् गिरिजां वीक्ष्य वै विधिम् ॥
देवानां गणवृन्दानां पश्यतां मुनिसत्तम ।

ईश्वरः —

निरेनास्त्वं मुक्तपापो मदर्चातो विधेऽधुना । गच्छ त्वं सृज भूतानि सत्यलोके वसन् मुदा ॥
मद्द्रोहघोरपापानां निष्कृतिर्मम पूजनम् । स वाण्या विधिरीशानं शर्वाणीपतिमीश्वरम् ॥ ३१ ॥
नत्वा ययौ गते शंभौ सत्यलोकाधिपः सुखम् । स सदस्यैः पूजितश्च पुत्रैर्देवैस्त्वसौ विधिः ॥
वितेने त्रिविधां सृष्टिं ईशाज्ञासंप्रचोदितः ॥ ३३ ॥

स्कन्दः —

इत्थं वेधा अपि मोहाच्छिवमजरमहानिन्दनान्मुक्तपापो
भक्त्याऽऽराध्यैव शंभुं हरिहरविधिभिः पूजितं लिङ्गमैशम् ।
भक्त्या शङ्करपादपद्ममनघं संपूज्य भक्त्या वृतः
तल्लिङ्गेक्षणतोऽपि पातकवरैर्मुक्तो विमुक्तोऽभवत् ॥ ३४ ॥

पञ्चादिपातकवरैः परवञ्चनादि कुर्वन् गृहादिषु हरिर्भुजगमुञ्चिताशः (?) ।
भक्त्या कुलुश्चपतिवञ्चनकृन्महेशं ध्यातो विरिञ्चिरपि किञ्चन नाप पापम् ॥ ३५ ॥

किं वर्णाश्रमतत्परश्रममरैः विश्रामभूमिः परा
काशीनाशितपापसङ्घसुकृतां काश्येकनिःश्रेणिका ।
सा वेणी मणिकर्णिका सुकृतिनामीशार्चनाल्लभ्यते
लब्ध्वाऽप्यन्तिमकाललोलकरणे मोक्षैकविश्राणिका ॥ ३६ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे ब्रह्मस्तुतिशिवप्रसादवर्णनं नामाष्टाविंशोऽध्यायः ॥

## ॥ एकोनत्रिंशोऽध्यायः ॥

स्कन्दः—

इन्द्रोऽपि वृत्रवध्यातो ब्रह्मवध्यामवाप्तवान् । वृत्रे विश्वस्तघातेन देवानां कार्यहेतवे ॥ १ ॥
इन्द्रस्य ब्रह्महत्यां तां ते देवा गुरुणा सह । भूमौ वनस्पतौ स्त्रीषु तां त्रेधा व्यभजंस्तदा ॥ २ ॥
वरेण छन्दयंस्ते च देवान् सगुरुमिन्द्रकम् । यदि देयो वरोऽस्माकं तव वध्यां सुरोत्तम ॥ ३ ॥
गृह्णीमो न वयं शक्ताः कामान्नोऽद्य प्रपूरय । तानूचुः प्रभं देवा वृणुतेति पृथक् पृथक् ॥ ४ ॥
खातप्रपूरणं भूमिः पुरा संवत्सरान्तरे । वृक्णानां पुनरुत्थानं वृक्षाणां मुनिसत्तम ॥ ५ ॥
स्त्रीणां प्रसूतिर्यावद्धि तावत्काममप्रयोजनम् । संप्राप्यैतद्वरं शक्रात् वध्याभागचतुष्टयम् ॥ ६ ॥
जगृहुस्ते त्रयोऽपीन्द्रमेकांशेन व्यवस्थिताः । तेषां तल्लाञ्छनं प्राहुः निर्यासं मलमाप्तनां ॥ ७ ॥
ऊषरस्तु तथा भूमेः वृक्षाणां स्त्रीगणस्य च । याजितो हयमेधेन गुरुणा सुरसत्तमैः ॥ ८ ॥
त्वष्टुः पुत्रवधोत्पन्ना साऽनुवव्राज तं हरिम् । तपस्विनं त्रिशिरसं शक्रः शत्रुं सुरैः सह ॥ ९ ॥
ब्रह्मदत्तवरोऽधावद्वज्रेणाथ तदाच्छिनत् । तद्वक्त्राण्यपतन्नुर्व्यां रोदसी कम्पयन्निव ॥ १० ॥
प्रथमं सोमपानाख्यं द्वितीयं तु सुरादनम् । अन्नादनं तृतीयं तु तेभ्यो वै पक्षिणोऽभवन् ॥ ११ ॥
तित्तिरिः कलविङ्कश्च क्रमेण च कपिञ्जलः । सा वध्या शतमन्युश्च अन्वगच्छच्च मन्युना ॥ १२ ॥
दण्डहस्ता करालाक्षी ऊर्ध्वकेशा भयङ्करी । कृष्णाङ्गी कृष्णवदना मलपङ्कधरा तदा ॥ १३ ॥
तां दृष्ट्वा भयदग्धाङ्गो हृतराज्योऽथ दैत्यपैः । बलिजम्भादिभिर्दैत्यैः नमुचिप्रमुखैस्तदा ॥ १४ ॥
शोच्ये मनूनामधिपे देवैरिन्द्रोऽनुधावति । विश्वस्ततापसवधादुद्भूतब्रह्महत्यया ॥ १५ ॥
शच्या सुरैश्च गुरुणा मानसान्तर्जलोत्थिते । पद्मकोशे निलिल्ये स युगमेकमतन्द्रितः ॥ १६ ॥
पुनस्तद्राज्यमखिलं नहुषः प्रशशास ह । स प्रार्थयन् शचीं कामादगस्त्येनोद्धृतो नृपः ॥ १७ ॥
नियोजितः स चोद्वाहे शांभवो मुनिसत्तमः । शशाप तं नृपं पापं पदसङ्गेन चुक्रुधे ॥ १८ ॥
सर्पो भूत्वा पपातोर्व्यां सोऽपि निर्विण्णमानसः । इन्द्रोऽपि गुरुणा सार्धं गत्वा हालास्यशङ्करम् ॥ १९ ॥
शफराक्षीयुतं साक्षात् तुष्टावाभ्यर्च्य भक्तितः । संवत्सरशतं साग्रं भस्मरुद्राक्षभूषणः ॥ २० ॥
सुपर्णपद्मिनीतीरे उवास नियताशनः । फलपर्णाम्बुनिरतः शक्रः साम्बं सनातनम् ॥ २१ ॥
तुष्टावाष्टाकृति शम्भुं सुन्दरं भक्तवत्सलम् ।

शक्रः –

बलप्रमथनं हरं बहुदबाहुसंशोभितं बलारिबलिनन्दनैः प्रथितवन्दनं शङ्करम् ।
बलं घनवरप्रदं बकुलपुष्पमालोज्ज्वलं बलं बिलशयाङ्घ्रिकं बडवपूज्यपादाम्बुजम् ॥ २२ ॥

विनीतजनवत्सलं विगतमानहृत्तापदं विमानवरसंचरं प्रथितवेदगीताशयम् ।
विशेषणविवर्जितं विविधबन्धदुःखापहं भवाम्बुधिविशोषकं भवहरं प्रपद्ये शिवम् ॥ २३ ॥

श्रुतिश्रवणभूषणं मदनबाणसंशोषणं त्रिपुण्ड्रपरितोषणं उडुगणेन्द्रसंभूषणम् ।
भजामि अघहारिणं सुकृतराशिसंपूरणं स्वभक्तपरिपोषणं यमपुरादिसंहारिणम् ॥ २४ ॥

उडुराजकलाधरं महेशं वरकाकोदरहारभूषितम् ।
सुरराजसमर्चिताङ्घ्रिपद्मं भजतां नास्ति पुनर्भवो भवेषु ॥ २५ ॥

सूतः –

ततस्तुत्या भगवानुमावृषयुतो देवः पशूनां पतिः
प्रादुर्भूय पुरः स्थितस्त्रिनयनः सोमार्धचूडो हरः ।
इन्द्रं वृत्रवधार्दितं च सुमहत्तद्ब्रह्मवध्यार्दितं
मा भैष्टेति गिराभ्युवाच सुदृढं तद्भक्तिदार्ढ्याद्धरः ॥ २६ ॥

ईश्वरः –

त्वं वृत्रहत्याजनिताघमुक्तो भक्त्या ममाङ्घ्र्यम्बुजपूजनेन ।
युक्तोऽधुना शासय देवराज्यं देवैर्युतो भक्तियुतो मयीशे ॥ २७ ॥

सभार्यो देवेषु प्रथितयशसा दैवतगणं महालिङ्गार्चातो मम गणवरः खादिषु चरः ।
सुरैर्युक्तो गच्छ त्वसुरजयायद्धृतशिरा इतीशेनोद्दिष्टः सुरवरपुरं प्राप स तदा ॥ २८ ॥

मुहुर्नत्वा शम्भुं शचिगुरुसुरैर्धराभयथौ दिवं पापैर्मुक्तः पशुपतिकृपातोऽमरवरः ।
प्रसह्याजौ दैत्यान् व्यजयदथ राज्येन मुदितः

... ... ... ... । २९ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे इन्द्रब्रह्महत्यानिवृत्तिवर्णनं नाम एकोनत्रिंशोऽध्यायः ॥

---

## ॥ त्रिंशोऽध्यायः ॥

स्कन्दः —

विष्णुश्चापि पुरा देवैः पाद्मे कल्पे मुनीश्वर । प्रार्थितो विजयोद्युक्तः समासाद्य महेश्वरम् ॥ १ ॥
दैत्यानां निधनान्वेषी शस्त्रहीनबलो हरिः । दृष्ट्वा क्षेत्राणि बहुशो देवदेवस्य शूलिनः ॥ २ ॥
परिबभ्राम लक्ष्म्या वै गरुडेन सहादरात् । तेजिनीविपिने लिङ्गमद्राक्षीत्स्वयमङ्गलम् ॥ ३ ॥
तत्पुरूरवसा पूर्वं पूजितं दिव्यधामगम् । मुनिभिः पूजितं स्वेष्टं दृष्ट्वा मद्यादिजामपि ॥ ४ ॥
समाहूय तदा विष्णुः संपावयितुमादरात् । सागाचत्र समाहूता हराराधनतर्पिणा ॥ ५ ॥
हरिणा हरिणाक्षी सा राजदुत्फुल्लपङ्कजा । तस्यां सत्नौ हरिर्भक्त्या भस्मरुद्राक्षपुण्ड्रधृक् ॥ ६ ॥
शान्तः स्वमनसा रुद्रमावर्तयदतन्द्रितः । लक्ष्मीः शिवाराधनानि ददौ तस्मै पदेपदे ॥ ७ ॥
पुष्पाणि सुरभीण्येव कमलान्यमलान्यपि । स्वयं जहार पक्षीन्द्रो हरपादाम्बुजार्चने ॥ ८ ॥
अन्येऽपि तद्गणास्तत्र तं सेवन्ते हरिं तदा । वर्षायुतं तपश्चक्रे फलाहारोऽम्बुजेक्षणः ॥ ९ ॥
सहस्रपत्रकमलैः पूजयंस्तेजिनीश्वरम् । दिव्यं धामातनोच्छम्भोः सर्वरत्नमनोहरम् ॥ १० ॥
तस्मिन्नपचिति शम्भोर्विस्तरेणाकरोद्धरिः । स्मृतिमात्रागतैः सर्वसंभारैः शर्वपूजकः । ११ ॥
क्षीरसागरसंभूतैर्घटलक्षैर्महेश्वरम् । दधिखण्डकमण्डैश्च नवोद्भूतघटीधृतैः । १२ ॥
अक्षुद्रफलदैः क्षौद्रैः शर्करागिरिभिर्हरिः । नारिकेलाम्रसुरसैः रंभानिचुमर्वै रसैः ॥ १३ ॥
पनसोरुमहाकोशैर्द्राक्षेक्षुरसकुम्भकैः । गन्धकर्पूरसलिलैर्वासितैश्च घटीभरैः ॥ १४ ॥
वासोभिः स्वर्णकूलैश्च परिवेष्टय महेश्वरम् । समभ्यपिश्चद् द्रव्यैश्च गन्धैरामौलिपीठकम् । १५ ॥
स्वर्णरत्नपरीक्लृप्तभूषणैर्भूष्य शङ्करम् । तेजिनीशं जीवितेशं पार्वत्या वै तदा हरिः । १६ ॥
तगरू अगरुसारैरधूपयत शङ्करम् । दीपैः कर्पूरखण्डोत्थैः घृतोद्बुद्धैः सहस्रशः ॥ १७ ॥
मृदङ्गमुरजापारकाहलीशङ्खमर्दलैः । वेणुवीणारवैरीशं दुन्दुभीनां महारवैः ॥ १८ ॥
तर्जिताम्भोधिनिनदैरप्सरोगणनर्तनैः । छत्रचामरपङ्क्तीभिः पताकादर्शकैरपि । १९ ॥
प्रदक्षिणनमस्कारैर्बिल्वपङ्कजपूजनैः । नानाविधोद्यत्सुरभिपुष्पाणां राशिभिः शिवम् ॥ २० ॥
नैवेद्यैर्भक्ष्यभोज्यानां राशिभिश्चान्नकल्पितैः । एवं वर्षायुतं विष्णुः त्रिकालं शङ्करार्चकः ॥ २१ ॥
तेजिनीविपिनेशानमालस्यपरिवर्जितः । संस्तुवन् परया भक्त्या लक्ष्म्या च गरुडेन च ॥ २२ ॥
विष्वक्सेनादिगणपैरुत्रामामरपुङ्गवैः । तादृशस्तपसो राशिर्न दृष्टो न श्रुतो मया ॥ २३ ॥

सहस्रनामभिः साम्बमम्बुजोत्फुल्ललोचनैः । अम्बुजैः पूजयामास शारक्तैः शिवहर्षदैः ॥ २४ ॥

मुनयोऽपि हरिं वीक्ष्य तपस्यन्तं सुविस्मिताः । निमीलिताक्षं ध्यायन्तमिदमूचुस्तदा वचः ॥ २५ ॥

मुनयः –

कस्ते कामोऽमरश्रेष्ठ सर्वपूज्यो भवान् यतः । किं तवापि महादेवः पूज्योऽस्ति परमेश्वरः ॥ २६॥

इति विप्रवचः श्रुत्वा मुनीनाह हरिस्तदा ॥ २७ ॥

विष्णुः –

एष ब्रह्मैव रुद्रो हरिविधिजनकः सूर्यचन्द्रानलानां
वेदैर्गीतो महेशः प्रतिपदनमसां राशिभिः सर्वरुद्रः ।
यद्वामाङ्गभवो हरिर्विधिरयं स्रष्टा तु दक्षाङ्गजः
तन्नेत्राम्बुजसम्भवो हर इति श्रुत्याभिधत्ते द्विजाः ॥ २८ ॥

तं वै कारणकारणं परशिवं लिङ्गं च तुङ्गं सदा ध्यायामि प्रतिवासरं सुविकचै रक्ताम्बुजैः पूजये ॥

न विज्ञेयो देवः श्रुतिशिखरवाचां सुमनसां यतो जातं विश्वं विविधकरणं स्थावरचरम् ।
न जानन्तीशानं मम सुपिहिता मायिकधिया यतो विश्वं मुक्त्यै प्रभवति किलेशस्य भजनैः । ३०॥

अतो मोहान्धा मां विविधजगतां कारणतया वदन्तीशानं मां विधिपिहितबुद्ध्या गतधियः ।
भ्रमन्तीशं हित्वा जननमरणैर्भ्रान्तिविवशाः द्विजा मोहेनान्धाः पशुपतिपदाम्भोजविमुखाः ॥

स कर्ता सर्वेषां प्रभुरिह जगत्कारणतया विभुर्भास्वानाम्ना वपुषि परमानन्दकुहरः ।
अजो जीर्यो नेता सुरवरनुतिर्यक्षु विहितो महादेवो विश्वं भुवनभवनान्तर्द्युतिकरः ॥ ३२ ॥

यमीशानं चित्ते यमितहृदयाः कारणमुमासनाथं भवाथं प्रथितविपर्ययैर्विरचितधियः ।
न जानन्तीशानं हृदयदहरे संस्थितमहो श्रुतिश्रद्धाहीनाः पशुरिव हि मुग्धा विधिहताः ॥ ३३ ॥

ये शङ्करार्चनरता धृतभस्मपुण्ड्रा रुद्राक्षवक्षस इमे मम पूज्यपादाः ।
रुद्रानुवृत्तिपरमा वरपञ्चमन्त्रपञ्चास्यलिङ्गपरिपूजनसक्तचित्ताः ॥ ३४ ॥

ते मन्मनस्स्वभिरताः हरपादपद्मसङ्गे रतोरुहृदया मम पूज्यशाङ्गाः ।
तत्सङ्गसङ्गतमहत्पवनाणुरेणुसंस्पर्शनाच्छुचितरं मम गात्रमेतत् ॥ ३५ ॥

पात्रं त्रिनेत्रपदपङ्कजपूजनाय मित्रानुरक्तहृदयाब्जविकासि पत्रम् ।
चित्तं विचित्रमिदमेव सुचित्रवाक्यं वेदान्तबोधितधियोऽपि वदन्ति इत्थम् ॥ ३६ ॥

स्कन्दः –

इत्युक्ता हरिणा मुनीश्वरगणाः प्रोचुर्महाशांभवाः
त्वत्प्रेमप्रवणानुरक्तहृदया व्याचक्ष्महे त्वद्धितम् ॥ ३७ ॥

त्वं शर्वपादकमलार्चनपङ्कचित्तो हृत्तापपापरहितो वरकर्मदेवः ।
त्वादृशा न हि सुरेषु महेश्वराङ्घ्रिपद्मार्थभृङ्गमनसा त्वमिहासि भक्तः ॥ ३८ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे शिवप्रभाववर्णनं नाम त्रिंशोऽध्यायः ॥

## ॥ एकत्रिंशोऽध्यायः ॥

स्कन्दः –

वर्षाणां पञ्चकं विष्णुः फलाशी रुद्रपूजकः । पञ्चवर्षाणि नीराशी वाराशिरिव तस्थिवान् ॥ १ ॥
पवनाशी ततो वर्षं मरुत्पारणतत्परः । तच्चित्तदार्ढ्यं विज्ञातुं सहस्रांबुजवृन्दके ॥ २ ॥
एकं वै न्यूनमकरोद्धरो भक्तिं विलोकितुम् । न्यूनेऽम्बुजेंऽबुजाभावान्म्लोऽन्ते प्रसभं हरिः ॥ ३
भीमपादार्चनव्यग्रो निर्भयेनान्तरात्मना । नखाग्रतोऽग्रहृदयेणोत्कृत्य नयनाम्बुजम् ॥ ४ ॥
उत्फुल्लारक्तपद्माभं स्वचक्रतोऽर्चयत् परम् । नान्नाऽन्तिमेन लक्ष्म्या च पश्यन्त्या गरुडेन च
सुविस्मयेन स्वहृदा पश्यद्भिर्मुनिपुङ्गवैः । तस्मिन् लिङ्गे महादेवः प्रादुर्भूतः सहोमया ॥ ६
गङ्गाचन्द्रकलामौलिरेणशूलादिव द्युमान् । फणीफणारत्नकल्पिताकल्पसुन्दरः ॥ ७ ॥
गणवृन्दैः परिवृतः स्कन्दनन्दिगजाननैः स्तुवद्भिर्वेदजालैश्च ब्रह्मेन्द्रादिमरुद्गणैः ॥ ८ ॥
दृष्ट्वा लिङ्गे महादेवं प्रणनाम तदा हरिः । पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तितः ॥ ९
भवं भवनियन्तारं भावभूतेन चेतसा ॥ १० ॥

हरिः –

भव भीम पुरम्मगन्धकारे भजतां सर्वफलप्रदोऽसि शम्भो ।
तव शङ्कर किङ्करोऽस्म्यहं भव भावानुभवप्रभावमूर्ते ॥ ११ ॥

सुरवर्गनिखर्ववेदवादैः विधिगीतैश्चतुराननैरपीड्यम् ।
पुरगर्वादिहरान्धकान्तकारे शरणं मे भव तारणाय शम्भो ॥ १२ ॥

श्रुतिशेखरवाक्यजातपूज्ये भगवंस्त्वच्चरणाम्बुजद्वये ।
नयनामलपद्मसङ्गमे पदपद्मे भजतां न जन्ममृत्यू ॥ १३ ॥

अकुण्ठदयया विभो तव सुनीलकण्ठाधुना अकुण्ठितसुचक्रधृक् प्रसभमाजिमध्यं गतः ।
सुरेन्द्रदितिजोद्भवं रणकठोर जेतास्म्यहं पिठरजगतीभवं भव भवामि वैकुण्ठपः ॥

तव वामभवाङ्गसंभवोऽस्म्यहमीशान तवाद्य दक्षभागः ।
तव फालतलाद्भूव रुद्रो जगतां भवनाशनस्थितौ स्वः ॥ १५ ॥

मम नाभिपयोजसंभवो विधिफालोद्भव एष एव रुद्रः ।
वयमुद्भवने स्थितौ च नाशे विनियुक्ताः पुरहन् त्वयाऽत्र कल्पे ॥ १६ ॥

त्वामीशं श्रुतिभिर्विमृग्यमानं मोहान्धाः शिवमेकमेवमाद्यम् ।
मम मायामयपाशबद्धबुद्धया जगतां मां करणं तथाहुरन्ये ॥ १७ ॥

भव भर्ग महेश देव शम्भो शशिधामद्युतिशोभितोचमाङ्ग ।
करुणारससागराव शम्भो भुवनेशान नतोऽस्मि ते पदाब्जे ॥ १८ ॥

[1]करकलितकरालशूल बालाविधृतार्धाकृतिकालकाल फाला-
नल नीलामलगलगरलोत्थिताधिकीला ।
दलितान्तक लोकदेह लोलालकतूलायित गाङ्गवारि मौला
मलव्यालोरु महाङ्गजातलीला (?) ॥ १९ ॥

शशितरणिहुताशोत्फुल्लफालाब्जनेत्रं दिनमणिकिरणोद्यच्चक्रवामप्रदं मे ।
रणरणितसुगदिवृन्दवन्ध द्विपदितिजासुहरं हरं प्रपद्ये ॥ २० ॥

अलमलमनुवेलं कालकालं सलीलं जगति कलितकालं व्यालमालं सशूलम् ।
बलिबलिबलिनन्दनाचर्यपादं मुनिबालावनतं शिवं भजे त्वाम् ॥ २१ ॥

---

[1] अयं त्रिभिः पादैः कलितार्थः षट्पाद श्लोकः । हे करकलितकरालशूल, बालाविधृतयाऽर्धाकृत्या कालस्य कालभूत, फालेऽनलयुक्त, नीलामलगलरूपं यद् गरलोत्थितं अधिकीलं तद्युक्त, दलितान्तक, विश्वात्मक, लोलालकतूलायितगाङ्गवारे, मौलाः मौलिबन्धभूताः अमला ये व्यालाः तेषां उरुभिः महद्भिः अर्थादतिमहद्भिः भोगवलनैः विनोदितचित्त इत्यर्थः भाति । 'कीला लीला' इति मातृकासु दृश्यमानः पाठः न शास्त्रमनुसरति ।

अङ्गज भङ्ग तुरङ्ग रथाङ्ग भुजङ्ग महाम्बरसङ्ग [1] शशाङ्क विहङ्ग पतङ्ग निषङ्ग कुरङ्गधरोक्षक सङ्ग
परिपाहि विभो सुदशाऽङ्ग दशाङ्गमहोरु महाङ्गस्फुलिङ्ग ॥ २२ ॥

स्कन्दः –

एवं विष्णुस्तुतिविवशतो हर्षवर्षोरुतर्षो वीक्ष्याब्जारुणलोचनं पुरहरस्त्र्यक्षो हरिं तं नतम् ।
उद्यद्भास्करकूटकोटिनिभमत्युद्दार्टिदैत्यासुहृच्चक्रं शक्रविभूतिदं हरिकरे दत्त्वाऽऽह विश्वेश्वरः ॥

ईश्वरः –

भोगितल्प सुरकल्पकपुष्पैः कोटिकल्पकमलार्चनशिल्पम् ।
जातमद्य तव नेत्र सुपद्मानन्यतोषदमिदं त्वयि चाल्पम् ॥ २४ ॥

दत्तमेतदनलारमपारावारदैत्यनिवहान्तकमेतत् ।
दत्तमब्धितनयापतये ते पोतभूतमिदमाजिषु रक्ष ॥ २५ ॥

नाशस्त्रेषु विनीतवेषवपुषा शान्तेषु मत्प्रेमजापारावारमहाघसन्ततिहरं हारेषु नैतन्मम ।
योऽयं ते रणशूर दैत्यनिवहे शौरेऽद्य शूरोऽधुना मारस्यापि गुरुर्यतोऽद्य सुमहापद्माक्ष इत्याह तम्

सूतः –

पुण्या(ण्या)न्ते जितवेजिनीविपिनके आरक्तफुल्लाम्बुजैः
पत्रैः केसरकर्णिकादिसहितैः साहस्रसंख्यायुतैः ।
संपूज्य प्रमथाधिनाथ सुमहालिङ्गस्थितं मापति-
र्लेभे चक्रमनन्तदैत्यशमनं नेत्रं तदोमापतेः ॥ २७ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे विष्णुनेत्रार्पण-चक्रप्राप्तिवर्णनं नाम एकत्रिंशोऽध्यायः ॥

---

## ॥ द्वात्रिंशोऽध्यायः ॥

स्कन्दः –

शृणु त्वं मुनिशार्दूल पूर्वमाराधयन् हरम् । भगीरथोऽपि राजर्षिस्तपसा चामितद्युतिः ॥ १
कोसलेषु नृपश्रेष्ठो राजराजसमद्युतिः । दक्षिणो यजमानश्च सर्वविद्यापरो मुने ॥ २ ॥
स राज्यमखिलं शासत् निहतारिः सुरारिहृत् । कापिलाग्निविनिर्धूतान् सागरान् नृपसत्तमः
उद्दिधीर्षुरमात्येषु निधाय स भुवं नृपः । हिमवच्छिखरं गत्वा तपत्ययुतमोजसा ॥ ४ ॥

---

१ शताङ्ग D

केदारेशं समागम्य हिमवच्छिखराश्रयः । भस्मरुद्राक्षसंपन्नो रुद्राध्यायपरायणः ॥ ५ ॥
पञ्चाक्षरजपासक्तः भक्तो लिङ्गार्चने तदा । ऊर्ध्वबाहुः सदा पश्यन् दिवाकरमतन्द्रितः ॥
वर्षाणामयुतं मौनी फलपर्णाम्बुभोजनः । वाय्वाहारस्ततो राजा शोषयंस्तपसा तनुम् ॥ ७ ॥
भस्मसङ्गैकसुभगो निर्जिताखिलहृत्तमः । केदारेशं समभ्यर्च्य त्रिकालं बिल्वपल्लवैः । ८ ॥
धूपैर्दीपैश्च नैवेद्यैः षोडशैरुपचारकैः । संस्तुवन् सांबमीशानं भृशं स भगीरथः ॥ ९ ॥
तुष्टाव देवं देवेशं चन्द्रार्धकृतशेखरम् ॥ १० ॥

राजा –

इन्दुखण्डकलितामलमौलिं कुण्डलीशमणिकुण्डलगण्डम् ।
चण्डपापहरणं त्रिविमुण्डोल्लासपाणिकमलं शिवमीडे । ११ ॥
भस्मत्रिपुण्ड्रनिटिलाम्बरकृष्णराङ्काजिनं करटिचर्मधरं ...याम् ।
शूलामलोद्यतकरं शशिधामचूडमीडे शिवं गरुडवाङ्कुदुपूजिताङ्घ्रिम् ॥ १२ ॥

तत्स्तुत्या तुष्टहृदयो महादेव उवाच तम् । सांबश्चन्द्रकलामौलिर्वृषारूढः सहोमया ॥ १३ ॥

ईश्वरः –

वृणु कामं नृपश्रेष्ठ तद्ददाम्यविचारितम् । तपसा तव सुप्रीतः केदाराराधनेन च ॥ १४ ॥
तदा शिववचः श्रुत्वा प्राञ्जलिर्नृपसत्तमः । प्रणम्य देवं वरदमुवाचोत्फुल्ललोचनः ॥ १५ ॥

राजा –

त्वत्पदाम्बुरुहे भक्तिं कामये कामनाशन । त्वद्भक्त्या किमसाध्यं मे किञ्चैकं कांक्षते मनः ॥
शापमवेनैव मुनिना कपिलेन महेश्वर । निर्दग्धाः सागराः पूर्वं पतङ्गा इव मन्युना ॥ १७ ॥
उद्दिधीर्षुरहं तान् वै सलिलं पावनं हर । दातुमर्हसि लोकानां पावनायाद्य शङ्कर ॥ १८ ॥
इति राज्ञो वचः श्रुत्वा तमाह परमेश्वरः ।

ईश्वरः –

गङ्गा त्रिपथगा चैषा तव दत्ता नृपोत्तम । वियत्तटाच्च तटिनी पतन्ती भुवि मण्डले ॥
तदाज्ञया महाभाग गच्छ त्वं विगतज्वरः इत्युक्तः शम्भुना राजा गङ्गापतनमैक्षत ॥ २० ॥
हिमवच्छिखरे तत्र पतन्तीं तां शिवाज्ञया । तां धर्तुमीश्वरं तत्र पुनस्तुष्टाव हृष्टधीः ॥ २१ ॥

राजा –

शशिशिखिहरिबाणमीशितारं त्रिपुरयमान्धकसूदनं महेशम् ।
नरहरिगजकृत्तिधारिणं महेशं शरणमुपगतोऽस्मि देवदेवम् ॥ २२ ॥

अरुणतरणिशम्बराङ्कवह्निद्युतिनयनं सुरशेखरं महेशम् ।
विधिहरिविमृशोत्तमाङ्गमूलं शरणमुपगतोऽस्मि देवदेवम् ॥ २३ ॥

पुनस्तमाह देवेशः किमन्यत् कथयाधुना । वरं ददामि ते राजन् भक्त्या प्रीतोऽहमीश्वरः ॥
तदा शार्वं वचः श्रुत्वा राजा प्रांञ्जलिरब्रवीत् ॥ २५ ॥

राजा —

को वाऽन्यः परमेशान धर्तुं गङ्गापयोऽधुना । गङ्गाधरस्त्वमेवाद्य महादेव दयस्व मे ॥ २६ ॥
तथेति च कपर्दे वामविभ्रच्छङ्करस्तदा । गङ्गारयावलेपं तन्निर्वीर्यमकरोत् तदा । २७ ॥
गिरीन्द्रशिखराकारे तज्जटामण्डले मुहुः । भ्रमन्ती सरितां श्रेष्ठा सा वर्षाणां शतं तदा ॥
अनिर्गतां तदा गङ्गां दृष्ट्वा शम्भुं नृपस्तदा । तुष्टाव वाग्भिर्हृष्टाभिः पुनः शङ्करमेव हि ॥

राजा —

भजे भवानीरमणं शिवं भवं भयापहं भीमनभोर्ध्वकेशम् ।
भयानकं भर्गमुमासहायं भस्माङ्गरागं भुजगाङ्गहारम् ॥ ३० ॥

वामदेवमगजामनोहरं व्योमकेशमसमेषु दाहकम् ।
सोमधामजकलोत्तममौलिं हेमदेहमुमया भजाम्यहम् ॥ ३१ ॥

यममददमनं जितककामं यमिहृत्पद्मगतं जनाधिवासम् ।
फणिगणकलिताङ्घ्रिपाणिभूपं सितभस्मावलितत्रिपुण्ड्रजुष्टम् । ३२ ॥

तत्स्तुत्या तुष्टहृदयो विससर्ज तदा हरः । गङ्गां हिमवतो मौलौ पतन्तीं रथतस्तदा ॥ ३३ ॥

गङ्गा —

अनङ्गरिपुमीश्वरं विधिसुमौलिपाणिं हरं भुजङ्गवरहारकं मणिजगङ्गनृत्यादरम् ।
महागजत्वगम्बरममरवैरिगर्वापहं कुरङ्गशिशुधारिणं शरणमाशु वीक्षे शिवम् ॥ ३४

गङ्गाधरान्धकरिपो प्रमथाधिनाथ श्रीविश्वनाथ करुणाकर शूलपाणे ।
मां मोचयाद्य कुटिलां(?)निटिलाननाक्ष पाहि प्रसीद परमेश्वर पञ्चवक्त्र ॥ ३५

तामाह विनयानम्रां गङ्गां देवस्त्रिशूलधृक् ।

ईश्वरः —

गच्छाधुना नृपवरं भगीरथरथानुगा । कपिलाग्निविनिर्धूतान् सागरान् प्लावयाशु वै ॥ ३६ ॥
पूर्वमेवाविमुक्ते च चक्रतीर्थं कृतं मया । आनन्दवनमासाद्य याहि त्वं सरितां पतिम् ॥
इत्युक्ता सा महेशेन प्राञ्जलिः प्रणनाम सा । महादेवं महानन्दं सा गङ्गाऽऽह सदाशिवम् ॥

गङ्गा –

वक्षामि त्वय्यहं शम्भो मामनुज्ञातुमर्हसि । तदा तामाह देवेशो राज्ञा गच्छ सरिद्वरे ॥
सागराणां गतिं दत्वा स्वजलाप्लावनेन हि । अविमुक्तं समासाद्य विश्वेश्वरसमीपगा ॥
आचन्द्रार्कं वहन्ती त्वं लोकं प्लवय मा शुचः । एकांशेन वसात्रैव मन्मूर्ध्नि कृतकेतना ॥ ४१ ॥
तेन गङ्गाधरो नाम्ना भविष्यामि सरिद्वरे । स्नातानां त्वयि सारूप्यं मम दास्याम्यसंशयम् ॥

इत्युक्ता शशिशेखरेण जगतां संपावने सा सरित्
शम्भोर्मूर्ध्नि सदैव वासमकरोत् राजा तदा तत्र वै ।
तद्भस्मारुणमण्डलं सगरजं संप्लावयन्ती ययौ
पुण्यानन्दवनं तदा नृपतिना देवाज्ञया हर्षिता । ४३ ॥

राजापि त्रिदिवं गतान् नृपसुतान् दृष्ट्वाऽथ हृष्टोऽभवत्
स्तुत्वा तां मणिकर्णिकामगमुतां दृष्ट्वान्नपूर्णामपि ।
विश्वेशं शरणार्थिनां च सुखदं नत्वा च दत्वा धनं
शैवेभ्यः स ययौ मुदा पुरवरं अन्ते ययौ शङ्करम् ॥ ४४ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे भगीरथतपोगङ्गानयन-सागरमुक्ति-राजमुक्तिवर्णनं नाम द्वात्रिंशोऽध्यायः ॥

---

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

---

स्कन्दः –

वृषभोऽपि पुरा धर्मो गोप्रेक्षीशं महेश्वरम् । चतुष्पादः स्थितस्तत्र सम्यगाराध्य शङ्करम् ॥ १ ॥
ततप नियतं तत्र गोप्रेक्षीश्वरसन्निधौ । वर्षाणामयुतं धर्मः शिवलिङ्गावलोककः ॥ २ ॥
निराहारः स्थितो धर्मः सन्निधौ परमेशितुः । अहर्निशमविश्रान्तः पश्यन् लिङ्गं पिनाकिनः ॥
भस्मरुद्राक्षकवचः ककुदालंबिचामरः । विषाणमकुटीकोटिसास्नाघण्टावलीयुतः ॥ ४ ॥
त्रिपुण्ड्रेणोज्ज्वलद्वक्त्रो रुद्राध्यायजपादरः । शिवविन्यस्तनयनो जगद्विन्यस्तमानसः ॥ ५ ॥
पादैस्तिष्ठन् सहस्रं वै प्रजपन् रुद्रमेव हि । घनगम्भीरघोषेण वर्षाणि नियमात् तदा ॥ ६ ॥
पादत्रयैरथोत्तिष्ठन् साक्षाद्धर्ममयो द्विज । सहस्रमेकं वर्षाणां जपन् रुद्रं महेश्वरम् ॥ ७ ॥

पश्यन्नुग्रं तथैवाग्रे ग्रीष्मसन्तापिताङ्गकः । पदद्वयेन वर्षाणां सहस्रं वृषभः स्थितः ॥ ८ ॥
जपन् रुद्रं महादेवं संवीक्ष्य तपसा स्थितः । एकपादेन वृषभः स तदाऽधिष्ठितस्तदा ॥ ९ ॥
रुद्रविन्यस्तनयनो रुद्राध्यायजपादरः । सहस्रस्यान्तिमे वर्षे तदा प्रादुर्बभौ हरः ॥ १० ॥
तल्लिङ्गादम्बिकायुक्तो गणवृन्दनिषेवितः । प्रणमन्तं पादपद्मे स्तुवन्तं वीक्ष्य भक्तितः ॥ ११ ॥
पस्पर्श तन्मुखाम्भोजं भगवत्करहस्ततः । हरसंस्पर्शनादेव चन्द्रोदय इवाम्बुधिः ॥ १२ ॥
तरङ्गमालाविततो वर्धतेऽनर्गलं यथा । प्रालेयाचलसङ्काशः तपसा कर्शितोऽपि सन् ॥ १३ ॥
अवर्धत तदा धर्मः तुष्टुवे साम्बमीश्वरम् ॥ १४ ॥

धर्मः —

पाहीशान दयानिधान जगतां नाथाधुना मां सदा
त्र्यक्षाक्षत्रयदृशा क्षपापतिकलामौले विलोकयादरात् ।
मामानन्दय नन्दय त्रिभुवनं पापौघसङ्घोज्झितं
त्वत्पादाम्बुरुहेक्षणं [1]क्षणमतः कुर्वे यथा तत्कुरु ॥ १५ ॥

हे शम्भो शशिखण्डचूड भगवन् स्वामिन् मृडानीपते
त्वामीड्यं वरवेदवाक्यनिवहैः स्तोतुं समर्थोऽत्र कः ।
स्तोष्ये त्वां पशुभावतः पशुपते भक्त्यैव भक्तादरो
बद्धं मोचय संस्तुतेस्त्वयथैर्जाने न किञ्चित् प्रभो ॥ १६ ॥

भवहर भुवनाकृते महेश त्रिदशवरोत्तम देवसार्वभौम ।
तव भरवहने समर्थमीश त्रिभुवनधामभरं यथा वहेयम् ॥ १७ ॥

वितर बलवरं बलप्रमाथ प्रमथसनाथ महेश दीननाथ ।
अत्र शिव सदयं उमासनाथ बलमीश प्रविधेहि मे तनूषु ॥ १८ ॥

सूतः —

तत्स्तुत्या तुष्टहृदयो महेशान उवाच तम् । संवीक्ष्य वृषभं चाग्रे युगपादैर्व्यवस्थितम् ॥ १९ ॥

ईश्वरः —

वरं वरय भद्रं ते धर्म रुद्रजपादर । तवादेयं न मे किञ्चित् मम भक्त्या तपस्यया ॥ २० ॥
इत्युक्तो देवदेवेन प्राह धर्मो महेश्वरम् ।

---

१ क्षणमतोपेक्षे तथा नो कुरु C  क्षणमतो नेक्षे यथा D

वृषभः —
तव भक्तिं स्थिरां शम्भो याचेऽहं सर्वकामदाम् । नान्यद्वृणे महादेव तवोद्वाहे समर्थताम् ॥
देहि देव विरूपाक्ष त्रिलोकीजठर प्रभो । त्वत्सन्निधावेव रतिर्ममास्तु हर शङ्कर ॥ २२ ॥

स्कन्दः —

इत्युक्तं वृषवचनं निशम्य देवो देवानां प्रमुख ... मथाजुहाव (?) ॥ २३ ॥

धेनूनां गणपुङ्गवोत्तमगणे नन्दां सुभद्रां तथा
कामाख्यां सुरभिं च पुण्यनिवहां देवीं सुनन्दामपि ।
तस्योद्वाहयदीश्वरः सुरवरैस्तूर्यौघसङ्घैस्तदा
धर्मेन्द्राय वृषाय पावनमुमाकान्तो वरं तं ददौ ॥ २४ ॥

ईश्वरः —

यो मे मन्दप्रदोषे वृषवृषणकरस्तुङ्गलिङ्गे हि शृङ्गे
संपश्येत् स तु मन्दपापनिचयः पुण्याद्रिसङ्घैर्युतः ।
किं तस्यात्रभृथश्रमैर्वरमहादानैश्च दीनावनैः
धर्मस्याश्रयतः सदैव स हि मे हृत्पङ्कजे संस्थितः ॥ २५ ॥

स्कन्दः —
इत्थं धर्मवरे वरं सुबहुशो दत्वा तिरोऽभूच्च वै तस्मिन् लिङ्गवरे प्रतर्दनमुनेः संपूजिते कामदे ।
धर्मोपि स्थित एव सन्निधिवरे उद्वाह्य धेनूगणं दृष्ट्वा लिङ्गवरेक्षणेन परमानन्दोल्लसद्भक्तितः ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे धर्मरूपवृषानुग्रहवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

---

स्कन्दः —

वरुणोऽपि पुरा कण्वशप्तो जलरुजार्दितः । औदरेण महादेवं भस्मरुद्राक्षधृक् पुरा ॥
श्रीशैलेशं समाराध्य स्तुत्वा मुक्तश्च रोगतः ॥ १ ॥
अशेषसुरतामसप्रभवनाशनाशीविषा विशेषगरभूषणं उरगहारकण्ठद्युतिम् ।
उपाकरणकारणं वृषवराधिसंरोहणं विषाणवृषपूजितं वपुषि शोभिकान्तार्धकम् ॥ २ ॥
एकोऽद्वितीयः शिव एव कर्ता देवस्तुरीयः परमश्चतुर्थः ।
सनातनोऽव्यक्तगतिः परात्परो ध्येयः परित्यज्य समस्तमन्यत् ॥ ३ ॥

यस्मान्महेशाद्धरिधातृरुद्रदेवेन्द्रदेवा मुनयः प्रसूताः ।
स व्योमकेशोऽखिललोकपूर्तिः शम्भुः सदानन्दघनो महेशः ॥ ४ ॥

अग्निश्च भृगुशापेन सर्वभक्षो बभूव ह । तत्पापपरिहाराय सोमं भुवननायकम् ॥ ५ ॥
करुणातरणिं गत्वा शरणं मोचितस्तवैः ।

अग्निः –

अम्बामुखाम्भोजविकासिभानुं इभेन्द्रतारासुतहर्षनेत्रम् ।
अम्भोजजातोत्तममौलिपाणिम्भोजनेत्रार्चितपादपद्मम् ॥ ६ ॥

श्रीशूलपाणिचरणार्चनजातपुण्यैर्वाणीरतित्वमरविन्दवतासु गान्ते ।
पदे पदे मे न भवेन्मनः पदे क्षिश्वात्मभोगेषु न सज्यते सदा ॥ ७ ॥

अर्वसप्तकमहार्णवगर्वापारहर्षहारणामलनेत्रम् ।
शम्बराम्बरवरे[1] सुलाञ्छनोद्भासि नेत्रसुललामसुपासे ॥ ८ ॥

व्यालमालगलनीलगलं तं कालकालमचलार्धककायम् ।
फालमूलनिहितानलकूलज्वालया कृतपुरादिककामम् ॥ ९ ॥

वायुर्मतङ्गशापेन निर्वीर्यो ह्यभवत् पुरा । भस्मभसकमन्त्रेण समुद्धूल्याङ्गमादरात् ॥ १० ॥
स सप्तसामभिः सार्धं त्र्यंबके गौतमीतटे । स्तुवन्नुवास देवं तं तदा मुक्तोऽभवत्तथा ॥

वायुः –

परावरशरावरीकृतमहाब्धिगङ्गारयोज्ज्वलच्छशिजटाकुटीविधृतभस्मपुण्ड्राङ्कित ।
महोक्षवरवाहन विधृतरत्नरुद्राक्षज श्रुतीनयनहारधृक् वरकपालमालाधर ॥ १२ ॥

[2]अङ्गजभङ्ग तुरङ्गरथाङ्ग भुजङ्गमहाङ्गाम्बरचर्म ।
शवाङ्ग विहङ्ग पतङ्गनिषङ्ग कुरङ्ग वहाङ्ग पुरस्फुलिङ्ग ॥ १३ ॥

आगमचन्द्रार्ध विहगाधिप हारधरसागर
उरगोत्तम गिरिधूमिविधि ग्रहनायक संभृति संहृतगर्व ।
पुरत्रितय परिपाहि दयारसया सुदृशा
भवभवतारकयाशरणाय (?) ॥ १४ ॥

यमोऽपि माण्डुशापेन शूद्रो भूत्वापि योगवित् । गोकर्णेशं समाराध्य भस्मरुद्राक्षभूषणः ॥ १५

---

१ तनोः C

२ श्लोकोऽयं पुनरुक्तः अ० ३१ श्लो २२

तुष्टाव कष्टनिर्मुक्त्यै शिपिविष्टं समर्चयन् ॥ १६ ॥

यमः – भव भर्ग भगाक्षिहराव्यय मधुमदसूदन पूजितपाद ।
दमितयम स्मरगजहर शङ्कर हर गङ्गाधर परिपाहि । १७ ॥

वर गिरिवरशय पुरहर भवहर प्रथितभवार्णव बडवाग्ने ।
निटिलविलोचन कुटिलजटाधर तटिनीवरकलितेन्दुललाम ॥ १८ ॥

उग्रमहोग्रसटापटलीयुत भीम मृगेन्द्राजिनवसन ।
करटिकटीतटपटभवचर्मजवसनान्तकहर परिपाहि ॥ १९ ॥

भव भवदक्षसुराद्य भवाङ्गज विधिहरिनमितारुण पाद ।
शमितान्तक हर स्मरगरशोषण इन्दुकलाधर परिपाहि ॥ २० ॥

कुबेरोऽपि पुरा देवीं देवाङ्कस्थां विलोक्य च । दुष्कामो हृच्छयेनासीत् देव्या नेत्राणुकोटितः ॥
भव पापैकपिङ्गाक्ष इति शप्तोऽम्बया तदा । प्रणम्य देवं यक्षेशः त्र्यक्षं शिक्षितमन्मथम् ॥ २२ ॥
केदारे सम्यगाराध्य सदारतनयः पुरा । देव्या दुर्वारशापार्तः स्तुवन् मुक्तो महेश्वरम् ॥ २३ ॥

कुबेरः–भुवनजनावन दनुतनयाननवरपरिखेलन अनलविलोचन अव सदयम् ।
वरवरुणालयपीतमहामुनितोषण पन्नग परिपाहि ॥ २४ ॥

अरुणानुजपतिपूजितपाद प्रकटसरोरुहभवविनुत ।
तरणिद्युतिशशिनयनामल हर उक्षककुद्रत परिपाहि ॥ २५ ॥

उरगान्तकवहशिक्षणचणचरणाम्बुज शङ्कर उक्षवह ।
अध्वरशिक्षितदक्षसुपक्ष अधोक्षज भक्षितविष परिपाहि ॥ २६ ॥

गन्धवहाङ्गपतङ्गभुजङ्ग धृताम्बुविसङ्ग तमोमयाम्बर संहनन ।
परिपाहि विभो करुणारसया सरसीरुहसन्निभया सुदृशा ॥ २७ ॥

भार्यां संज्ञां परित्यज्य यदा छायामनिन्दिताम् । स्वभार्यात्यागपापेन त्वष्ट्रा शप्तो रविः पुरा ॥
निर्वीर्यो हि तदा तूष्णीं चचार प्राकृतो यथा । काञ्चीमेकाम्रनाथं स समाराध्यैकवत्सरम् ॥
भस्मत्रिपुण्ड्ररुद्राक्षधरो रुद्रजपादरः । स्नात्वा नैकाम्रनिलयं चण्डवीर्योऽभवद्रविः ॥ ३० ॥

रविः – खण्डसोमफणिकुण्डलगण्डं पाणिमण्डललसद्विधिमुण्डम् ।
आखण्डलस्तंभितबाहुदण्डं तं खण्डपर्शुं प्रणमाम्यखण्डम् ॥ ३१ ॥

गङ्गातुङ्गतरङ्गरञ्जितजटाभारं कृपासागरं
हाराधीश्वरशङ्करं शरहरिं मारारिणं भासुरम् ।
वीरं भूसुरपूजिताङ्घ्रिकमलं विस्तारिताराधिपो-
त्तुङ्गद्रम्यकलाधरं पुरहरं तारं भजे स्वान्तरम् (रे) ।। ३२ ॥

चन्द्रोपि दक्षशापेन यक्ष्माणं सोऽप्यविन्दत । रोहिण्यां रागसंयुक्त अत्रिं नत्वा तदुक्तितः ॥
श्रीमद्भ्रमसमानाथं संपूज्योडुपतिस्तदा । भस्माभ्यक्तो रुद्रजापी यक्ष्ममुक्तोऽभवत् तदा ॥
देवेन मानितस्तत्र पूर्णपक्षेऽ[1]भवन् कलाः ।

चन्द्रः –

अण्डजाण्डजगतीशराय ते चण्डशीतकिरणौ तव चक्रम् ।
भूमिमण्डलमिदं रथ ईश वेदमण्डलमिदं हरयस्ते । ३५ ॥

ज्याकुण्डलीशो भगवान् सुमेरुकोदण्डधृग्वरसुहारकपुण्डरीक ।
त्वं पुण्डरीकवरचर्मवसान शम्भो हृत्पुण्डरीकवसते कलितत्रिपुण्ड्र ॥ ३६ ॥

ईशानः कालहस्तीशं समाराध्येन्दुशेखरम् । रुद्राणामधिपो जातः स्तुवन् सांबं महेश्वरम् ॥ ३७

ईशानः –

दिशां पतिं पशुपतिं पथीनां पतिमीश्वरं
अन्नानां च पतिं परात्परतरं त्वां व्योमकेशं हरम् ।
पुष्टानां च पतिं रमापतिलसन्नेत्रारविन्दार्चितं
त्वां बभ्लुश हरिशरं हरिकेशमीशमाशामुखं शरणमाशु हरं प्रपद्ये ॥ ३८ ॥

स्कन्दः –

यस्त्वन्तकान्तकमहेश्वरपादपद्मसद्ध्यायितेन मनसा निशितेन युक्तः ।
संश्रान्तसंसृतिचिरभ्रमितोऽपि मुक्तो युक्त्या भवाब्धिमपि सन्तरते सदा हि ॥ ३९ ॥

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे वरुणादिदेवानुग्रहवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥

---

१ अभजदिति सुवचम् ।

## ॥ पञ्चत्रिंशोऽध्यायः ॥

स्कन्दः –

विश्वावसुश्च गन्धर्वो गानाचार्योऽभवत् पुरा। गानबन्धुः सुबन्धुश्च तथा नारदपर्वतौ ॥ १ ॥
हाहाहूहू महादेवं चिरं चिरगिरीश्वरम्। भस्मचिन्होऽर्चयामास गानस्तुत्याभितोषयन्।
रुद्रवीणापाणयस्ते शिवनाम्नां सुगायनैः ॥ २ ॥

गन्धर्वाः –

दक्षशिक्षविषमाक्षमनुक्षं(?) उक्षवाहमरविन्ददलाक्षम्।
मोक्षदायकसुमक्षरक्षितं कालकूटगरलात् किल देवान् (?) ॥ ३ ॥

वसवो ब्रह्मणा शप्तास्तेऽपि गोपर्वतेश्वरम्। समाराध्यैव मुक्ताः स्युः स्तुवन्तः पशुपं शिवम् ॥

वसवः –

शम्भो पाहि दयाम्बुधे गतभयं संसारपारङ्गतः
त्वत्पादाम्बुरुहार्चनेन भगवन् विश्वेश विश्वाधिक।
राजत्पिङ्गजटात्तगङ्ग सुमहाधामेन्दुचूडामणे
गङ्गागर्वहराव्ययेश्वर महादेवेश रक्षाधुना ॥ ५ ॥

तण्डुरिन्दुशकलामलमौलेरिन्दुखण्डसदृशोरुकपालम्।
भस्मपुण्ड्रनिटिलो भरिताशो वीक्ष्य नम्रशिरसा गणवर्यः ॥ ६ ॥

[1]शर्वपादकलनेन सर्वदा पापपर्वतवरैर्न बिभेति।
इन्दुचूड चरणांबुजसङ्गोऽप्यन्तरङ्गकरणे गणवर्यः ॥ ७ ॥

तण्डुः –

गरधर गिरिवरशय पुरहर मुरहरशरकर कुरु करुणाम्।
सुमशरदेहविनाशक ईश्वर नरहरिकृत्तिवसान महेश ॥ ८ ॥

अश्विनौ च पुरा देवैर्निरस्तौ भिषजाविति। श्रीकण्ठेशं समाराध्याभवतां सोमभागिनौ ॥ ९ ॥

अश्विनौ –

कुन्दवृन्दनिभदेह इन्दुधृक् मन्दराद्रिवसतेश्वर पाहि।
इन्दुशक्तिवरहार इन्दिरानाथपूज्यपदपद्म सुन्दर ॥ १० ॥

---

१ अयं श्लोकः D कोशे नोपलभ्यते

इन्द्रेण निकृताः सर्वे मरुतो हि महौजसः । इन्द्रेणाप्तबलमंस्ते वै सोमभागं शिवार्चया ॥ ११ ॥
वृणज्योतिं समाराध्य स्तुत्येशस्य कृपावशात् । १२ ॥

मरुतः –

यः कालकालमनिलाशनशोभिगात्रं रुद्रं त्रिनेत्रमगराजसुतार्धगात्रम् ।
मित्रीकृताब्जहृदयोरुविकासमित्रं मन्त्री च यान्त्रितभवो भवतीह भावः ॥ १३ ॥

आदित्याश्चापि तपसा समाराध्य महेश्वरम् । सह्यजातीरलिङ्गेषु तुङ्गेषु नियतं सदा । १४ ॥
घृतेशे पुष्पनाथे च प्रणतेशे तु वैद्यके । श्रीखण्डे नगजक्षेत्रे वेदिकाख्ये प्रयाणके ॥ १५ ॥
जम्बुलिङ्गे मातृशैले रत्नशैल हरावृते । स्तुवन्तो दीप्तरत्नवोऽभवंस्ते शङ्करार्चनात् ॥ १६ ॥

आदित्याः –

यश्चन्द्रचूडचरणाम्बुजसेवनेन कालं नयेत स हि भवेत् सुगुणालवालः ।
व्यालेन्द्रमालगरलाशनरूपमाप्य कैलासमौलिषु सदा विहरत्यजस्रम् । १७ ॥

रुद्राश्चैकादश पुरा समाराध्य महेश्वरम् । रुद्रस्य रूपमापन्नाः शङ्करस्य प्रसादतः ॥ १८ ॥
दुर्गेशे क्षीरिणीक्षेत्रे माधव्यां सुन्दरे वने । तेजिनीविपिने कोटौ मङ्गले दक्षिणावृते ॥ १९ ॥
वैद्यनाथे विपिवने कालनाशेऽम्बिकेश्वरे । स्तुवन्तः परमां काष्ठां ते सर्वे रुद्रमूर्तयः ॥ २० ॥

रुद्राः –

यस्मात् परं न परमस्ति सुरादिसङ्घमोघाघपङ्कजभयं न भवेद्धि तस्य ।
यस्यार्चनेन कलिमुक्तिपदाभिपङ्कः शाङ्करस्य लिङ्गविहितामलपूजकस्य ॥ २१ ॥

रुद्राक्षभस्मकलितामलकालकण्ठ कुण्ठीकृताघनिचयः स तु नीलकण्ठः ।
वैकुण्ठपूजितपदाम्बुजशीलनेन पाठीनसध्वजकृतां न रुजं वहेत । २२ ॥

पितरश्च तथान्येषु तत्र सह्योद्भवातटे । लिङ्गेषु पूजयामासुः स्तुवन्तः साम्बमीश्वरम् ॥ २३ ॥

पितरः –

मुकुटतटनिबद्ध (?) सोमधामोरुलिङ्गस्फुटपरिचयपूजाध्यानतो मुक्तिकान्ताम् ।
कलयति सुकृतानां राशिरीशप्रसादादनुदिनगलिताघः शाम्भवः शम्भुभक्तः ॥ २४ ॥

ग्रहाद्या ऋषयश्चेमे मुनयोऽन्ये पिनाकिनम् । समभ्यर्च्य स्तुवन्तस्ते लेभिरे वाञ्छितानि हि ॥
कुम्भघोणे तथा भानुः चन्द्रो मध्यार्जुनाह्वये । मङ्गलश्चाप मायूरे बुधः श्वेताटवीतटे ॥ २६ ॥
छायावने गुरुर्देवं श्रीवाञ्छ्यां भृगुरीश्वरम् । मन्दोपि कमलापुर्यां केतुर्देववने शिवम् ॥ २७ ॥
राहुर्वातपुरीनाथं भृगो वै सेतुबन्धने । तथान्ये मुनयः पूर्वं भूभभव्याः सनातनाः ॥ २८ ॥

तत्रैव पूजयामासुश्चतुर्दशसु सत्तमाः । स्तुवन्तः साम्बमीशानं लेभिरे वाञ्छितानि हि ॥ २९ ॥

ब्रह्मादयः –

जय जय महाभैरव महाभूतभूतिमूल कुण्डलिकुण्डलालङ्कृत अतिघनविलसित-विद्युदतिचलदुरुतरकरवाल निखिलनिगमोपगीयमान सूकरकर निकरपरिचयचतुरविरचितचतुर-भृङ्गारकरकमल कलितकपाल सरसिजासनविस्तारितसमस्तव्यस्तसमस्तजगद्विस्तारसंहारसन्नद्धनिर्गण-निरवधिकपरिमाणनीहारपरिवारमरीचिवीच्यपारसागरपतीजललुलितजटाजूटाभिराम हर दुरितहर अपराङ्गनाभोग सागपतङ्गमङ्गयवितवोत्तमाङ्ग भ्रूमध्यनयनमदनदमन मत्तमधुकरझङ्कारसङ्काश-निजभृङ्ग संसरणकिङ्किणीक्वणितललित पदाहतिलीनमहीमण्डलाधाराण्डजप्रस्तूयमानताण्डवाडम्बर-युक्तारोत्कर्ष ध्वस्तदैत्यदानवसङ्घातनिरन्तर तिरित (?) शान्तान्तःकरण अनवरतधाराधरध्वान-गम्भीरघर्घरगलगवयफूत्कारमत्रिमगहरगुहाराजीविराजमानधराधराधीशकन्याकान्तिसंक्रान्तनिज-कलेवरैकदेश अखिलजगत्यधीश महेश नमस्ते नमस्ते ॥ ३० ॥

आदौ कर्मवशादुदञ्चदखिलत्रैलोक्यमूलाङ्कुरं
पश्चोत्पल्लवितोरुजङ्गविभवश्रेणीसमुन्मेखलम् ।
अन्ते लोचनमुद्रणाविघटनाभङ्गि प्रगल्भं महो
फालेलोचनमाविरस्तु पुरतः संसारमंमोहनम् ॥ ३१ ॥

आधारं चतुराननस्य करकामन्नद्रपाथःसुतेराधेयं गिरिकन्यकाकुचतटाभोगस्य भङ्ग्याकृतेः ।
आशापालकमूलपालमखिलब्रह्माण्डभाण्डस्थितेराशापाशविमोचनाय प्रणमामान्तर्मनस्तन्महः ॥

सूतः –

एवं लिङ्गेषु तुङ्गेष्वमरवरमहादानरो देवसङ्घा रक्षोयक्षाधिनाथा मनुमुनय इमे सह्यजापुण्यतीरे ।
संपूज्य प्रमथाधिनाथमनलालङ्कारफालाक्षकं कांक्षामापुरतीव तुष्टहृदयाः शम्भोः कटाक्षाङ्कुरैः ॥

यल्लिङ्गार्चनमात्रतोऽखिलमहासाम्राज्यमाप्यात्र वै
अन्ते मुक्तिमवाप्नुवन्ति नियतं भक्त्यैव शम्भोः पदे ।
देवे देवापि(?)मोदामदमुदितधियः शान्तसंसाररागा
रोगापायैर्विमुक्ता धृतभसितसितप्रेमरुद्राक्षसङ्गाः ॥ ३४ ॥

एवं तेऽभिहितो हरांशमहिमा हारेषु संहारकृत्
पापानां श्रुतिवीक्षणोत्तममहाहारार्चकेषु ध्रुवम् ।
श्रुत्वाख्यानमुमापतिप्रियमहाभक्ताभिपुण्यार्थदं
चाख्यानं श्रुतिशेखरोत्तमपदैः श्रुत्वैव तुष्टो भव ॥ ३५ ॥

पुण्यैः परं शिवरहस्यमधु प्रकृष्टमीशास्यपङ्कजवरात् परिनिःसुतं यत् ।
पेपीय षड्वदनषट्चरणात् सुगन्धि सन्यस्यति प्रकथयन् गणविप्रसङ्घे ॥ ३६ ॥

श्रुत्वेदं पुरुषार्थसारनिगमोपात्तं प्रकृष्टार्थदं
भक्त्याख्यानमनोहरं वरचतुर्थांशं रहस्यं शिवम् ।
संप्राप्नोति गणेन्द्रमुख्यपदवीं किं कामनाभिः परं
नाम्ना शङ्करनामकोऽयमतुलो भक्त्याशृणोद्यो नरः ।

इति श्रीशिवरहस्ये शिवाख्ये चतुर्थांशे गन्धर्वसुतण्डुप्रभृतिभिः शिवाराधनवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥

यो रुद्राक्षविभूतिभूषितवपुर्विप्रः सदा हस्तकं
चासक्तं शिवपूजने हि तनुते ध्याने मनः शस्तकम् ।
दादाख्यः सुगुणन् शिवं च भटगोस्वामी जटामस्तकं
तस्यैवामृतदायकं शिवरहस्याख्यं त्विदं पुस्तकम् ॥

|| श्रीः ||

# || श्रीशिवरहस्यम् ||

## भर्गाख्यः पञ्चमांशः ।

—— :o: ——

### || प्रथमोऽध्यायः ||

शुण्डादण्डालिमालाविलसदुरुमहाफुल्लपद्मैकनालं
शूलाङ्कासक्तिलोलं पदनतविबुधग्रामसंग्रामलीलम् ।
वन्दे वेतण्डगण्डस्फुरदरुणरजोऽङ्कासिसिन्दूरफालं
फालाक्षप्रथमप्रसूतिमतसीपुष्पैकमालं सदा ॥ १ ॥

ततः कुलपतिर्वृद्धः शौनको नाम भूसुरः । पप्रच्छ विनयोपेतो लोमहर्षणिमादरात् ॥ २ ॥

शौनकः –

महोदारहारौघविश्रान्तिपारहरापारमाहात्म्यधारासु धीर ।
समाकर्णयास्मानकस्मादहो त्वां प्रपन्ना विपन्ना भवाब्धौ चरन्तः ॥ ३ ॥

इति तद्वाक्यमाकर्ण्य भस्मरुद्राक्षभूषणः । सूतः प्राञ्जलिराहेदं ध्यायन्नीशानमव्ययम् ॥ ४ ॥

सूतः –

शाङ्काङ्कसङ्गोऽमितपापतापसन्तापतप्तहृदयान् सुखयेन्न चित्रम् ।
यूयं त्रिनेत्रपदपङ्कजभक्तिगात्राः सुत्राममान्यमपि लोकमपि त्यजन्तः ॥ ५ ॥

त्रिपुण्ड्ररुद्राक्षपवित्रगात्राः पञ्चास्यपञ्चाक्षरलोलचित्ताः ।
श्रीरुद्रपारायणधूतपापाः पात्रं भवन्तः कृपया महेशितुः ॥ ६ ॥

वक्ष्येऽधुना संसृतिबन्धनाशिनीं चित्रां विचित्रार्थपदां कथासुधाम् ।
महेश्वरस्य प्रतिमां विमुक्तये शृणुध्वमत्युत्कटभक्तिमानसाः ॥ ७ ॥

देव्यै देवेन कथितां महापापप्रणाशिनीम् । पुरा कैलासशिखरे सुखासीनं महेश्वरम् ॥
प्रणम्य प्राञ्जलिः प्राह गिरिजा द्विजसत्तमाः । ८ ॥

देवी –

भगवन् भूतभव्येश परात्परतर प्रभो । ज्योतिर्लिङ्गानि ते देव कियन्ति वद मे शिव ॥ ९ ॥
महिमा च विशेषेण श्रोतुमिच्छामि मे वद । तदपर्णावचः श्रुत्वा स्वर्णवर्णो महेश्वरः । १० ॥
त्रियंबकस्तदा प्राह तुष्टस्तां जगदम्बिकाम् ॥ ११ ॥

महेश्वरः –

शृणु दूर्वादलश्यामे श्यामले परमेश्वरि । [1]ज्योतिषां मम लिङ्गानां महिमानं च शङ्करि । १२
शृणुष्वानुक्रमं तेषां लिङ्गानां मुक्तिदायकम् । केदारं प्रथमं लिङ्गमोङ्कारं तु द्वितीयकम् । १३
वैद्यनाथं तृतीयं स्यात् घुसृणेशं चतुर्थकम् । नागनाथं पञ्चमं स्यान्महाकालश्च षष्ठकः ॥ १४
भीमेशः सप्तमः प्रोक्तस्त्र्यम्बकं चाष्टमं विदुः । विश्वेशं नवमं लिङ्गं वाराणस्यां महेश्वरि । १५
श्रीशैलो दशमः प्रोक्तः गोकर्णेशो दशाधिकः । सेतुमूले तु रामेशो द्वादशानामनुक्रमः ॥ १६
ज्योतिर्लिङ्गानि मे देवि यः पश्येत् संस्मरेत वा । ज्ञानं विनापि मुक्तिश्च भवतीत्येव मे मन
वक्ष्यामि महिमानं ते सेतिहासं महेश्वरि । कथां कलुषचित्तानां निश्शेषकलुषापहाम् ॥ १८
उज्जयिन्यां महाकालक्षेत्रमस्त्येकमुत्तमम् । तत्र लिङ्गं ममास्त्येकमशेषसुरपूजितम् ॥ १९ ॥
तल्लिङ्गदर्शनादेव पापवृन्दं विनश्यति । तल्लिङ्गदर्शनं प्रातः सर्वपुण्यफलप्रदम् ॥ २० ॥
शक्रादिभिर्लोकपालैः सेवितं परया मुदा । ब्रह्मविष्ण्वादिभिर्देवैर्मुनीन्द्रैरखिलैरपि ॥ २१ ॥
गणेश्वरैस्तथा रुद्रैः साध्यैर्वसुमरुद्गणैः । सिद्धविद्याधरैर्नागैः यक्षकिंपुरुषैरपि ॥ २२ ॥
नदीनदसमुद्रैश्च पर्वतेन्द्रैश्च सेवितम् । अप्सरोभिः किन्नरीभी रुद्रकन्याभिरादरात् ॥ २३ ॥
वैखानसैर्वालखिल्यैर्द्विजैः पर्णाम्बुभोजनैः । कामधेनुगणैश्चैव स्रवत्पञ्चामृतैः सदा ॥ २४ ॥
ऐरावतकुलोत्पन्नैर्नागैर्भद्रमृगैस्तथा । उच्चैरुच्चश्रवःप्रख्यैरश्वैरश्वपतिप्रियैः ॥ २५ ॥
तत्र मन्दारतरवो मरन्दसुमवृष्टयः । तत्र बिल्वोरुतरवो मूललिङ्गोपशोभिताः ॥ २६ ॥
स्वच्छदैः छादयन्त्येते सर्वांशुं लिङ्गमस्तके । स्वपाण्डुपत्रपतनैः पूजयन्ति महेश्वरम् ॥ २७
नानावादित्रघोषैश्च बधिरीकृतदिक्तटाः । कुर्वन्ति गणपा नित्यं श्रीमहेशस्य सन्निधौ ॥ २८
नृत्यन्त्यप्सरसो नित्यं रागभावलयानुगाः । नारदप्रमुखा नित्यं विश्वावसुहहाहुहूः ॥ २९ ॥

---

१ ज्योतिषामित्याद्यर्धद्वयं C कोशे नास्ति

गायन्ति रुद्रवीणाभिः शिवनामानि सादरम् । नन्दिप्रोत्सारितानेकस्वर्णवेत्रकरा गणाः ॥ ३० ॥
दूरीकुर्वन्ति जनतां महेशद्वारि सर्वदा । प्रणमन्ति सुरेशाद्या महाकालं महेश्वरम् ॥ ३१ ॥
महालिङ्गाकृतिं शम्भुं बिल्वालङ्कृतमस्तकम् । महाभुजङ्गाङ्गधरं गङ्गाधरमनुत्तमम् ॥ ३२ ॥
त्रिपुण्ड्रचन्द्ररेखोत्थकलाकलितशेखरम् । कर्पूरतिलकानेकदीपमालाविराजितम् ॥ ३३ ॥
दिव्यगोघृतसंपूर्णदीपपात्रशतावृतम् । कृष्णागरूत्थसाम्राणिधूपैर्घुमुघुमान्तरम् ॥ ३४ ॥
प्रातःसङ्गवमध्याह्नसायं निशि महेश्वरम् । प्रणमन्ति प्रस्तुवन्ति सुरासुरमुनीश्वराः ॥ ३५ ॥
केचिद्रुद्रैः स्तुवन्तीशं केचित् सामभिरीश्वरम् । ऋग्भिश्चाथर्वणैश्चैव स्तुतिभिर्मुनिसत्तमाः ॥ ३६ ॥
प्रदक्षिणपराश्चान्ये लुठन्तः शङ्करालये । प्रणमन्ति च साष्टाङ्गं मुनयो भक्तितत्पराः ॥ ३७ ॥
उच्चैर्हर सुरेशेति महादेवेति सादरम् । नृत्यन्ति साश्रुनयनाः करताडनपूर्वकम् ॥ ३८ ॥
कोटिशः सन्ति मुनयः शिवलिङ्गैकपूजकाः । भस्मरुद्राक्षवीताङ्गाः शिवैकशरणाः सदा ॥ ३९ ॥
क्षिप्रा नाम नदी तत्र क्षिप्रं पातकनाशिनी । तस्यास्तीरे बिल्वमूले शैवलिङ्गार्चनप्रियाः ॥ ४० ॥
वसन्ति तत्र नियताः शिवनैवेद्यभोजनाः । तत्र राजा महानासीदुज्जयिन्यां महाबलः ॥ ४१ ॥
तिग्मांशुवंशसंभूतो नाम्ना चित्ररथो युवा । तस्येयं पृथिवी सर्वा वित्तपूर्णाऽभवत् सदा ॥ ४२ ॥
तस्य दारा महोदारा मारस्यापि मनोहराः । शताधिकं च दशकं सुनासं पङ्कजाननम् ॥ ४३ ॥
सुरथाद्यं पुत्रशतं तस्ते सौरथाः स्मृताः । क्षत्रवीररथाः सर्वे शतयुत्तमधन्विनः ॥ ४४ ॥
तस्य कोशस्य नेयत्ता तस्यासन् रत्नपर्वताः । तिरस्करोति धनदं धनाधिपसखार्चनात् ॥ ४५ ॥
तस्यासन् वाजिमातङ्गगोगणानां च कोटयः । सौभाग्यैर्विविधैरीशं सभाग्यः पूजयन् नृपः ॥
महाकालार्चनपरः कालभीतिविवर्जितः । तस्यासन् मन्त्रिणः सर्वे शाम्भवा एव केवलम् ॥
अशांभवो न कोऽप्यस्ति तस्मिन् राजनि शासति । भस्मरुद्राक्षसंपन्नः शिवलिङ्गार्चने रतः ॥
अशाम्भवं नरं वापि द्विजं वापि नृपोत्तमः । स कोपितः शिरस्तस्य छेत्स्यत्येवातिवेगतः ॥ ४९ ॥
सदा नृपभयात् सर्वे शांभवास्तन्मते स्थिताः । तत्पुत्रास्तत्कलत्राणि गजवाजिनरा अपि ॥ ५० ॥
भस्मत्रिपुण्ड्ररुद्राक्षमालालङ्कृतविग्रहाः । महाकाल महादेव चन्द्रचूडेति वादिनः ॥ ५१ ॥
तत्कलत्राणि सर्वाणि वीणावादनतत्पराः । महाकालालये नित्यं ता नृत्यन्ति लयानुगाः ॥
तत्कण्ठगीतमाधुर्यं शारिकाश्च पिकादयः । विलज्जिता वनगताः कोकिलाः स्वकुलैः सह ॥
देवाङ्गनापि मुह्यन्ति तद्गानश्रवणोत्सुकाः । मृगाश्च पशवः सर्वे सुमराश्चमरा अपि ॥ ५४ ॥

न वातप्रसरस्तत्र महाकालालये तदा । स राजा तत्कलत्राणि तत्पुत्राश्च मुदान्विताः ॥
दृष्ट्वा महेशलिङ्गं तन्महाकालस्य सादरम् । भस्मत्रिपुण्ड्ररुद्राक्षमालाभिः समलंकृतः ॥ ५६
हारोदारमहागानं नाट्यमत्युत्तमोत्तमम् । पश्यन्नास्ते स भूपालः कामुकः कामिनीमिव ॥
तद्गानामृतधाराभिः सुधाधिक्यारिभिर्नृपः । शिवनामानुसन्धानं कुर्वन्नास्ते प्रहृष्टधीः ॥ ५८
शाम्भवैर्मन्त्रिभिः सार्धं वृद्धैर्मुनिगणैरपि । तेनोरुबिल्वतरवः स्थापिताः शङ्कराङ्गणे ॥ ५९ ॥
तन्मूले बाणलिङ्गानि स्थापयामास वै नृपः । लिङ्गानि पूजयेत्याशु बिल्वपत्रैः प्रतिक्षणम् ॥
शांभवैः सह संलापं करोत्येव स भूपतिः । शैवानेव कथां नित्यं शृणोत्येव सदा नृपः ॥ ६
शांभवा भोजितास्तेन शिवनैवेद्यराशिभिः । तद्गृहे शिवनामानि सदा गायन्ति गायनाः ॥
शुकाश्च शारिकास्तत्र पाहि शम्भो शिवेति च । वदन्ति प्रीतिवाक्यानि शैवान्येवाथ पत्रिणः
नृत्यन्ति च मयूरास्ते शिवलिङ्गाग्रतस्तदा । स्वपक्षधूननव्याजैः शैवान् खिन्नान् पतत्रिणः ॥
वीजयन्ति सदा हृष्टाश्चञ्चुभिः कण्डुनाशकाः । बिल्ववृक्षेषु सततं निवसन्ति सदाण्डजाः ॥ ६
गोरसापारपूरैश्च महाकालमसेचयत् । फलसारैश्च विविधैः पूजयामास शङ्करम् ॥ ६६ ॥
गन्धकर्पूरपाटीरमृगनाभिद्रवैः शुभैः । लेपयामास देवेशं सुगन्धैर्यक्षकर्दमैः ॥ ६७ ॥
अनर्घ्यमृदुसौवर्णदुकूलैरतसीभवैः । वेष्टयामास विमलैर्नानावर्णैर्नृपोत्तमः ॥ ६८ ॥
श्वेतकृष्णागरूत्थैश्च धूपैर्देवमधूपयत् । कपिलागोघृतापारदीपैः कर्पूरखण्डनैः ॥ ६९ ॥
दीपयामास विश्वेशं आसायादुदयं नृपः । तद्दीपप्रभया लोका दीपितास्ते चतुर्दश ॥ ७० ॥
अत्युज्ज्वलमहारत्नभूषणैर्नवरत्नजैः । निष्टप्तहेमखचितैर्भूषयामास शङ्करम् ॥ ७१ ॥
नवरत्नानेककृतं गोलकं लिङ्गमस्तके । दापयामास नृपतिर्भुजङ्गफणसंवृतम् ॥ ७२ ॥
स लक्षबिल्वपत्रैश्च पूजयामास शङ्करम् । सितरक्तैस्तथा पद्मैः फुल्लसौगन्धिकैः शिवम् ॥ ७३
पुन्नागनागवकुलैश्चम्पकैः करवीरकैः । स लक्षैः पूजयामास महाकालमहर्निशम् ॥ ७४ ॥
नीलोत्पलसहस्राढ्यां मालां लिङ्गे प्रकल्पयत् । नैवेद्यगिरयस्तेन कल्पिताः कोटिशोऽम्बिके ॥
अपूपगिरयस्तेन सूपपायसकर्दमाः । दधिक्षीरप्रवाहैश्च सोपदंशनगैस्तदा ॥ ७६ ॥
खदिरासारतक्कोलसुजातीफलपत्रकैः । लवङ्गैलाशुण्ठियुक्तैः कर्पूरक्रमुकैस्तथा ॥ ७७ ॥
मुक्ताचूर्णसमायुक्तनागवल्लीदलार्पणैः । रत्नच्छत्रैरपारैश्च चामरैर्व्यजनैरपि ॥ ७८ ॥
व्यजनैर्वीजयांचक्रे छत्रैराच्छादयच्छिवम् । हंसकल्पैश्चामरौघैर्दुधाव जगदीश्वरम् ॥ ७९ ॥

दुन्दुभिप्रमुखानेकमृदङ्गानकगोमुखैः । शंखकाहलनिर्घोषैर्महाकालमघोषयत् ॥ ८० ॥
नानाप्सरोगणास्तेन नाट्यार्थं शिवमन्दिरे । कल्पितास्तेन भूपेन निष्कण्ठ्यो वराङ्गनाः ॥
एवं प्रतिदिनं राजा महाकालार्चने रतः । तस्य नान्यत् कृत्यमस्ति शिवचित्तो महीपतिः ॥
दारोदारकुमारैश्च वसन्त्येव शिवालये । भोजयामास नैवेद्यैः शाम्भवानेव कोटिशः ॥ ८३ ॥
तद्राज्ये सर्वथा सर्वे शिवनैवेद्यभोजनाः । पवित्रगात्रास्तेनैव त्रिनेत्रप्रियकृत्तमाः ॥ ८४ ॥
तद्राज्यमभिवृद्धं स्यात् तन्मन्त्रिप्रवरैर्धृतम् । चातुर्वर्ण्यं शांभवांश्च प्रजापतिरिव प्रजाः ॥
शशास निहताराातिः पुरारातिप्रसादतः । संसारचिन्ताविरतो निरतः शिवपूजने । ८६ ॥
नैवेद्यैः शिवतर्पितैरघहरैः संपूज्य शैवान् नृपः सार्धं पुत्रकलत्रसहितोऽवात्सीत् सदा कामदे ।
क्षेत्रेऽस्मिन् सततं महेशकथया श्रीकालकालार्चनं कुर्वन्निर्मलचित्तमेतदधुना संसारवार्तालसम् ॥

वसन्त्येव भावाः शिवे सक्तभावाः भवे त्यक्तभावा नृपे हर्षभावाः ।
गतानङ्गभावाः सदा भक्तिभावाः महाधैर्यभावा वसन्त्येव भावाः ॥ ८८ ॥

शिवं कालिमलोत्थितप्रबलजापपापानलैः विदग्धतनुमानसाः स्मरहरं न चार्चन्ति ये ।
मदन्यसुरपापरान् हरिविधीन्द्रपूर्वापरान् सदा मुहुरनन्यधीः स्मरति भाग्यहीनो नरः ॥ ८९ ॥

शिवनैवेद्यमपारपुण्यलभ्यं नहि लभ्यं सततं शिवद्रुहा ।
रजताद्रिनिवासभक्तिभुक्तौ मतिरुज्जायति (?) शङ्करप्रसादात् ॥ ९० ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे शिवगौरीसंवादे उज्जयिनीमहाकालमहिमानुवर्णनं नाम प्रथमोऽध्यायः ॥

---

## ॥ द्वितीयोऽध्यायः ॥

---

[1]सूतः —

तत्रस्ते प्रमथेशानरुद्राम्बुजविचिन्तकाः । सानन्दलोचनाः सर्वे मुनयोऽध्यात्मवेदिनः ॥ १ ॥
आजग्मुर्नृपतिं द्रष्टुं भस्मपाण्डरमूर्तयः । रुद्राक्षमालाभरणाः सदा पञ्चाक्षरप्रियाः ॥ २ ॥
पञ्चास्यध्याननिरताः पञ्चब्रह्मविशारदाः । पञ्चेषुबाणधाराग्रतिरस्कृतिमहोपलाः ॥ ३ ॥
सनातनश्च सनकस्तथैव च सनन्दनः । सनत्सुजातश्च तथा जातहर्षा नृपेक्षणे ॥ ४ ॥

---

१ शिव इत्येव युक्तः पाठः ।

स तान् प्रत्युज्जगामाथ सार्घ्यहस्तः कृताञ्जलिः । प्रणनाम महीपालः साष्टाङ्गं स्पृष्टभूतलः ॥
आसनेषु सुनिष्टप्तहेमकल्पेषु भूसुरान् । गामर्घ्यमुदकं तेषां स्पर्शयामास शास्त्रतः ॥ ६ ॥
ओमुत्सृष्टेति तैरुक्तो निषसाद वरासने । शैवसन्दर्शनानन्दसञ्जातपुलको नृपः ॥ ७ ॥
प्रमोदवर्षधाराभिः परिप्लुतकलेवरः । मोदाम्बुनिधिमग्नश्च तदा चित्ररथो नृपः ॥ ८ ॥
साञ्जलिः प्राह वाक्यानि सुधासाराणि सादरम् ।

चित्ररथः —

अहो धन्योऽस्मि विप्रेन्द्र भवत्सन्दर्शनादहम् । अद्य मत्पूर्वराजेन्द्रा याता वोऽनुग्रहाद् दिवम् ॥
भवतां दर्शनं मेऽद्य कामधेनुः किलार्थदा । भावाङ्गसङ्गजनितो वातोऽपि सुखदायकः ॥ १० ॥
किं किं न सूते भाग्यानि विविधान्यमितान्यपि । महाकालमहेशस्य कृपा पूर्णा मयि स्थिरा ॥
भवतां भवभक्तानां दर्शनं जातमद्य मे । इति चित्ररथोदारां वाणीं वाणीपतिप्रभाः ॥ १२ ॥
श्रुत्वा ते मुनयः सर्वे परं हर्षमवाप्नुवन् । ऊचुस्ते मुनयः सर्वे नृपं शाम्भवपुङ्गवम् ॥ १३ ॥
कम्पयित्वात्मनः शीर्षं जटाभारविदीपितम् ॥ १४ ॥

मुनयः —

त्वमेव धन्योऽसि महीतलेऽस्मिन् मान्योऽसि पूज्योऽसि विशिष्टशिष्टः ।
तव प्रभावं प्रवदन्ति देवाः विधीन्द्रपूर्वा मुनयश्च सिद्धाः ॥ १५ ॥

भूमण्डलाखण्डल एव नूनं त्वया महीमण्डनमण्डमण्डिता ।
त्वं वै सुनाथः प्रथितः पृथिव्यां यतो महाकालपदानुरक्तः ॥ १६ ॥

माता पिता तेऽद्य पितामहोऽपि पुत्रास्तथा भ्रातरस्तेऽद्य दाराः ।
सर्वे महेशानुचरा नृपेन्द्र त्वं शाङ्गलिङ्गार्चनसक्तचित्तः ॥ १७ ॥

श्रुत्वा मुनीनां वचनं प्रणतः स नृपाग्रणीः । तैः सर्वैर्मुनिभिः सार्धं महाकालालयं ययौ ॥ १८ ॥
स्नात्वा क्षिप्रानदीतोये भस्मरुद्राक्षभूषणः । निःसाणदुन्दुभिरवैरमात्यैर्मुनिभिर्वृतः ॥ १९ ॥
वृतो दारसहस्रैश्च पुत्रैरमरसुन्दरैः । सदश्वैर्मत्तमातङ्गैः स्यन्दनैः शिबिकागणैः ॥ २० ॥
भटैरनेकसाहस्रैः बन्दिभिः सूतमागधैः । स्तुतो ययौ महाकालं द्रष्टुमिन्द्रनिभो नृपः । २१ ॥
अवतीर्य रथेभ्यस्ते नृपेण सहिताः शिवम् । द्रष्टुमभ्यागताः सर्वे सकलत्राः कुमारकाः ॥ २२ ॥
पद्भ्यामनुययुः सर्वे तद्भृत्यास्तस्य सैनिकाः । सोपहारा महोदारा उदाराः सुमनोहराः ॥ २३
मुख्यामात्यास्तदाप्ताश्च (समेताः?) गिरिशं भवम् । प्रदक्षिणप्रणामाद्यैः स्तुत्वा रुद्रैर्महेश्वरम् ॥

समभ्यर्च्य च मध्याह्ने भुक्त्वा नैवेद्यमीशितुः। दारैः पुत्रैः परिवृताः शांभवैः स्वभटैः सह ॥
उपोपविविशुः सर्वे [[1]शिवाग्रे स्वर्णमण्टपे। कल्लोलतीर्थं च परं पीत्वा स्वर्णाब्जिनीपयः ॥
भवलिङ्गार्चनपरा मुनयस्ते नृपादयः। एवं सभासदः सर्वे] सभापतिमुपासते ॥ २७ ॥
शिवार्पितैर्गन्धवरैस्ताम्बूलैश्च मनोरमैः। स्रग्भिश्च सुमनोमोदपरिभ्रमितषट्पदैः ॥ २८ ॥
तानभ्यर्च्य यथान्यायं स्वयञ्चान्यांस्तथा नृपः। स्वदारतनयाद्यांश्च तथामात्यान् भृतं जनम् ॥
विचित्राभिः कथाभिश्च शैवीभिर्नृपसत्तमः। चकार कालनयनं महाकालार्चनप्रियः ॥ ३० ॥
ततस्ते मुनयः सर्वे दृष्ट्वा तल्लिङ्गमैश्वरम्। प्रणम्य विनयोपेताः तुष्टुवुः शङ्करं तदा ॥ ३१ ॥

मुनयः —

कृतानङ्गभङ्गं महाङ्गत्वगङ्गं सदा बहुकल्पान्तरङ्गोत्तमाङ्गम्।
शिवं भक्तहृत्पद्मसद्मैकपङ्गं महाकाललिङ्गं भजामो भजामः ॥ ३२ ॥

महेशाङ्कलिङ्गं विपत्क्षोभभङ्गं भुजङ्गाङ्गसङ्गं कुरङ्गाङ्कसङ्गम्।
तरङ्गालिमालीनिषङ्गं शुभाङ्गं महाकाललिङ्गं भजामो भजामः ॥ ३३ ॥

अनङ्गं पतन्तं पतङ्गैकभङ्ग्या निजाक्षिस्फुलिङ्गे दहन्तं क्षयान्ते।
कुरङ्गं वहन्तं पतङ्गेन्दुनेत्रं महाकाललिङ्गं भजामो भजामः ॥ ३४ ॥

जटाजूटपिङ्गं दयास्राव्यपाङ्गं कृताङ्गानुषङ्गं कथाचित् कथाङ्गया।
प्रसङ्गान्तरङ्गं महालिङ्गसङ्गं महाकाललिङ्गं भजामो भजामः ॥ ३५ ॥

महोक्षाङ्कसङ्गं महोक्षाभसङ्गं स्वकाक्षिस्फुलिङ्गं सुगन्धोत्तमाङ्गम्।
महः शोणिताङ्गं महानङ्गभङ्गं महाकाललिङ्गं भजामो भजामः ॥ ३६ ॥

सूतः —

एवं संस्तुत्य ते सर्वे मुनयो हृष्टमानसाः। राजानं विनयोपेतं वाचमूचुस्तदा द्विजाः ॥ ३७ ॥

मुनयः —

धन्योऽसि कृतकृत्योऽसि सर्वमान्योऽसि भूपते। पश्य देवस्य माहात्म्यं महाकालस्य सादरम् ॥
मेरुस्तृणति राजेन्द्र तृणं याति गिरीन्द्रताम्। भवद्वृत्तान्तमखिलं शृणुष्व गदतां हि नः। ३९॥
भवान् पूर्वभवे राजन् ब्राह्मणः कणयाचकः। मातापितृविहीनश्च दारेण च समन्वितः ॥ ४० ॥
उंछवृत्तिपरो नित्यं सततं क्षुच्छ्रमान्वितः। पटाञ्चले गृहीत्वैकां कणानां मुष्टिमादरात् ॥ ४१ ॥

---

१ कोष्टान्तर्गतः पाठः D कोशे नोपलभ्यते

पत्न्या सार्धं भ्रमन् राजन् ग्रामेषु नगरेषु च । स द्विजो हि दिवाशालं दिनान्ते नगराद्बहिः ।
कदाचित् सायमश्नानो द्वितीये दिवसे क्वचित् । तृतीये वाऽथ षष्ठे वा भुङ्क्ते दारिद्र्यपीडितः ।
अत्यन्तं सूर्यकिरणैस्तप्तगात्रः सदा द्विजः । भेरुण्डपक्षिसदृशो हिण्डते प्रतिवासरम् ॥ ४४ ॥
प्रतिग्रामं प्रतिद्वारं लज्जासर्वस्ववर्जितः । क्वचिन्मूर्छान्वितः शेते क्वचिद्याति स्खलत्पदः । ४५
भार्यास्कन्धकरो याति रुदन् प्रतिगृहं तदा । दत्वा दत्वा च विरताः पुनस्तान याचयत्ययम् ।
असूयाविष्टमनसो [1]दर्शनाच्च भूसुराः । क्षत्रियाश्च विशश्चैव शूद्रा अपि च सङ्कराः ॥ ४७ ॥
भ्रुकुटीकुटिलं वक्त्रं कुर्वन्त्येव मुहुर्मुहुः । गच्छ गच्छेति तं केचिन्मूढेति च वदन्ति ते । ४८
दूरादालोक्य तं विप्रं कवाटैरर्गलान्वितैः । गृहद्वाराणि कुर्वन्ति साधवोऽपि भिया तदा ॥ ४९
कणमुष्टिं गृहीत्वैव निर्यात्युत्क्रोशयन् जनम् । ग्रामस्था नागराश्चैव जना निर्भर्त्सयन्ति तम् ॥
निःसार्योऽयं सुदुष्टात्मा कदा मरणमेष्यति । द्विजं दण्डकशाघातैस्ताडयन्त्यतिवेगतः ॥ ५१ ॥
पांसुकर्दमपिण्डैश्च कुमाराः पीडयन्ति तम् । जीर्णं पटं तस्य कट्यां निष्कासयन्त्यतिवेगतः ॥
एवं स पीडितो विप्रश्चौर्येणापि न जीवति । विपण्यापणवीथीषु धनिकानां गृहेषु च ॥
कणान् पर्णांश्चोरयति दृष्ट्वा सन्ताडयन्ति तम् । एवं वसंस्तदा विप्रो भार्यया जीर्णया वृतः ॥
कालं निनाय बहुशो विनयाचारवर्जितः । भार्यामाह तदा विप्रो दुःखादश्रु प्रवर्तयन् । ५५ ।
उवाच भार्यां दीनात्मा मन्दात्मा कृपणः कृशः ।

ब्राह्मणः —

हा कष्टं प्रेतनाथोऽपि मयि नैष्ठुर्यमागतः । कदा मरणमेष्यामि प्राणाः कष्टतरा मम ॥ ५६ ॥
सत्वरं सत्वरं लोकं दृष्ट्वाऽहं दुःखवर्जितः । याच्ञादौ महती लज्जा जायते मेऽधुना प्रिये ॥
दारिद्र्यं नाम मरणं सर्वस्यापि न संशयः । भक्षिष्ये गरलं तीव्रं जीवितान्तकरं मम ॥ ५८ ॥
तरङ्गमालाकलितं प्रवेक्ष्ये निधिमम्भसाम । ज्वलज्ज्वलनज्वालाभिः दाहयिष्ये कलेवरम् ॥
इत्युक्तवन्तं तं विप्रं भार्या प्राहाश्रुलोचना ॥ ६० ॥

ब्राह्मणी —

ब्राह्मणानां कुले जातो ब्राह्मणस्त्वं न संशयः । किमर्थं रुद्यते तीव्रं दुःखापनयनं कुरु ॥ ६१ ॥
अनिष्टं नाम मरणं लोकेषु प्रथितं सदा । यया कया च वृत्त्या च जीवावो नात्र संशयः ॥ ६२

---

१ दर्शनात् तस्य इति C कोशे साधुः पाठः, स द्विज इत्युपक्रमात् ।

यस्मिन् काले यदा देशे यद्यद्भावि भविष्यति । यस्मिन् काले यदा राद्धं अन्नमित्याह हि श्रुतिः ॥
शिवक्षेत्रमिदं तावद्वहु शैवविराजितम् । अत्र शङ्का न कर्तव्या कृतान्तादपि भूसुर ॥ ६४ ॥
वृथायासकरः कालः शरीरस्यापि सर्वथा । अतः परं शिवद्वारि वसावो वह्निभोजनौ ॥ ६५ ॥
एवं संवदतोस्तत्र दम्पत्योः कश्चिदागतः । शैववर्यः प्रहृष्टात्मा शिपिविष्टेष्टमानसः ॥ ६६ ॥
भस्मरुद्राक्षसंपन्नो महाकालं निरीक्षितुम् । वमाणे वचनं चारु तौ तदा हर्षयन्निव ॥ ६७ ॥

शैवः —

किमर्थं दुःखितौ ब्रूतं तीव्रशोकेन कर्शितौ । यदि क्षमं मयि ब्रूतामुपायं चिन्तयाम्यहम् ॥ ६८ ॥
प्राप्तमन्नं मया भुक्तं सदान्नगतिपूजनात् । अस्मिन्नेव शिवक्षेत्रे दद्यादन्नं सुसंस्कृतम् ॥ ६९ ॥
यस्मै कस्मैचिदत्यन्तं तुष्टस्तेन महेश्वरः । किं पुनः शैववर्येषु दत्तं भवति चाक्षयम् ॥ ७० ॥
भस्मफालस्त्वमत्यन्तं त्रिपुण्ड्रावलिभासुरः । रुद्राक्षमालाभरणो द्विजोऽप्यत्यन्ततर्पितः ॥ ७१ ॥
सदारश्च विशेषेण त्रिनेत्रप्रियकृत्तमः । इति शैववचः श्रुत्वा सभार्यो हर्षितो द्विजः ॥ ७२ ॥
यथोदकं मरौ प्राप्य घासमिष्टं यथैव गौः । तृषितस्तद्वदेवायं प्राञ्जलिः प्रणनाम तम् ॥ ७३ ॥
उवाचोत्फुल्लवदनो हर्षगद्गदया गिरा ।

ब्राह्मणः —

किं करोमि द्विजेन्द्राद्य याचकोऽहं सदातुरः । बहुभक्षः सदारश्च मासमात्रमुपोषणः ॥ ७४ ॥
मद्याचनाभिया लोके नैव दास्यन्ति केचन । धनधान्योदपूर्णेषु गृहेषु गृहिणः सदा ॥ ७५ ॥
तिरस्कुर्वन्ति मां नित्यं कुप्यन्ति च हसन्ति च । दारिद्र्यपीडितस्याद्य जीवनं मे न विद्यते ॥
म्रियेऽहमधुना विप्र दुर्भाग्यार्णवमध्यगः । सदारः पश्यतस्तेऽद्य महाकालशिवाग्रतः ॥ ७७ ॥
शिवाग्रे मरणं शैव धन्यानां किल जायते । मत्पापगणनां नूनं शेषो वक्तुं हि न क्षमः ॥
तस्माच्छिवक्षेत्रगतस्त्यक्ष्यामीदं कलेवरम् । नैव पातकसङ्गो मे शैवेत्थं सत्यमुच्यते ॥ ७९ ॥
इति तद्वचनं श्रुत्वा स शैवो दुःखितोऽवदत् ॥ ८० ॥

शैवः —

त्वयान्नपतये पूर्वं न दत्तं चान्नमुत्तमम् । तेन त्वं दुःखभाङ्नूनं दरिद्रश्च विशेषतः ॥ ८१ ॥
जनैस्तिरस्कृतश्चासि सदा धिक्शब्दवादिभिः । धनधान्यसमायुक्तजनतायां त्वयाऽधुना ॥
नैव संप्राप्यते चान्नं पश्य त्वं कालपर्ययम् । उपायमेकं वक्ष्यामि सावधानमनाः शृणु ॥ ८३ ॥
वृद्धस्त्वं जरया व्याप्तः चलितोरुशिरोऽङ्गकः । मुहुर्मुहुर्जायते ते हृदये चैव वेपथुः ॥ ८४ ॥

तूष्णीं स्थितिस्त्वे युक्ता हि हितमात्यन्तिकं शृणु । अस्मिन्नेव शिवक्षेत्रे पतन् मुनिवरो भव ॥
शङ्करं भज हे विप्र भस्मरुद्राक्षभूषणः । सर्वपापविनाशाय तव दास्याम्यहं मनुम् ॥ ८६ ॥
पञ्चाक्षरं महद्विप्र तेन लिङ्गार्चको भव । हरेण कथितं गौर्यै हितं दारिद्र्यनाशनम् ॥ ८७ ॥
तत्तुभ्यं शृणु वक्ष्यामि हितमात्यन्तिकं द्विज ॥ ८८ ॥

अखण्डशुभ्रोत्तमधौततण्डुलान् हैयङ्गवीनेन विलोड्य पक्त्वा ।
दत्त्वा तदन्नं स भवेदथान्नपतिः प्रजाः पालयिताऽद्य गौरि ॥ ८९ ॥

शिवे शिरसि मे शिवे ददति योऽन्नमत्यादरात् स एव निधिसंपदां भवति भाग्यपूर्णो जनः ।
स एव सुकृती परं मुहुरनन्यचेता मयि स्थिरो मम सपर्यया भवति सुन्दरे धार्मिके ॥ ९० ॥

सुकृष्टभुवि वर्षतः प्रसृतमल्लिवल्लीलस-
द्वसन्तनवकुड्मलीविरलपुञ्जवन्मञ्जुलम् ।
द्रोणाच्छान्ननिभान्नराशिमिहमे संछाद्य राकाशर-
द्याश्विन्यां तदपारसिक्थगणनापुण्यैरनल्पैर्भवेत् ॥ ९१ ॥

सर्वाश्वमेधशतकोत्थफलाद्यगर्वनिर्वापणायालमुमेऽद्य पुण्यम् ।
क्षिपत् तदन्नाधिपपादपूजनं ततो भवेद्गौरि विशिष्टमेतत् ॥ ९२ ॥

अहो पामरा वानरा एव नित्यं शिवाराधनासाधनाद्विप्रहीणाः ।
न चाचारधाराविहारैकशूरा खरापारयोनिद्रवासारतृष्णाः ॥ ९३ ॥

महाबिल्वमूले महाशैवमेकं समभ्यर्च्य संभोजयित्वा घृतान्नैः ।
स चान्नाधिपत्यं लभेतैव कामं महान्नाधिपस्यैव शीघ्रं प्रसादात् ॥ ९४ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे सनकादिचित्ररथसंवादे चित्ररथपूर्वजन्मवृत्तान्तकथनं नाम
द्वितीयोऽध्यायः ॥

---

## ॥ तृतीयोऽध्यायः ॥

शौनकः –

किमाह शैवस्तं विप्रं महादेवपरायणः । स विप्रः कथमत्युग्रः सदा याचकशेखरः ॥ १ ॥

शैववर्यवचोवाटीघोटीपुच्छानुगैकधीः । सा तस्य महिला बाला कुटिलस्येव जिह्मधीः ॥ २ ॥

तया सह ततः कामं किं चकार वदाशु नः । शौनकोक्तं वचः श्रुत्वा सूतः सानन्दलोचनः ॥

हर्षवर्धिष्णुचित्तः सन् महाशीर्षं विधूनयन् । जगादागाधवाक्यानि शङ्करोक्तानि तान्यपि । ४ ॥

पावनानि महादेव्यै पृच्छन्त्यै तत्कथार्णवम् ॥

सूतः –

शृणु शौनक भूयोऽपि भक्तकल्पतरोर्यशः । विश्वाधिकस्य देवस्य महादेवस्य सादरम् । ५ ॥

यज्जगादारविन्दाक्ष्यै कौमुदीपतिशेखरः । कथासुधां प्रवक्ष्यामि निबोधत मुनीश्वराः ॥ ६ ॥

देवी –

भगवन् भूतभव्येश भवोद्भव जगत्प्रभो । कथार्णववचोभङ्गीतरङ्गै रञ्जयाशु मे ॥ ७ ॥

तदा देव्या वचः श्रुत्वा जगादात्मा महेश्वरः । समाश्लिष्य महादेवीं बभाण गणनायकः ॥ ८ ॥

ईश्वरः –

तदा शैवोदितां वाणीं श्रुत्वा सन्तुष्टमानसः । स तु शैवपदद्वन्द्वं प्रणनाम मुदा द्विजः ॥ ९ ॥

तमुत्थाप्य महृष्टात्मा शैववर्यो मुदा द्विजम् । क्षिप्रं क्षिप्रानदीतोयैः तं विप्रं स्नापयत् तदा ॥

अग्निरित्यादिभिर्मन्त्रैः कृतोद्धूलनपुण्ड्रकः । रुद्राक्षमालाभरणं कण्ठकर्णगलादिषु ॥ ११ ॥

बिल्वमूलेऽथ तं विप्रं स विप्रः शैवसत्तमः । ददौ स शाम्भवीं विद्यां पञ्चाक्षरमनोहराम् । १२ ॥

अष्टैश्वर्यप्रदात्रीं तां निहन्त्रीं निखिलापदाम् । शिवविद्याप्रभावेन तद्देहाद्धूम उद्बभौ ॥ १३ ॥

तद्धूमधाम्ना त्रिदशा नितान्तं तान्तलोचनाः । इतिकर्तव्यतां त्यक्त्वा समीक्षन्ते परस्परम् ॥

देवाः –

किमद्य धूमजो राशिर्जगदद्य समावृणोत् । इत्येवं संशयाविष्टान् सुरान्नारद आगतः ॥ १५ ॥

नारदः –

शिवविद्याप्रभावेन शैवदत्तेन भूसुरः । भासुरं देहमासाद्य मोदते पश्यताधुना ॥ १६ ॥

तद्देहात् पापजो राशिर्विदग्धस्तेन संबभौ । अपारधूमप्रबलज्वालामालायितं नभः ॥ १७ ॥

तद्दर्शनार्थं त्रिदशा नारदेन समागताः । अभिनन्द्याथ तान् सर्वान् स शैवो द्रष्टुमागतान् ॥ १८ ॥

ब्रह्मादित्रिदशान् सर्वान् तान् विप्रो वक्तुमैच्छत । दृष्ट्वा देवं महाकालं प्रणम्य विनयान्वितः ॥

शैवः –

वक्ष्ये हितं शृणुष्वाद्य तवाघौघविनाशनम् । ब्राह्मणस्य च यत्कृत्यं तत्रापि शृणु विस्तरात् ॥
आचारो ब्राह्मणानां हि परमो धर्म उच्यते । स्नात्वा क्षिप्रानदीतोये सभार्यस्त्वं द्विजोत्तम ॥
धृतत्रिपुण्ड्ररुद्राक्षः पूर्वां सन्ध्यामुपास्य च । सन्तर्प्य पितृदेवर्षीन् जपन् पञ्चाक्षरं मनुम् ॥ २२ ॥
अष्टोत्तरसहस्रं तु नित्यं रुद्राक्षमालया । रुद्राक्षमालया जप्तो जपोऽनन्तफलप्रदः ॥ २३ ॥
बाणलिङ्गं बिल्वमूले स्थापयित्वा समर्चय । रुद्रावर्तनशीलस्त्वं भव नित्यं यतव्रतः ॥ २४ ॥
बिल्वपत्रैर्महादेवं समर्चय दिने दिने । त्वमस्यै देहि तन्मन्त्रं शिवशब्दोर्ध्वगं स्त्रियै ॥ २५ ॥
सभर्तृका भर्तृमुखान्मन्त्रं प्राप्य शिवार्चनम् । कुर्यान्नान्यत्र तस्यैवं बिल्वैर्मल्लिङ्गपूजनम् ॥ २६ ॥
प्रदोषे शङ्करस्यार्चा ब्राह्मणे विहितो विधिः । सोमवारेषु सर्वेषु विधिः शङ्करपूजनम् ॥ २७ ॥
अष्टम्यां च चतुर्दश्यां विधिः शङ्करपूजनम् । बिल्वपत्रैस्तदा विप्र नक्ताशी नियमेन हि ॥ २८ ॥
शिवे निवेद्य भुञ्जीतेत्येवं जाबालिकी श्रुतिः । महाकालं महादेवं नत्वा नित्यं शतोत्तरम् ॥
प्रदक्षिणप्रणामांश्च सदारः कुरु सादरम् । पञ्चाक्षरं च नियतं जप देवस्य सन्निधौ ॥ ३० ॥
रुद्रेण स्तुहि देवेशं स्तोत्रैः पौराणिकैरपि । गायत्रीं च जप प्रीत्या भर्गशब्दैकभासुराम् ॥ ३१ ॥
संसारमज्जको भर्गो द्विज तस्याधिदैवतम् । तदावृत्त्या निवृत्तिर्हि शिवस्तुष्यति सत्तम ॥ ३२ ॥
गौतमात्रिभरद्वाजा भृगुवासिष्ठकाश्यपाः । गायत्रीजपतः सर्वे परां सिद्धिमुपागताः ॥ ३३ ॥
शृणु त्वं विबुधैः सार्धमगजापतिभक्तिदम् । शृण्वतां पापशमनं हरिभक्तिविवर्धनम् ॥ ३४ ॥
जैगीषव्येण संपृष्टनन्दिप्रोक्तमिदं शुभम् । इतिहासं महासारं पशुपाशविमोचकम् ॥ ३५ ॥
शिवप्रीतिकरं पुण्यं पञ्चपातकनाशनम् । कैलासशिखरद्वारि स्थितं तं सुयशापतिम् ॥ ३६ ॥
त्रिपुण्ड्रचन्द्रार्धधरं स्वर्णवेत्रलसत्करम् । गोपवृन्दैः परिवृतं नानामुनिगणैर्वृतम् ॥ ३७ ॥
काञ्चने विष्टरे पुण्ये संस्थितं गणपोत्तमम् । जैगीषव्यः समागम्य दृष्ट्वा नत्वा च शङ्करम् ॥
नन्दिनं शाङ्करान् धर्मानपृच्छच्छिवभाषितान् ॥ ३९ ॥

जैगीषव्यः –

नन्दिकेश्वर सर्वज्ञ देवदेव कृपास्पद । शिवधर्ममहारत्नखनिस्त्वं प्रमथाधिप ॥ ४० ॥
शिवपादाम्बुजद्वन्द्वभक्तियुक्तेष्टमानस । शिवप्रभावधर्मान् मे कौतुकाद्वक्तुमर्हसि ॥ ४१ ॥
महेश्वरदयासारसर्वस्वं त्वं गणेश्वर ॥

नन्दिकेशः —

वैशीषव्य महाभाग शिवभक्तिकथां सुधाम् । पिब त्वं श्रोत्रपुटकैः पुनरावृत्तिवर्जिताम् ॥ ४२ ॥

पात्रभूतस्त्वमेवेह मुनिष्वेतेषु सत्तम । गोप्यमेतन्महागुह्यं देव्यै देवेन भाषितम् ॥ ४३ ॥

नाख्येयं च त्वया ब्रह्मन् यस्य कस्यचिदुत्तमम् । महादेवी महादेवमपृच्छत् कौतुकान्विता ॥

देवी —

किं ते प्रियकरं शम्भो रहस्यं तद्वदस्व मे । इति पृष्टो महादेवो जगाद जगदम्बिकाम् ॥ ४५ ॥

ईश्वरः —

शृणु त्वममरेशानि रहस्यं मम शङ्करि । धर्मपञ्चकमित्याहुः पञ्चपातकनाशनम् ॥ ४६ ॥

शृणुष्वावहिता भूत्वा जगतां पापनुत्तये[1] ॥ ४७ ॥

पचेलिमतपःफलैरमितजन्मसङ्घार्जितैः भवे भसितधारणे भवति देवि विश्वाधिके ।
त्रिपुण्ड्ररचनाक्रमः करगलादिफाले तथा उरोदरशिरःस्थले भवति भाग्यपूर्णे जने ॥ ४८ ॥

रुद्राक्षेति वदन् स्पृशन्नपि नरो जन्तुः स गोदानभाक्
धृत्वा तच्छतकं महेन्द्रसदनं प्राप्येन्द्रसालोक्यगः ।
तत्साहस्रधरोपि तत्र दशकं तस्मादनन्ताक्षधृक्-
ब्राह्मं वैष्णवमैश्वरं पदसुखं प्राप्येश्वरे लीयते ॥ ४९ ॥

पञ्चपातकविनाशनं परं पञ्चकोशविनिवारणं सदा ।
पञ्चवक्त्रकृपया शुभप्रदं पञ्चमन्त्रपरमं तथाक्षरम् ॥ ५० ॥

कुम्भसंभवमुखैर्मुनीश्वरैर्जम्भमारकमुखैरमरेन्द्रैः ।
कुम्भवक्त्रमुखरैर्गणेश्वरैर्दम्भनाशनकरं परं मनुम् ॥ ५१ ॥

असमाप्तफलदं शुभालये सप्तमन्त्रकृतपूजनादरैः ।
उत्तमुक्तिफलदं भवभूम्यां बीजमेकमनिशं शिवभक्तैः ॥ ५२ ॥

श्रीरुद्रं यजुषां गणेषु विहितं जप्त्वा परं प्रीतिमान्
मुक्तः पातकसङ्घतो गिरिवराजाते स पुण्यैकभाक् ।
तन्नाम्नां फलवादसूक्तिपरमैर्मन्त्रं जपन्भक्तिमा-
न्भस्माभ्यक्ततनुस्तथा च शयितो यो भस्मनिष्ठो भवेत् ॥ ५३ ॥

---

१ नुत्तमम् C

S. 16

यो रुद्राक्षविभूतिभूषणयुतो जप्त्वा प्रियो जायते
यः पुण्ड्रान्तरधारिणे मतिरुमे नैवाप्नुयात् तत्फलम् ।
जप्त्वापि श्रुतिशेखरोत्तमपदान् ज्ञात्वापि तस्यार्थकं
लिङ्गेषु प्रथितं सदापचितिजं पुण्यं न हि प्राप्नुयात् ॥ ५४ ॥

पुन्नागनागवकुलार्जुनचम्पकैश्च मन्दारपाटलकदम्बककर्णिकारैः ।
जम्ब्वाम्रदाडिमसुगन्धिशमीशमीकलोध्रोद्भवैश्च वकुलैः करवीरपुष्पैः ॥ ५५ ॥

पद्मार्कैः कनकैस्तथा दमनकैर्बन्धूककोकैर्वकैः कुन्दैर्जातिकुसुम्भसंभवसुमैः सन्मल्लिकासंभवैः ।
अङ्कोलैर्गिरिमल्लिकादिकुसुमैः सत्पारिजातादिभिः नन्द्यावर्तमरुत्वकैश्च तुलसीसद्द्रोण दूर्वाङ्कुरैः ॥

विष्णुक्रान्त कुशापमार्गजलदैः काशैस्तथैवार्जुनैः । कापित्थैरघहारिपत्रकवरैर्यः पञ्चवक्त्रार्चनम् ।
पञ्चब्रह्मनमांसि यस्य वदने सद्यः स मुक्तो भवेत् ॥ ५७ ॥

सहस्रनीलोत्पलमालया शिवं समुल्लसच्चारुशशाङ्कमौलिम् ।
मुदा मुकुन्दाजविमृग्यमौलिपादाम्बुजं पूजयिता स धन्यः ॥ ५८ ॥

यो बिल्वोत्तममालयाऽनुदिवसं मन्दारमालादिभि-
र्लिङ्गं मङ्गलमेतदद्य सुमनःसौरभ्यगन्धायितम् ।
पश्यन् नश्वरपातकोत्थशमनाद् व्याघातभीतिं हरे-
न्निर्गुण्डीशुकपत्रबिल्वजदलैः सद्भावलिङ्गोद्भवैः[1] ॥ ५९ ॥

वसन्तनवमल्लिकाकुसुमदिव्यमालादिभिः दिनान्तसमयोल्लसन्मधुरगन्धजाजीसरैः ।
[2]महेशजनिमार्चनं (?) प्रकुरुते प्रदोषेषु यः स चादिभिषगुत्तमप्रिय अघौघतूलानलः ॥ ६० ॥

ब्रह्मा शैलभवं हरिन्मणिमयं विष्णुर्निशानायको
मुक्ताजालमयं प्रवालजमुमा ताम्रोद्भवं भानुमान् ।
हैरण्यं धनदस्तथैव वरुणः श्रीचन्द्रकान्तोद्भवं
वह्निश्चाश्ममयं सुपित्तलभवं वायुश्च नीलं हरिः ॥ ६१ ॥

अन्ये सर्वमरुद्गणाश्च दितिजा गन्धर्वविद्याधरा
यक्षा राक्षसकिन्नरोरगगणा रुद्रा मुनीनां गणाः ।

---

१ इतः परं E कोशे "कापित्थैरघहारि" इति ५७ श्लोकस्यार्धं दृश्यते ।
२ महेशकृतमर्चनं C

चित्रं चारु महेशलिङ्गममलं संपूजयन्त्यादरा-
द्विल्वीकोमलपल्लवैर्दिविषदो मन्दारमालादिभिः ॥ ६२ ॥

उत्फुल्लरक्तकमलैरमलैः कदम्बैर्नीलोत्पलैर्विकसितैः कुमुदैश्च नित्यम् ॥ ६३ ॥

मालूरप्रभवैर्नवारुणदलैर्दूर्वाङ्कुरैः शङ्करं लिङ्गेऽभ्यर्च्य भवेदनेकविभवैर्युक्तस्तथा मुक्तिभाक् ।
सायं कुन्दमरन्दबन्धुरलसद्गन्धौघगन्धीकृतैर्दिग्व्रातैर्विपिनप्रफुल्लसुमनोधूलिप्रभाभासुरैः ॥ ६४ ॥

शर्वाणीरमणार्चनैः कृतमतिर्मन्दारमालादिभिः
भस्माभ्यक्ततनुर्भवेत् स सुभगो भावोऽपि कश्चित्[1] कलौ ॥ ६५ ॥

प्राज्यैर्गव्याज्यदुग्धप्रभवदधिघटैर्नारिकेलेक्षुसारैः रंभाजम्बीरचूतप्रभवफलरसैः पानसोद्धूतकोशैः ।
श्रीखण्डद्रवसारसागरमहाकर्पूरखण्डद्रवैः पाटीरैर्मृगनाभिजातसुरसैः सच्छर्करापूरकैः ॥ ६६ ॥

आसिच्यालिम्प्य गन्धैर्मृदुतरवसनावेष्टनैर्वेष्टयित्वा
नेपथ्यैर्मणिकल्पितैः सुमनसां भारैश्च विल्वीदलैः ।
अभ्यर्च्याभूष्य धूमैरगरुपरिमलामोदितैर्दीपजालैः
नैवेद्यैर्बहुभक्ष्यभोज्यसहितैस्ताम्बूलनीराजनैः ॥ ६७ ॥

कुन्देन्दुप्रतिमानचामरगणैः छत्रैश्च मुक्ताफलोद्दामस्वर्णपरिष्कृतैर्व्यजनजामोदोत्थवातार्पणैः ।
आदर्शैरतिनिर्मलैर्मृदुलकैः सद्वाद्यभेदोत्थितध्वानैः प्रक्रमसंस्तवप्रणमनैर्नृत्यैश्च गेयैरपि ॥ ६८ ॥

लिङ्गं मङ्गलमङ्गलापतिमहासान्निध्यहेतुस्थले
वारं वारमघौघनाशनकरं पुण्ये प्रदोषेऽपि च ।
संपूज्यालोक्य पुण्यैर्जनिशतविततैः किं वदामीशतुल्यः
स्कन्दो नन्दिश्च भृङ्गिर्गिरिशकरुणया धन्यधन्यः स एव ॥ ६९ ॥

नन्दिकेशः —

एवमाह महादेवो गिरिजां प्रति शङ्करः । रहस्यमेतद्गोप्यं ते जैगीषव्य शृणुष्व मे ॥ ७० ॥

दुर्गन्धापारपूरप्रबलखरखुराघातभिन्नाग्रदन्ताः
तत्सङ्गोत्कण्ठिनो ये नरजठरखरा घोरसंसारभाराः ।
तेषां का वा भवित्री गतिरिति कलये नाथ चन्द्रार्धचूड
स्वामिन्नीशान भक्तिं वितर पुरहरानाथनाथ प्रसीद ॥ ७१ ॥

---

१ उत्तरार्धं नोपलभ्यते ।

परदारविचारसादराः सुरताचारकथाविधानधीराः ।
उन्मत्तमारशराकृत्तमहोरसो ये नाराधयन्ति गिरिशं महिते प्रदोषे ॥ ७२ ॥

महापचरङ्गानुषङ्गाभिसङ्गः पिशङ्गीकृताशाङ्कसाद्रीङ्कचित्ताः ।
न शाङ्गं भजन्त्येव दुष्टाभिषङ्गाश्च गङ्गाम्भसा प्लावयिष्यन्ति गात्रम् । ७३ ॥
सततं विनिविष्टमन्तिके भगवन्तं शिपिविष्टमष्टमूर्तिम् ।
दुरदृष्टशतैर्विमुह्य दुष्टा न भजन्त्येव महेश्वरं कराण्टाः ॥ ७४ ॥
दुरदृष्टदशाकशाभिघातैः कुशकाशैरपि नार्चयन्ति शम्भुम् ।
अनिशं निविशन्तमन्तरङ्गे शमिताशेषदुरन्तदुःखजालम् ॥ ७५ ॥
अगजापतिपादपूजने मतिरल्पा भवेत धर्मशालैः ।
अर्च्यं [1]प्रार्च्यत भक्तियुक्तमनसा यूयं सुबुद्धौ रताः (?) ॥ ७६ ॥

सूतः —
इत्युक्तो नन्दिकेशेन जैगीषव्यो महामुनिः । नन्दिकेशं समालिङ्ग्य प्रेमाश्रुपुलकोऽब्रवत् ॥ ७७॥

जैगीषव्यः —
अहो महादेवकथाविधानसुधारसास्वादनलोलचित्तैः ।
[illegible] मे [illegible]मभीष्टसङ्ग कान्तेव रत्यर्थविशारदेन । ७८ ॥
तेन छि[illegible]श्वर घो[illegible]दावप्रभाकराक[illegible]भवैकबन्धम् । ७९ ॥
इत्युक्त्वा [illegible] कैलासे मुनिपुङ्गवः । प्रणम्य च महादेवं जैगीषव्यस्तदाऽब्रवीत् ॥ ८० ॥

जैगीषव्यः —
स्वामिन् महेश करुणावरुणालयाद्य त्वत्पादपद्ममकरन्दमधुव्रतत्वम् ।
संप्रार्थयामि नितरां तरुणेन्दुमौले संसारघोरदवदग्धममप्रकायः ॥ ८१ ॥
इत्थं स्तुत्वा महादेवं शङ्कराग्रे स्थितोऽभवत् ॥ ८२ ॥

शैवः —
एतत्ते सर्व[illegible]ख्यातं संवादं द्विजसत्तम । यः शृणोति सकृद्भक्त्या भवे भक्तिविवर्धनम् ॥ ८३॥
त्वदर्थं कथितं विप्र सर्वपापप्रणाशनम् ।
अस्माकं दुरदृष्टकोटिघटितापारांहसो नाशकं लिङ्गं दृष्टमपारबिल्वजदलैः संपूजितं मस्तके ।
क्षिप्रातुङ्गतरङ्गशीकरलवैः संप्रोक्षितं वीजितं वातैः केतकपद्मगन्धजरजोगुम्फीकृतैः शीतलैः ॥

---

१ प्राच्यं न B

सूतः —

शैववर्यवचः श्रुत्वा सभार्यः स द्विजस्तदा । सङ्कंपिताङ्गहृदयो भवभक्तिपरोऽभवत् ॥ ८५ ॥

प्रणम्य तं महाशैवं महाकालं महेश्वरम् । भूसुरस्तान् सुरांश्चापि नारदं ज्वलितौजसम् ॥ ८६ ॥

एतावत्कालपर्यन्तं मत्कृत्यं श्रूयतां द्विज । इति प्राहाश्रुनयनः मदाग्रश्च द्विजाधमः ॥ ८७ ॥

ब्राह्मणः —

जाबालश्रुतिमस्तकेषु निरतो धर्मो न संसेवितो
मन्त्रः सप्तमिरेव धूलनविधिर्नाकर्णितो नो कृतः ।
रुद्राक्षैर्न विभूषिता तनुरियं नाभ्यर्चितः शङ्करो
हाहा नो जनिरेव गर्भकुहरे व्यर्थीकृता मेऽधुना ॥ ८८ ॥

क बिल्वदलपूजने मतिरुदेति भाग्योदयैः शतश्रुतिशिरोगतैर्नमकसूक्तपाठक्रमैः ।
शिवाङ्गणपरिभ्रमैः सितविभूतिधूल्यादरैः सुशांभववरावृतं गिरिशमन्दिरं तत्र हि ॥ ८९ ॥

शङ्कातङ्कदुरन्तदुष्कृतमहाप्राकारवज्रायितां
श्रीविश्वाधिक वेदवेद्य भवतः कारुण्यपाथोझरी ।
दूरीकृत्य मलं समस्तजगतां सन्तापवृन्दं सदा
दीने मय्यपि चातकप्रतिनिभे संशुष्ककण्ठास्यके
मेघस्त्वं भगवन् दयार्द्र करुणादृष्ट्याऽभिवर्षस्व [1] माम् ॥ ९० ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे शैवदरिद्रब्राह्मण संवादवर्णनं नाम तृतीयोऽध्यायः ॥

---

## ॥ चतुर्थोऽध्यायः ॥

---

देवाः —

अहो महदिदं भाग्यं ब्राह्मणस्य महात्मनः । मुनीश्वरैः सुरेन्द्रैश्च भक्तिं प्राप्य सुदुर्लभाम् ॥ १ ॥

[2]शांभवीपावनि धन्यां त्वत्सङ्गाङ्गावलोकनात् । निष्क्रियोऽप्ययमत्युग्रः शूद्रकर्माऽपि भूसुरः ॥

भासुराचारसंयुक्तः सुराश्रयैकभाजनः । त्वदङ्गसङ्गजातोऽपि पावनानां च पावनः ॥ ३ ॥

त्वद्दर्शनं सुराणां तु विचित्रजनकं महत् । अहो महामणिस्पर्शात् लोहं काञ्चनतां व्रजेत् ॥ ४ ॥

---

१ पञ्चपादोऽयं श्लोकः    २ शांभवी पावनी धन्या इति D E कोशयोः पाठः

यद्देवायमधुना विप्रबन्धुस्तथाऽधमः । मुनीन्द्रानमरेन्द्रांश्च धिक्करोति त्वदाश्रयात् ॥ ५ ॥
त्रिनेत्रसुदयापात्रान् पवित्रान् गात्रसङ्गमैः । कुर्वन्त्येवामरधुनी पुनीते यद्वदेव वै ॥ ६ ॥
एतस्य भाग्यगणना नायोग्यैरिह गण्यते । शेषोऽपि महिमालेशं गणितुं न तव क्षमः ॥ ७ ॥
महाकालमिदं क्षेत्रं महेन्द्रप्रियकृत्तमम् । भूमण्डलेऽस्य सदृशं क्षेत्रमन्यन्न विद्यते ॥ ८ ॥
विद्योतते यथा भानुर्नभोङ्कण (ङ्गण) पथि स्थितः । तथा भूमण्डलगतक्षेत्रेष्वेतद् विराजते ॥ ९ ॥
महाकाल महाकाल महाकालेति यो वदेत् । सुदूरेऽपि गतो मर्त्यो महाकालान्तिके स्थितः ॥
लिङ्गं मङ्गलदं पुण्यं महामङ्गलयार्चितम् । अर्चितं ब्रह्मविष्ण्वाद्यैर्महाकालगणार्चितम् ॥ ११ ॥
दृष्टं श्रुतं वा सततं स्पृष्टमंहोविनाशकम् । अयं मे हस्त इत्यादिमन्त्रस्पर्शो विशिष्यते ॥ १२ ॥
चैत्र्यां माघ्यां तथाषाढ्यां पौर्णम्यां यस्तु पूजयेत् । स विमुक्तो महापापान्मुक्तिमन्ते व्रजेत च ॥
यस्तु चन्दनपङ्केन लिङ्गमेतद्विलेपयेत् । कर्पूरागरुकस्तूरीमिश्रैर्वा यक्षकर्दमैः ॥ १४ ॥
तालवृन्तैर्वीजयित्वाऽग्निष्टोमफलभाग्भवेत् । बिल्वपत्रैश्च पद्मैश्च कल्हारैश्चम्पकैस्तथा ॥ १५ ॥
पूजयित्वा महालिङ्गं महाकालस्य शूलिनः । सद्यो मुच्येत पापैश्च गाणपत्यं लभेन्नरः ॥ १६ ॥
अत्रोपोष्य महादेवं दृष्ट्वा सायं हविष्यभुक् । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥ १७ ॥
क्षिप्रानद्युदके स्नात्वा सन्तर्प्य पितृदेवताः । भोजयित्वा द्विजान् शैवान् भक्ष्यभोज्यैरनेकशः ॥

कोटिभोज्यफलं तस्य क्षेत्रेऽस्मिन् शैवसत्तम ।
दत्त्वाथ तण्डुलं धान्यं तिलान् मुद्गांस्तथाढकान् ॥ १९ ॥

क्षीरं दधि घृतं क्षौद्रं शर्करां वा फलानि च । दत्वा शिवाय स भवेन्निष्पापो नात्र संशयः ॥
रंभापनसजम्बीरनारिकेलेक्षुसारकम् । सुमोदेत स वै मर्त्यो मेघमुक्त इवोडुराट् ॥ २१ ॥
बुद्धिपूर्वकृतैः पापैस्तत्क्षणादेव मुच्यते । कापिलेनाथ पयसा योऽभिषिञ्चेन्महेश्वरम् ॥ २२ ॥
स पुनः स्तन्यपयसा स्वोदरं नाभिषिञ्चति । घृतेन दीपान् प्रज्वाल्य कार्तिके तु विशेषतः ॥
सोमवारे त्रयोदश्यां प्रदोषे पर्वणोर्द्वयोः । संक्रान्तौ च व्यतीपाते अयने ग्रहणे तथा ॥ २४ ॥
दृष्ट्वा देवं महाकालं पूज्य मुक्तो भवेन्नरः । शतरुद्रियमन्त्रैश्च योऽभिषिञ्चेन्महेश्वरम् ॥ २५ ॥
धारापात्रैस्तथा भृङ्गैः शङ्खैश्चैवाथ पाण्डरैः । सहस्रधाराकलशैः शतधारादिकैरपि ॥ २६ ॥
शतधारं सहस्रधारं मन्त्रैर्यस्त्वभिषिञ्चयेत् । शोधितैर्वासितैर्नीरैः धारया वृत्तसूक्ष्मया ॥ २७ ॥
धारां शिवशिरोलग्नां अविच्छिन्नां प्रकल्पयेत् । सन्ततिं पशुपुत्रांश्च अविच्छिन्नं लभेत सः ॥२८॥

सुदुर्लभतरं ज्ञानं लभते नात्र संशयः । इत्थं शैवेन संवादं कृत्वा ब्रह्मादयः सुराः ।। २९ ।।
नारदाद्यैर्मुनिश्रेष्ठैः सार्धं गन्धर्वकिन्नरैः । सितभस्माक्ततनवो रुद्राक्षवरभूषणाः । ३० ।।
महाकालालयं देवा ययुर्बिल्वादिपाणयः । महापचितिसंभारान् कामधेनूद्भवोद्भवैः । ३१ ।।
सफेनक्षीरधाराभी रुद्रसूक्तैरसेचयन् । दधिमण्डैर्घृतैर्दिव्यैर्मधुना सितयाऽपि च ।। ३२ ।।
नारिकेलाम्रसुरसैः मोचाजम्बीरपानसैः । तत्तद्रसैर्महादेवं विविधैरभ्यषेचयन् ।। ३३ ।।
गन्धकर्पूरपुष्पोत्थैः स्वर्णरत्नकुशोदकैः [1] । रौद्रै ऋक्सामयजुषां गणैराथर्वणैरपि ।। ३४ ।।
पञ्चब्रह्मभिरीशानं सुगन्धि गन्धवासितैः । पयोभिरमृतास्वादैः पाटल्यगरुवासितैः ।। ३५ ।।
नानावादित्रनिनदान् निलिंपाः समघोषयन् । स्नानकाले महेशस्य जयशब्दैश्च पुष्कलैः ।। ३६ ।।
स्नाप्य वस्त्रैर्वेष्टयित्वा मृदुकौशेयसंभवैः । चन्दनेनैव संलिप्य लिङ्गमापीठमुत्तमम् ।। ३७ ।।
नवरत्नचितानेकभूषणैर्भूषयन् सुराः । निधनेत्यादिभिर्मन्त्रैः श्रीपत्रैः कमलैस्तथा ।। ३८ ।।
आर्चयंश्चम्पकैरर्कैर्मन्दारकरवीरकैः । बकैर्द्रोणैश्च धुत्तूरैः नीलरक्तोत्पलैस्तथा ।। ३९ ।।
सहस्रनामभिः पुष्पैर्धूपैर्दीपैर्मनोरमैः । दीपैर्निदीपयामासुर्महाकालशिवालयम् ।। ४० ।।
धूपैरगरुजोद्भूतैः घुमुग्घुमितदिक्तटम् । नैवेद्यैर्विविधैर्हृद्यैः सूपापूपादिराशिभिः ।। ४१ ।।
क्षीराज्यकुम्भैः शतशः पायसानां घटीशतैः । दधिखण्डादिभाण्डैश्च शर्करापङ्कपङ्किलैः ।। ४२ ।।
ताम्बूलपर्वतैर्नैकक्रमुकानां च राशिभिः । मुखवासकरैरन्यैर्मृगनाभिविराजितैः ।। ४३ ।।
लवङ्गैलामुखरितैर्जाजीपत्रफलैरपि । स्वच्छपुच्छयुतापारमरीचीखादिरैस्तथा ।। ४४ ।।
नैवेद्यमाद्यं हृद्यं च दत्वा दिविषदः शिवम् । नीराजनैस्तथा पुण्यैः छत्रचामरदर्पणैः ।। ४५ ।।
व्यजनैः सन्निषेव्येशं नानावाद्यरवैरपि । रम्भाद्यप्सरसस्तत्र ननृतुः शङ्कराग्रतः ।। ४६ ।।
जगुश्च देवगन्धर्वा नारदाद्याश्च गायनाः । महादेव प्रसीदेति श्रीमन्मृत्युञ्जयेति च ।। ४७ ।।
सरागं च सतालं च कलं गीतैरतोषयन् । मूर्छनास्थानविन्यासै रुद्रवीणाकराः सुराः ।। ४८ ।।
प्रदक्षिणनमस्कारैः स्तुतिभिर्नर्तनैस्तथा । करताडनपूर्वं ते तुष्टुवुः परमेश्वरम् ।। ४९ ।।

देवाः –

सरित्पतिनिषङ्गिणे कृतगिरीन्द्रसद्धन्वने धराधरणसत्फणिप्रवरभूतसच्छिञ्जिने ।
रमारमणसायकप्रबलहस्त तुभ्यं नमो महोक्षवरवाहिने कृतगणेन्द्रशैलादिने ।। ५० ।।

---

१ जलैस्तथा C, D तलैस्तथा E

भुजङ्गवरधारिणे धृतगरार्धकण्ठाय ते निशापतिकलास्फुरत्सुरतरङ्गिणीमौलये ।
महाङ्गजदनोल्लसन्मदविलोकिने ते नमो जलन्धरशिरोविजनीनिकृतनालचक्राय ते ॥ ५१ ॥
कपर्दकृतबन्धनोल्लसितभोगिभोगाय ते तवाक्ष्यनलकोणभूकणविदग्धकामाय ते ।
महाघगिरिमस्तकप्रहृतिनामवज्राय ते करीन्द्रवदनोल्लसत्स्फुटपदाय तुभ्यं नमः ॥ ५२ ॥
विभूतिपरिधूलनोद्धवलिताङ्गरागाय ते हरिन्मणिनिभागजाकृतविभागदेहाय ते ।
पतङ्गनयनोद्धूनप्रबलचण्डदण्डाहतिस्फुटद्द्विजसुताविने (वने) भवहराय तुभ्यं नमः ॥ ५३ ॥
सुरासुरमरुद्गणप्रवरविप्रवृन्दाभटीकटीतटमृगाजिनप्रबलरक्षदीक्षामणे ।
हविर्मुखमखामृतान्धमुखोरुदन्तेक्षणप्रपातनकराय ते गिरिशयाय तुभ्यं नमः ॥ ५४ ॥
इत्थं स्तुत्वा तदा देवा महाकालं महेश्वरम् । शांभवैर्मुनिभिः सार्धं ब्रह्माद्यास्ते सुधान्धसः ॥
शिवनैवेद्यमासाद्य सुधाधिक्कारिणोऽभवन् । ततस्ते विबुधाः सर्वे ददृशुर्वसुधाधिपम् ॥ ५६ ॥
नाम्ना चित्ररथं हृष्टाः स्पर्धते यः शतक्रतुम् । भस्मरुद्राक्षवीताङ्गं शाम्भवैः परिवारितम् ॥५७॥
महाकालमहालिङ्गं ध्यायन्तमनिशं हृदा । रम्भाधिक्कारिभिर्दारैः कुमारैर्मारसंभवैः ॥ ५८ ॥
शैवामात्यवरैर्वीरैर्भटैस्तादृग्विधैरपि । सुरास्ते नृवरप्रष्ठैः परीक्ष्य बहुधाऽऽस्तिकम् ॥ ५९ ॥
ऊचुरम्लानवदनाः प्राञ्जलिं प्रणतं नृपम् ।

देवाः –

धन्यस्त्वमेव भूपाल पालिताखिलभूतल । भूतुषाराद् त्वमेवैक आषाढार्चनतत्परः ॥ ६० ॥
तव भाग्यस्य नान्तोऽस्ति यतः शिवपरायण । सहस्राक्षोऽयमत्यन्तमक्ष्णामाप परं फलम् ॥
अन्ये द्विलोचना देवास्तत्र दर्शनहर्षिताः । स्वर्गौकसां वचः श्रुत्वा क्ष्मापतिः क्षमयान्वितः ॥
भूयः प्रहर्षितो देवान् वचो वक्तुं प्रचक्रमे । सुरसन्दर्शनापारहर्षवारिधिमग्नधीः ॥ ६३ ॥

राजा –

इन्द्रमित्रादयो देवाः हरिपद्मजपूर्वकाः । वरुणाग्न्यनिलाः सर्वे त्रिनेत्रांशाः सुरोत्तमाः ॥ ६४ ॥
सनातनाद्या योगीन्द्रा नारदाद्याः सुरर्षयः । कृतकृत्योऽस्मि हे देवा यूयं मद्दर्शनं गताः ॥

श्लाघ्योऽयं विबुधश्रेष्ठाः सर्वदा नात्र संशयः ।
न मत्तोऽभ्यधिकः कश्चित् पुण्यवानिति मे मतिः ॥ ६६ ॥

महाकालमहेशस्य कृपा मयि तु सुस्थिरा । कः पूज्यते भवद्भिस्तु ध्यायते कः सुरोत्तमाः ॥
कस्य लिङ्गं पद्मजाद्यैः पूज्यते भक्तिभाविभिः । तत्सर्वं श्रोतुमिच्छामि भवद्भ्यः स्वर्गवासिनः ॥

महेशकथया कालो विनेय इति मे मनः । कालकालकथाधारासुधया यस्तु जीवति ॥ ६९ ॥
स जीवति नरो नित्यं मृतास्त्वन्ये सुरोत्तमाः ॥ ७० ॥
वसुधाधिपतेर्वाक्यं श्रुत्वा ते विबुधोत्तमाः । ब्रह्माणं विनयात् प्राहुः कृताञ्जलिपुटास्तदा ॥

देवाः –

त्वमेव देवश्रेष्ठोऽसि प्रजापतिरसि प्रभो । महेश्वराद्वेदजालं शिवज्ञानं च वेत्सि वै ॥ ७२ ॥
त्वत्तः सर्वमशेषेण राज्ञा च शृणुमोऽब्जज ।

सूतः –

इति तद्विबुधं वाक्यं श्रुत्वा नत्वा महेश्वरम् । बभाण भारतीनाथो हर्षयन्नृपमञ्जसा ॥ ७३ ॥

ब्रह्मा –

अस्माभिरिन्दुशकलाकलितोत्तमाङ्गलिङ्गार्चनानियमधूतसुदुष्कृतैश्च ।
नास्त्येव कालजभयं जनिमृत्युतोऽपि शङ्का न दुःखशतकैः सुविचिन्त्यते हि ॥ ७४ ॥

क्षणं त्र्यक्षमक्षीणमक्षाणि रुद्ध्वा क्षपादौ क्षपान्ते क्षपानाथचूडम् ।
समभ्यर्च्य दक्षाध्वरध्वंसकं कक्षवासं मगाक्षिक्षयं मुच्यतेऽघौघसङ्घात् ॥ ७५ ॥

शिपिविष्टमदष्टकोष्टजनितानन्दैकनिष्ठानता निष्टानिष्टविशिष्टशिष्टहृदयागारे निविष्टं शिवम् ।
ध्यात्वा कष्टतराष्टवेष्टनमयं त्यक्त्वाष्टमूर्तिं सदा काष्ठाष्टाम्बरमाशुमीशमनिशं दृष्टः फलार्थे मुहुः ॥

को वा वेदोदयाद्रिप्रवरशिखरकोद्भासिमाहात्म्यजालो
भीत्या यस्येन्दुशक्रास्तपनपवनका भान्ति देवाः समग्राः ।
सोऽयं शङ्करभास्करः प्रतपते मुष्णन्नघौघांबुदं
उग्रो भीममहेश्वरेश्वर महादेवेति नामांशुभिः ॥ ७७ ॥

नित्यानित्यसमस्तवस्तुविषयव्यापारसत्तात्मकं
यत्सत्ताधिगमेन चेत् तपति यद्ध्यानैकबोधं जगत् ।
यस्यानन्दलवैकदेशजनितानन्देन ते निर्वृताः
ब्रह्मेन्द्रादिमरुद्गणाः सवरुणाः साक्षी स एवेश्वरः ॥ ७८ ॥

विश्वोत्पत्तिविनाशपालनमहाहङ्कारभूतैर्गुणै-
रव्यक्तं पुरुषः प्रकृत्यधिकृतिः संवित्स्वरूपा शिवा ।
या सा यस्य शिवस्य मुख्यदयिता तां ध्यानयोगैः सुराः
संप्रार्थ्य प्रमथाधिनाथमजरं ज्ञात्वा परं निर्वृताः ॥ ७९ ॥

विषार्चिषि विषाकरादधिमहीधदुन्मीलति वलद्विषि गतत्विषि क्षपितशेमुषीरोचिषि ।
वलिद्विषि विना रुषा विषमियेष पीयूषवत् स शोषयति कल्मषं विषमबाणशोषाकरः ॥ ८० ॥

नागमस्तकमिदं हृददोना नागमस्तुतममुं च विहाय ।
नागमाश्रितनिशाकरसिन्धु नागमच्छरदिन्दुसमानम् ॥ ८१ ॥

मच्छिरोऽधिवसतीह परागः पादयोस्तत्र शिवाधिपरागः ।
अप्सरोभिरपि सत्रपरागः तत्र चेदभजनं हि परागः ॥ ८२ ॥

भगवत्यगजापतौ महेशे कृतपुण्यैरमितैर्लभेत भक्तिम् ।
स तु सन्तरते भवाब्धिमुग्रं जनिनाशप्रथितं विचित्रकर्म ॥ ८३ ॥

वरं कर्कटीत्वं वरं मर्कटत्वं वरं चण्डचण्डालकन्यासुतत्वम् ।
वरं सूकरीयोनिगन्धोन्मुखत्वं महेशार्चनावर्जनं तद्वरं न ॥ ८४ ॥

अलं योगसंसेवनैर्विप्रबृन्दप्रतिष्ठादिपुण्यैरलं केवलं मे ।
अलं सर्ववेदानैरलं सर्वयज्ञैरलं तीर्थयात्राव्रताचारधर्मैः ॥ ८५ ॥

प्रतिष्ठाप्य लिङ्गं महाबिल्वमूले त्रिकालं महेशं समभ्यर्च्य बिल्वैः ।
न चेच्छामि वाणीपतित्वं हरित्वं महेशानपादारविन्दे शपामि ॥ ८६ ॥

क्षयद्वीरं वीरं निखिलगुणपारं भयहरं परं पारं सारं निखिलजनगुप्त्यै धृतशरम् ।
नमामीशं शश्वत् परतरगराविष्टसुगलं वरं वारं वारं श्रुतिशिखरगम्यं सुखकरम् ॥ ८७ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे चित्ररथब्रह्मादिदेवगणसंवादो नाम चतुर्थोऽध्यायः ॥

---

## ॥ पञ्चमोऽध्यायः ॥

ब्रह्मा –

तवोदारविचित्राणि चरित्राणि नृपोत्तम । त्रिनेत्रपादद्वन्द्वार्चाभक्तिसाराणि सत्तम ॥ १ ॥
द्रष्टुमभ्यागताः सभ्या वयं सेन्द्रा दिवौकसः । नारदप्रमुखाः सर्वे मुनयस्त्वयि सन्मुखाः ॥ २ ॥
षण्मुखेन समोऽसि त्वं महादेवस्त्वदुन्मुखः । त्वन्नेत्रापाङ्गसङ्गेन पापभङ्गः प्रजायते ॥ ३ ॥
अनङ्गरिपुरत्यर्थं कृपां साङ्गां करिष्यति । निःसङ्गेनापि भावेन त्वयि भावेन भावितः ॥ ४ ॥
भावनाशकरस्तुभ्यं भवस्त्वेव भवोद्भवः । किञ्च पञ्चास्यपादाब्जचञ्चरीकस्त्वमेव हि ॥ ५ ॥

मा मुञ्च तादृशीं भक्तिं भवनाशकरीं नृप । यया भक्त्या मुनिवरा वयं विष्णुमुखाः सुराः ॥ ६ ॥
अपारघोरसंसारसागरं तर्तुमिच्छवः । संसारतरणोपायः श्रीमहादेवपूजनम् ॥ ७ ॥
महादेवं समभ्यर्च्य मुच्यते भवबन्धनात् । विज्ञानं महदाप्नोति तस्य भक्त्यैव नान्यथा ॥ ८ ॥
अनभ्यर्च्य महादेवं को वा मुक्तो भविष्यति । वयं विष्ण्वादयो देवाः पशवः परिकीर्तिताः ॥
तस्मात् पशुपतिः शम्भुः काम्यकर्ममयैर्नृप । पाशैरस्मान् निबध्नाति जगदेतच्चराचरम् ॥ १० ॥
स एव भक्तिभावेन भावितः परमेश्वरः । कामकर्ममयैः पाशैर्मोचयत्येव नान्यथा ॥ ११ ॥
भक्तिरेव विरूपाक्षे भवमोक्षप्रदायिनी । भावग्राह्यो महादेवः शिवः शशिविभूषणः ॥ १२ ॥
लिङ्गेऽर्चितो बिल्वपत्रैः स्तुतः कष्टानि नाशयेत् । शिपिविष्टेष्टजनकं लिङ्गं मङ्गलदायकम् ॥ १३ ॥
शिवभक्तैः कृतां पूजां लिङ्गे गृह्णाति शङ्करः । भक्तिं च भुक्तिं मुक्तिं च ददात्येव महेश्वरः ॥
विष्णुर्महेशलिङ्गार्चां कृत्वा पालयते जगत् । मयापि सृज्यते लोको नृप लिङ्गार्चनात् सदा ॥
इन्द्रोऽप्ययं मुनिश्रेष्ठो लिङ्गसंपूजनात् सुरान् । वृत्रजम्भादिकान् हत्वा त्रिदिवं पालयत्यपि ॥
एते सर्वे दिविषदः सर्वे च मुनयोऽप्यमी । महादेवस्य लिङ्गार्चां कृत्वैवौजस्विनोऽभवन् ॥
भस्मरुद्राक्षधार्येव लिङ्गपूजाधिकारवान् । पञ्चाक्षरावर्तनेऽपि रुद्राध्यायजपेऽपि वा ॥ १८ ॥
भस्मरुद्राक्षहीनाङ्गो यो लिङ्गं सकृदर्चयेत् । कृत्वाऽपि शिवलिङ्गार्चां नरकं याति सान्वयः ॥
भस्मत्रिपुण्ड्ररुद्राक्षहीनं नेक्षति शङ्करः । भस्मरुद्राक्षधार्येव कृपापात्रं महेशितुः ॥ २० ॥
यथाम्बावदनं कृष्ण पङ्कजं वीक्षते शिवः । यथा वेतण्डशुण्डादिधृतवक्त्रं महेश्वरः ॥ २१ ॥
षण्मुखामलवक्त्रेषु नेत्रमालां महेश्वरः । स्वलोलनयनापाङ्गसङ्गिनं कुरुतेऽथ तम् ॥ २२ ॥
भस्मरुद्राक्षसंपन्नं शिवभक्तं शिवार्चकम् । तद्दत्तं बिल्वपत्रं वा नीरं वा फलमेव वा ॥ २३ ॥
भक्तवश्यो महादेवः साक्षाद्गृह्णाति भूपते । पुण्ड्रान्तरं यस्तु धृत्वा पूजयिष्यति यः शिवम् ॥
कपीटयोनिनेत्रोत्थज्वालया दाहयेच्च तम् । तं नैव पश्यतीशानः अशुचिं शुचिभाग्यथा ॥ २५ ॥
तस्मात्संपूजयेच्छम्भुं भस्म धार्यैव सन्ततम् । त्रिपुण्ड्रामलभस्माङ्कं रुद्राक्षवरधारिणम् ॥ २६ ॥
[1]श्वपचं पूजयाशु त्वं यतः शिवसमो हि सः । भस्मरुद्राक्षहीनाङ्गं द्विजं वा वेदपारगम् ॥ २७ ॥
निःसारयाशु राष्ट्रात् त्वं यतिं वेदान्तपारगम् । भस्मरुद्राक्षहीनाङ्गो यतिर्वेदान्तसंभवम् ॥ २८ ॥
नैव ज्ञानमवाप्नोति शृण्वन्नपि सदा नृप । ज्ञानदाता यतः शम्भुस्तत्कृपाहीनतो ध्रुवम् ॥ २९ ॥

१ स्वदेशे C स्वदेशं D स्वतेशं E स्वदेहमिति ।

भस्मरुद्राक्षसंपन्नं चण्डालमपि वासय । नृप किं बहुनोक्तेन शिवप्रीतिकरं त्विदम् ॥ ॥ ३० ॥
तव पूर्वभवोत्थां हि कथां वक्ष्ये नृपोत्तम । त्वं याचकवरः पूर्वं विप्रबन्धुः किलाभवः ॥ ३१ ॥
शैवदत्तमहाविद्यादग्धपातकपर्वतः । उपास्य च महाकालं क्षेत्रेऽस्मिन् मरणं गतः ॥ ३२ ॥
शांभवान्नेन पुष्टस्त्वं सदारश्च विशेषतः । भार्या त्वाऽनुममारैव पातिव्रत्यपरायणा ॥ ३३ ॥
अकृत्रिमेन भावेन त्र्यम्बकस्तोषितस्त्वया । यमोऽपि चित्रगुप्तेन मार्ष्टि त्वत्पापपत्रिकाम् । ३४॥
पूजितस्त्वं यमेनापि सुत्राम्णा वरुणेन च । तत्र भुक्त्वा सुखान्येव तस्माद्भूतलमाश्रितः ॥
महारथसुतो जातो नाम्ना चित्ररथो बली । चण्डभानुकुलश्रेष्ठः प्रचण्डतरविक्रमः ॥ ३६ ॥
त्वद्दोर्दण्डेषु कोदण्डखण्डितारातिमण्डलः । आखण्डलोऽपि साह्यं ते कांक्षते दितिजार्दितः ॥
या सा ते गृहिणी बाला नाम्ना रत्नवती नृप । तवाग्रमहिषी जाता सुतास्ते सुरथादयः ॥
एतादृशं महाभाग्यं महाकालार्चनादभूत् । महाशैवाङ्गसङ्गेन महाविद्याप्रभावतः ॥ ३९ ॥
जातिस्मरस्त्वं नृपतिः स्मरशासनपूजकः । एतच्च भासुरं जन्म भूसुरस्य विशेषतः । ४० ॥
महादेवं महाभाग्यैः संपूजयसि भूपते । अभाग्यानां न सौभाग्यपतिपूजामतिर्भवेत ॥ ४१ ॥
ये सर्वमङ्गलाकान्तं महेशं शरणं गताः ते सर्वमङ्गलाकारा भवन्त्येव पदेपदे ॥ ४२ ॥
अमङ्गलतराः सर्वे मङ्गलेशार्चनोज्झिताः । यथा महाकालगणो गणत्वं प्राप शङ्करात ॥
तथा त्वमपि भूपाल देहान्ते गणपो भव ' श्रुतीडितमहेशस्य तथा गणपतेः प्रभोः ॥ ४४ ॥
इत्थं वाणीपतेर्वाणीं श्रुत्वा चित्ररथो नृपः । उवाच प्राञ्जलिर्वाक्यं ब्रह्माणं विनयान्वितः ॥

राजा –

उत्फुल्लामलराजीवराजासनविराजित । सुरम्यवेणीवाणीश गीर्वाणगणवन्दित ॥ ४६ ॥
कोऽसौ महाकालगणो गणेशार्चनतत्परः । शिपिविष्टसद्भावो विनष्टाशुभभावनः ॥ ४७ ॥
कुले वा कस्य तज्जन्म सुजन्मा मच्छ्रुतिं गतः । का माता तस्य किं गोत्रं गोत्रभिद्राजसन्निभः ॥
वसुधाधिपतेर्वाक्यं श्रुत्वा माधुर्यवाग्गुणम् । वेधा वक्तुं समारेभे महाकालोद्भवं तदा ॥ ४९ ॥

पितामहः –

शृणु राजन् प्रवक्ष्यामि महेन्द्रसमविक्रम । अस्त्यस्मिन् वसुधापीठे कुमुदो नाम शैलकः ॥ ५० ॥
महाभूमिसरःफुल्लकुमुदाकारतां गतः । रम्यशाखिशतोपेतः शाखामृगगणाश्रयः ॥ ५१ ॥
वसन्तपुष्पितानेकशाखाच्छादितमस्तकः । सालतालतमालिलापिप्पलामलकैर्वृतः ॥ ५२ ॥
पुन्नागनागजम्बीरजम्बूनिचकदम्बकः । रसालबिल्वसरलभल्लातकविभीतकः ॥ ५३ ॥

शम्यर्जुनशिरीषादिबाहुकक्रमुकचम्पकः। मन्दारपाटलामोदकुद्दालपनसावृतः ॥ ५४ ॥
कपित्थशिंशुपालोध्रमधूकोद्दामगन्धिलः। तक्कोलाङ्कोलहिन्तालप्रियालोत्फुल्लकेतकः ॥ ५५ ॥
वादामोदुम्बराक्षोडप्रियङ्गुबदरीधवः। कुरण्टकुटजोपेतो वटोरुविटपैर्वृतः ॥ ५६ ॥
तिन्त्रिणीवकुलोपेतचन्दनामोदमोदितः। मालतीजातिककुदमल्लीवल्लीशतावृतः ॥ ५७ ॥
सुरम्यस्वच्छपानीयः कुमुदोत्पलमण्डितः। पद्मकिञ्जल्कसौरभ्यगन्धबन्धुरमारुतः ॥ ५८ ॥
गुच्छगच्छदलिव्रातस्वच्छनादाच्छकन्दरः। विपिनावनिसंचारिमयूरक्षिप्तचन्द्रकः ॥ ५९ ॥
नानापक्षिरुतापारविनादितगुहामुखः। पुंस्कोकिलनिनादैश्च केकारवविनादितः ॥ ६० ॥
वेणुकेंकारसंघर्षसमुद्भूतहुताशनः। लतागृहतमोभूतझिल्लिकागणनादितः ॥ ६१ ॥
कुथास्तीर्ण इवाभाति हरिन्मणिनिभैस्तृणैः। गोगणानन्दजननो गन्धर्वगणसेवितः ॥ ६२ ॥
मृगेन्द्रशब्दवित्रस्तगजेन्द्रकृतधावनः। उद्धूतपुच्छचमरीमृगवित्रस्तलोचनः ॥ ६३ ॥
महामहिषहुंकारविषाणारवसुन्दरः। निषण्णमहिषीस्तन्यपयोलिप्तमयोपलः ॥ ६४ ॥
क्रोडाग्रेडितमुस्ताग्रशस्तचारुशिलातलः। शललीशरसंलग्ननिर्यासितमहाद्रुमः ॥ ६५ ॥
विद्याधरमुखोद्गीतकृतमार्दङ्गिकारवः। मृदङ्गनादसंलुब्धकुरङ्गगणसंवृतः ॥ ६६ ॥
गोलाङ्गूलोत्थहुंकारप्रयातोद्विग्नपादपः। शाखामृगाक्रमच्छाखाप्रपतत्फुल्लभूवृतः ॥ ६७ ॥
तत्र वैखानसाः सिद्धाः वालखिल्या मरीचिपाः। पञ्चाग्निमध्ये निरताः फलपूर्णाम्बुभोजनाः ॥
तप्यन्ति तप अत्युग्रं शिवे संसक्तमानसाः। कृतोटजो मुनिस्तत्र उवास द्विजसंयुतः ॥ ६९ ॥
उचथ्यनामा मेधावी त्रय्यन्तज्ञानपारगः। रुद्राध्यायजपासक्तः पञ्चाक्षरपरायणः ॥ ७० ॥
शिवलिङ्गार्चनरतो भस्मरुद्राक्षभूषणः। त्रयीमार्गैकनिरतस्तृणीकृतजगत्त्रयः ॥ ७१ ॥
सोमपः सौम्यभावश्च सोमशेखरपूजकः। तस्यासीद्विनयोपेता गृहिणी पतिदेवता ॥ ७२ ॥
गार्हपत्यार्चनरता नाम्ना वसुमती सती। तस्यां तस्य समुत्पन्नस्तपसा बहुकालतः ॥ ७३ ॥
सन्मुहूर्ते शुभे ऋक्षे कुमारो मारसुन्दरः। जातमात्रे सुते तस्मिन् पुष्पवृष्टिर्नभश्च्युता ॥ ७४ ॥
अत्याहता दुन्दुभयो देवैराहननीहताः। वीणाश्च सस्वनुस्तत्र देवर्षिनखघट्टिताः ॥ ७५ ॥
देवगन्धर्वयक्षाश्च समाजग्मुर्मुनीश्वराः। ब्रह्मविष्ण्वादयो देवा उचथ्यस्योटजं प्रति ॥ ७६ ॥
स तानर्घ्योपचाराद्यैः पूजयामास भार्गवः। पुत्रजन्मप्रहृष्टात्मा धनधान्यपयस्विनीः ॥ ७७ ॥
ब्राह्मणेभ्यो ददौ विप्रो जातेष्टिप्रमुखाः क्रियाः। निरवर्तयदव्यग्रो नाम चक्रे सुरैः सह ॥

महाकालोऽयमत्यर्थं शम्भुभक्तो गणाग्रणीः । भवितेति मया चोक्तं देवैर्यातोऽस्मि धाम मे ॥
कलाधीशकला यद्वद्वर्धमाना दिने दिने । महाकालस्तथैवायमवर्धत पितुर्मुदे ॥ ८० ॥
विनयाचारसंयुक्तः कृतोपनयनस्तदा । वेदान् साङ्गान् स जग्राह श्रीरुद्रसमलङ्कृतान् ॥
पित्रा पञ्चाक्षरं दत्तं नित्यमावर्तयन् सुधीः । लब्ध्वाऽनुज्ञां महाकालस्तपसे कृतनिश्चयः ॥ ८२॥
जगाम विविधान् देशान नदीपर्वतमण्डितान । पुष्पितद्रुमसंफुल्लान् दाडिमामलकैर्वृतान् ॥
भल्लातकसमुत्फुल्लान् मातुलुङ्गान् पूगसंयुतान् । स्वर्णवर्णान् कर्णिकारान् रंभास्तम्भशतावृतान् ॥
नालिकेरेक्षुसद्द्राक्षाफलवल्लीमनोरमान् । यवगोधूमसंपूर्णान् शालिसस्यविराजितान् ॥ ८५ ॥
पश्यंस्तदा महाकालो महाकालालयं ययौ । ततश्चोज्जयिनीं प्राप वैजयन्तीपताकिकाम् ॥ ८६ ॥
स्नात्वा क्षिप्रानदीतोये भस्मरुद्राक्षभूषणः । पञ्चाक्षरं जपन्मन्त्रं पञ्चास्यध्यानपूर्वकम् ॥ ८७ ॥
महाकालार्चनपरो बिल्वपत्रादिसाधनैः । रुद्रावर्तनशीलश्च रुद्रे विन्यस्तमानसः ॥ ८८ ॥
भस्मनिष्ठो भस्मशायी भवभावसमन्वितः । पञ्चाग्निमध्यनिरतो ज्वलच्छिखिशिखावृतः ॥ ८९ ॥
प्रचण्डसूरकिरणैर्मूर्ध्नि सन्तापितस्तदा । निरालम्बोर्ध्वपादश्च कटधूमं सदा पिबन् ॥ ९० ॥
पिशङ्गितजटाभारो धूमधूम्रीकृताननः । वर्षास्वभ्रावकाशश्च हेमन्ते जलसंश्रयः ॥ ९१ ॥
सुत्रामसुखसर्वाशवित्रासनकरं तपः । चकारोङ्कारसुभगोद्गीथगाथाहृदन्तरः ॥ ९२ ॥
एवं तपस्यतस्तस्य कालो भूयानवर्तत । विघ्नजालं महाधैर्यात् स तु संजघ्निवांस्तदा ॥ ९३ ॥
[1]मोहकाराप्सरोजालं तिमिरं भास्करो यथा । निघ्नन् भगवत्पदाब्जध्यानशुद्धहृदन्तरः ॥ ९४ ॥
मारमारकबाणानां नान्तरं स ददौ तदा । वयं सब्रह्मका देवास्तत्तपोदर्शनेप्सवः ॥ ९५ ॥
तदभ्यर्णगता देवास्तूर्णं तेन प्रपूजिताः । वत्सोत्तिष्ठेति च तदा मया प्रोक्तः स बालकः ॥
वरैः [2]संछादितश्चापि न चक्रे संमतिं तदा । स मां प्रणम्य बहुशो विनयावनताननः ।
प्राञ्जलिः प्राह मां बालोऽप्यबालमतिरुत्तमः ॥ ९७ ॥

महाकालः –

पद्मासनमुखा देवा मत्सद्याद्य समागताः । महान्तो भगवन्तो हि वरं दद्युर्यदीप्सितम् ॥
भवे भवे भवे भूयाद्भक्तिरेव सदा मम । एतदेव वरं याचे नान्यत्राहं सुरोत्तमाः ॥ ९९ ॥
भवतां दर्शनेनाद्य निर्वृतोऽस्मि न संशयः ॥ १०० ॥

---

१ हेमाकाराप्सरोजालं C   २ संभावितश्चापि C   संचालितश्चापि E

इत्थं महाकालवचो निशम्य सुरा ययुः स्थानमतीव हृष्टाः ।
महेश्वरस्यामलपादपङ्कजं दृष्ट्वाऽथ तद्भक्तिमपारपुण्यजाम् ॥ १०१ ॥

तद्भक्तिदर्शनानन्दविवशास्ते सुराऽब्रुवन् । उत्कण्ठपुलकाः सन्तः सानन्दजलसंप्लुवाः ॥ १०२ ॥

सूतः –

अतिष्ठदेकपादेन दश वर्षाणि बालकः । स गृणञ्छतरुद्रीयं स्थाणुभूतः सुनिश्चलः ॥ १०३ ॥
स्थाणुध्यानपरो भूत्वा जीर्णपर्णफलाशनः । मासमेकं निराहारः स्फुटितस्नायुबन्धनः ॥ १०४ ॥
अष्टाकपालात् तच्छीर्षान्मूर्ध्नि धूमो व्यजायत । तद्धूमवान्ता देवाद्या मुनयः सासुरोरगाः ॥
महेशं शरणं जग्मुः तन्मनोऽभीष्टसिद्धये । अष्टमूर्तिं कृपाविष्टं उमाश्लिष्टार्धभागकम् ॥ १०६ ॥
प्रणम्य साञ्जलिकराः शाङ्करास्ते सुरास्तदा । तुष्टुवुर्हृष्टमनसो देवा विश्वेश्वरं शिवम् ॥ १०७ ॥

देवाः –

हर हर सुरहरपूजितपाद प्रहर महाघगिरिं कटाक्षवज्रैः ।
शमय शमनजातभीतिदुःखं छेदय पाशमयं भवैकजालम् ॥ १०८ ॥

त्रिपुरदहन दक्षध्वंसनाक्षिप्रकोणोत्थितशिखिविशिखाग्रैर्दग्धमार प्रसीद ।
[1]शिव शिव शिव शम्भो चन्द्रमौले कपर्दिन् ॥ १०९ ॥

विश्वाधिक त्रिनयन त्रिपुरान्तकारे त्रय्यन्तवेद्य त्रिदशाद्य त्रिकाग्निकाल ।
श्रीमत् त्रियम्बक त्रिलोकविलासशील लीलाकृताङ्ग त्रिगुणात्मक पाहि शम्भो ॥

भावग्राह्यस्त्वमसि भगवन् जिह्मभावैर्न लभ्यः
त्वत्तो जातं भुवनमखिलं नामरूपैर्विचित्रम् ।
सर्वं रुद्र त्वमसि भगवन् वेदवाक्यैकगम्यो
ब्रह्मण्यश्च प्रभवसि विभो ब्राह्मणार्च्यं पदं ते ॥ १११ ॥

मूकास्त्वद्गुणवर्णने भवशतेष्वद्वैतवार्तालसाः
कामान्धाः सततं सदा शिवकथां श्रोतुं तथा दुःश्रवाः ।
त्वद्ध्याने जडबुद्धयो हि सततं त्वत्पादपूजाविधौ
छिन्नाङ्घ्र्याश्रयकाः सदा शरणतः संप्रहीणाः प्रहीणाः ॥ ११२ ॥

---

१ त्रिपादयं श्लोकः E कोशे शिवशिवेति पादः उपक्रमे निविष्टः ।

सूतः –

इति सुरवचनं निशम्य शम्भुः प्रणतसुरासुरलग्नपादपद्मः ।
ओमिति देवगणैः सुखं विरेजे गिरिजादत्तकरस्तदा प्रतस्थे ॥ ११३ ॥

सुतुङ्गशितशाङ्करं समधिरुह्य देव्या शिवः सुरासुरमुनीश्वरप्रणतपादनालीककः ।
गणेश्वरमुनीश्वरैर्जयरवैर्मुदा संस्तुतः उमामुखसुपङ्कजे मुहुरपारसंवीक्षणः ॥ ११४ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे महाकालतपःप्रभाव-देवताप्रार्थनवर्णनं नाम पञ्चमोऽध्यायः ॥

---

## ॥ षष्ठोऽध्यायः ॥

देवाः –

जय जय जगदीश दीनबन्धो जय जय सर्वसुरासुराधिनाथ ।
जय जय तुहिनांशुखण्डमौले जय जय विश्वविधानबद्धदीक्ष ॥ १ ॥

जय जय पुरहर भवाब्धिपार जय जय कामहर प्रसीद शम्भो ।
जय जय दक्षमखान्तकेश देव जय जय शूलकराव्ययेश पाहि ॥ २ ॥

जय जय नीलसुकन्धराम्बिकेश जय जय गाङ्गतरङ्गशोभिमौले ।
जय जय विधिजातमुण्डमाल जय जय त्र्यम्बक सुन्दरामरेश ॥ ३ ॥

जय जय विष्णुसुपूजिताङ्घ्रिपद्म जय जय सुन्दर ताण्डवेश शम्भो ।
जय जय गणनाथनाथ देव जय जय सूर्यशशांकवह्निनेत्र ॥ ४ ॥

जय जय भूतपते भवोद्भवाद्य । जय जय कालकलादिहीन शम्भो ॥ ५ ॥

प्रसीद विश्वेश्वर वेदगीत प्रसीद देवेश दयानिधान ।
प्रसीद सर्वेश्वर विश्वनाथ प्रसीद विश्वाधिक पाहि नः सदा ॥ ६ ॥

भगवंस्तव सुन्दराङ्घ्रिपद्मं सततं ध्यायति विप्रवर्यबालः ।
तपसः स तु वार्यतां महेश यदयं मनसेहतेऽस्तु तत्तदस्य ॥ ७ ॥

तच्छ्रुत्वा देववचनं देवदेवो महेश्वरः । प्रतस्थे गणपैः सार्धं सुरैर्ब्रह्मादिभिस्तदा ॥ ८ ॥
गणवृन्दैश्च विविधैर्नानायुधधरैरपि । तरक्षुऋक्षवदनैर्मार्जारोलूकगोमुखैः ॥ ९ ॥

सिंहरासभवक्त्रैश्च शुकसर्पाश्ववक्त्रकैः । महासिन्धुरवक्त्रैश्च लुलायवदनैस्तदा ॥ १० ॥
व्यालीमुखैराखुमुखैर्गणेन्द्रैरिन्द्रहन्तृभिः । वामनैर्विकटैर्मुण्डैरकृशैः कृशवत्परैः ॥ ११ ॥
जटाजूटतटोद्भासिचन्द्रार्धकृतशेखरैः । शूलहेतिधरैः क्रूरैः शरकार्मुकधारिभिः ॥ १२ ॥
निषङ्गिभिः कवचिभिः खड्गपट्टिशपाणिभिः । निःसाणभेरीपणवदुन्दुभ्याडम्बरारवैः ॥ १३ ॥
शङ्खकाहलशब्दैश्च मुनीशजयशब्दकैः । नन्दिवेत्रायवित्रस्तदेवसङ्घैरितस्ततः ॥ १४ ॥
ददर्श भूतपः शम्भुः कृपादृष्ट्या सुरासुरान् । सकम्पांस्तान्निलिम्पाद्यान् प्रणामसुखरान् क्षितौ ॥
छत्रं शशिनिभं शम्भोर्मूर्ध्नि दध्रेऽपरेश्वरः । हंससंपूर्णपक्षाभैश्चामरैः परमेश्वरम् ॥ १६ ॥
दुधुवे तं तदा विप्राः शङ्करं पवनानलौ । व्यजनोत्थैर्वातपोतैर्वरुणस्तमवीजयत् ॥ १७ ॥
धूपपात्रकराश्चैव दधिदूर्वाक्षताकराः । माल्यमोदकहस्ताश्च तथाऽऽदर्शकरा गणाः ॥ १८ ॥
शम्भोः पुरःसराः सर्वे ययुर्गणगणास्तदा । स्वर्लोकसस्तदारण्यसुमनैर्ववृषुः शितम् ॥ १९ ॥
नारदाद्याश्च मुनयस्तुम्बुरुर्वल्लकीकरः । जगुर्नामानि पुण्यानि शङ्करस्य महात्मनः ॥ २० ॥

करनखमुखघट्टनोत्थतन्त्रीभवशब्दैर्मधुरप्रभेदबन्धैः ।
स्वरसप्तकमूर्छनाविशेषैर्मधुरं गायति रुद्रवीणया ॥ २१ ॥

नारदः –

हर हर पुरहर भवाब्धिपार स्मरहर शङ्कर तार्य पार्य वार्य ।
गरकन्धर भूधरोरुमाल धृतशूलावृतकाल बालपाल ॥ २२ ॥

शशिखण्डशिखण्डमण्डने विधिमुण्डामलहस्तमण्डले ।
धृतनागसुकुण्डलोरुगण्डे त्वयि चेतो विदधामि शङ्करे ॥ २३ ॥

साङ्गोपनिषदो वेदास्तदा तुष्टुवुरीश्वरम् ।

ऋग्वेदः –

सकलामरतुल्यमेकमीशं भगवन्तं मनुते विमूढचेताः ।
वदतीयं श्रुतिरीश बह्वृचानां मात्वरुद्रवचोगणैर्महेश ॥ २४ ॥

भवरोगहरौषधप्रधाने भिषजां नायक इत्यपि श्रुतिः ।
परमंहो गिरिरूपिणोऽपि ये वै भगवंस्त्वं हि जलापभेषजः (?) ॥ २५ ॥

यजुर्वेदः –

संसारघोरजनितां रुजमाशु चेश सद्यो विनाशय महेश कृपाम्बुराशे ।
त्वां रुद्रमाहुरखिलागमतत्त्वसाराः धीरास्त्वदीयचतुरा विनिवृत्तमाराः ॥ २६ ॥

[1]सत्वानस्तत्र हे महेश्वर महादेवेति नामामृतैः
लोकं शोकभयाग्निदग्धतृणकं सिञ्चन्ति वर्षन्ति च ।
तेभ्यश्चाकरवं प्रणाममधुना वेदोऽपि वक्ति स्वयं
त्वद्भक्तेष्वखिलेषु पाहि दयया विश्वेश सर्वस्वया ॥ २७ ॥

सामवेदः –

त्वं सामस्तोमभूमा मदुदितनमसां पातमीशस्त्वमाद्यो
वेद्यः सर्वैरभेद्यस्त्वधिपतिरिति यत्क्षेत्रमित्रादिवाक्यैः ।
अन्नानां पतिरेक एव धनपस्त्वां स्तोमगानात्मकैः
गीतैर्गायति गानलोल भगवन् सामश्रुतिः शङ्करम् ॥ २८ ॥

शम्भो शाक्वरैरैवतैश्च भगवन् वैराजमाहेन्द्रकैः
रौद्रैर्देवव्रताद्यैः प्रतिपदनमसां राशिभिः स्तोमगुम्भैः ।
त्वां स्तव्यं स्तुवते महेश्वर सदा सामश्रुतीनां गणो
राजद्राजनहिंकृतैः प्रतिपदैराद्यन्तरैर्भूत्कृतैः ॥ २९ ॥

अथर्वणः –

यो वै रुद्रेति मन्त्रैः प्रतिपदनमसां राशिभिस्त्वामतर्क्यं
तर्कादीनामगम्यं प्रणवपदहितं सूक्ष्मबुद्ध्यादि पश्यन् ।
पश्यन्त्येते यमितकरणा वाङ्मनो ज्ञानमात्मा
शान्त्या बुद्ध्या प्रसन्नस्त्वमसि हि भगवन्नन्तरायाद्विहीनः ॥ ३० ॥

अजातस्त्वं देवः श्रुतिशिखरवर्यैकवचनैः भवानीशो वक्त्रं तव च भव याम्यं भवपरम् ।
स गच्छेदत्यन्तं जनिमरणनाशाय शरणं शरण्यं शम्भुं त्वां शरणद वरेण्यं प्रभुमहो ॥ ३१ ॥

ओंकारवषट्कारौ –

देवस्त्वं नमसां पतिः श्रुतिशतैर्भीत्या नमोन्तैः पदैः
आद्यन्तोपरिधारयद्भवहरापारार्थसंसूचकम् ।
[2]स्तोमं वो छाद्यरुद्रैः श्रुतिपदतिलकैः बह्वृचैस्तैत्तिरीयैः
साम्नां देवव्रतानामखिलशिवतरो रत्नभूतस्त्वमीशः ॥ ३२ ॥

त्वामध्वरे शंसितारः स्तुवन्ति रथन्तरं सामगाश्चोपयं (गां) ति ।
अध्वर्यवः कल्पयन्ते च भागं सोमात्मकं चाध्वरेश प्रसीद ॥ ३३ ॥

---

१ स्तुत्वानस्तत्र C २ स्तोमं चोच्चाररुद्रैः C

अपर्णारमणं दृष्ट्वा सुपर्णगतिरुत्तमम् । प्राञ्जलिः श्रीमहेशानं तुष्टाव प्रणतस्तदा ॥ ३४ ॥

विष्णुः –

सोमस्त्वं जनिता जगज्जनयिता विष्णोस्तथा ब्रह्मणः
सुत्राम्णः पवनस्य वह्निजनकः पृथ्वीदिवोः शीतगोः ।
अर्यम्णो जनकस्त्वमेव भगवन् देवासुराणां पुनः
विश्वं त्वद्भवमेव सर्वमधुना वेदोऽपि वक्ति स्वयम् ॥ ३५ ॥

अग्नीषोममयं जगच्छ्रुतिगणैः सर्वत्र संपूज्यते
तस्मात्सर्वजगद्गतं च भगवन् वह्निश्च सोमात्मकम् ।
रुद्रो वा एष चाग्निः श्रुतिपदशतकैर्नाथ एकस्त्वमीड्यः
सोमश्चोमामहेश प्रकृतिपुरुषजं विश्वमेतद्विचित्रम् ॥ ३६ ॥

हंसमन्त्राक्षरगतं हंसवाहो महेश्वरम् । प्राञ्जली रुद्रमन्त्रैश्च तुष्टाव जगदीश्वरम् ॥ ३७ ॥

ब्रह्मा –

अरुणतरणिसंस्थं ताम्रमाशास्यमीशं
नीलग्रीवमुदारदिक्षु सततं रुद्रैः सदासंवृतम् ।
ज्योक् पश्येम सुचक्षुषा सुललितं विश्वेशमत्यादरात्
आगोपालघटोदचेटिभिरहो दृश्यं सदा योगिभिः ॥ ३८ ॥

वभ्रुर्वभ्रुश इत्यपि श्रुतिशतैरुच्चैस्त्वमुद्घुष्यसे
क्रूरान् क्रन्दयसे रिपून् पृतनया पत्तीश जेजीयसे ।
सत्वानस्तव [1]धीवसे सुखयितुं पापं तदीयं पुनः
निश्शेषं सहसे तमीश दयया ज्ञानेन पुष्णासि ताम् ॥ ३९ ॥

सुकुमारकुमारेण केकिकण्ठकवाहिना । संस्तुतः परमेशानस्तदा प्राञ्जलिना शिवः ॥ ४० ॥

स्कन्दः –

त्वत्तो न ओजस्वितरोऽस्ति देवः पतिः पशूनां महिमा प्रविष्टः ।
त्वल्लिङ्गसंपूजनमात्रतुष्टाः स्यामो रयीणां पतयो वयं हि ॥ ४१ ॥

त्वमात्मन् महात्मन् सुखात्मन् भवघ्नः प्रदोषे स्वदोषैकनाशेऽस्तदोषे ।
त्वदीयं महालिङ्गसङ्गं कदाचित् स मुक्तिं लभेतैव भावो विसङ्गः ॥ ४२ ॥

---

१ धावसे C. D

नदद्द्विरदवक्त्रेण शुण्डादण्डेन राजता । संस्तुतः परमेशानः प्रणतार्तिहरो हरः ॥ ४३ ॥

गणपतिः —

त्वमुग्रोऽहमव्यग्र एव त्वदीयं पदाब्जं समग्रं मदीयैः फणीन्द्रैः ।
यमोदग्रदुर्ग्राहसंग्राममग्नं न पश्यामि शश्वत् प्रपन्नः प्रपन्नः ॥ ४४ ॥

सुधामण्डलाखण्डलोद्दण्डतेजःस्फुरन्मेरुकोदण्डपाणेऽखिलाण्डम् ।
त्वदाज्ञावशं दण्डितारातिषण्डं समुच्चण्डमुण्डारिणीश प्रपन्नः ॥ ४५ ॥

पठच्छ्रीरुद्रसूक्तेन मुनिव्रातेन शङ्करः । सुमनोगणवर्षेण जयशब्देन भूरिणा ॥ ४६ ॥
संस्तुतः परमेशानश्चन्द्रार्धकृतशेखरः ॥ ४७ ॥

मुनयः —

पुरां भिदं त्वामभितः प्रणोनुमो आषाढमुग्रं सहमानमीशम् ।
जेतारमीशं न कुतोऽपराजितं धनुर्धरं हेतिधरं नताः स्मः ॥ ४८ ॥

भूरेर्दातारं सत्पतिं रुद्रसूक्तैः स्तोष्यामस्त्वां भावयुक्ता गृणीमः ।
तस्मादस्मान् रक्ष रक्षेश शम्भो ग्रामे ह्यस्मिन्नातुरं नैव भूयात् ॥ ४९ ॥

देवाः —

भगवंस्तव सुन्दराङ्घ्रिपद्मं पुरुहूतामरवृन्दसन्नुतम् ।
प्रणताः स्म पुनः पुनर्मुदा शमिताशेषदुरन्तदुःखजालम् ॥ ५० ॥

इत्थं सुराणां वचनं स्तुतिं श्रुत्वा महेश्वरः । महाकालान्तिकं प्राप घोषयन् भुवनत्रयम् ॥
भासासितदिशाचक्रः सुधांशुकिरणैः शिवः । दिवाकरशतोद्भासिसुधांशुकिरणैस्तदा ॥ ५२ ॥
महाकालाङ्गसंस्पर्शः तच्छ्रमं समुपानुदत् । शिवसन्दर्शनानन्दसंजातपुलकोद्गमः ॥ ५३ ॥
प्रणनाम स साष्टाङ्गमष्टाङ्गस्पृष्टभूतलः । हरपादाम्बुजद्वन्द्वनिर्द्वन्द्वीकृतमानसः ॥ ५४ ॥
समुत्थाय प्रहृष्टात्मा तुष्टावाष्टाकृतिं हरम् ॥ ५५ ॥

महाकालः —

हर हर दुरितानि दीनबन्धो पुरहर पाहि दयाकटाक्षलेशैः ।
मुरहरशर हारकाकोदरनद्धाभरण प्रसीद शम्भो ॥ ५६ ॥

तपनदहन पद्मजातमित्र प्रतिकृतिभूतनभूतवर्ग ।
मधुमथनाक्षिपूज्यपादपद्म प्रमथसनाथ महेश पाहि शम्भो ॥ ५७ ॥

मत्तानन्दकरीन्द्रदारणपटुं पञ्चास्यपञ्चाननं
गङ्गातुङ्गतरङ्गसङ्गतमहामौलौ पिशङ्गायितम् ।
भृङ्गासङ्गहरं कुरङ्गमङ्कविलसत्पाणिप्रभामण्डलं
तुङ्गातीरपतङ्गसोदरमहामूलस्थलिङ्गाकृतिम् ॥ ५८ ॥

हिरण्यैकशाहुं हिरण्यैकरूपं हिरण्यैकवर्णं हिरण्यादिदेवम् ।
हिरण्याख्ययोर्द्वंद्वहन्तारमीशं हिरण्याचलावासकन्यासमेतम् ॥ ५९ ॥

गम्भीरमार्गणनिषङ्गपिनाकपाणिं सोमाग्निविष्णुशरकृत्तपुरादिवर्गम् ।
क्ष्मास्यन्दनान्तरगतं शशिसूर्यचक्रं वेदाश्वसारथिविधिं रथिनां वरेण्यम् ॥ ६० ॥

नतोऽस्मीशमाद्यं सुराद्यैरपीड्यं सुगन्धिं नतोऽस्मि प्रपद्ये ह शश्वत् ।
नतोऽस्मीष्टसिद्ध्यै नतोऽस्मीश सिद्ध्यै नतोऽस्मीश भक्त्या प्रपद्ये प्रपद्ये ॥ ६१ ॥

नृत्तकृत्तकरिमस्तपदाब्ज ध्वस्तदक्षमख कृत्तिसुवासः ।
मारमारक चिरन्तनदुःखान्याशु संहर विभो दुरितानि ॥ ६२ ॥

भवोद्भव मनोन्मनीसहित दिव्यगन्धोल्लसन्मरन्दसुमशीतलस्फुरदुरुप्रकर्षाङ्कक ।
महेश्वर महाफणोच्छ्रसितभोगिभोगप्रिय प्रपञ्चरचनादर प्रवरदेव मां पालय ॥ ६३ ॥

भव भावहृदन्तगञ्जगप्रभवाभावभवस्थितिप्रद ।
गतभाव विदूर ... शम्भो भवबन्धं प्रविनाशयाशु मे ॥ ६४ ॥

भव भूतपते भवोद्भवाद्य त्वयि भक्त्या भगवन् भवाब्धिपारम् ।
भसितैर्भवपाशनाशकैः परिधूल्य क्रमशस्तरन्ति भावाः ॥ ६५ ॥

चित्तं त्रिनेत्रसुचरित्र विचित्रगाथाश्रोत्रश्रवेण निखिलं च पवित्रगात्रम् ।
वांछा न मां भजति पुत्रकलत्रमित्र सत्रातिरात्र विविधेषु मखेषु शम्भो ॥ ६६ ॥

तुरङ्गदन्त्युत्तमभूमिदानैः रत्नादिकन्यासुमहान्नदानैः ।
अर्घ्यप्रदानैरखिलैश्च धर्मैरलं महेशानपदं व्रजामि ॥ ६७ ॥

सूतः —

स्तुत्वैवं स महादेवं तेजोराशिं घृणानिधिम् । शिवं ननाम साष्टाङ्गं मुहुर्मुहुरनन्यधीः ॥

प्रणमन्तं महाकालं समुत्थाप्य महेश्वरः । पस्पर्श तस्य सर्वाङ्गं शन्तमेनाङ्कपाणिना ॥ ६९ ॥

कृशानुरेतसोत्फुल्लहस्ताब्जस्पर्शतर्पितः । तपःकृशत्वं विजहौ सुधांशुरिव निर्मलः ॥ ७० ॥

चतुर्बाहुरुदाराङ्गः पिनाकमृगसत्करः । कपर्दभारविलसच्चन्द्रार्धकृतशेखरः ॥ ७१ ॥
महाकालः सुरैर्दृष्टो द्वितीय इव शङ्करः । विभ्राजन् देवतानीकं मुनीन् विस्मापयंस्तदा ।७२॥
सुरान् प्रहर्षयन् शम्भुर्महाकालमथाब्रवीत् ॥ ७३ ॥

ईश्वरः –

महाकालानया तुष्ट्या तुष्टोऽहं त्वयि हर्षितः । गणाधिपत्यं दत्तं ते शाश्वतं तव पुत्रक ॥
शर्वाणीतनयोऽसि त्वं गीर्वाणगणवन्दितः । गजाननगुहावेतौ त्वत्पूज्यौ भ्रातरौ तव ॥ ७५॥
नन्दिकेशादयस्तेऽद्य सखायस्ते किलामलाः । महाकालमिदं लिङ्गं महाशैवसमर्चितम् ॥ ७६ ॥
महाप्रदोषवेलासु महादेवगणो भवेत् । क्षेत्रमेतत् प्रियकरं मम नित्यं गणेश्वरः ॥ ७७ ॥
अस्मान्नान्यत्र गच्छन्ति स्थानमाहात्म्यवेदिनः । इति देववचः श्रुत्वा देवा वचनमब्रुवन् ॥

देवाः –

धन्योऽयं कृतकृत्योऽयं भवत्पादार्चने रतः । गाणाधिपत्यं संप्राप त्रिदशेन्द्रसुदुर्लभम् ॥ ७९ ॥
त्वत्कृपापात्रभूतोऽयं महाकालो गणाग्रणीः । तव हस्ताम्बुजस्पर्शाद्विज्ञानतनुरास्तिकः ॥ ८० ॥
इति देवं प्रणम्येन्द्रपूर्वका विबुधाऽब्रुवन् ।

विबुधाः –

धन्यस्त्वमसि भूपाल महाकालपदाश्रयः । तव भाग्यस्य नान्तोऽस्ति शिवैकशरणः सदा ॥ ८१॥
इत्थं देवैस्तिरोधत्त महाकालेन शङ्करः । त्वं चापि गणपश्रेष्ठो भविष्यसि नृपोत्तम ॥ ८२॥
एतत् कथानकं पुण्यं महाकालगणाश्रयम् । श्रुत्वा द्विजेषु सततं भवे भक्तिं लभेन्नरः ॥

सूतः –

चित्रसेनो विचित्रार्थी त्रिनेत्रप्रियसत्कथाम् । श्रुत्वाऽथ ब्रह्मणो वक्त्राद्ववन्दे तं पितामहम् ॥
सनन्दनाद्यैर्मुनिभिस्तथाशीर्भिरन्वयोजयत् । महाकालं प्रणम्येशं गीर्वाणगणवन्दितः ॥ ८५॥
स्वं धाम हंसयानेन ययौ पद्मासनः सुरैः । महाकालार्चनाचान्ते चित्रसेनो गणोऽभवत् ॥
येनानन्तमहाध्वरैर्निविकृतैर्गोदानकन्यादिभिर्भूदानैरघहारिभिर्द्विपवरैर्दत्तैश्च यत् स्यात् फलम् ।
तेनैवाखिलघोरपातकहरां भक्तिं लभेच्छाम्भवीं धन्यः शङ्करकिङ्करः शिवमनुव्याहारमात्रादरः॥
गौरीशङ्करकिङ्करः सितलसद्भस्मत्रिपुण्ड्रोदरो रुद्राक्षाभरणः शिवैकशरणः कश्चिद्भवेद्धि कलौ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे महाकालतपो-गाणपत्यलाभ-चित्ररथभविष्याख्यानवर्णनं नाम षष्ठोऽध्यायः ॥

---

## ॥ सप्तमोऽध्यायः ॥

सूतः —

पुनः पप्रच्छ सा देवी पार्वती परमेश्वरम् । प्रपन्नानन्दजननं जगज्जनकमीश्वरम् ॥ १ ॥

पार्वती —

महादेव महानन्दकरुणामृतसागर । श्रुतमुत्तममाख्यानं महाकालगणस्य च ॥ २ ॥

किं वान्यत् प्रीतिजनकं क्षेत्रमस्ति महेश्वर । क्षेत्राणां त्वं पतिः शम्भो विशिष्टं वक्तुमर्हसि ॥

ईश्वरः —

क्षेत्रमस्त्येकमुत्कृष्टमुत्फुल्लकमलानने । ओंकारं नाम विमलं कलिकल्मषनाशनम् ॥ ४ ॥

तत्र शैववरा नित्यं निवसन्ति सहस्रशः । ते सर्वे मम लिङ्गार्चां कुर्वन्त्येव प्रतिक्षणम् । ५ ॥

मासितामासितैर्नित्यं शान्ता दान्ता जितेन्द्रियाः । रुद्राक्षवरभूषाढ्या फालाक्षन्यस्तमानसाः ॥

तत्रास्ति सरितां श्रेष्ठा लिङ्गसङ्गतरङ्गिता । नर्मदा शर्मदा नित्यं स्नानात् पानावगाहनात् ॥

पापौघसंघभङ्गाढ्या वातपोतसुशीतला । तत्रास्ति कुण्डमुत्कृष्टं ओंकाराख्यं शुचिस्मिते ॥ ८ ॥

तत्कुण्डदर्शनादेव मल्लोके निवसेच्चिरम् । तत्कुण्डोदकपानेन हृदि लिङ्गं प्रजायते ॥ ९ ॥

माताः पिबन्ति तत्कुण्डजलं शीतं विमुक्तये । तृप्तिं प्रयान्ति पितरः तत्कुण्डजलतर्पिताः ॥ १० ॥

सदा तत्कुण्डरक्षार्थं गणाः संस्थापिता मया । कुण्डधारप्रभृतयः शूलमुद्गरपाणयः ॥ ११ ॥

गजेन्द्रचर्मवसना मृगेन्द्रसमविक्रमाः । हरीन्द्रानपि ते हन्युर्गिरीन्द्रसमविग्रहाः । १२ ॥

धनुःशरकराः सर्वे जटाशोभितमस्तकाः । अग्निरित्यादिभिर्मन्त्रैर्भस्मोद्धूलितविग्रहाः ॥ १३ ॥

संग्राममुखराः सर्वे गणा मेदुरविग्रहाः । कदाचिदननुज्ञाप्य तान् गणान् मददर्पितः ॥ १४ ॥

अप्सरोभिः परिवृतो मरुतां पतिरुद्धतः । आरुह्याभ्रमुनाथं तं क्रीडितुं नर्मदाजले ॥ १५ ॥

समाजगाम त्वरितः शच्या साकं शिवे तदा । तदा तं गणपाः क्रुद्धाः सर्वे ते द्युतिमन्यवः ॥

सगजं पातयन्नब्धौ शच्या साकं सुरेश्वरम् । सुरांस्तदा सवरुणान् बिभिदुः पवनानलान् ॥ १७ ॥

निस्त्रिंशवरधाराभिः सुतीक्ष्णाग्रैः शिलीमुखैः । मुद्गरैर्बिभिदुश्चान्ये सवाहायुधभूषणान् ॥ १८ ॥

विवाहनांस्तदा देवान् स्रवद्रक्तान् स्खलत्पदान् । कान्दिशीकान् मुक्तकेशान् क्षणाच्चक्रुर्गणेश्वराः ॥

अप्सरास्ता विकवराः रुदन्त्यो मुक्तमूर्धजाः । हाहा बतेति क्रन्दन्त्यः स्रवद्रक्तार्द्रवाससः ॥ २० ॥

तथा देवगणाः सर्वे शक्राद्या भयकम्पिताः । ओंकारं तत्र तल्लिङ्गं शरणं जग्मुरीश्वरम् ॥ २१ ॥

देवाप्सरसः —

महापुण्यसङ्गं कृतानङ्गभङ्गं सगङ्गातरङ्गैः पिशङ्गं जटान्ते ।
सुचन्द्रार्धमौलिं महेशाङ्गसङ्गं महालिङ्गमोंकारमीशं प्रपन्नाः ॥ २२ ॥

विनायकसुचारुसुपूजितपदं चारुमुक्तिप्रदं विनायकगुरुं विबुधमानसान्तर्गतम् ।
विशोषितमहाम्बुधिप्रणुतमीशमाशामुखं नताः स्म शिवमोंकृतिं प्रणवलिङ्गसंस्थं शिवम् ॥

इत्थं संस्तुवतां तेषां शक्रादीनां महेश्वरः । ओंकारमूललिङ्गात् स प्रादुरासीत् कृपानिधिः ॥ २४ ॥
अनन्तसोमसूर्याग्निविद्युत्सदृशविग्रहः । पिशङ्गितजटाजूटतटचद्धार्धचन्द्रकः ॥ २५ ॥
उमावामार्धसंराजद्भोगिभोगविभूषणः । त्रिशूलोद्यत्करोल्लसडमरुध्वनिडम्बरः ॥ २६ ॥
चण्डताण्डवसन्नाहपिण्डिताखिलभूतलः । भस्मोद्धूलितसर्वाङ्गः त्रिपुण्ड्रोज्ज्वलफालकः ॥ २७ ॥
देवान् संह्लादयन् देवः शङ्करश्चन्द्रशेखरः । घनगम्भीरघोषेण वाचमूचेऽमरान् प्रति ॥

ईश्वरः —

लिङ्गमेतत् सुरश्रेष्ठा मुक्तिदं दर्शनात् सदा । ब्रह्मविष्ण्वादिविबुधैः पूजितं सर्वकामदम् ॥
अस्य लिङ्गस्य महिमा वेदैर्न ज्ञात एव हि । कृतादिषु परं लिङ्गमोंकारप्रभवं सुराः ॥ ३० ॥
लिङ्गे त्वन्तर्गता वेदाः साङ्गोपनिषदा सह । ओंकारप्लुतिरेवात्र दृश्यते न तथा श्रुतिः ॥ ३१ ॥
अत्रेतिहासं वक्ष्यामि शृण्वन्तु सुरसत्तमाः । पुरा कृतयुगे देवा दैत्या विग्रहमाश्रिताः ॥ ३२ ॥
स्वाहास्वधावषट्कारतर्पिताः पितरः सुराः । निजघ्नुरसुरानीकं सन्तप्तशरवृष्टिभिः ॥ ३३ ॥
देवैः संपीडिता दैत्याः शंखाद्याः सुमताबलाः । शुक्रं संमान्य संमंत्र्य पौरोहित्ये व्यवस्थितम् ॥
तं प्रणम्याथ ते सर्वे शंखाद्या दितिजोत्तमाः । विनयावनता भूत्वा तमाहुर्द्विजसत्तमम् ॥ ३५ ॥

दैत्याः —

संग्रामे विमुखा देवाः पुनराप्यायिता द्विजैः । स्वाहास्वधावषट्कारैः सोमाज्यहविषा सुराः ॥
आमाद्यन्ति प्रहृष्यन्ति घ्नन्त्यस्मान् पुनरेव हि । उपायं सर्वदास्माकं विजयायाद्य भार्गव ॥ ३७ ॥
इति शंखमुखोद्गीतं वाक्यं श्रुत्वा स भार्गवः । विचार्य तपसा दैत्यानिदमाह प्रहर्षयन् ॥ ३८ ॥

शुक्रः —

देवाश्च बलिनो येन यूयं हीनपराक्रमाः । देवानाप्याययन्त्येते क्रतुभिर्मुनयः सुखम् ॥ ३९ ॥
स्वाहास्वधावषट्कारास्तेऽपि देवेषु संस्थिताः । वेदान् प्रसह्य हरन्तः अर्णवान्तर्जलेशयाः ॥
वेदेष्वथ विनष्टेषु विनष्टाः सुरसत्तमाः । यज्ञभागविहीनाश्च निःस्वाध्यायवषट्कृताः ॥ ४१ ॥

यज्ञहीनं जगत् सर्वं वीरणौषधिवर्जितम्। हीनान्ना ब्राह्मणा गावो नश्यन्ते वृष्टिवर्जिताः ॥४२॥
तेषु सर्वेषु निर्यज्ञा विनंक्ष्यन्ति सुरासुराः। भवतां वशगं भूयात् त्रैलोक्यं सचराचरम् ॥ ४३ ॥
इति श्रुत्वा कवेर्वाक्यं शङ्खासुरमुखाऽसुराः। ब्रह्मलोकं तदा गत्वा मूर्तीभूतां तथा श्रुतिम् ॥
ब्रह्मपारिषदान् हत्वा जहारामरसूदनः। वेदान् साङ्गोपनिषदः पुराणागमसंयुतान् ॥ ४५ ॥
संहृत्य वेदमखिलमर्णवं प्रविवेश ह। नष्टवेदस्तथा लोको निःस्वाध्यायवषट्कृतः ॥ ४६ ॥
शक्राद्याः खेदमगमन् विवर्णवदनास्तदा। कृशानुरेता निर्धूमो धामहीनोऽतिदीनवाक् ॥ ४७ ॥
वायुरायुर्विहीनश्च चलितुं चापि न क्षमः। रुग्णः स वरुणो भीत्या वज्री जीवितवर्जितः ॥ ४८ ॥
कुबेरः कृशवेरश्च शङ्कातङ्कान्वितोऽन्तकः। मुनयः क्षुत्तृषाविष्टास्त्यक्ताचारा यथायथम् ॥ ४९ ॥
इत्येवं विद्रुते लोके यज्ञोत्सवविवर्जिते। देवास्ते नर्मदामेत्य स्नात्वा भस्मविभूषिताः ॥ ५० ॥
रुद्राक्षमालाभरणा रुद्रसूक्तजपादराः। काकोदरमहाहाराः सदाराः सुरसत्तमाः ॥ ५१ ॥
शरणं ते ययुः सर्वे वशीकृतगणेन्द्रियाः ॥ ५२ ॥

सुधामपि वुधा मुधा पितृगणाः स्वधामप्यहो विनिन्द्य जनिनाशदान् विविधकष्टधर्माधमान्।
भजन्ति शिवतत्पराः हरिणपोतगर्भाधिकस्फुरत्पुरसरिज्जटं निटिललोचनं शङ्करम् ॥ ५३ ॥

महेश्वरमुमासखं सततमन्दहासोन्मुखं चिदादिमभवत्सुखं मधुहराग्निबाणोन्मुखम्।
अनङ्गपुरभेदनक्षपितदक्षकालोन्मुखं सुशङ्खपरिपीडिता सुरगणा ययुस्ते सुखम् ॥ ५४ ॥

दृष्ट्वा लिङ्गमहोङ्कृतीश्वरसुधाकर्पूरखण्डद्रवा पारावारनिदानसारसुभगं देवाः समभ्यर्च्य च।
फुल्लैः पुष्पमरन्दसौरभगणैः नैवेद्यधूपादिभिः वाद्यैश्चन्दनवन्दनैः सुखमुखं सन्तुष्टुवुस्ते शिवम् ॥

देवाः—

कान्त्वं कारणकारणं करलसत्कल्याणभूभृद्धनुः कर्पूराभकलेवरं क्रतुपतिं कारुण्यसाराकरम्।
कामारातिमकामिनां सुकृतिनां कैवल्यदं कामदं संप्राप्ताः शरणं कलानिधिकलाराजज्जटं शङ्करम् ॥

खद्योतेन्द्वग्निनेत्रं शतमखमुखखेचारखातोत्तमाङ्गं
खर्वं खर्वादखर्वं जगति तु विदिताद्वस्तुनो खर्वगोऽपि।
खण्डेनेन्दोः कपर्दे खचितमजमुखस्तुत्यपादुप्रियेष्टं
खेदोत्खाताय प्राप्ता नखदलितककं खण्डिताखण्डलारिम् ॥ ५७ ॥

गोनेत्रं गोशयेड्यं गगनमयतनुं नित्यगोमौलिगम्यं
गोराशिं गोधिगोधिं सकलगुरुगुरुं गोजगोपालगोपम्।

गोवश्यं गोगुणाढ्यं गणगणसहितं गोधरेन्द्रासहायं
गोजाये गोजभूयं गलगिलितविषं गोभिरामिः स्तुमोऽद्य ॥ ५८ ॥

घर्मान्ते दीर्घहस्ते घृणिभिरघघृणैः घर्मघृष्टैर्घनान्ते
वार्योघैर्दीर्घदीर्घैरनिशमघघनं क्लेशयन्तो नघेन्द्राः
द्राघीयांसं तवाङ्घ्रि घुसृणसमघृणि कामघाति गृणामो
दीर्घाघ्रातान्यघौघान्यपि विमलधियः शीघ्रमेव त्यजामः ॥ ५९ ॥

चारुस्मेरमुखं चराचरविभुं चापीभवद्भूधरं
चक्षुःश्रोत्रविभूषणं चलदृशां संश्लिष्टवामाङ्गकम् ।
चित्ते चीरवसं चिदात्मकतया संचिन्त्यमानं चिरं
चेतोभूहरचक्षुषं चिरचितैः संचिन्तयामः शिवम् ॥ ६० ॥

गच्छामो बहुबिल्वसंवृतवनं तत्राच्छकुण्डे पयः
स्नास्यामोऽद्य वसन्तसूरकिरणैः सन्तप्तगात्रा वयम् ।
रुद्राक्षैः शितभस्मपूरनिकरैरुद्धूलयामस्तनुं
यास्यामोऽद्य सुनिर्वृतिं शिव महादेवेति सङ्कीर्तनैः ॥ ६१ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे ओंकारेश्वर-माहात्म्ये देवसंघस्तुतिर्नाम सप्तमोऽध्यायः ॥

---

## ॥ अष्टमोऽध्यायः ॥

सूतः —

इत्थं गीर्वाणवाणीं तां श्रुत्वा वाणीशसंस्तुतः । उवाच हर्षयन् देवान् शङ्करो लोकशङ्करः ॥ १ ॥

ईश्वरः —

स्तुत्याऽनयाद्य सुप्रीतो भवतां सुरसत्तमाः । ईप्सितं वो वदन्त्वाशु तद्दास्याम्यहमेव हि ॥ २ ॥

सदाशिववचः श्रुत्वा प्रणम्येन्द्रमुखाः सुराः । इदमूचुर्वचो हृष्टा विनयावनताननाः ॥ ३ ॥

देवाः —

भगवन् शङ्खनामाऽद्य दैत्योऽस्मान् बाधतेऽनिशम् ।
त्रिविष्टपात् च्याविताः स्मो जीवामः कष्टजीवनैः ॥ ४ ॥

ब्रह्मणः प्रसभं हित्वा वेदान् साङ्गान् महेश्वरः ।
स्वयोपदिष्टान् विश्वेश स शास्ति भुवनत्रयम् ॥ ५ ॥

निःस्वाध्यायवषट्कारो लोकः संप्रति वर्तते । यज्ञभागविहीनाः स्मो हृतस्वर्गा हृतौजसः ॥ ६ ॥

शरणं त्वां प्रपन्नाः स्मः पाहि नः शरणागतान् । पुनः प्रणम्य विश्वेशं भक्त्या तुष्टुवुरीश्वरम् ॥

देवाः —

जगदुद्भवनाशसंस्थितिप्रलयापारगभीरसागरम् ।
भगवंस्तव भक्तिभावना परपारं समुत्तर्तु ।? मिच्छतः ॥ ८ ॥

कनिष्ठं वरिष्ठं तथा ज्येष्ठमीशं गरिष्ठं वसिष्ठादिसंपूजिताङ्घ्रिम् ।
विशिष्टं सुगणां विशिष्टेषु पूज्यं नताः स्मो नताः स्मो नताः स्मो नताः स्मः ॥ ९ ॥

सूतः —

देवान् संपीडितान् ज्ञात्वा सस्मार गणनायकम् । नन्दिनं नन्दितानेकविबुधव्रजसंस्तुतम् ॥

स्मृतमात्रः शिवेनात्र प्रणतः संस्थितः पुरः । बद्धाञ्जलिकरस्तूर्णं किं करोमीति शङ्करम् ॥

सम्यक् तुष्टाव हृष्टात्मा नन्दीशो गणपाग्रणीः ॥

नन्दिकेशः —

शम्भो चन्द्रललाम सोम भगवन् विश्वेश विश्वाधिक
ब्रह्मेन्दुस्फुरदाश्रयाशनयनापारव्यथां संहर ।
श्रीमृत्युञ्जय वेदवेद्य भवतः पादारविन्दं सदा
ध्यायं ध्यायमघं हरामि सततं त्वल्लिङ्गसंपूजनात् ॥ १२ ॥

पायं ज्ञानमपायपानरहितो ध्यायं त्वदीयं पदं
हायं दुःखमशेषसंसृतिभवं त्वद्भक्तसंसेवनात् ।
त्वत्तोऽन्यामरपूजनं च भगवन् नायं ह्युपायक्रमः
कायं प्राप्य विमुक्तये हि यतते भूयस्त्वया प्रेरितः ॥ १३ ॥

नन्दिकेशमहास्तुत्या नन्दितः प्राह तं शिवः । महानन्दघनः शम्भुर्नन्दितो लिङ्गदर्शनात् ॥

ईश्वरः —

गणेन्द्र शाङ्करश्रेष्ठ गणेशैः परिवारितः । गच्छ वैकुण्ठभुवनं समानय हरिं द्रुतम् ॥ १५ ॥

देवानां कार्यसिद्ध्यर्थमाशु त्वं सुयशापते । तथेति नत्वा देवेशमोङ्कारकृतकेतनम् ॥ १६ ॥

ययौ द्रुतं विमानेन गणेन्द्रैः संस्तुतस्तदा। भस्मोद्धूलितसर्वाङ्गः शाङ्करलिङ्गार्चने रतः ॥ १७ ॥
नन्दी स नन्दयन् लोकान् जगामादौ त्रिविष्टपम्। महेन्द्रेण गणेन्द्रोऽपि पूजितो भोजितस्तदा ॥
दृष्ट्वा चानामयं शक्रं शिवपादाम्बुजार्चकम्। पप्रच्छ नन्दिकेशस्तं बृहस्पतिमते स्थितम् ॥

नन्दिकेशः —

त्रिविष्टपं सुखं प्राप्य शिपिविष्टार्चने रतः। दुरदृष्टविनाशाय प्रकृष्टं शरणं गतः ॥ २० ॥
नन्दिकेशवचः श्रुत्वा महेन्द्रः प्राह साञ्जलिः ॥ २१ ॥

शक्रः —

शङ्खासुरेण देवानां महद्भयमुपस्थितम्। नन्दिन् अप्सरसां पूर्वं रम्भासंभोगकामिनाम् ॥ २२ ॥
चन्दनाङ्केन च मया नन्दनादिसमावृतः। सुप्ततल्पगतश्चाहं मारसायकगोचरः ॥ २३ ॥

नाभ्यर्च्यं भगवत्पदाम्बुजमहो पुण्यप्रदोषेष्वहं
लिङ्गं पुण्यपवित्रशीतलमहाकर्पूरनीरैस्तदा।
प्राज्यैर्मध्वाज्यदुग्धैर्वरदधिसितया चन्दनाद्यैश्च हृद्यैः
नैवेद्यैर्बहुबिल्वपल्लवसुमैस्तेनेदृशी दुर्गतिः ॥ २४ ॥

संप्राप्तोऽस्मि सुरासुरैश्च विहिते नैवाभवन्मे जयो युद्धे शौण्डसुदृप्तशङ्खसचिवैः सन्ताडितो दुर्द्धरैः।
देवैर्वाहनभूषणादिरहितैर्नष्टं मया त्रिष्टपं कष्टं प्राप्तमहो गणेन्द्र भगवत्पादार्चनाहीनतः ॥ २५ ॥

दुःखमिन्द्रस्य तत् श्रुत्वा नन्दिकेशोऽमराधिपम्। प्राह तं विनयोपेतं प्रदोषार्चनवैभवम् ॥ २६ ॥

नन्दिकेशः —

दारिद्र्यार्णवमध्यगस्त्वनुदिनं पुण्यप्रदोषे शिवं संपूज्यामलबिल्वपल्लवलवैर्नीरैः फलैर्वा हरे।
संप्राप्य प्रमथाधिनाथपदवीं भूमौ परं जायते दृप्तोत्तुङ्गतुरङ्गदन्तिनिवहैर्भूमण्डलेशो नृपः ॥

अतः परं भूतिविभूषणस्त्वं लिङ्गं समभ्यर्च्य सुरैः समेतः।
पुण्यप्रदोषेषु जयाय वज्रिन् प्राप्नोषि भाग्यान्यमितानि तानि ॥ २८ ॥

इत्युक्त्वा नन्दिकेशस्तमनुज्ञाप्य गणैर्वृतः। विमानेनार्कवर्णेन ब्रह्मधाम समाययौ ॥ २९ ॥
ब्रह्मणा पूजितस्तत्र निषण्णः परमासने। उवाच देवं ब्रह्माणं नन्दिकेशो गणाग्रणीः ॥ ३० ॥

नन्दिकेशः —

पद्मासन कथं चित्तमधुना भवतः सदा। देवानां कार्यसिद्ध्यर्थं स्मारितः शङ्करेण हि ॥ ३१ ॥
विष्णुरोजिष्णुरत्यर्थं तस्माद्गच्छामि वेगतः। दीनोऽसि नितरां ब्रह्मन् सृष्टिव्यापारवर्जितः ॥

सदस्यैश्चापि खिन्नैश्च यथापूर्वं न ते सभा । इति पृष्टो गणेशेन उवाच चतुराननः ॥ ३३ ॥

ब्रह्मा —

पूर्वं तपस्यया लब्धा मया वेदाः प्रसादतः । महादेवस्य वै नन्दिन् पूर्वमीशानवक्त्रतः ॥ ३४ ॥

यो वेदादिः स्वरः शंभुः वेदान्तमहिमा शिवः ।
मान्द्यान्मदाच्च तत्पूजा मया त्यक्ता दुरात्मना ॥ ३५ ॥

शङ्खासुरेण मे वेदा हृता नष्टा स्मृतिस्तदा ।
इतिकर्तव्यतामूढश्चिन्तया संस्थितोऽस्म्यहम् ॥ ३६ ॥

शाङ्काङ्कसङ्गतश्चाद्य शैलादे मेऽभवन्मतिः । महादेवमहालिङ्गपूजाध्यानार्चनादिषु ॥ ३७ ॥

विस्मयं परमं गत्वा श्रुत्वा च ब्रह्मणो वचः । उवाच पद्मजं नन्दी ससदस्यं प्रहृष्टवत् ॥ ३८ ॥

नन्दिकेशः —

भवान् लोकनियन्ता हि कथं त्वां मोह आविशत् ।
महान्तोऽपि विमुह्यन्ति कालकालकृपोज्झिताः ॥ ३९ ॥

धन्यानां परमिन्दुचूडचरणांभोजार्चने जायते श्रीरुद्राक्षविभूषणे सितलसद्भस्मत्रिपुण्ड्रे सदा ।
रुद्रावर्तनपञ्चपातकहरे पञ्चाक्षरे मुक्तिदे सायं बिल्वदलैश्च पूजनमतिः पुण्यैः परं जायते ॥४०॥

यो वा प्रदोषसमये शिवलिङ्गपूजां कर्तुं यतेत विभवैरभिषेचनीयैः ।
तं तावदन्तकरिपुं प्रमथाधिनाथं देवाः स्तुवन्ति प्रणमन्ति तदङ्घ्रियुग्मम् ॥ ४१ ॥

न जानन्ति गौरीसहायोरुगायं महायोगसंसिद्धकायं सखायम् ।
कर्पूरखण्डसमताकृतिशोभिकायं वन्दे महेश्वरमहं तमुमासहायम् ॥ ४२ ॥

ब्रह्माणं समनुज्ञाप्य ययौ श्रीनन्दिकेश्वरः । ततो गणेश्वरैर्युक्तो वैकुण्ठं भवनं ययौ ॥ ४३ ॥

विष्वक्सेनादिभिस्तत्र वैष्णवैः शोभितैर्गणैः । स तैर्निवेदितो विष्णुः सार्घ्यहस्तस्तदुन्मुखः ॥

समाययौ बहिर्द्रष्टुं नन्दीश्वरमुखान् गणान् । ददर्श च विमानाग्रे स्थितं नन्दीश्वरं गणैः ॥

शैलादिं तमुदाराङ्गं द्वितीयमिव शङ्करम् ॥

विजितविपिनवातपोतपूतान् गगनाभोगविचारचारुसिद्धान् ।
भवदरुणनखप्रभाभिदीप्तान् शिवभक्तान् ददृशे स वासुदेवः ॥ ४६ ॥

प्रणम्य कुशलप्रश्नैः पूजयामास नन्दिनम् । भोजयामास शुद्धान्नैः महेश्वरनिवेदितैः ॥ ४७ ॥

समभ्यर्च्य महालिङ्गं इन्द्रनीलमयं हरिः । बिल्वपत्रैर्धूपदीपैर्नन्दिकेशेन संयुतः ॥ ४८ ॥
गणाश्चक्रुर्लिङ्गपूजां स्वेषु लिङ्गेषु सत्तमाः । बुभुजुस्ते परं हृष्टाः विष्णुना गणपास्तदा ॥ ४९ ॥
सोत्साहं नन्दिनं विष्णुः सोपचारमथाब्रवीत् । गन्धधूपादिभिः पुष्पैर्वस्त्राभरणैस्तदा ॥ ५० ॥

विष्णुः —

भवद्भद्रमन्दर्शनं जातमद्य फलं प्राप्तमक्ष्णोर्महाघप्रणाशः ।
महाशैवसङ्गेन शम्भुः प्रसन्नो भवत्येव मह्यं नमस्ते गणेश ॥ ५१ ॥

किमागमनकृत्यं ते नन्दिकेशाशु संवद । भवदागमने हेतुस्तत्तुष्ट्यै कारणं भवेत् ॥ ५२ ॥
अनङ्गरिपुरत्यर्थं मयि तुष्टो न संशयः । तत्कृपापात्रभूतस्य मम श्रीः सुयशापते ॥ ५३ ॥
मद्गृहे मङ्गलान्येव भवन्त्येव पदे पदे । चञ्चलापि सदा लक्ष्मीः स्थिरा मयि शिवार्चनात् ॥
नन्दिकेशस्तथाहेदं श्रुत्वा तद्वैष्णवं वचः ।

नन्दिकेशः —

रमापते महेशस्य कृपा पूर्णा त्वयि स्थिरा । शिवाज्ञापालकोऽसि त्वं यतः शिवपदाश्रयः ॥ ५५ ॥
शिवलिङ्गार्चनपरो भस्मरुद्राक्षमण्डितः । रुद्राक्षधारकोऽसि त्वं पञ्चाक्षरपरायणः ॥ ५६ ॥
नीलतोयदमध्यस्थविद्युल्लेखेव भासुरा । त्रिपुण्ड्ररेखा देहे ते भाति पापविनाशिनी ॥ ५७ ॥
त्वयि प्रीतो महादेवो जगतां पालने रत । देवानां कार्यसिद्ध्यर्थं आजुहावामरोत्तमः ॥ ५८ ॥
निर्याहि देवदेवेशं द्रष्टुं तं शशिशेखरम् । शैलादिनो वचः श्रुत्वा समारुह्य खगाधिपम् ॥ ५९ ॥
नन्दिना स जगामाथ द्रष्टुं देवं पिनाकिनम् । अवतीर्य खगाद्विष्णुर्विमानाच्च गणेश्वरः ॥
स्नात्वाऽथ नर्मदातोये भस्मरुद्राक्षभूषणाः । दृष्ट्वोंकारमहालिङ्गमष्टाङ्गस्पृष्टभूतलाः ॥ ६१ ॥
प्रणेमुः प्रमथाधीशं तुष्टुवुश्च मुहुस्तदा ॥ ६२ ॥

गणेश्वराः —

भयङ्कर महेश्वर प्रबलपापतापं हर गरादर गिरीन्द्रजाकुचगिरौ विहारादर ।
गदाधरमुखामरप्रवरधीरवीरेश्वर प्रसीद परमेश्वर जनिजरादिमृत्युं हर ॥ ६३ ॥

समागतोऽयं विश्वेश विष्णुर्विश्वैकपालकः । देवानां कार्यसिद्ध्यर्थमाज्ञापय महेश्वर ॥ ६४ ॥
नन्दिकेशगणानां च श्रुत्वा वाक्यं महेश्वरः । सुधार्द्रकरुणादृष्ट्या फालाक्षो विष्णुमैक्षत ॥
तदाऽनङ्गहरापाङ्गसङ्गानन्दाङ्गसङ्गकः । तुष्टाव प्रणतः शम्भुमोङ्कारेशं महेश्वरम् ॥ ६६ ॥

विष्णुः —

अपर्णानाथं त्वां शरणद सुराणामभयदं सुपर्णाधीशाद्यैः सुरगणगणेन्द्रैर्नतपदम् ।
गरं गीर्णं कण्ठे भवहर महत्यर्णवगतं परं शम्भो तूर्णं भवभयहराभ्यर्णगतिकम् ॥ ६७ ॥

मारमार सुकुमार पितस्त्वं वारयाशु भवजालकपाशम् ।
पाहि पाहि परमेश ममाघं नाशयाशु दुरदृष्टकष्टजम् ॥ ६८ ॥

नन्दिविष्णुप्रभृतिभिः संस्तुतः परमेश्वरः । प्राह प्रगल्भया वाचा तं मुरारिं पुरौघभित् ॥ ६९ ॥

ईश्वरः —

शङ्खाद्या दितिजा विष्णो हृत्वा वेदगणान् सुरान् । बाधन्ते सततं दैत्या अर्णवान्तर्जलेशयाः ॥
मत्तेजसा पूरितस्त्वं याहि युद्धाय वै हरे । जयस्ते भविता नूनं मयि वेदानधाः पुनः ॥ ७१ ॥
मात्स्यं कृत्वा महद्रूपमर्णवान्तर्जलेशयः । दशवर्षसहस्राणि शतयोजनमुन्नतः ॥ ७२ ॥
भविष्ये चाक्षुषे विष्णो मनौ कालान्तरे पुनः । हिरण्याक्षो हि भविता स एव कशिपुः पुनः ॥
भविता दितिजेन्द्राद्यः शक्रं वा च्यावयिष्यति । स्थानात् सुरगणैः सार्धं तस्य युद्धं भविष्यति ॥
भूत्वा यज्ञवराहस्त्वं हिरण्याक्षं हनिष्यसि । हिरण्यकशिपुं चापि मृगेन्द्रार्धशरीरभाक् ॥ ७५ ॥
भूत्वा खरोग्रनखरैर्नखैस्तं दारयिष्यसि । दितिजाङ्गमहासक्तविसंज्ञस्त्वं भविष्यसि ॥ ७६ ॥
तद्रक्तपानमत्तस्त्वं जगत् संशोषयिष्यसि । तदा हरे जगद्रक्षाशिक्षार्थं त्वां सुरोत्तम ॥ ७७ ॥
मत्स्यवाराहसिंहार्धशरीरं संहराम्यहम् । त्वद्दंष्ट्रां धारयिष्यामि सिंहचर्माम्बरं पुनः ॥ ७८ ॥
शारभं रूपमास्थाय तवोन्माददनिवृत्तये । मत्पादपूजकेनाद्य भृगुणा शापितो ह्यसि ॥ ७९ ॥
तत्पत्नीनाशदुःखेन तस्मान्तस्ते भविष्यति । इत्थं शम्भोर्वचः श्रुत्वा विष्णुर्नत्वा महेश्वरम् ॥
जगामार्णवमुद्दिश्य देवसङ्घैरभिष्टुतः ॥ ८१ ॥

अर्णवगतदैत्यजातभीत्या फलपर्णाशनिनोऽभवन् सुधान्धसः ।
उत्कृष्टार्तिहरं भजन्ति तूर्णं तमपर्णापतिमेकमीशमाद्यम् ॥ ८२ ॥

मात्स्यं कृत्वा महारूपं स्फुलिङ्गोत्तमलोचनः । दशयोजनमौन्नत्यं शतयोजनमायतम् ॥ ८३ ॥
दंष्ट्राकरालपुच्छाग्रविघट्टितमहागिरिम् । तरङ्गोत्थमहावातघोरारावकृतार्णवम् ॥ ८४ ॥
फेनडिण्डिमसंराजत्तरङ्गास्फालघट्टितम् । तेनासुरेण महता तथान्यैर्दानवोत्तमैः ॥ ८५ ॥
दशवर्षसहस्राणि युद्धमुत्तममातनोत् । वक्रपुच्छाग्रनिर्घातैः दंष्ट्राघातैस्तदासुरान् ॥ ८६ ॥
हत्वा शङ्खं महादैत्यं देवसङ्घैरभिष्टुतः । जगामादाय तान् वेदान् शिवतेजोपबृंहितः ॥ ८७ ॥

तच्छरीरं महामात्स्यं कैरातवपुषा हरः । विसंज्ञं पातयामास तद्गर्वविनिवृत्तये ॥ ८८ ॥
मत्स्याघातमभूत् तीर्थं पश्चिमाम्भोधिमध्यगम् । तत्र स्नात्वाऽथ सन्तर्प्य पितॄन् पूयेत मानवः ॥
ददौ वेदान् महेशाय वेदवेद्याय वै हरिः ; प्रणम्य देवं देवेशं जगाम स्वं निकेतनम् ॥ ९० ॥
ओङ्कारेश्वरलिङ्गमध्यविलसद्वेदांस्तदा ते सुरा दृष्ट्वा चोंकृतिमात्ररूपमनिशं सर्वे तदा विस्मिताः ।
स्तुत्वा स्तव्यमपारवेदशिखरैरुद्बुद्धबोधप्रदं तं सांबं मुहुराद्यहृद्यवचसा धाम स्वकं ते ययुः ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे ओङ्कारेश्वरमाहात्म्यवर्णनं नाम अष्टमोऽध्यायः ॥

---

## ॥ नवमोऽध्यायः ॥

ईश्वरः –

एवं चिरगते काले सोमभागविवर्जिताः । ओंकारेशं महालिङ्गं जग्मुः शरणमीश्वरम् ॥ १ ॥
प्रणम्य तुष्टुवुर्हृष्टास्त्रिविष्टपनिवासिनः ॥ २ ॥

देवाः –

भो शम्भो मरुतां पितस्तव कथापीयूषपानैर्वयं
जीवामोऽद्य सुचातको हि तृषितो मेघोत्थपाथोलवैः ।
यद्वत् तद्वदुमासहाय भगवन् गौरो यथा तर्पितः
सोमं चापि महाध्वरेषु सततं पीत्वा सुरैस्तृप्यसि ॥ ३ ॥

क्षुत्क्षान्ता भगवंस्त्रिविष्टपगताः सत्राशिनः सर्वदा
वेदोत्थाः सकलाः क्रियाश्च भगवन् पूर्वं त्वया कल्पिताः ।
वेदास्त्वय्यखिला ददस्व विषये वेदान्मखादिक्रियाः
सर्वा विप्रगणेषु चाद्य वितता भूयात् सवो नो मुदे ॥ ४ ॥

इति सुरवचनं निशम्य शम्भुर्मुदितमनाः समुवाच हर्षवर्षम् ।
प्रददत विधिना समागताः स्थ त्रिदशवराः श्रुतिजालमेतदस्मै ॥ ५ ॥

प्रदिशामि शशाय भूयसे वस्तमुपास्यैव सदानुगच्छत ।
भागः स वो दिशति मद्वचनात्सुरेन्द्राः संप्रोचिवान् निखिलसुरासुरेन्द्रवन्द्यः ॥

शङ्कराज्ञानुसारेण [[1]जग्मुः शक्रादयस्ततः । सुरा ब्रह्माणमासाद्य प्रणम्याभिप्रसाद्य च ॥ ७ ॥
खिन्नास्त्रिविष्टपं प्राप्य भागहीनाः सुधान्धसः । ततः प्राञ्जलयः सर्वे] शक्राद्याः पङ्कजासनम् ॥
इदमूचुस्तदा देवाः कृशाङ्गस्नायुबन्धनाः ॥ ८ ॥

देवाः –

हृता वेदाः पुरा दैत्यैः शिवाज्ञाकारिणा पुनः । हरिणा संहृता ब्रह्मन् पुनर्लीना महेश्वरे ॥ ९ ॥
वेदहीनेषु विप्रेषु न यज्ञः संप्रवर्तते । यज्ञैर्विहीने भूलोके नास्माकं दृश्यते हविः ॥ १० ॥
क्षुधाविष्टा वयं सर्वे त्रिविष्टपगता अपि । क्षुधाप्रशमनोपायः शीघ्रमत्र विधीयताम् ॥ ११ ॥
इति गीर्वाणवृन्दानां श्रुत्वा वाक्यं पितामहः । ध्यात्वा चिरं तदा देवानिदमाहाब्जजः सुरान् ॥

पितामहः –

प्रसाद्य परमेशानमोङ्कारेश्वरमव्ययम् । तप्त्वा भगवतो वेदान् प्राप्स्यामीति मतिर्मम ॥ १३ ॥
वेदाद्यज्ञाः प्रवर्तन्ते पठन्ति द्विजपुङ्गवाः । भवन्तो भागभाजः स्युर्गच्छध्वं त्रिदिवं पुनः ॥
इत्युक्तास्त्रिदशाः सर्वे तदा त्रिदिवमागताः । कालेन कियता वेधास्तप्त्वाऽथ परमं तपः ॥
वेधा विधिं समास्थाय ओङ्कारं प्राप तत्क्षणात् । शर्मदां नर्मदां प्राप्य स्नात्वा तत्र जितेन्द्रियः ॥
भस्मोद्धूलनपुण्ड्राङ्को रुद्राक्षस्रग्भिरुज्ज्वलः । जपन् पञ्चाक्षरं मन्त्रं शिवमोङ्कारमीश्वरम् ॥ १७ ॥
समभ्यर्च्याथ बिल्वाद्यैः सोपचारैरनेकशः । तदग्रे संस्थितो विप्राः पञ्चाग्निषु स पद्मभूः ॥ १८ ॥
प्रजपन् शतरुद्रीयं भस्मच्छन्नो जितासनः । वर्षमेकं निराहारो वायुपर्णाम्बुभोजनः ॥ १९ ॥
दशवत्सरपर्यन्तमहोरात्रं तपश्चरन् । ओंकारलिङ्गनिलयं ध्यायन् देवं त्रियम्बकम् ॥ २० ॥
एवं तपस्यतस्तस्य प्रादुर्भूतोऽम्बिकापतिः । ओंकारलिङ्गमध्यात् स शशिशेखर ईश्वरः ॥ २१ ॥
नीलकण्ठो विरूपाक्षः शूलोद्यतमहाकरः । गङ्गातुङ्गतरङ्गौघशीतक्लिन्नकपर्दकः ॥ २२ ॥
अष्टमीचन्द्रसङ्काशकपालविलसत्करः । देव्या स्कन्देन हेरंबनन्द्यादिगणपैर्वृतः ॥ २३ ॥
सूर्यकोटिप्रतीकाशश्चन्द्रकोटिसुशीतलः । तादृशं देवदेवेशं दृष्ट्वा हृष्टोऽब्जजः शिवम् ॥ २४ ॥
प्रणम्य परया भक्त्या तुष्टाव जगदीश्वरम् । २५ ॥

ब्रह्मा –

शम्भो शङ्कर शान्त शाश्वत शिव स्थाणो भवोमापते
भूतेश त्रिपुरान्तक त्रिनयन श्रीकण्ठ कालान्तक ।

---

१ कोष्ठान्तर्गतः पाठः D कोशे नोपलभ्यते ।

शर्वोग्राभय भर्ग भीम जगतां नाथाक्षय श्रीनिधे
रुद्रेशान महेश्वरेश्वर महादेवेश तुभ्यं नमः ॥ २६ ॥

तुङ्गलिङ्गनिलयामल शम्भो बिल्वहारपरिशोभिगलेश ।
पाहि सोन्मथितमन्मथदक्ष पाहि मामखिलदुःखसमूहात् ॥ २७ ॥

त्वं कल्मलीकि(?) श्रुतिजातकीर्तिः विनाशयाघौघभरं ममाद्य ।
पतिः पशूनामथ चेतनानां नित्योऽसि विश्वाधिक विश्वमूर्ते ॥ २८ ॥

इति स्तुवन्तं ब्रह्माणं प्राह देवो महेश्वरः । देव्या दत्तकरः शम्भुर्गणपङ्क्तैस्तदा वृतः ॥ २९ ॥

शिवः —

पङ्कजासन त्वद्भक्त्या स्तुत्या त्वत्कृतयाऽनया । तुष्टोऽहमिष्टं ते भूयात् वरं वरय सुव्रत ॥३०॥

इत्थं शङ्करवाक्यान्ते प्राञ्जलिः प्राह पद्मभूः ।

वेधाः —

दृष्टमिष्टं मया शम्भो कष्टहारि पदं तव । मत्तो धन्यतरः को वा सुरेषु परमेश्वर ॥ ३१ ॥
किञ्चाद्य सुरकार्यार्थं विज्ञाप्यं श्रूयतां मम । यदा शङ्खासुरहृता वेदा देवशिखामणे ॥ ३२ ॥
[1]त्वयाऽऽज्ञप्तो हि मुरभिद्धत्वा तमसुरोत्तमम् । तथाऽन्यान् दृप्तदैतेयान् तदा तत्प्राप्तवान् श्रुतीः ॥
वेदहीनं जगत्सर्वं निःस्वाध्यायवषट्कृतम् । द्विजाध्ययनहीनाश्च हीनयज्ञा महेश्वर ॥ ३४ ॥
यज्ञहीने तथा लोके वृष्टिहीनाऽभवन्मही । निरोषधिरसा पृथ्वी गावश्चौषधवर्जिताः ॥ ३५ ॥
देवा भागविहीनाश्च कष्टं निष्टपमाश्रिताः । वेदमूलं जगच्छम्भो वेदान् मे दातुमर्हसि ॥ ३६ ॥
वेदवेद्य महादेव वेदान्तेषु प्रतिष्ठित । ब्रह्माणं प्राञ्जलिं शम्भुरवोचद्ब्रह्मणस्पतिः ॥ ३७ ॥

ईश्वरः —

ओंकारकुण्डे संस्नाहि तपसा श्रमकर्शितः । कुण्डं लिङ्गालयं तद्धि पवित्रं पापनाशनम् ॥ ३८ ॥
तल्लिङ्गशतकं नित्यं मासमात्रं समर्चय । बिल्वपत्रैः पङ्कजैश्च रेवानीरैः सुशीतलैः ॥ ३९ ॥
वेदशाखामरतरुस्तदा प्राप्तो भविष्यति । अत्रेतिहासं ते वक्ष्ये भविष्यत् पङ्कजासन ॥ ४० ॥
बलिपुत्रो बाणनामा भविष्यति महासुरः । सहस्रभुजदोर्दण्डश्चण्डविक्रममण्डितः ॥ ४१ ॥
आखण्डलादिविबुधान् संग्रामे विजयिष्यति । नित्यं मत्पादपूजायां निरतः स भविष्यति ॥
सहस्रलिङ्गानि सदा बाणः पूजयिता ध्रुवम् । तत्पूजयाऽहं सन्तुष्टो गाणपत्यं दिशामि च ॥

१ D कोशेऽज्ञानान्मातृकापाठः उल्लिखितः ?

मत्पूजाऽखर्वगर्वेण यदा लोकान् प्रबाधते । तदा तदसुरश्रेष्ठगर्वनिर्वापणाय हि ॥ ४४ ॥
अन्येषां दैत्यवर्गाणां विनाशाय मदाज्ञया । जनिष्यति तदा विष्णुर्नरनारायणात्मकः ॥ ४५ ॥
स विष्णुर्मासमभ्यर्च्य संहरिष्यति तानपि । मत्तो लब्धवरो दृप्तस्तेन संग्राममूर्धनि ॥ ४६ ॥
तद्बाहुजालं भिन्नं च भविष्यति चतुर्मुख । कृष्णेनाजिमुखे ब्रह्मंस्तद्भक्त्याऽहं वशीकृतः ॥ ४७ ॥
बाणं च बाणपश्रेष्ठं रक्षिष्यामि प्रजापते । भक्तयोर्मम युद्धे च अहं भूयां पराङ्मुखः ॥ ४८ ॥
को वा मां जेतुमिच्छेद्धि मम भक्तान् विनाऽब्जज । श्रुतयो मां वदन्तीशं जेतारमपराजितम् ॥
नरः पार्थ इति ख्यातः पाण्डुपुत्रो भविष्यति । तेनापि भविता युद्धं कौतुकान्मे चतुर्मुख ॥ ५० ॥
तदस्त्रजालं खड्ग च विश्वग्रासो ग्रसाम्यहम् । मदुत्तमाङ्गे तस्यैव प्रहारं धारयाम्यहम् ॥ ५१ ॥
तद्भक्तितोषितश्चाहं तन्नामख्यापनाय हि । ओङ्कारलिङ्गेषु सदा बाणः संपूजयिष्यति ॥ ५२ ॥
बाणेन पूजितं यस्मात् बाणलिङ्गं च पप्रथे । बाणलिङ्गकिणं ब्रह्मन् पार्थप्रहरणाङ्कितम् ॥ ५३ ॥
तादृशे मम भक्तेन पत्रं पुष्पं फलं विधे । दत्तं गृह्णामि तन्मूर्ध्ना तत्तुष्टचै मे भविष्यति ॥ ५४ ॥

ओङ्कारकुण्डोत्तमलिङ्गपूजां कुर्वन् सदा बिल्वदलैश्च नीरैः ।
सहस्रमृल्लिङ्गसमर्चनोत्थपुण्यं लभेन्मुक्तिमुपैति शाश्वतीम् ॥ ५५ ॥

त्रिपुण्ड्ररुद्राक्षविभूतिभासुरो यो बाणलिङ्गं मम बिल्वमूले ।
रुद्रं जपन्नीरसुधारया शिवं सिञ्चन्नरो बिल्वदलैः समर्च्य ॥ ५६ ॥

मुक्तो भवेदेव स पुण्यभाक् सदा गुह्यं वदाम्यद्य शृणु प्रजापते ।
पार्थप्रहारोत्तमबाणलिङ्गं लिङ्गं विजानीहि तदुत्तमं मे ॥ ५७ ॥

ओमित्युक्त्वा महादेवं ब्रह्मा सुरगणाधिपः । स्नात्वा तत्कुण्डसुजलैः कार्तिकेषु विशेषतः ॥
तल्लिङ्गशतकं नित्यं पूजयामास भक्तितः । भस्मरुद्राक्षभूषाढ्यो रुद्रसूक्तजपादरः ॥ ५९ ॥
सादरः शिवपूजायां रुद्रविन्यस्तमानसः । मासान्ते शङ्करं ब्रह्मा सदाशिवमुदैक्षत ॥ ६० ॥
भक्त्यानन्दाश्रुपुलकः पाहि पाहीति संवदन् । प्रणनाम महादेवपदपङ्कजमादरात् ॥ ६१ ॥
साञ्जलिर्देवदेवेशं तुष्टाव गिरिजासखम् ॥ ६२ ॥

ब्रह्मा —

श्रीबाणलिङ्गनिलयामलभूतिभूष विश्वेश विश्व मदनान्तक विश्ववन्द्य ।
शम्भो सदाशिव सचन्दनबिल्वमौले पाहि प्रसीद परमेश्वर पञ्चवक्त्र ॥ ६३ ॥

विश्वाधिक प्रमथनाथ सुरासुरेड्य सोमाग्निविष्णुशरकच्चपुरारिवर्ग ।
त्र्यन्तवेद्य विधिविष्णुविमृग्यमौलिपादारविन्द परमेश्वर पाहि दीनम् ॥ ६४ ॥

एवं स्तुवन्तं ब्रह्माणं प्रणतं भुवि दण्डवत् । उत्थाप्य दोर्भ्यां च तदा शशिशेखर ईश्वरः ॥ ६५ ॥
प्राह प्रगल्भवचनैः सुधाधिकारिभिः शिवः ॥ ६६ ॥

ईश्वरः —

उत्तिष्ठोत्तिष्ठ माभैषीः वेदास्ते प्रतिभान्त्वमी । सरहस्योपनिषदः साङ्गोपाङ्गपुराणकाः ॥ ६७ ॥
सागमाः सोपवेदाश्च याश्च विद्याः सहस्रशः । भाष्याणि सर्वशास्त्राणि गान्धर्वादीनि सत्तम ॥
उपाख्यानानि ते ब्रह्मन् ओंकारः श्रुतिशेखरः । उद्गीथगाथासुभगो मया दत्तः प्रजापते ॥ ६९ ॥
समुत्तस्थुस्तदा वेदाः ऋग्यजुःसामाथर्वकाः । प्रणम्य देवमोङ्कारं तुष्टुवुः प्रमथाधिपम् ॥ ७० ॥

वेदाः —

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं नताः स्म वै ॥ ७१ ॥

ऋचो अक्षरे परमे त्वा महेशं मल्लिङ्गमाकाशसधर्मकं विभुम् ।
त्वां यो न वेद किमृचा करिष्यति साम्नाथवा यजुषाथर्वणैर्वा ॥ ७२ ॥

शिवो वेदस्तुतिं श्रुत्वा वेदांस्तस्मै ददौ मुदा । प्रणतं चाब्रवीद्देवो ब्रह्माणं विनयान्वितम् ॥

ईश्वरः —

वेदजालं निसृष्टं ते मया पङ्कजसंभव । सुराणां यज्ञभागार्थं लोकशिक्षार्थमेव च ॥ ७४ ॥
गच्छ लोकं सुरैः सार्धं वस मद्भक्तिमावतः । इत्थं शम्भोर्वचः श्रुत्वा विद्याधिपतिमीश्वरम् ॥
स्थानं ययौ प्रहृष्टात्मा प्रणम्य परमेश्वरम् । उपतस्थुस्तदा वेदाः ऋग्यजुःसामाथर्वकाः ॥ ७६ ॥
ब्रह्माणमनुजग्मुस्ते गुरुं शिष्या इवामलाः । मुनीनश्रावयत् सर्वान् सारस्वतमुखानपि ॥ ७७ ॥
तेषां शिष्यप्रशिष्यैश्च धृतो वेदो महात्मभिः । यज्ञभागाः प्रवर्तन्ते सिद्धिमीयुर्दिवौकसः ॥ ७८ ॥

सूतः —

एतद्धि महदाख्यानं श्रावितं भूसुरोत्तमाः । माहात्म्यं देवदेवस्य ओंकारस्य महेशितुः ॥ ७९ ॥
यो वेदादौ स्वरः शम्भुर्भगवान् परमेश्वरः । वेदान्तमहिमा यश्च स देवः पातु वः सदा ॥ ८० ॥

यः पङ्कजासनमतन्द्रितमेव सृष्टौ संयोज्य वेदमखिलं प्रददौ महेशः ।
तं स्वात्मबुद्धिभवनं शरणं महेशं यास्यामि घोरभवसागरगो मुमुक्षुः ॥ ८१ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे ओंकारेश्वरमाहात्म्ये वेदप्रदानं नाम नवमोऽध्यायः ॥

# ॥ दशमोऽध्यायः ॥

देवी –

त्रिलोकीतिलक स्वामिन् तिलकस्वामिसुप्रिय। ओङ्कारकुण्डलिङ्गानां बाणलिङ्गत्वता कथम् ॥ १ ॥
[1]वक्तुमर्हसि देवेश लोकानां हितकाम्यया। तदा देव्या वचः श्रुत्वा सन्तुष्टः प्राह शङ्करः ॥

सूतः –

उत्फुल्लनीलोत्पलनीलसुन्दरीमुमां तदालिङ्ग्य मुदा सदाशिवः।
बभाण बाणोत्तमसत्कथां द्विजाः सर्वार्थदात्रीं सकलाघहन्त्रीम् ॥ ३ ॥

शृणु देवि महाभागे कथामेतां मनोरमाम्। गङ्गाया नर्मदायाश्च विवादः सुमहानभूत् ॥ ४ ॥
तत्सर्वं विस्तरेणात्र त्वयि सर्वं प्रकीर्तितम्। अविमुक्ते वसामीति नित्यं सान्निध्यदे मया। ५ ॥
गङ्गायै च वरो दत्तो नर्मदायै महेश्वरि। सिकता याः शिलाः सर्वाः तानि लिङ्गानि निम्नगे ॥
त्वदन्तर्गतमेवाद्य कुण्डमोङ्कारसंज्ञितम्। गङ्गायां विश्वनाथाख्यलिङ्गाकृतिरहं स्थितः। ७ ॥
त्वत्तीरे नर्मदे लिङ्गमोङ्कारं परमेश्वरम्। तल्लिङ्गरूपः सततं निवसामि तटे तव ॥ ८ ॥
द्रष्टॄणां सर्वपापानि नाशयामि न संशयः। अमरैः पूजितं यस्मादमरेश्वरमुच्यते ॥ ९ ॥
[2]त्वं लिङ्गमण्डलाक्रान्ता भविष्यसि सरिद्वरे। ओंकारे च भृगुक्षेत्रे नर्मदावरसङ्गमे ॥ १० ॥
सर्वत्र सुलभा रेवा त्रिषु स्थानेषु दुर्लभा। त्वल्लिङ्गं सर्वभावेन पूजितं सर्वकामदम् ॥ ११ ॥
इति तस्यै वरो दत्तो नर्मदायै मनोरमे। तानि लिङ्गानि सर्वाणि बाणसंपूजितानि हि ॥ १२ ॥
दर्शनात् स्पर्शनाद्गौरि पुण्यदानि न संशयः। नार्मदे ये महालिङ्गे नीरं वा पत्रमेककम् ॥ १३ ॥
दद्यात् स मुक्तो भवति त्रिनेत्रप्रियकृत्तमः। न संप्रोक्षणसंस्कारो न प्रतिष्ठा हि पार्वति ॥ १४ ॥
नावाहनं न पूजादिविधिः स्यादत्र शङ्करि। सपीठं मुक्तपीठं वा नर्मदालिङ्गमर्चयेत् ॥ १५ ॥
स्पृष्टास्पृष्टं न तस्यास्ति नित्यं सान्निध्यदं मम। तल्लिङ्गे मम भक्तैश्च यद्दत्तं लीलयाऽपि च ॥
बिल्वपत्रं तथा नीरं फलं वा कन्दमेव वा। गृह्णामि शिरसा तच्च तस्मै मुक्तिं ददाम्यहम् ॥ १७ ॥
विमर्शो न च कर्तव्यो नार्मदे परमेश्वरि। अन्यानि सर्वलिङ्गानि प्रतिष्ठाप्रोक्षणादिभिः ॥ १८ ॥
संस्कृतानि विशेषेण पूज्यानीति मतिः शिवे। मृल्लिङ्गाद्धातुलिङ्गानि रत्नजानि महेश्वरि ॥ १९ ॥

---

१ इदमर्धं C कोशेऽधिकमपेक्षितं च। E कोशे नास्ति।

२ इदमर्धत्रयं C कोशे नोपलभ्यते।

स्फाटिकादीनि पुण्यानि चन्द्रकान्तोद्भवानि च। स्थावराणि च सर्वाणि जङ्गमानि विशेषतः॥
महापारदक्लृप्तानि लिङ्गान्यत्युत्तमानि च। तेभ्यो विशिष्टमेतद्धि नार्मदं शर्मदं मम॥ २१॥
नार्मदं लिङ्गमभ्यर्च्य स्थावरार्चाफलं लभेत्। यस्तु पश्यति पुण्यात्मा स्थावरं लिङ्गमैश्वरम्॥
नित्यं च नियमोपेतः पापैः सर्वैः प्रमुच्यते। स नार्मदं महालिङ्गं दृष्ट्वा तत्फलमाप्नुयात्॥ २३॥
पूजिते नार्मदे लिङ्गे सर्वलिङ्गार्चनाफलम्। प्राप्नुयान्नियतं गौरि सत्यमेतन्मयोच्यते॥ २४॥
शावाशौचे सूतकेपि बाणलिङ्गं समर्चयेत्। नित्यं लिङ्गार्चनफलं यस्मिन् क्लृप्तं तदाप्नुयात्॥
नातः परतरं लिङ्गं प्रशस्तं परमेश्वरि। अस्मिन् संपूजिते दृष्टे महापापक्षयो भवेत्॥ २६॥
यद्गृहे बाणलिङ्गं स्यात् शिवक्षेत्रं हि तत् स्मृतम्। तत्रैव मरणाज्जन्तुरपि कीटपिपीलिकम्॥
मल्लोके निवसेद्देवि पुनरावृत्तिदुर्लभे (?)। बाणलिङ्गं न यस्यास्ति गृहे बिल्वदलार्चितम्॥ २८॥
न तद्गृहे जलं ग्राह्यमन्नं वा वैदिकोत्तमैः। यद्गृहे बाणलिङ्गार्चा स मुनिः स च पण्डितः॥
तेनेष्टाः सकला यज्ञा वेदाधीताश्च तेन वै। तेनोर्वीरेयं दत्ता स्यात् सशैलवनकानना॥ ३०॥
अत्रेतिहासं ते वच्मि शृणु कर्णैकभूषणम्। बलिनामा पुरा देवि दैत्येन्द्रो बलगर्वितः॥ ३१॥
देवान् विद्रावयामास सेन्द्रान् सवरुणार्यमान्। वारं वारं सुरैर्देवि युद्धमुन्मत्तमातनोत्॥ ३२॥
हृतामरावती तेन शक्रस्थानाधिपोऽभवत्। तस्यासीद्वशगं देवि त्रैलोक्यं सचराचरम्॥ ३३॥
स दीक्षितोऽश्वमेधेन अयजन्मां महाबलः। स्वाद्वन्नेन च सोमेन विधिवद्दक्षिणावता॥ ३४॥
ज्ञात्वा [1]मेधपतिं मां स काव्येनोशनसा मुदा। एतस्मिन्नन्तरे विष्णुः प्रार्थितः स्वपदार्थिभिः॥
विष्णुना छद्मरूपेण याचितो दीक्षितो बलिः। पदत्रयं चिकीर्षुः स्वं पातालं प्रापयत् तदा॥
तज्जयात्सर्वगर्वेण वामनो मदमोहितः। मुनीन् मच्छरणान् सर्वान् धिक्करोति दुरात्मवान्॥
ततः परशुधारेण मया छिन्नः पपात च। तत्र तीर्थमभूत् पुण्यं कालञ्जरसमीपतः॥ ३८॥

देवि वामनपाताख्यं तत्र स्नात्वा दिवं व्रजेत्।
सन्तर्प्य च पितॄन् भक्त्या देवैः सह स मोदते॥ ३९॥
गतमोहस्तदा विष्णुर्मां तुष्टाव प्रहृष्टधीः॥ ४०॥

विष्णुः —

शम्भो मत्स्यनृसिंहवामनमहाकूर्माङ्गकोलास्थिभिः
दंष्ट्राभिर्नरसिंहचर्मवसनस्त्वं शारभः पक्षिराट्।

---

१ अमोघप्रदं C

तिर्यग्योनिशतोत्थपातकनरैः पूतोऽस्मि धन्योऽस्म्यहं
नीतो मोहदशां विमीतहृदयस्त्वच्छिक्षया शङ्कर ।। ४१ ।।

दृष्ट्वा त्वत्पदपङ्कजं शिव महादेवेश पूर्वस्थितिं
ज्ञानं प्राप्तमपारभक्तिजनकं त्वत्पादपूजाविधौ ।
वैकुण्ठे निवसामि भूतिविलसत्फालादिभूषाङ्गको
लिङ्गं विल्वदलैश्च पुष्पनिकरैः संपूज्य मुक्तः सुखम् ।। ४२ ।।

गतमोहोऽस्म्यहं देव शिक्षितश्च त्वयाऽधुना । भृगुणा तव भक्तेन शप्तोऽस्मि नितरां शिव ।।
तच्छापमुक्तोऽस्म्यधुना तिर्यग्योनिषु संस्थितः । मत्स्यकूर्मवराहादि नारसिंहादिवामनैः ।। ४४ ।।
त्वया धृतैर्देहजालैः पावितोऽहं महेश्वर । अनुग्राह्योऽस्मि देवेश पुनः पञ्चसु जन्मसु । ४५ ।।
प्रणम्य मां ययौ विष्णुस्तथेति च मयोदितः । बलिश्चापि मुदं प्राप्य रसातलतलं गतः ।। ४६ ।।
तस्यासीदौरसः पुत्रो नाम्ना बाण इति श्रुतः । स राज्यमथ दैत्यानां चकाराग्निसमप्रभः ।। ४७ ।।
शुक्रस्यानुमते देवांश्च्यावयामास विष्टपात् । शिपिविष्टप्रसादेन विशिष्टः सुरसत्तमैः ।। ४८ ।।
सहस्रबाहुशाखाढ्यो नागायुतबलो बली । सञ्चरन् स महीपृष्ठे शर्मदां नर्मदां मम ।। ४९ ।।
स्नात्वा भस्मकृतायङ्गो रुद्राक्षवरभूषणः । विल्वपत्राणि संपाद्य पुष्पभाराणि दैत्यपः ।। ५० ।।
सहस्रं नार्मदं लिङ्गं संपूजयति शङ्करि । धूपदीपोपहाराद्यैर्नैवेद्यैर्भूषणैरपि ।। ५१ ।।
नित्यं संस्तौति हृष्टात्मा बलिसूनुरनन्यधीः । सहस्रहस्ताञ्जलिभिः प्रणमन् मां पुनः पुनः ।।
नृत्यन् पादतलैर्भूमिं कम्पयन् बलिनन्दनः । गिरीन्द्रचलितोल्लोलनम्रमस्तकदिग्गजः ।। ५३ ।।
हस्ततालमहारावबधिरीकृतदिङ्मुखः । अस्तौषीन्मां महादेवि बाणो भक्तिपुरःसरम् ।। ५४ ।।

बाणः—

महादेव कर्पूरगौरामरेन्द्र महामेरुकोदण्ड चण्डप्रचण्ड ।
महाचण्डवेतण्ड शुण्डोरुदण्डैर्हृतापारलोलाब्जिनीपत्रपूज्य ।। ५५ ।।

कुण्डलीशकृतकुण्डल शम्भो खण्डिताखिलसुरद्रुमषण्ड ।
ब्राह्ममुण्डकलितामलमाल स्थूललिंगगणमण्डलसंस्थ ।। ५६ ।।

नवचन्द्राभरणोत्तमाङ्ग गङ्गाकलितालक भूधरोरुमाल ।
धृतहालाहलकण्ठमूल बाहुस्फुरदुग्रत्रिशिखाविधूमकील[1] ।। ५७ ।।

---

१ कूल D शूलेति युक्तं भाति

वसुवाश्वरथारकं महेशं त्रिपुराधीश्वरसन्नताङ्घ्रियुग्मम् ।
गिरिकन्दरसंस्थितान्तरङ्गं भजाम्यहं सिन्धुरकृत्तिचेलम् ॥ ५८ ॥

नीलाभ्रसन्निभमहामहिषाधिरूढः चण्डांशुजप्रबलसर्पगणादिपाशैः ।
लिङ्गालिङ्गनतत्परं द्विजवरं कर्षन्तमत्युन्मुखं कालस्त्वत्पदताडितो द्विजसुते दत्तायुषं त्वां नुमः ॥

विधिकलितकपालजालमालं वलितनयार्चितबाणलिङ्गलोलम् ।
करविधृतकपालव्यालमालं सशूलं गलधृतगरनीलं कालकालं भजेऽहम् ॥ ६० ॥

अच्छा वाक् तस्य शम्भो तव निखिलमहो सुष्टुतिं वीरयामि
त्वल्लिङ्गेक्षासुचक्षुः भवदमलकथाकर्णनैः सुश्रवाहम् ।
त्वत्पादार्चासुहस्तस्तव पदकमलध्यानतः सन्मनाऽहं
सर्वं चाङ्गं स्थिरं च त्वयि भवति विभो शङ्कराद्य प्रसीद ॥ ६१ ॥

माकन्दं पिकसुन्दरीव भगवन् कान्ता यथा कामुकं
मत्तालिः सरसीरुहं द्विजगणो दातारमाकांक्षते ।
तद्वत् त्वां परिचिन्तयामि सततं तूर्णं कृपावीक्षणैः
संपूर्णं कुरु मामकिञ्चनमहो भाग्यैरभाग्यालसैः ॥ ६२ ॥

इत्थं स्तुत्वा तदा बाणो मामानन्दपरिप्लुतः । साष्टाङ्गं प्रणनामाथ बाणपातप्रमाणतः ॥ ६३ ॥
[1]तस्मिन् सन्दर्शनं दत्तं तस्मै शैलेन्द्रकन्यके । चतुर्बाहुमुदाराङ्गं नीलकण्ठं वृषस्थितम् ॥ ६४ ॥
गङ्गाचन्द्रकलामौलिं खण्डकर्पूरसन्निभम् । वृन्दारवृन्दैः सततं सेव्यमानपदाम्बुजम् ॥ ६५ ॥
मन्दारकुन्दमालाभिः कण्ठलोलाभिरीश्वरम् । गणवृन्दैर्महादेवि तस्मै दत्तं च दर्शनम् ॥ ६६ ॥
दृष्ट्वा मां देवदेवेति प्रसीदेति वदन् मुदा । प्रणामप्रमुखरो दैत्यो वरेण छन्दितो मया ॥ ६७ ॥

ईश्वरः —

उत्तिष्ठोत्तिष्ठ दैत्येन्द्र महेन्द्रसमविक्रम । गिरीन्द्रशिखराकार मृगेन्द्रामललोचन ॥ ६८ ॥
वरं वरय मत्तस्त्वं यदिच्छसि तदस्तु ते । इत्थं मद्वचनाम्भोजवाणीं श्रुत्वा स दैत्यपः ।
प्रणम्य मां तदा प्राह विनयानतकन्धरः ॥ ६९ ॥

बाणः —

भक्तिं त्वदीयजनसङ्गममेव शम्भो लिङ्गार्चनं च सुभगं तव बाणलिङ्गे ।
संप्रार्थयामि भगवंस्तव भक्तिभावं वांछा न मे भवति तुच्छभवादिधर्मे ॥ ७० ॥

---

१ ततः C

किं यागैरतितुच्छभोगफलदैः स्वर्गादिपातान्तकैः
किं गोभिर्धनधान्यरत्ननिकरैर्हैमैश्च पात्रार्पणैः ।
शम्भो नार्मदलिङ्गमस्तकगमं बिल्वीदलैः कोमलैः
संपूज्य प्रमथाधिनाथपदवीं प्राप्नोति भाग्यैर्युतः ॥ ७१ ॥

नीरैर्नार्मदजैः सुशोभितमहाकर्पूरखण्डद्रवैः
संसेव्यालोक्य हृष्टो भवदभयपदं प्राप्तुमिच्छामि शम्भो ।
गाणापत्यं ममास्तु प्रियममरवरैर्दुर्लभं त्वत्पदाब्जे
भक्तिर्भक्तैः सहास्तु प्रतिदिवसमहो सङ्गमश्चाघहारी ॥ ७२ ॥

सद्यो नार्मदलिङ्गमण्डलमिदं बाणाख्यतां प्राप्नुया-
देवं देयो वरो मे प्रथयितुमखिलं लोकमद्य प्रसीद ॥ ७३ ॥

ईश्वरः –

तस्योदारवचो निशम्य गिरिजे दत्तो वरो मे कृतो
गाणापत्यपदे स दैत्यतनयः शक्रादिगर्वापहः ।
सर्वं भक्तजनार्पणाय सततं चित्तं मदीयं शिवे
सद्भक्तो भुवि दुर्लभः सुखकरः श्रीबाणलिङ्गार्चकः ॥ ७४ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे बाणासुरस्य गाणापत्यवर्णनं नार्मदलिङ्गमहिमवर्णनं नाम दशमोऽध्यायः ॥

---

## ॥ एकादशोऽध्यायः ॥

देव्युवाच –

श्रुतं बाणासुराख्यानं भवतः परमेश्वर । केदारस्थानमहिमां वदाद्य शिव शङ्कर ॥ १ ॥

सूतः –

महादेवो महेशान्या पृष्टो दक्षमखान्तकृत् । देवीं प्राहारविन्दाक्षः केदारस्थानवैभवम् ॥ २ ॥

ईश्वरः –

अस्ति क्षेत्रवरं देवि केदारं भुवि विश्रुतम् । तत्क्षेत्रमहिमा सुभ्रु वेदैर्न ज्ञायते शिवे ॥ ३ ॥

तस्मिन् क्षेत्रवरे देवि ब्रह्माद्या विबुधोत्तमाः । निवसन्ति महाभागे केदारेश्वरपूजकाः ॥ ४ ॥

तल्लिङ्गसदृशं लिङ्गं न भूतं न भविष्यति । हित्वा कैलासशिखरं गिरीशो वसतीश्वरः ॥ ५ ॥

सदा तत्र महाशैवा वसन्ति शिवतत्पराः । भस्मरुद्राक्षवीताङ्गाः त्रिपुण्ड्रावलिभासुराः ॥ ६ ॥
केदारेशस्य देवस्य नित्यमाराधने रताः । षट्सहस्रं फलाहारा वाय्वाहाराश्च पञ्चकम् ॥ ७ ॥
त्रिसहस्रांबुपर्णाशा भासुराः शिवतत्पराः । च्यवना भार्गवाश्चैव भारद्वाजाश्च काश्यपाः ॥ ८ ॥
मौद्गल्या वीतहव्याश्च वैश्वामित्रातिसंभवाः । मत्पादपूजकाः सर्वे केदारक्षेत्रवासिनः ॥ ९ ॥
ब्राह्मणा ब्रह्मसदृशाः ऋग्यजुःसामपारगाः । निवसन्ति सदा देवि मम लिङ्गार्चने रताः ॥१०॥
पञ्चाग्निनिरताः केचित् त्रेताग्निशरणाः परे । नारदाद्याश्च मुनयो वसन्ति सततं शिवे ॥ ११ ॥
गन्धर्वाः सिद्धनागाद्या यक्षाः किंपुरुषाः सदा । पत्नीभिः शैलशिखरे केदारेश्वरसेविनः ॥ १२ ॥
मामाराध्यं समाराध्य ब्रह्मविष्ण्वादयः सुराः । स्वं स्वं स्थानमवापुस्ते केदारेशसमर्चनात् ॥
अत्र केदारनाथं यो शिवरात्रौ चतुर्दशीम् । उपोष्य प्रयतो भक्त्या देवि यामचतुष्टयम् ॥ १४ ॥
पूजां कुर्याद्बिल्वपत्रैः स मोक्षमधिगच्छति । अन्यत्र कोटिलिङ्गार्चाफलं यत् सुरसत्तमे ॥ १५ ॥
केदारेश्वरमौलौ तु एकबिल्वार्पणाद्धि तत् । एकं वा भोजयेद्विप्रं केदारे कोटि तद्भवेत् ॥१६॥
भोजयेच्छैवमेकं तु तदनन्तफलं स्मृतम् । तस्य केदारनाथस्य कुण्डं पर्वतमूर्धनि ॥ १७ ॥
ख्यातं केदारकुण्डं तदुत्फुल्लकमलोज्ज्वलम् । तत्कुण्डपूतपानीयैः स्नात्वा सन्तर्पयेत् पितॄन् ॥
पितरस्तृप्तिमायान्ति द्वादशाब्दं सुरेश्वरि । पुरान्धकासुरं हत्वा तच्छूलाग्रेण शङ्करि ॥ १९ ॥
त्वत्पितुः शिखरे पुण्ये त्वया तत् खानितं सरः । तस्मिन् सरसि विस्तीर्णे त्वत्तटे त्वत्तपोवनम् ॥
मत्प्रीतये त्वया देवि विचीर्णाऽत्र तपःक्रिया । तत्तीरे स्थापितं लिङ्गं त्वया गौरीश्वराभिधम् ॥
तल्लिङ्गदर्शनादेव मम लोके महीयते । वसिष्ठात्रिमृकण्ड्वाद्या भरद्वाजपराशरौ ॥ २२ ॥
दुर्वासा गौतमाद्याश्च भृगुकुम्भोद्भवादयः । दधीच्याङ्गिरसोचथ्याः जामदग्न्यो महाबलः ॥
क्षेत्रमुत्साद्य विप्रेन्द्रैः प्रार्थितः शममागतः । हिमवन्मूर्ध्नि सरसस्तीरे तप्यन्ति तापसाः ॥ २४ ॥
केदारनाथं दृष्ट्वा मां पूज्य बिल्वैः सुकोमलैः । उपहारैश्च विविधैरपारैः फलमण्डलैः । २५ ॥
तद्गौरीसरसि स्नात्वा पुण्ये पापौघहारिणि । वृत्रं हत्वाथ जम्भारिर्वज्रेणासुरसत्तमम् ॥ २६ ॥
छद्मना स्वच्छसरसि गौर्याख्ये पापनुत्तये । स्नात्वा सुरगणैः सार्धं वृत्रहा शुद्धिमागतः ॥ २७ ॥
केदारनाथं दृष्ट्वा मां शक्रः सुरगणैः सह । तुष्टाव मां तदा भक्त्या तत्स्तुतिं शृणु शांभवि ॥

इन्द्रः—

शम्भो विश्वेश भर्ग त्रिनयन भगवन् कालकालान्धकारे पुरहर दुरितारे घोररूपान्तकारे ।
शमय शमय दुःखं दैत्यवर्गारियुद्ध ज्वरहर भयहारिन् पाहि केदारनाथ ॥ २९ ॥

शक्रः केदारनाथं मामेवं स्तुत्वा प्रणम्य च । विहाय पापं तद्देवि त्रिविष्टपमगात् तदा ॥ ३० ॥
वरुणोऽपि महादेवि विप्रभार्यां पुराऽहरत् । उचथ्यस्य बलात् पाशी कामबाणप्रपीडितः ॥ ३१ ॥
जलोदरमहारोगग्राहग्रस्तोऽभवच्छिवे । प्रणम्य मां महादेवि केदारेशं प्रपूज्य च ॥ ३२ ॥
विमुक्तस्तेन पापेन मां स्तुत्वैव स भक्तितः ॥ ३३ ॥

वरुणः —

मारमार करवीरसुमाढ्य स्रग्धरामरवरादिसुपूज्य ।
संस्थितामरगणेन्द्रभूधर पाहि मामखिलपारदवीर्य ॥ ३४ ॥

स्तुत्वैवं पाशहस्तो मां नत्वा संपूज्य मां शिवे । ययौ स्थानं स नीरोगो मुक्तमेघ इवोडुराट् ॥
माण्डव्येनापि सुभगे शप्तश्चण्डांशुनन्दनः । शापमुक्त्यै स केदारं मां प्रणम्याथ शूलिनम् ॥
बिल्वपत्रैः समभ्यर्च्य स्नात्वा गौरीसरित्तटे । पुण्याग्निभस्मकैर्मन्त्रैः समुद्धूल्य स्वकां तनुम् ॥
तुष्टाव मां विशुद्धात्मा केदारेशं महेश्वरम् ।

यमः —

तस्थुषस्पतिमहो भगवन्तं बभ्लुशं च हरिकेशमुदारम् ।
मृगं न भीममुपहन्तुमुग्रं प्रसाद्य पापैर्न बिभेमि शम्भो ॥ ३८ ॥

एवं मामम्बिके स्तुत्वा मुक्तशापः स सूर्यजः । जगाम दक्षिणामाशां पितृभिः परिपालिताम् ॥
कुबेरो यक्षराट् देवि पौलस्त्येनाथ निर्जितः । जगाम परमामार्तिं मां केदारं प्रणम्य च ॥ ४० ॥
संस्नाय गौरीसरसि भस्मरुद्राक्षभूषणः । तत्कुण्डशोधितैर्नीरैर्बिल्वपत्रैः समर्च्य च ॥ ४१ ॥
यक्षराण् मां विरूपाक्षमस्तौषीज्जगदम्बिके ॥ ४२ ॥

कुबेरः —

मीढुष्टमः शिवतमस्त्वमसि प्रसिद्धः सिद्धान्तसारमहिमन् मृडयाशु शम्भो ।
संसारघोरविपिनोद्भवदावदग्धं त्वन्मूर्धचन्द्रकिरणैर्मम शीतयाङ्गम् ॥ ४३ ॥

इत्थं स यक्षराड् देवि स्तुत्वा मामगजापतिम् । धनाधिपत्यं संप्राप उत्तराशापतिस्तदा ॥ ४४ ॥
एवं दिशानामधिपा विदिशां पतयस्तथा । अभीष्टं प्रापुरत्यर्थं मामाराध्यैव भक्तितः ॥ ४५ ॥
अग्निश्च निर्ऋतिर्वायुरीशानो मद्गणोत्तमः । सत्सारूप्यं मुदा प्राप मां केदारं समर्चयन् ॥ ४६ ॥
तुष्टुवुर्विदिशां नाथा विप्रशापप्रपीडिताः । अग्निश्च सर्वभक्षत्वं निर्ऋतिः पापकारिताम् ॥ ४७ ॥
वायुरायासराहित्यमीशानो मत्स्वरूपताम् ।

अग्निवायुनिर्ऋतीशानाः—

महादेवो देवः सकलजगदाराध्यचरणो जगद्रक्षाशिक्षास्थितिजननचातुर्यकरणः ।
हरिर्ब्रह्मा स्कन्दो गणपतिरुमा शक्रदितिजास्त्वधर्वाणेषु त्वं प्रथितयशसो वै[1] तव नमः ॥ ४८ ॥

एवं स्तुत्वाऽथ ते सर्वे विदिशां पतयस्तथा । लेभिरे परमां सिद्धिं केदारेश्वरपूजनात् । ४९ ॥
मुनयश्चापि देवेशि विश्वामित्रोऽत्रिरङ्गिराः । तेपुस्तपो महाघोरं ज्वलत्पञ्चाग्निमध्यगाः । ५० ॥
ब्राह्मण्यप्राप्तये देवि विश्वामित्रेण संस्तुतः ॥ ५१ ॥

विश्वामित्रः—

गायत्र्या प्रतिपादितोऽसि भगवन् संसारसंभञ्जको
भर्गस्त्वं सवितुर्वरेण्यमहसस्त्वां सर्वदा धीमहि ।
तेजस्त्वात्मगतं दिनोदयविधौ विप्रादिभिर्ध्यायसे
बुद्धिं निश्चयकारिणीं च भगवन् सञ्चोदयस्यान्तरः ॥ ५२ ॥

अत्रिः पुत्रविहीनश्च रिरिषानोऽन्वतप्यत । और्वाय पुत्रान् दत्वा स्वान् पुत्रानाप्तुं तदाद्रिजे ॥
इष्टवांश्चातिरात्रेण ह्यस्मिन् भूधरसत्तमे । मां स्तुत्वा चाम्बिके पुत्रांश्चतुरः प्राप्तवांस्तदा । ५४ ॥

अत्रिः—

राजानं त्वामध्वरेशं च रुद्रं होतारं त्वा सत्ययुजं च रोदस्योः ।
विद्युत्पातसमादचिन्त्यमरणात्पूर्वं शिवं शाश्वतं
प्राप्तोऽस्म्यन्त्वहमेकमेव शरणं हिरण्यरूपमवसे कृणुध्वम् (?) ॥ ५५ ॥

मन्त्रार्थवादविधिषु श्रुतिषु प्रवृत्ताः तासु क्रिया मखशतोत्थफलैर्विचित्राः ।
पोषं रयिं स्वर्गमथ प्रजां पशून् पुष्टिं प्रतिष्ठां च तथोजसि त्वम् ॥ ५६ ॥

तत्र प्ररोचकपदेषु निविष्टचित्ताः किं नश्वरैः फलगणैः प्रमथाधिनाथ ।
त्वामध्वरेश्वरमहो फलदानशीलं नाराधयन्ति सहसा जडबुद्धयस्ते ॥ ५७ ॥

अङ्गिराश्च महादेवि केदारेशमथास्तवीत् । भ्रात्रा विनिकृतः पूर्वं दौरात्म्यौद्धत्यगर्विणा ॥ ५८ ॥

अङ्गिराः—

तथ्यं त्वदीयजन इत्ययि स्वामिचन्द्रचूड प्रभो मयि महाघसमुद्रकाये ।
त्वं वेदगीत अधिवक्तृतया प्रसिद्ध पाहीश मामधिकया सहमान शम्भो ॥ ५९ ॥

---

1 यशसे (?) D

एवं स्तुत्वाऽथ मुनयः स्वाभीष्टं प्रापुरम्बिके । केदारेशप्रसादेन अन्ये सर्वे मरुद्गणाः ॥ ६० ॥

सूतः —

को वा केदारलिङ्गं जनिशतविततापारपापैकभङ्गं प्रालेयाचलकन्यकापरिलसद्वामाङ्गसङ्गं सदा ।
दृष्ट्वाऽनङ्गभुजङ्गसङ्गजनितामन्दाङ्गकोपस्फुरत्फालापाङ्गकृताङ्गसङ्गरहितं श्रीशङ्करमीशं भजे ॥ ६१ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे केदारेशमहिमवर्णने दिक्पालादिस्तुतिवर्णनं नाम एकादशोऽध्यायः ॥

---

## ॥ द्वादशोऽध्यायः ॥

ईश्वरः —

अथान्यदपि वक्ष्यामि पितुस्ते चरितं शिवे । स्वमौलौ वासयन् मां हि त्वद्वियोगभयादुमे ॥

सूतः —

देवदेववचः श्रुत्वा हृष्टा पर्वतनन्दिनी । प्राह प्रणम्य विश्वेशं स्वपितुश्चरितं द्विजाः ॥ २ ॥

देवी —

कथं मम पिता त्वां तु मद्वियोगभयाच्छिव । स्वकीयशिखरे शम्भोऽवासयत् तां कथां वद ॥

शूली शैलेन्द्रजावाक्यं श्रुत्वा तुष्टोऽब्रवीत् तदा ।

ईश्वरः —

वक्ष्याम्यगसुते तेऽद्य पितुश्चरितमुत्तमम् । सावधानमना देवि शृणु सर्वाङ्गसुन्दरि ॥ ४ ॥

दक्षः प्रचेता देवेशि चाक्षुषस्यान्तरे मनोः । अयजद्धयमेधेन मां हित्वैव सुरोत्तमम् ॥ ५ ॥

ब्रह्मा ब्रह्माभवत् तस्य सदस्यो विष्णुरीश्वरि । अध्वर्युरत्रिरभवत् होता चैव कहोलकः ॥ ६ ॥

उद्गाता चाभवत् तस्य तण्डुर्नाम द्विजोत्तमः । अथान्य ऋषयोऽभूवन् याजका हि प्रजापतेः ॥

नाजुहाव तदा देवि त्वां हि दाक्षायणीं तदा । कौतुकाविष्टहृदया पितुर्यज्ञदिदृक्षया ॥ ८ ॥

गन्तुमैच्छः सुरान् दृष्ट्वा विमानगतिकांस्तदा । निवारितासि सुभगे मया चापि गणेश्वरैः ॥ ९ ॥

गतवत्यसि कल्याणि स्त्रीलौल्यात् तस्य तत्सदः ।
नैवापश्यत् तदा त्वां तु कुतः पूजा कुतो रतिः ॥ १० ॥

संक्रुद्धं पितरं ज्ञात्वा सान्त्वेन त्वमभाषथाः ॥ ११ ॥

सती –

सर्वे देवगणा दक्ष समाहूताः सदस्यथ । कथं नाहूतवान् शम्भुं मत्पतिं सदसस्पतिम् ॥ १२ ॥
पितः सदो न ते शोभां वहते पतिहीनतः । किमन्यैः प्राकृतैर्देवैः पूजितैरध्वरे फलम् ॥ १३ ॥
राजा यो अध्वरस्यास्य साक्षान्मेधपतिः शिवः । स्विष्टकृद्भाग एवायं तत्तथा कर्तुमर्हसि ॥ १४ ॥

सूतः –

दक्षस्तदा सतीवाक्यं श्रुत्वा क्रोधसमन्वितः । उवाच भर्त्सयन् देवीं देवानां चैव पश्यताम् ॥

दक्षः –

किं मे रुद्रेण कर्तव्यं पत्या तेऽद्य सुमध्यमे । यज्ञोऽयं विष्णुरीड्योऽयं श्रुत्या चाप्यद्य पूज्यते ।
इत्थं तदाऽखर्वगर्वसंबन्धीकृतमानसम् । उवाच क्रोधताम्राक्षी सती स्वपितरं क्रुधा ॥ १७ ॥

सती –

नायं यज्ञोऽद्य भविता यज्ञेशेन विनाशितः । भविष्यत्यचिरादेव शृणु मद्वचनं पितः ॥ १८ ॥
इत्युक्त्वा योगमास्थाय ददाहात्मतनुं सती । दग्धां सतीं तदा दृष्ट्वा हा हा हेत्यवदन् सुराः ॥
दधीचिः क्रोधताम्राक्षो दक्षं तं प्रत्यभाषत ।

दधीचिः –

दीक्षितोऽस्यश्वमेधाय कथं दीक्षापतिं शिवम् । विनिन्दस्यद्य मौर्ख्येण धिक् ते यज्ञं सभासदः ॥
पुरुषो वै महारुद्र इत्याह श्रुतिरादरात् । यागः स्विष्टकृदन्तो हि स कथं नैव पूज्यते ॥ २१ ॥
सर्वं निवेद्य वै शम्भौ सुखी भव सबान्धवः ॥ २२ ॥

[1]सूतः –

दधीचिवाक्यात् संक्रुद्धो दक्षो विप्रमथाब्रवीत् ।

दक्षः –

नैवेद्यं यच्छिवे दत्तं न ग्राह्यमपवित्रितम् । विष्णुरेवात्र यज्ञेशः किं प्रलापेन भूसुर ॥ २३ ॥
गच्छ गच्छ सदो हित्वा तुच्छवद्भाषसे कथम् । मुनिर्दक्षवचः श्रुत्वा क्रोधात् सर्वानुदैक्षत ॥
प्रोवाच दीक्षितं दक्षं विष्णुपक्षावलम्बिनम् ॥ २५ ॥

दधीचिः –

गङ्गाऽनङ्गरिपोर्जटाविगलिता तन्मौलिपुष्पं शशी
केशास्तस्य वियत् ततो विगलिता वृष्टिर्जगज्जीवनी ।

---

१ शिव इति युक्तम् ।

रुद्रोऽग्निः श्रुत एव सर्वमशनं तज्जिह्वया पच्यते
तन्निर्माल्यजिह्वासुमिस्त्रिभुवने तैः केन वा जीव्यते ॥ २६ ॥

शम्भुः शङ्कर इत्यपि श्रुतिशिरोघण्टादिघोषो महां-
स्तं त्यक्त्वा सुरगर्दभं जनिजराकामादिदोषास्पदम् ।
विष्णुं जिह्मधियं भजन्ति नृखरा मोहान्धचित्ताः सदा
संसारार्णवमज्जनैरनुदिनं दुःखाप्तये केवलम् ॥ २७ ॥

श्रीमृत्युञ्जयपूजने मतिरुदेत्यस्माकमिष्टप्रदा
सा गृष्टिः सुखमोक्षदोहनपरा लिङ्गार्चकैः पालिता ।
तस्या वत्समहेशभावभटकं बध्वा मनो गोष्ठके
पीत्वा भक्तिपयः सुतुन्दिलमहागात्रा वसामो वयम् ॥ २८ ॥

इत्युक्त्वा निर्गतो गौरि दधीचिः स्वाश्रमं तदा । दाक्षायणी पुरा सा त्वं मेनकागर्भमाश्रिता ॥
तद्वृत्तं तदा श्रुत्वा नारदादहमम्बिके । वीरभद्रं च कालीं च सृष्ट्वा तन्मखधर्षणम् ॥ ३० ॥
कृतवानस्मि देवेशि त्वद्वियोगाग्निपीडितः ।

देवान् विप्रांश्च दण्डैः पटुतरगदया भिन्नमस्तिष्कशीर्षान्
चक्रुश्चक्रारकृत्तांश्छरवरनिकरैः कार्मुकज्याविसृष्टैः ।
दक्षं दीक्षान्वितं च प्रकटवरतलैः पूषदन्ताग्रसन्धौ
दृग्भ्यांक्षादितुष्ट्यै भगनयनवरेऽपातयंस्ते गणेन्द्राः ॥ ३१ ॥

स्रवद्रुधिरगन्धिनो हरिविधीन्द्रमुख्यामराः विदुद्रुवुस्तथापरे प्रबलवीरभद्राहताः ।
करालकरवालकैः विकृतकालदंष्ट्रादिभिः विदारितकराङ्घ्रकाः शरणमीयुरीशं सुराः ॥

देवाः —

अखर्वगर्वोत्थितदक्षशिक्षाकरोग्ररुद्रोद्भववीरभद्र ।
प्रभग्नदेवद्विजकन्धरापह सुधाकरापारसुखाप्तये सुरैः ॥ ३३ ॥
विमथ्यमानाब्धिसमुत्थितोरुगरेण नीलीकृतकण्ठ पाहि नः ॥ ३४ ॥

उमामुखसमुल्लसत्स्फुरदपाङ्ग गङ्गाधर प्रसीद परमेश्वर प्रथितदक्षमन्यूत्थित ।
प्रचण्डतरमन्यवे प्रमथनाथ नः पालय क्रतूद्भवफलाधिकं भवतु वाञ्छितं त्वत्पदोः
प्रपन्नजनकामदप्रवरदीक्षितोऽयं प्रभो[1] ॥ ३५ ॥

---

१ पञ्चपादोऽयं श्लोकः ।

इत्थं सुरवचो देवि श्रुत्वा यज्ञफलेन तम्। पूरयित्वा महादेवि तं दक्षं वस्तकन्धरम् ॥ ३६ ॥
अनुगृह्यामरेन्द्रांश्च वीरभद्रं निवार्य वै। तवाङ्गसङ्गविरहादसङ्गो विचराम्यहम् ॥ ३७ ॥
नद्यां सरस्सु विपिने पत्तने नगरे तथा। शैलेन्द्रशिखरे देवि शर्म न क्वचिदेव मे ॥ ३८ ॥
भूधरो हिमवानेष त्वत्पिता चारुकन्दरः। अस्मिन्नेव वसामीति मनो मेऽभवदुन्मुखम् ॥ ३९ ॥
तपस्तप्तं मया देवि वर्षाणामयुतं तदा। एतस्मिन्नन्तरे देवास्तारकासुरपीडिताः ॥ ४० ॥
मदङ्गसङ्गसंभूतं तनयं तज्जये धृतम्। प्राप्तुं देवगणाः सर्वे मन्मथाद्यैश्च संयुताः ॥ ४१ ॥
पितुर्नियोगान्मातुस्त्वे शुश्रूषन्त्या त्वया तदा। मां ते देवगणा देवि ऊर्ध्वरेतसमीश्वरम् ॥ ४२ ॥

प्रधर्षयन्ति मारेण दग्धो मारः क्षणान्मया।
तदा मां त्वं भयात् त्यक्त्वा तप उग्रं समास्थितम् ॥ ४३ ॥

पितरं प्राप्नुवत्येव पुनस्त्वं तपसि स्थिता। नारदोदितवाक्येन ब्रह्मणा च महीधरः ॥ ४४ ॥
सुरसंप्रार्थितश्चायं मह्यं त्वामददादुमे। त्वया सहाहं कल्याणि निवसामि नगोत्तमे ॥ ४५ ॥
तदा कालेन संजातः कुमारो मेऽमितप्रभः। षण्मुखः कृत्तिकास्तनुरामेयोऽग्निसमानभाः ॥ ४६ ॥
देवाश्च ववृषुस्तस्य मूर्ध्नि पुष्पोत्करं शिवे। ननृतुश्चाप्सरस्सङ्घाः प्रावाद्यद्देवतूर्यकम् ॥ ४७ ॥
सैनापत्येऽभिषिक्तश्च देवैः सेन्द्रपितामहैः। विजिग्ये तारकं शूरं देवैस्तदनुयायिभिः ॥ ४८ ॥
तारकारिरिति ख्यातः पुत्रस्ते गिरिजेऽमले। एवं स्थिते तदा सर्वैश्च गणेन्द्रै रजताचलम् ॥
मन्दरं सुन्दरं चारु कन्दरैर्विविराजितम्। तस्मिन् मन्दारवृन्दाढ्ये मरन्दसुमसुन्दरे ॥ ५० ॥
विहर्तुमिच्छा मे जाता त्वया साकं वरानने। गतेऽङ्गनागणैः सार्धं त्वया भूधरकन्यके ॥ ५१ ॥
त्वद्वियोगभिया देवि दुःखेन च परिप्लुतः। स मां तुष्टाव हृष्टात्मा हिमवांश्चारुकन्दरः ॥ ५२ ॥

हिमवान्—

शम्भो विश्वेश भर्ग त्रिनयन पुरहन् पाहि मामीश दृष्ट्या
ख्यातो वेदे गिरीशो गिरिश इति भवान् तत्कुरुष्वाद्य तथ्यम्।
शम्भो देव्यानया ते सुरविनुत युतः [1]स्नेहपाशैर्नियोगं
नो सह्यं मे महेश मम शिखरवरे संवसात्रैव शम्भो ॥ ५३ ॥

मदीयापराधानमोघाननन्तान् न केनापि शक्यान् विनिवर्तितुं तु तान्।
महादेव ते पादपद्मं प्रकृष्टं प्रपन्नः प्रपन्नः प्रपन्नः प्रपन्नः ॥ ५४ ॥

---

१ सुरतजनितसत्स्नेहवाक्यैः C, D

श्रीमद्बिल्वमहीरुहौघचलनैर्वातादिभिः पावितं गात्रं मेऽद्य पवित्रतामुपगतं पाहि त्रिनेत्राधुना ।
तन्मूलनीरप्लुतमस्तकं नेत्रे च तद्दर्शने[1] (?) घ्राणं तत्कुसुमगन्धबन्धमधुरं मय्येव शम्भो वस ॥
एवं स्तुतो महादेवि त्वत्पित्राहं महात्मना । तत्तुङ्गपूतशिखरे निवासं समरोचयम् ॥ ५६ ॥
ब्रह्मविष्ण्वादिभिर्देवैः स्कन्देन गणपेन च । अन्यैर्गणवरैर्देवि त्वया शैलेन्द्रकन्यया ॥ ५७ ॥
समर्चितो वसाम्यत्र केदारेश्वरलिङ्गगः । अलिङ्गोऽपि महेशानि सर्वदा लिङ्गरूपधृक् ॥ ५८ ॥
केदारेश्वरनाम्नाहं ख्यातो भूधरगौरवात् । वसाम्यत्र महादेवि लिङ्गेऽस्मिन् पावने शुभे ॥ ५९ ॥
शनैः समर्चितो नित्यं बिल्वपत्रैः फलैरपि । त्वया सहाम्बिके नित्यं सर्वदा सर्वकामदः ॥ ६० ॥

उदयमलयपारियात्रविन्ध्यैः गिरिवर एष मतोऽभिमानतस्ते ।
सुरवरकिन्नरदेवसङ्घनन्दिप्रमुखगणैः सततं निषेवितः ॥ ६१ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे हिमाचलवासहेतुवर्णनं नाम द्वादशोऽध्यायः ॥

---

## ॥ त्रयोदशोऽध्यायः ॥

ईश्वरः –

हिमवच्छिखरे देवि लिङ्गान्यन्यानि सन्ति वै । केदारेश्वररूपाणि शृणु तान्यपि पार्वति ॥ १ ॥
केदारेश्वरमासाद्य मुक्त एव न संशयः । केदारेति सदा जप्त्वा पापसङ्घक्षयो भवेत् ॥ २ ॥
हिमवांस्त्वत्पिता गौरि मेनया सह भार्यया । केदारेशं समभ्यर्च्य बिल्वपत्रैरनेकशः ॥ ३ ॥
हृष्टो भवति मल्लिङ्गनिरीक्षणसमुत्सुकः । संस्तौति सततं भक्त्या हिमवानेष भूधरः ॥ ४ ॥

हिमवान् –

एकं ब्रह्म जगद्द्वितीयमपि वै लोकत्रयं दीप्तिमत् चत्वारः प्रदिशो महेश्वर महाभूतानि पञ्चैव हि ।
षट्कं क्रत्वधिदैवतं पवनकाः सप्तैव वस्वष्टकं दुर्गाणां नवकं दशेन्द्रियगणं त्वत्तो जगज्जायते ॥
ब्रह्मविष्ण्वादयो देवाः केदारेश्वरमीश्वरम् । तत्र चोपगते भानौ देवाः पूज्यारुणोदये ॥ ६ ॥
बिल्वपत्रैः समभ्यर्च्य मुद्रान्नं विनिवेद्य च । वसन्ति तत्र नियता हिमवच्छिखरे शिवे ॥
स्तुवन्ति वाग्भिर्हृष्टाभिर्ब्रह्मविष्ण्वादिभिः सुराः ॥ ७ ॥

---

१ सुरतजनितसस्नेहवाक्यैः C, D

विष्णुः –

हंसः पुष्करमम्बुदं भुजगभुङ् मेघ्यं पयश्चातको यद्वत्तद्वदुमासहाय भगवन् दृष्ट्वा पदाब्जं तव।
आनन्दः समुपैति मां मुहुरहो त्वद्ध्यानतृप्तं मनः श्रुत्वा शङ्करनामबोधितकथां प्रीतो यथा शांभवः॥

विधिः –

ग्रस्तं पापैरनेकैरहिमिव विनतापुत्रवक्त्रान्तरेण
न्यस्तं भूम्यां जलेभ्यो झषमिव नितरां कण्ठसञ्चारि जीवम्।
वस्तं यागीयहिंसानतमिव सततं मृत्युपाशावलीढं
ग्रस्तं मां कालमृत्योरव शिव कृपया देव केदारनाथ ॥ ९॥

नन्दीश्वराभिधं लिङ्गं [1]केदारोपरितः स्थितम्। नन्दिना पूजितं लिङ्गं दृष्ट्वाऽऽनन्दमवाप्नुयात्॥
नन्दी तुष्टाव हृष्टात्मा लिङ्गं नन्दीश्वराभिधम् ॥ ११॥

नन्दी –

ध्यायं ध्यायमघौघहारिचरणं दुःखापनुत्त्यै सदा पायंपायमपायदानरहितं कर्णैस्त्वदीयां कथाम्।
घ्रायं घ्रायमथो भवत्पदलसद्बिल्वीदलं कोमलं जातं जातमुमेश जन्म सफलं प्राहुस्त्वदीया जनाः॥

स्कन्देश्वरमिति ख्यातं स्कन्देनापि सुपूजितम्। संपूजयित्वा तल्लिङ्गं केदारे दैत्यनाशिनीम्॥
मत्तः शक्तिं मुदा प्राप स्तुत्वा च परमेश्वरि।

स्कन्दः –

कालकाल मुनिबालकपाल नीललोहित करे धृतशूल।
व्यालमालगलशोभिमहेश फाललोचन हराव मां सदा ॥ १४॥

गणेशेश्वरसंज्ञं च गजाननसुपूजितम्। लिङ्गमस्त्येकमीशानि केदारेश्वरपश्चिमे॥ १५॥
स्वपुष्करोद्धृतैर्नीरैः स्वशुण्डावलयाहृतैः। बिल्वपत्रैः पङ्कजैश्च पूजयत्येव विघ्नराट्॥ १६॥
मृदङ्गसदृशाराववृंहितैश्च स मां स्तुवन् ॥ १७॥

गणेशः –

त्रियम्बकं त्वां सुभगं (महेशं) सुगन्धि पुष्टिदायकम्।
मां मृत्युतो मोचयाशु उर्वारुकमिव बन्धनात् ॥ १८॥

त्वया संपूजितं लिङ्गं देवि गौरीश्वराभिधम्। तल्लिङ्गसङ्गिनातोऽपि मुक्त्यै देवि भविष्यति॥
कुण्डं चापि कृतं देवि गौरीकुण्डं च पप्रथे। केदारेशं च मां दृष्ट्वा पीत्वा तत्कुण्डजं पयः॥
स पुनः स्तन्यपयसा स्वोदरं नाभिषिञ्चति। त्वयात्र सखिभिः सार्धं स्वपितुः शिखरे शिवे॥

---

[1] केदारे परितः D.

तपस्तप्तं महादेवि दुष्करं परमर्षिभिः । मत्प्राप्तयेऽत्र केदारे स्थाप्य गौरीश्वरं हरम् ॥ २२ ॥
स्थानासनाभ्यां नियतं यमेन नियमेन च । भस्मरुद्राक्षयुक्ताङ्गी त्रिपुण्ड्रावलिभासुरा ॥ २३ ॥
परित्यज्याङ्गभूषादि वल्कलाजिनधारिणी । पुष्पाण्याहृत्य पुण्यानि बिल्वपत्राणि शोभने ॥ २४ ॥
सुरभीणि मनोज्ञानि संपूज्याहर्निशं हि माम् । केदारे पावने लिङ्गे गौरीलिङ्गे तथाऽम्बिके ॥
समर्चितस्त्वया देवि स्तुतोऽहं परमेश्वरि ॥ २६ ॥

पार्वती –

शाङ्गं मङ्गलदं शुभाङ्गदलसद्भूभारसङ्गास्पदं
दग्धानङ्गकृताङ्गसङ्गतमहोत्तुङ्गोत्तमाङ्गं हरम् ।
अष्टाङ्गत्यक्तसङ्गं दहरभवनगं गन्धमाल्यार्चिताङ्गं
लिङ्गस्थं त्यक्तलिङ्गं विमलमुनिमनःस्वान्तरङ्गं भजेऽहम् ॥ २७ ॥

गौरिलिङ्गमघराशिविभङ्गं दुःखलिङ्गगलितान्तरसङ्गम् ।
तुङ्गपुण्यफलदं गतसङ्गं दृष्टमद्य वृषभाङ्गशुभाङ्गम् ॥ २८ ॥
विविधैरमितैश्च साधनैर्मखजालैर्गजवाजिगोप्रदानैः ।
स न लभ्येत महेश पादभक्ति यदि न स्याच्छिवभक्तसङ्गिसङ्गः ॥ २९ ॥

ईश्वरः –

त्वत्स्तुत्याऽहं परं प्रीतः भक्त्या त्वत्कृतया शिवे । लिङ्गसंपूजनेनापि तुष्टः कष्टनिवारकः ॥
तवेष्टदाननिपुणः कृपापूर्णेन चक्षुषा । समागतोऽहं कल्याणि शैवविप्रस्वरूपतः ॥ ३१ ॥
लिङ्गामलजटामौलिः त्रिपुण्ड्रावलिभासुरः । रुद्राक्षमालाभरणः कृशो धमनिसन्ततः ॥ ३२ ॥
दृष्ट्वा त्वं तापसं विप्रं समुत्थायार्घ्यपूजनैः । पूजयित्वा सुखप्रश्नैः फलकन्दनिवेदनैः ॥ ३३ ॥
अपर्णे पर्णसंक्लृप्ते तार्णछद्वराश्रमे । स्वच्छे निःश्रमनिस्तन्द्रे तुष्टस्त्वत्कृतपूजया ॥ ३४ ॥
कुशवृस्यां सन्निविष्टः त्वन्मुखालोकमादरः । कल्याणीं च सुखोदारां तां वाणीं मुक्तवत्यसि ॥

पार्वती –

कुतः समागतं विप्र देशः सुखयिता च कः । नानाद्रुमलताकीर्णे कण्टकावृतदुष्पथि ॥ ३६ ॥
कथं समागतं ब्रह्मन् नाम गोत्रं च तेऽद्य किम् । तव सन्दर्शनाद्विप्र तपश्चीर्णं ममाधुना ॥
दयया मां निरीक्षस्व ब्रूहि किं करवाण्यहम् ॥ ३८ ॥

भस्माभ्यक्ततनुः सदाशिवकथापीयूषपानादरो
रुद्राक्षाभरणः शिवैकशरणः पञ्चाक्षरावर्तकः ।

पुण्ये यस्य गृहे फलादिभिरहो प्राज्याज्यसच्छर्करा-
क्षीरापूपादिसूपैर्मधुरफलरसैः पूजितः शैववर्यः ॥ ३९ ॥

तस्यास्य भागपरिकल्पितसाधुजिह्वास्वादास्पदीकृतसदन्नगणानि भुङ्क्ते ।
तस्याखिलेष्टमपि विष्टपभोगमिष्टं तुष्टः प्रदास्यति हरो हरतीह कष्टम् ॥ ४० ॥

इत्थमूचुर्महाशैव फलं वै पूर्वसूरयः । तत्र संपूजनात् तुष्टः शिपिविष्टो न संशयः ॥ ४१ ॥

इत्थं त्वद्वचनं श्रुत्वा विप्ररूपोऽहमम्बिके । त्वामवोचं रोषयितुं स्तुतिनिन्दाकरं वचः ॥ ४२ ॥

विप्रः—

बाला त्वं पर्वतस्यास्य त्वयाद्य कुलमुद्धृतम् । शिरीषमृदुला तेऽद्य तनुः क्व नु तपः शुभे ॥ ४३ ॥

भूषणादिप्रभाजालैः सुन्दराङ्गं तवामले । भस्मरुद्राक्षमालाभिः किं शोभां वहतेऽद्य हि ॥ ४४ ॥

महार्हवाससा वीता वल्कलाजिनसंवृता । त्वया लीलाविलासेन खेलनीयं सखीगणैः ॥ ४५ ॥

लिङ्गसंपूजनादस्माद्वाले त्वं विरमाधुना । विजने विपिने घोरे सिंहव्याघ्रगणाकुले ॥ ४६ ॥

कथमेकाकिनीं हित्वा निद्राति स हि भूधरः । त्वन्माता वा तथा मेना बालां कुलकरीं सुताम् ॥

त्यक्त्वाद्य क्व प्रयाता सा इत्यहो साहसं कृतम् ।
किं त्वं प्रार्थयसे भीरु किं वाऽभीष्टं तु पश्यसि ॥ ४८ ॥

तदेतत् साधयाम्यद्य पश्य मे तपसो बलम् । इति विप्रवचः श्रुत्वा सस्मिता विस्मिता ह्यसि ।
ईषदुन्नम्य वदनं मां विलोक्याभ्यभाषथाः ॥ ४९ ॥

पार्वती—

किं ते व्यवसितं ब्रह्मन् त्वत्तपोऽप्ययसाधना । नाहं तप्स्ये यथाकामं गच्छ वा तिष्ठ वा द्विज ॥
संपूज्य पशुभर्तारं तस्मादिष्टं वृणोम्यहम् । विप्रस्त्वामाह सुप्रीतस्तदा वै भीषयन् शिवे । ५१ ॥

विप्रः—

मदुक्तं तद् तथा बाले पशुभर्ता महेश्वरः । तवेष्टदाननिपुणः स कथं पर्वतात्मजे ॥ ५२ ॥

उन्मत्तोपि कृतो मुण्डः कपाली भस्मभूषितः । इत्थं मन्निन्दनं श्रुत्वा सरोषा त्वं महेश्वरि ॥
गच्छ गच्छेति तं विप्रं निराकृत्योटजं गता ॥ ५४ ॥

पार्वती—

कोऽयं विप्रो दैत्यरूपः शिवनिन्दापरायणः । हा कष्टं सखि यन्मेऽद्य श्रोत्रे निन्दाश्रवं गते ॥

किं पताम्यद्य शिखरादस्मान्मम पितुः सखि । शिवनिन्दाश्रुतौ प्रोक्ता निष्कृतिर्मरणं खलु ॥
एवं दक्षसुताहं तु श्रुत्वा निन्दां महेशितुः । दक्षाददक्षतः साक्षात् शिक्षिता सा तनूर्मम ॥ ५७ ॥
इति सा निश्चयं कृत्वा त्यक्तुमैच्छत् तनुं तदा । एतस्मिन्नन्तरे देवि त्यक्तं विप्रस्य तद्वपुः ॥
त्रिलोचनमुदाराङ्गं नीलग्रीवं त्रिलोचनम् गौरीलिङ्गात् समुद्भूतं मां दृष्ट्वा हर्षमागता ॥ ५९ ॥
प्रणम्य मां भक्तियुक्ता सखीभिः कमलानने । अस्तौषीरत्वं तदा देवि भक्तियुक्तेन चेतसा ॥

गौरी—

देवस्त्वं सहमान एव भगवन् भक्तेषु पापेष्वपि
पापानां गणनापि नो मम विभो तस्मात्सहस्वाधुना ।
नाभ्यार्चं भगवत्पदाम्बुजमहो दृष्टं न लिङ्गं मया
सद्ज्ञानात्तव ये महेश्वर सदा तैः सङ्गतिर्नो कृता ॥ ६१ ॥

यस्त्वां जिह्मधिया महेशममराधीशं न चाभ्यर्चयेत्
तं त्वं वञ्चयसे महाभवशतैः पापैश्च तापैरपि ।
तस्मात् त्वं परिवञ्चकोऽसि भगवन् यो बिल्वपत्रैर्मुदा
त्वल्लिङ्गं सकृदर्चयेद्धि स भवेन्मुक्त्यङ्गनाकामुकः ॥ ६२ ॥

इति मां त्वं तदाऽस्तौषीर्भक्त्या च विनयेन च । तव पाणिग्रहं कृत्वा तुष्टोऽस्मि गिरिकन्यके ॥
त्वया संपूजिते लिङ्गे गौरीशे संवसाम्यहम् । गौरीलिङ्गे सकृद्दृष्टे तज्जन्म सफलं भवेत् ॥ ६४ ॥
केदारेशस्य दिग्भागे दक्षिणे सरसस्तटे । दृष्ट्वा गौरीश्वरं लिङ्गं गौरीलोके वसेच्चिरम् ॥ ६५ ॥
नन्दीश्वरस्तथा प्राच्यामास्तेऽभीष्टफलप्रदः । तत्र तप्त्वा तपो नन्दी गाणपत्यमवाप्तवान् ॥ ६६ ॥
पश्चिमे गणनाथेशो गणवृन्दैश्च पूजितः । गौरीश्वरो दक्षिणतस्त्वया देवि समर्चितः ॥ ६७ ॥
स्कन्देश्वरस्तथोदीच्यां स्कन्देनैव सुपूजितः । मध्ये केदारनाथस्य लिङ्गं श्रेष्ठं तु मे सदा ॥ ६८ ॥
हिमवच्छिखरे देवि दृष्ट्वा नत्वा च भक्तितः । गौरीसरसि मज्जन्म सर्वतीर्थजलाप्लुतः ॥ ६९ ॥
केदारेश्वरमाराध्य को न मुच्येत बन्धनात् । केदारलिङ्गसदृशं न भूतं न भविष्यति ॥ ७० ॥
सकृत् संपूज्य लभते मुक्तिमन्ते गिरीन्द्रजे । हिमवच्छिखरे देवि पश्यन् केदारमीश्वरम् ॥ ७१ ॥
अश्वमेधशतेभ्योऽपि फलं लब्ध्वा विमुच्यते ॥ ७२ ॥

ईश्वरः—

यो मामनन्यगतया शिवभावभक्त्या केदारमीश्वरमघाघसमुद्रसेतुम् ।
संस्तभ्य चित्तमुमया समुपेतमीशमाशास्य मारजनकादिसुपूजिताङ्घ्रिम् ॥ ७३ ॥

बिल्वीदलैश्च कमलैश्च सदा हि भक्त्या नीलोत्पलैश्च कुमुदैर्गिरिजे स मुक्तः।
संपूजयेदघयुतोऽपि महाघमुक्तो भुक्त्वा भवेन्मम कृपावशतोऽतिधन्यः ॥ ७४ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे केदारेश्वरलिङ्गावलिमहिमवर्णनं नाम त्रयोदशोऽध्यायः ॥

## ॥ चतुर्दशोऽध्यायः ॥

ईश्वरः —

पुनरन्यां कथां देवि शृणु श्रवणभूषणाम्। सौराष्ट्रे क्षेत्रमस्त्येकं सोमनाथाह्वयं शुभम् ॥ १ ॥
तत्रासीन्महितो राजा शीतांशुकुलभूषणः। अनपत्यः स वै देवि सौराष्ट्रेशो बृहद्बलः ॥ २ ॥
पयोष्णीतीरमासाद्य सिन्धुराश्वसमावृतः। महत्या सेनया सार्धं महिष्या च समन्वितः ॥ ३ ॥
मुद्गलस्याश्रमं प्राप्य श्रान्तः सूर्यकरैर्नृपः। प्रणम्य मुद्गलं राजा पूजितस्तेन विष्टरे ॥ ४ ॥
निषसाद महीपालः पप्रच्छ कुशलं मुनिम्। आश्रमेषु च पुण्येषु तथाग्निशरणेषु च ॥ ५ ॥
कच्चिन्निर्विघ्नितं ब्रह्मन् तपस्तेऽग्निमुखाः क्रियाः। भवच्छिष्यगणाः सर्वे विनीतास्त्वयि सत्तमे ॥
मृगपक्षिगणाः सर्वे गावश्च सुखिनो वने। [1]हस्तिहस्तापरामृष्टं भवनं ते महामुने ॥ ७ ॥
बृहद्बलस्य तद्वाक्यं श्रुत्वा स मुनिसत्तमः। स उवाचाथ राजानं प्रसन्नवचसा मुनिः ॥ ८ ॥

मुद्गलः —

त्वयि शासति भूलोकं सर्वं च निरुपद्रवम्। त्वयाद्य पालिताः सर्वे निवसामस्तपस्विनः ॥ ९ ॥
तपसा परमेशानं समभ्यर्च्य यथाविधि। भवानपि सदा राजा सुखी सैन्यसमावृतः ॥ १० ॥
कोशागारे तथा राष्ट्रे अमात्ये दुर्गरक्षणे। दारपौरादिकार्येषु विनीतोऽसि नृपात्मज ॥ ११ ॥
इत्थं मुनिवचः श्रुत्वा स राजा मुद्गलं तदा। प्राञ्जलिर्विनयोपेतो मुद्गलं वाक्यमब्रवीत् ॥ १२ ॥

राजा —

धन्योऽहमधुना विप्र यन्मां त्वमनुकम्पसे। शांभवस्याद्य ते दृष्ट्या सर्वं कुशलमेव मे ॥ १३ ॥
तथापि दुर्लभो भावः स त्वया प्राप्य एव हि। शांभवा एव लोकेषु शम्भुवो मुनिसत्तम ॥ १४ ॥
त्वद्दयापाङ्गसङ्गेन सुखपङ्को ममाभवत्। विश्वस्तस्त्वयि चात्यन्तं पितरीव महामुने ॥ १५ ॥
कारणं तत्र वक्ष्यामि तदिहैकमनाः शृणु। असंख्यं गणनाहीनं वित्तमस्त्येव मद्गृहे ॥ १६ ॥

१ हस्तिहस्तपरामृष्टं न वनं D.

मातङ्गाश्च तुरङ्गाश्च उत्तुङ्गाः सन्ति कोटिशः । गोखरोष्ट्राजाविकाश्च बलीवर्दाश्च कोटिशः ॥
रथाश्च शिबिकाः सन्ति दन्तिदन्तोत्तमैः कृताः । हिरण्यरजतानां च रत्नानां चैव राजयः ॥
गिरीन्द्रशिखराकाराः सन्ति विप्र सहस्रशः । मद्गृहे नियतं विप्र धान्यानां गणनैव न ॥ १९ ॥
अमात्या बान्धवाः पौरा भृत्याश्चैव भृता मया । हृष्टपुष्टजनाः सर्वे शिपिविष्टार्चने रताः ॥ २० ॥
ब्राह्मणावसथाश्चैव सोर्वराः शर्वतुष्टये । पानीयशालारुचिराः सरत्तीराणि कोटिशः ॥ २१ ॥
विश्रान्तिमण्टपाश्चापि कृताः साश्रमया मुने । अश्वमेधादयो यागाः स्वाद्वन्ना बहुदक्षिणाः ॥
कृताः सहस्रशो विप्र साक्षाच्छङ्करतुष्टये । न तस्करः स्वैरिणी वा अनग्निर्नैव मे पुरे ॥ २३ ॥
ग्रामे राष्ट्रे जनपदे दरिद्रो नासहस्रदः । दारा मनोहराः सन्ति रमाधिकारिणो मम ॥ २४ ॥
शतसंख्या मुनिश्रेष्ठ शरदिन्दुसमाननाः । अनाहतं शासनं मे सर्वदेशेषु सत्तमाः ॥ २५ ॥
दास्यो मनोहराः सन्ति पीनश्रोणिपयोधराः । यौवनोन्मादसंवीता निष्ककण्ठ्यो वराननाः ॥
दासाश्च मेऽद्य नेदिष्ठा युवानो मृष्टकुण्डलाः । भटाश्च समहोत्साहाः सर्वशस्त्रधराः सदा ॥ २७ ॥
जेतारो रिपुसैन्यानां न कदाचित् पराजिताः । सर्वमेतन्मुनिश्रेष्ठ नैवानन्दकरं मम ॥ २८ ॥
नन्दनानन्दहीनस्य नानन्दः क्वापि दृश्यते । इत्युक्त्वा सोऽश्रुपूर्णाक्षो राजोच्छ्वाससमन्वितः ॥
दुःखितः प्राञ्जलिर्विप्रं प्रणनाम पुनः पुनः । स मुनिः सान्त्वयन् वाक्यैर्मैवं राजन्निति ब्रुवन् ॥
स्वपाणिकमलेनैव तन्मुखं परिमार्जयन् । तमाह नृपतिं विप्रो ध्यायन्नीशानमव्ययम् ॥ ३१ ॥

मुद्गलः —

त्वं राजा सर्वलोकानां सत्यधर्मपरायणः । त्वया न सदृशो लोके धनैर्धनपतेः समः ॥ ३२ ॥
त्वयाऽश्वमेधैः सततं तृप्तो मेघपतिर्यतः । स ते कामं पूरयति कामारिर्नात्र संशयः ॥ ३३ ॥
पयोष्ण्यां स्नाहि राजेन्द्र नद्यामस्यां सुखाप्तये। इत्युक्तः सोऽपि नृपतिः स्नात्वा नद्यां महामुनिम् ॥
शरणं स जगामैव भक्तं मम शुचिस्मिते । समुद्धूल्य तदङ्गानि भस्मना स्वकराम्बुजैः ॥ ३५ ॥
अग्निरित्यादिभिर्मन्त्रैस्त्रियायुषत्रिपुण्ड्रकैः । ईशानेति च मन्त्रेण ददौ रुद्राक्षमालिकाः ॥ ३६ ॥
प्रददौ शांभवीं विद्यां श्रीमत्पञ्चाक्षरीं शुभाम् । स तया विद्यया रेजे राजा चन्द्र इवोद्गतः ॥
नभसीवामले देवि तारागणपरीवृतः । सामात्यं भोजयामास मुनिर्मूलफलैर्नृपम् ॥ ३८ ॥
शिवनैवेद्यमास्वाद्य स्वादोः स्वादीय उत्तमं । नियुक्तस्तेन मुनिना स तु राजा बृहद्बलः ।
प्रणम्य तं मुनिं राजा प्राञ्जलिस्तं वचोऽब्रवीत् ॥ ३९ ॥

राजा —

अनुशास्तु भवानेव तत्करिष्यामि सादरम् । तदा बृहद्बलवचो मुनिः श्रुत्वा तमब्रवीत् ॥ ४० ॥

मुनिः —

राजन्नियतवाङ्मौनी नित्यं रुद्रजपादरः । जप पञ्चाक्षरीं विद्यां पञ्चपातकनाशिनीम् ॥ ४१ ॥
अग्निरित्यादिभिर्मन्त्रैः समुद्धूल्य स्वकां तनुम् । त्रियायुषैस्त्र्यंबकैश्च त्रिपुण्ड्रं धारयादरात् ॥
शिरोललाटवक्षःसु कण्ठबाहुजसन्धिषु । रुद्राक्षं धारयाद्याशु कण्ठकर्णकरादिषु । ४३ ॥
बिल्वपत्रैर्बाणलिङ्गं नियमेन समर्चय । शिवनैवेद्यमास्वाद्य प्रहृष्टो भव पार्थिव ॥ ४४ ॥
शांभवान् शिवनैवेद्यैर्भोजयाद्य सहस्रशः । त्रिनेत्रभुक्तिपात्रं हि शांभवा एव केवलम् । ४५ ॥
शांभवा एव ते पूज्याश्चातुर्वर्ण्येषु वै नृप । शांभवानां रक्षणेन शम्भुः प्रीणाति नान्यथा ॥४६॥
शांभवो नाम राजेन्द्र शिवैकशरणस्तु यः । भस्मत्रिपुण्ड्ररुद्राक्षमालाभिर्लिङ्गपूजकः ॥ ४७ ॥
सोमवारव्रती चैव नक्तभोजी शिवार्चकः । तत्त्यक्त्वा पतितो भूयादिति जाबालपारगाः । ४८ ॥
[1]कालाष्टम्यां महादेवं कृष्णपक्षे विशेषतः । संपूज्य रात्रौ नक्ताशी मासि मासि नृपोत्तम ॥
तत् त्यक्त्वा पतितो भूयादिति जाबालपारगाः । श्रीप्रदोषे व्रतं पुण्यं पक्षयोर्नियतं कुरु ॥ ५० ॥
संपूज्य रात्रौ नक्ताशी मासि मासि नृपोत्तम । तत् त्यक्त्वा पतितो भूयादिति जाबालपारगाः ॥
पञ्चामृतैर्लिङ्गमौलिं फलसारैर्महेश्वरम् । बिल्वपत्रैः पङ्कजैश्च समभ्यर्च्य शिवं सदा ॥ ५२ ॥
नक्तं नैवेद्यमास्वाद्य शांभवैः संवसाद्य वै । तत् त्यक्त्वा पतितो भूयादिति जाबालपारगाः ॥
ग्रहणे सोमसूर्योत्थे पुण्ये पर्वसु शङ्करम् । संपूजय देवदेवस्य लिङ्गं पापैर्विमुच्यते ॥ ५४ ॥
भस्मरुद्राक्षहीनाङ्गान् दण्डयाशु विनाशय ; ऊर्ध्वपुण्ड्रादिचक्राङ्कान् देशात् निःसारयाधुना ॥
ऊर्ध्वपुण्ड्रं धृतं येन तन्मुखं नावलोकयेत् । यदि पश्येद्भ्रमाद्वापि चण्डभानुमुदीक्ष्य च ॥ ५६ ॥
जप पञ्चाक्षरीं विद्यां सर्वाघौघविनाशिनीम् । भावैः सहास्तु संल्लापो हृल्लासोन्मादिलापतः ॥
त्रिकालमप्रमादेन बिल्वपत्रैः समर्चय । सपौरवर्गः सामात्यः सदारस्तं महेश्वरम् ॥ ५८ ॥
कुरु बिल्ववनादीनि पुष्पापारवनान्यपि । शांभवान् शिवनैवेद्यैः पावनैर्भोजयाधुना ॥ ५९ ॥
भवो भावसुखेनैव भुङ्क्तेऽन्नानि नृपोत्तम । शृणु शैवीं कथामेव शांभवैर्भूतिभूषितः ॥ ६० ॥
बिल्वमूलेषु सततं शिवलिङ्गानि पूजय । नीलोत्पलैर्बिल्वपत्रैर्दूर्वापामार्गजैर्दलैः ॥ ६१ ॥
संपूजय महादेवं तेन पापक्षयो भवेत् । शिवालयानां निर्माणं कुरुष्वोद्दामगोपुरम् ॥ ६२ ॥
प्राकारमण्टपोपेतं रथोत्सवविराजितम् । शिवलिङ्गालयान्येव दीपैरुज्ज्वालयाधुना ॥ ६३ ॥
संमार्जितानि सततं धूपितानि सदा कुरु । गन्धागरुत्थतोयैस्त्वमासेचय महेश्वरम् ॥ ६४ ॥

---

१ शिवं मासचतुर्दश्यां कृष्णपक्षे विशेषतः । समर्चय महादेवं नक्ताशी सततं भव ॥ (C)

रुद्रसूक्तैर्महादेवं जलाविच्छिन्नधारया । दुन्दुभ्याघातजारावैर्नाट्यैः काहलशङ्खजैः ॥ ६५ ॥
नादैः सन्नादितं शम्भोरालयं कुरु भूपते । स्वर्णरौप्यादिपात्राणि पूजार्थं शङ्करे कुरु ॥ ६६ ॥
रथोत्सवादिकं शम्भो राजन् रथपतौ कुरु । सतातिरात्रैर्विविधैस्त्रिनेत्रं योजयाधुना ॥ ६७ ॥
अम्बरेशं महादेवं सर्वदा शरणं व्रज । सोमनाथं महादेवं सोमार्धकृतशेखरम् ॥ ६८ ॥
ध्यायन् देवं विरूपाक्षं दाक्षायण्या समन्वितम् । मन्त्रिवर्गे समाधाय राज्यमेतदखण्डितम् ॥
खण्डेन्दुमौलौ सततं निवेशय मनो नृप । तेनात्माखण्डलां लक्ष्मीं कामं कामारिशासनात् ॥
प्राप्नोषि नियतं राजन्नैव तेऽविषयो भवेत् । सोमनाथं महालिङ्गं पयोष्णीतीरसंस्थितम् ॥ ७१ ॥
तत्र त्वं नियतो भूत्वा तपः कुरु महामते । सादरः शिवपूजायां रुद्रसूक्तजपादरः ॥ ७२ ॥
जप पञ्चाक्षरीं विद्यां अयुतं प्रत्यहं नृप । तदा शिवप्रसादेन तनयो विनयोज्वलः ॥ ७३ ॥
भवोद्भवप्रसादेन स महीं पालयिष्यति । मा शुचस्त्वं नृपश्रेष्ठ गच्छ सोमेश्वरालयम् ॥ ७४ ॥
वर्षाणि त्रीणि नियतं तत्र सम्यक् तपः कुरु । प्रदोषेषु महादेवं सोमनाथं समर्चय ॥ ७५ ॥

मन्दप्रदोषे शिवलिङ्गपूजां कुर्वन् लभेद्द्वादशवर्षपूजाम् ।
मन्दारकुन्दनवचम्पकबिल्वपत्रैर्मुक्तिं प्रयाति सुकृतं च फलं लभेत ॥ ७६ ॥

मीढुष्टमः शिवतमः श्रुतिषु प्रसिद्धः सिद्धौघवन्दितमहापदपद्मयुग्मः ।
त्वं भक्तियुक्तमनसा समवाप्य शम्भुं सोमेश्वरं नतसुरासुरवृन्दमौलिम् ॥ ७७ ॥

वसुधाधिपते पतिं पतीनां समवाप्य प्रमथाधिनाथनाथम् ।
धृतचन्द्रकलं गले गरं त्वयि मोदात् सुतमाशु दापयेत् ॥ ७८ ॥

सूतः —

इति मुनिवचनं निशम्य राजा सततं शङ्करपादपद्मलोलः ।
स तु सैन्यसमावृतो ययौ प्रणतस्तं मुनिमाशु सोमनाथम् ॥ ७९ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे सोमनाथमाहात्म्ये मुद्गलनृपसंवादे मुद्गलोपदेशो नाम चतुर्दशोऽध्यायः ॥

## ॥ पञ्चदशोऽध्यायः ॥

सूतः –

सौराष्ट्रे सोमनाथं तं गत्वा भस्मविभूषणः । पयोष्णीसलिले स्नात्वा अमात्ये राज्यमादरात् ॥
समावेश्य सदारश्च तपश्चक्रे सुदारुणम् । स सुतार्थं तदा राजा शिवे विन्यस्तमानसः ॥ २ ॥
महार्हवसनादीनि तथैवाभरणानि च । त्यक्त्वा चीरादिसंछन्नो रुद्राक्षाभरणोज्ज्वलः ॥ ३ ॥
भस्मच्छन्नस्त्रिपुण्ड्राङ्कः सर्वदा शिवपूजकः । सर्वमन्यत् परित्यज्य शिवं ध्यायन् विमत्सरः ॥ ४ ॥
रुद्रावर्तनशीलश्च सदा पञ्चाक्षरं जपन् । भक्त्या त्वनन्यया शैवलिङ्गार्चनपरायणः ॥ ५ ॥
बिल्वपत्रैर्वन्यपुष्पैः फलमूलैर्महेश्वरम् । स्वर्भानुरिपुचण्डांशुसोदरद्रुममूलगः ॥ ६ ॥
तच्छदछन्नपूरोहकिरणस्वच्छमानसः । पदार्थबोधविस्पष्टवचसा रुद्रजापकः ॥ ७ ॥
रुद्रविन्यस्तहृदयतुच्छीकृतजगत्त्रयः । तस्य दारा महोदाराः तत्सेवानिरताः सदा ॥ ८ ॥
बिल्वपत्राणि पुष्पाणि कमलान्यमलान्यपि । नीलोत्पलानि फुल्लानि तथा कोकनदान्यपि ॥ ९ ॥
फलमूलानि चारूणि सुस्वादूनि तदङ्गनाः । समाहृत्य स्वभर्तुस्ताः परिचर्यापरायणाः ॥ १० ॥
तस्यामात्यगणाः सर्वे तस्य राज्यस्य सत्क्रियाः । निवेदयन्ति सततं शर्वध्यानपरायणाः ॥ ११ ॥
राजानं ते समागम्य प्रणम्य विनयान्विताः । सभोगभाग्यैः सततं समाग्यः (?) पूजयच्छिवम् ॥
एवं संवसतस्तस्य कालो भूयानवर्तत । तपस्यन्तं तु राजानं दृष्ट्वा मुनिगणास्तदा ॥ १३ ॥
अत्यन्तं विस्मयाविष्टाः शिपिविष्टपरायणम् । मुनयस्तं तदा दृष्ट्वा इदमूचुः परस्परम् ॥ १४ ॥

मुनयः –

अहो ह्येतादृशी निष्ठा न क्वापि भुवि विश्रुता । कुतोऽद्य दर्शनं विप्रा नष्टापत्कुलसञ्चयः ॥ १५ ॥
धन्योऽयं कृतकृत्योऽयं सोमनाथार्चने रतः । राज्ञोऽस्य शांभवस्यास्य दर्शनान्नष्टकिल्बिषाः ॥
वयमप्यनुपास्यामो निष्ठां कष्टविनाशिनीम् । एतस्य सुकुमाराङ्ग्यो दारा मारमनोहराः ॥ १७ ॥
रंभा धिक्कारकारिण्यस्तरुण्यः प्रियदर्शनाः । विस्तीर्णायतसुश्रोण्यः पीनवृत्तपयोधराः ॥ १८ ॥
गौरीमाराधयन्ति स्म बलिधूपादिभिः सदा । राज्ञोऽप्यस्य च दाराणां किं वा दास्यति शङ्करः ॥
अनेन कृतकृत्येन वयं धन्याः स्म सर्वदा । इत्यन्योन्यं मुनिगणाः सदाराः सकुमारकाः ॥ २० ॥
विनयावनताः सर्वे उपतस्थुस्तदा नृपम् । प्राज्यैर्मूलफलैः पुष्पैः बृसीभिरजिनैरपि ॥ २१ ॥

धन्याः पूजयितव्याश्च यतो ब्रह्मण्य ईश्वरः । ब्राह्मणे शांभवश्रेष्ठे वसेन्नित्यं पिनाकधृक् ॥ ६४ ॥

ब्रह्मण्यस्त्वं यतो राजन् शांभवार्चापरायणः । त्रिनेत्रगात्ररूपोऽसि सुत्रामाद्यमिपूजितः ॥ ६५ ॥

इत्युक्त्वा नन्दिकेशः स नृपतिं शांभवोत्तमम् । ब्राह्मणांस्तान नमस्कृत्य राजानं परिस्वजे ॥

शाङ्करस्कालिङ्गनेन हर्षानन्दाश्रुसंयुतः । उवाच गणपान् वीक्ष्य राजानं च गणेश्वरः ॥ ६७ ॥

नन्दिकेशः –

अहो बिल्वमूलस्थलिङ्गार्चनेन प्रकृष्टानि कष्टानि नष्टानि सद्यः ।
विनष्टाघसङ्घो वसिष्ठाद्विशिष्टः स एवाष्टमूर्तेः कटाक्षैकलेशैः ॥ ६८ ॥

गत्वा बिल्ववनं नवारुणदलाक्रान्तोरुशाखान्वितं
तत्तीरे सरसि प्रभूतपयसि स्नात्वा कृतोद्धूलनैः ।
धृत्वा फालतले त्रिपुण्ड्ररचनां रुद्राक्षमालां गले
[1]ध्यात्वा शङ्करमर्च्य पातकयुतो नत्वा जनो मुक्तिभाक् ॥ ६९ ॥

जप्त्वा श्रीतरुमूलगो मनुगणं गच्छेत्व फलाधिक्यतां
शैवं चापि षडक्षरं प्रजपतो मुक्तिं ददातीश्वरः ।
श्रीरुद्रं यजुषां वरं च पठतां प्रीतो भवेच्छङ्करः
तन्मूलोत्थजलैः शिरः प्रसिचयन् तीर्थैः समस्तैः प्लुतः ॥ ७० ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे सोमनाथमाहात्म्ये बृहद्बलनन्दिकेशसमागमवर्णनं नाम पञ्चदशोऽध्यायः ॥

---

## ॥ षोडशोऽध्यायः ॥

---

राजा –

सोमराजेश्वरं लिङ्गं सोमराज्ञा प्रपूजितम् । इत्युक्तं च त्वया नन्दिन् तेन संपूजितं कथम् ।
तदाख्यानविशेषं मे सर्वं कथय विस्तरात् ॥ १ ॥

सूतः –

स राज्ञो वचनं श्रुत्वा नन्दिकेशः शिवार्चकः । शिवपादाम्बुजं ध्यात्वा दृष्ट्वा शांभवपुङ्गवान् ॥
बृहद्बलं च राजानं गणेशो नन्दिकेश्वरः । प्राह तं शांभवं विप्राः शैलादिर्गिरिजे तदा ॥ २ ॥

---

१ धृत्वा C.

नन्दिकेशः –

अत्रेतिहासं वक्ष्यामि सावधानमनाः शृणु । बृहद्बल महाभाग शांभवैः सह सादरम् ॥ ४ ॥

पञ्चाशत् कन्यकाश्चासन् दक्षस्यैव प्रचेतसः । ददौ सद्धर्माय कश्यपाय त्रयोदश ॥ ५ ॥

सप्तविंशति सोमाय चतस्रोऽरिष्टनेमये । सतीं ददौ स रुद्राय महादेवाय शूलिने ॥ ६ ॥

शिवनिन्दाकरं ज्ञात्वा पितरं स्वां तनुं तदा प्रादहत् सा सती कोपाद्दक्षो नीतो ह्यदक्षताम् ॥

मखान्तकस्तदा राजन् देवाः सन्ताडिता गणैः । दक्षयज्ञहरः शम्भुर्नाम्नाऽऽसीत् स तदा शिवः ॥

सोमोऽथ रोहिणीं प्राप्य मुदमाप तदा सुखम् ।
अन्यास्ता दक्षदुहिताः (?) दक्षं प्राप्य सुदुःखिताः ॥ ९ ॥
लज्जया किञ्चिदानम्य वदनं ताः समब्रुवन् । १० ॥

दक्षकन्याः –

भगवन् सोमराज्ञा हि वयं सर्वाविमानिताः । रोहिणीमेव भजते नास्मासु रमते तथा ॥ ११ ॥

इत्थं पुत्रीवचः श्रुत्वा सान्त्वपूर्वमिदं वचः । प्राह दक्षस्ततो गत्वा सोमं तेन च पूजितः ॥ १२ ॥

दक्षः –

सर्वाः पाणिगृहीतास्ते अतिचारो हि तासु किम् । भजसे रोहिणीमेव नैतत् त्वय्युपपद्यते ॥ १३ ॥

पुत्र्यो मे नावमन्तव्या वर्तस्व च यथाक्रमम् । बहुभार्यो भवेद्यश्च त्यक्त्वैकां काममोहितः ॥

अदोषां भजते यश्च स यामीयातनाग्र्यभुक् । नैव देवा हविस्तस्य पितरस्तत्स्वधामपि ॥ १५ ॥

नाश्नन्ति व्रतपर्वाणि भ्रूणहा सद्भिरुच्यते । मृतो हि श्वानयोनीषु दारत्यागी वसेन्नरः ॥ १६ ॥

इति धर्मं विदित्वापि कथं सोम भजेद्भवान् ॥ १७ ॥

सोमो दक्षवचः श्रुत्वा सान्त्वयन् श्वशुरं नृपः । वाचमाह तदा भीतः प्राञ्जलिः प्रणतस्तदा ॥

सोमः –

प्रजापते क्षमस्वेमं मन्तुं माक्रुध मय्यपि । सर्वास्वेवानुवर्तेऽहं यथापूर्वं न संशयः ॥ १९ ॥

दक्षः सोमवचः श्रुत्वा स्वकीयं भवनं गतः । पुनश्च कामान्मन्दात्मा रोहिणीमुपसेवते ॥ २० ॥

तदा ताः कन्यकाः सर्वाः पुनः प्रोचुश्च तत्कृतम् ।

कन्यकाः –

तत् त्वया सान्त्वितः पूर्वं सोमो नास्मासु वर्तते । यथापूर्वं स कामात्मा रोहिणीमुपसेवते ॥

शशाप क्रोधाद् दक्षस्तं कन्यानां वाक्यसायकैः ॥ २२ ॥

तानागतान् नृपो दृष्ट्वा उत्थायाथ प्रणम्य च । तान् पूजयित्वा धर्मेण साऽर्घ्यपाद्यपुरःसरम् ॥
शांभवान् विनयाद्राजा भूतिरुद्राक्षधारिणः । प्राञ्जलिर्विनयेनाह भवभक्तान् दृढव्रतान् ॥ २३ ॥
राजा —
धन्योऽस्म्यहं महाशैवा भवत्पादाब्जदर्शनात् । त्रिनेत्ररूपाः सुत्राममान्याः यूयं विशेषतः ॥
भवदागमनेनैव शिबिरं पावनं मम । वाणीपतिनिभा यूयं ब्रूत किं करवाणि वः ॥ २५ ॥
इति राज्ञोऽर्थगम्भीरां श्रुत्वा वाचं तु शांभवाः । राजानं शांभवश्रेष्ठं सोमशेखरपूजकम् ।
प्राहुस्ते विनयोपेतं सदाराः सकुमारकाः ॥ २६ ॥
शांभवाः —
सुधाधामखण्डोज्ज्वलन्मौलिगङ्गाप्रकृष्टोरुलिङ्गार्चनासक्तचित्ताः ।
विरक्ताः सुरक्तास्त्वया शांभवेन वसामः सुखेनाद्य निर्वृत्तचित्ताः ॥ २७ ॥
चिरायाद्य बिल्वैः समभ्यर्च्य लिङ्गान्यमोघानि मालूरसंमूलगानि ।
लभामोऽद्य मुक्तिं भजामोऽद्य मुक्तिं त्वया शांभवेनाद्य वस्तुं मनो नः ॥ २८ ॥
सूतः —
शांभवानां वचः श्रुत्वा राजा सन्तुष्टमानसः । प्राह तान् प्रणयोदारान् सदारः प्राञ्जलिस्तदा ॥
राजा —
भवद्भिः शांभवैः साकं सोमशेखरपूजकः । वसामि सामि सोमाङ्कलिङ्गपूजापरायणः ॥ ३० ॥
अतःपरं किमुत्कृष्टं भाग्यं शांभवसत्तमाः । भवत्पूताङ्गसङ्गेन पापभङ्गो भवेन्मम ॥ ३१ ॥
ओमित्युक्त्वाऽथ मुनयो बिल्वमूलेषु शङ्करम् । भस्मनोद्धूल्य सर्वाङ्गमग्निरित्यादिमन्त्रतः ॥
रुद्राक्षधारिणः सर्वे करकर्णगलादिषु । बाणलिङ्गेषु तुङ्गेषु बिल्वमूलस्थितेषु च ॥ ३३ ॥
बिल्वपत्रैः सदारास्ते पूजयामासुरीश्वरम् । शांभवांश्च सहायांस्तान् शिवनैवेद्यराशिभिः ॥ ३४ ॥
भोजयामास नृपतिर्नित्यं शतसहस्रशः । सदा शिवकथा एव तस्यावर्तत संसदि ॥ ३५ ॥
केचिद्रुद्रं जपन्ति स्म बिल्वमूले द्विजोत्तमाः । केचित् पञ्चाक्षरजपं कुर्वन्ति नियतं शिवे ॥ ३६ ॥
बिल्वमूलेषु लिङ्गेषु नीरधाराप्रकल्पनैः । कालं नयन्ति ते शैवा बिल्वपत्रार्चनैः परे ॥ ३७ ॥
आसायमप्रमादेन आसूर्योदयमद्रिजे । कालकालार्चनेनैव कालस्तेषां क्षणायते ॥ ३८ ॥
शिपिविष्टार्चनरतास्तेन राज्ञा प्रपूजिताः । तान् दृष्ट्वा स तदा राजा प्रहृष्टः शैवपुङ्गवान् ॥
प्रकृष्टतरमात्मानं मन्यतेऽसौ बृहद्बलः । शांभवैः सह सल्लापं कुर्वन् शिवकथादिभिः । ४० ॥

चकार कालापनयं कालकालार्चनान्नृपः। तद्द्वारा मुनिपत्न्यस्ताश्तेषां च परिचर्यया ॥ ४१ ॥
शिवार्चकार्चनेनैव नैवेद्यपरिकल्पनैः। कालो नीतो महादेवि तैः सर्वैर्मुनिभिर्नृपः ॥ ४२ ॥
मोदमाप तदात्यन्तं सोमनाथार्चने रतः। विपिनस्थोऽपि नृपतिः शांभवैः परिवारितः ॥ ४३ ॥
त्रिविष्टपसुखं प्राप भूमावाखण्डलो यथा। तान् द्रष्टुमागताः सर्वे मया च प्रेषिता गणाः ॥
नन्द्यादयो महादेवि विमानैर्हंसयायिभिः। त्रिशूलकरभस्माङ्गाः त्रिपुण्ड्रावलिभामशाः ॥ ४५ ॥
जटामकुटबद्धेन्दुखण्डाखण्डलधर्षकाः। तान् दृष्ट्वा शांभवश्रेष्ठान् प्रणम्य विनयान्वितः ॥ ४६ ॥
स राजा ते मुनिश्रेष्ठा धन्याः स्म इति वादिनः। तान् गणान् विनयेनाह मधुराक्षरसंयुतम् ॥

राजा —

कुतः समागतं नन्दिन् किं ते कार्यं समुद्यतम्। अस्माकमद्य साफल्यं जन्मनोऽस्य प्रजायते ॥
त्वत्कृपापात्रभूतानां शांभवानां विशेषतः। दुःखजालानि सर्वाणि विनष्टानि गणेश्वर। ४९ ॥

नन्दिकेशः —

धन्यो मान्योऽसि मे राजन् भवान् शांभवपुङ्गवः। त्वदङ्गसङ्गवातोऽपि मङ्गलाय प्रजायते ॥
मङ्गलापतिसोत्तुङ्गलिङ्गपूजापरायणः। विल्वपत्रादिभिः सम्यक् सभाग्योऽसि महीपते ॥ ५१ ॥
एतेऽपि मुनयः सर्वे भवलिङ्गार्चने रताः। तव शांभवसङ्गत्या धन्याः शर्वपरायणाः ॥ ५२ ॥
विल्वमूलेषु दृश्यन्ते लिङ्गानि विमलान्यपि। विल्वपत्रोत्तमाङ्गानि चन्दनालङ्कृतानि च ॥
मन्दारकुन्दमालाभिः पूजितानि नृपोत्तम। फालाक्षप्रतिरूपाणि त्रिपुण्ड्रोज्ज्वलानि च ॥ ५४ ॥
पश्यामि तव भाग्यस्य नान्तोऽस्ति नृपसत्तम। नयनानन्दनान्येव कैलासादधिका मही ॥ ५५ ॥
सोमनाथमिदं क्षेत्रं सोमराजप्रपूजितम्। सोमनाथाख्यलिङ्गस्य दर्शनं सर्वकामदम्। ५६ ॥
त्वया शांभवधर्माणामाचारो विस्तरीकृतः। यस्तु शांभवधर्माणां प्रवर्तनपरायणः ॥ ५७ ॥
स शङ्करो नृपश्रेष्ठ शङ्कातङ्कविवर्जितः। महेशप्रियपुत्रः स गणेशश्च प्रजायते ॥ ५८ ॥
त्वद्दर्शनकृतोत्कण्ठो नीलकण्ठः पिनाकधृक्। अस्मान् संप्रेषयामास विमानैः सार्वगामिकैः ॥ ५९ ॥
त्वया शांभववीरेण सङ्गताश्च महौजसा। भूमण्डलाखण्डलस्त्वं त्वया धन्यतरा मही। ६० ॥
यत्र शांभवपादाब्जरेणुः पतति भूतले। स देशः पावनो धन्यस्तेन धन्यतरा मही ॥ ६१ ॥
यतः शांभवकोटीभिः सततं त्वमुपासितः। भस्मरुद्राक्षयुक्तश्च चतुर्वर्णेषु मानवः ॥ ६२ ॥
संपूज्यः सर्वयत्नेन माननीयश्च केवलम्। तत्रापि ब्राह्मणाः पूज्याः शांभवास्ते नृपोत्तम ॥ ६३ ॥

मम यक्ष्मगृहीतस्त्वं सद्यो निर्वीर्यतां गतः । अतिकामोत्थितो नित्यं मद्वाक्यस्य च लङ्घनात् ॥
तत्क्षणादभवत् सोमः सद्यो निष्प्रभतां गतः । यक्ष्मणा स गृहीतश्च हिकाज्वरसमन्वितः ॥
त्वगस्थिशेषः सोमोहि बलहीनस्तदा नृप । आर्तिं जगाम परमां तमत्रिः प्रणतं द्विजाः ॥ २५ ॥
सोमराजानमाहेदं दक्षशापविमुक्तये ।

अत्रिः –

शृणुष्व मे वचो राजन् पुनराप्याययिष्यसि । शरणं गच्छ देवेशं तपसा शिवपूजया ॥ २६ ॥
मुनिभिः प्रणतं लिङ्गं सौराष्ट्रे संस्थितं शशिन । सोमनाथाभिधं लिङ्गं पयोष्णीतीरसंस्थितम् ॥
ब्रह्मविष्ण्वादिभिर्देवैः सेवितं सर्वकामदम् । तस्मिन् लिङ्गे महादेवो निवसत्यंबिकासखः ॥ २८ ॥
इत्यत्रिवचसा सोमो ज्ञात्वा गत्वा महेश्वरम् । स्नात्वा नत्वा महादेवं पयोष्ण्यां धूतकिल्बिषः ॥
भस्मनोद्धूल्य सर्वाङ्गं तताप परमं तपः । शिवलिङ्गार्चनरतः पञ्चाक्षरपरायणः ॥ ३० ॥
भस्मस्थण्डिलसंस्थश्च रुद्रमावर्तयन् सदा । शुश्रूषन्त्या च रोहिण्या कन्दपुष्पफलादिभिः ॥ ३१ ॥
अतिष्ठत् स तदा मौनी दशवर्षाण्यथाम्बिके । तपस्यतोऽथ सोमस्य शक्तिरासीच्छिवाज्ञया ॥
सोमनाथमहालिङ्गं बिल्वपत्रैः समर्चयन् । त्रिकालमप्रमादेन सोमार्धकृतशेखरम् ॥ ३३ ॥
एवं संवसतस्तस्य सोमः सोमाय तोषितः । सोमनाथाह्वयाल्लिङ्गात् तस्मै प्रादुरभूच्छिवः ॥ ३४ ॥
गङ्गाचन्द्रकलामौलिर्महोक्षवरवाहनः । उमासंश्लिष्टवामाङ्गो गणवृन्दनिषेवितः ॥ ३५ ॥
ब्रह्मविष्ण्वादिभिर्देवैर्महेन्द्राद्यैः सुरोत्तमैः । कुमारगणनाथैश्च मया च परिसेवितः ॥ ३६ ॥

गजगरुडाखुमयूरहंसयानैः सुरवर्यैरनुयायिभिः पृष्ठतोऽग्रे ।
राजताद्रिनिभप्रभाविभासिताङ्गं वृषभं केसरियानयानुयातः ॥ ३७ ॥
अविरुद्धामरचामरौघवातैर्व्यजनैः छत्रगणैर्विशोभिताङ्गः ।
परशुवरकुरङ्गबालपाणिर्भगवानाविरभूत् तदा महेशः ॥ ३८ ॥

तथाऽऽगतं महादेवं दृष्ट्वा हृष्टतनूरुहः । प्रणम्य सोमः साष्टाङ्गमष्टमूर्तिं कृपाकरम् ॥ ३९ ॥
तुष्टाव प्राञ्जलिर्धीरो मां साम्बं परमेश्वरि ॥ ४० ॥

नमस्ते महादेव विश्वाधिकेश नमस्ते महेशान लोकेश शम्भो ।
नमस्ते गणाधीश वृन्दारवन्द्य नमस्ते हरिब्रह्ममृग्यांघ्रिमौले ॥ ४१ ॥
नमस्ते महोक्षैकवाह प्रपन्नं सदाऽपाङ्गसङ्गाद्य[1] दृष्टयाद्य तुष्टया ।

---

१ सङ्गाच्छयाजाद्य तुष्टया C.

नमस्ते त्वमीशान विश्वैकवन्द्य क्षयार्तिं विनाशयाशु मां तारयाद्य ॥ ४२ ॥

नमस्ते भिषग्वर्य भैषज्यचिन्तां वहस्त्वाद्य मामद्य यक्ष्माघयुक्तम् ।
विमुक्तं कुरुष्वाद्य पापौघजालैर्नमस्तेऽस्तु शम्भो प्रसीद प्रसीद ॥ ४३ ॥

इति संप्रार्थितो देवः सोमराज्ञाथ संस्तुतः । दयार्द्रदृष्ट्या तं वीक्ष्य समालभ्य च पाणिना ॥
पुनः पुष्टिं तस्य गात्रे अमृतैः पूरयत् तदा । तमाह विनयोपेतं सोमं सांबस्तदा मुदा ॥ ४५ ॥

ईश्वरः —

दक्षशापवशात् सोम क्षयेणार्तिं परां गतः । पुनराप्यायितश्चासि मया त्वं सुरसत्तम ॥ ४६ ॥
देवानामन्नभूतस्त्वममृतांशुः पुरा किल । तच्छापं मानयस्त्वाद्य मासार्धं क्षीणमण्डलः ॥ ४७ ॥
देवानामुपभोग्योऽसि देवाश्चाप्याययन्त्यपि । पुनस्त्वामोषधीशान पक्षार्धं मद्वरात् सुर ॥ ४८ ॥
संपूर्णकलश नित्यं वर्धमानो दिने दिने । भविता चारुरूपेण मम मौलिकृतास्पदः ॥ ४९ ॥
अष्टमीसामिसोमाङ्को भविताऽहं सदा शशिन् । चन्द्रचूड इति ख्यातः संस्तुतः सुरसत्तमैः ॥
त्वया संपूजितं लिङ्गं सोमनाथाह्वयं शुभम् । ये पश्यन्ति नरा भक्त्या ते सदा गणपा मम ॥
सोमनाथं सकृद्दृष्ट्वा मुच्यते भवबन्धनात् । पयोष्ण्यां ये सकृत् स्नात्वा दृष्ट्वा सोमेश्वरं नराः ॥

सन्तर्प्य च पितॄन् भक्त्या वसन्ति शिवमन्दिरे ।
पौष्यां माघ्यामथाष्टम्यां यो बिल्वैः सोमनाथकम् ॥ ५३ ॥

समर्चयेत् स मुक्तो हि नात्र कार्या विचारणा । इति दत्त्वा वरं तस्मै तदा शम्भुस्तिरोदधे ॥
तस्मिन् लिङ्गे तदाविष्टः शिपिविष्टोऽम्बिकासखः । तस्मात् त्वमपि भक्त्याद्य सोमेशं पूज्य भक्तितः ॥
लभस्व चेप्सितानर्थान् कामारिकृपया नृप ॥ ५६ ॥

सूतः —

इति नन्दी नृपश्रेष्ठमनुज्ञाप्य महेश्वरम् । सोमनाथं बिल्वपत्रैः पयोष्णीसरिदंभसा ॥ ५७ ॥
अभिषिच्याथ रुद्रेण पूजान्ते गणपैर्वृतः । तुष्टाव देवमभ्यर्च्य शृणुध्वं तद् द्विजोत्तमाः ॥ ५८ ॥

नन्दिकेशः —

कुण्डलीशकृतकुण्डल शम्भो खण्डिताखिलसुरद्रुमषण्ड ।
ब्रह्ममुण्डकलितामलमाल स्थूललिङ्गगणमण्डलसंस्थ ॥ ५९ ॥

नवचन्द्राभरणोत्तमाङ्ग गङ्गाकलितालकभूधरोरुमाल ।
धृतहालाहलकण्ठमूल बाहुस्फुरदुत्तमशिलाविधूतशूल ॥ ६० ॥

अलिङ्गलिङ्गं शशिलिङ्गसंस्थनाकशलिङ्गं जगदेकलिङ्गम् ।
हृत्कोशनाकाशविकासिलिङ्गं सुखैकलिङ्गं प्रणमामि लिङ्गम् ॥ ६१ ॥

इत्थं संस्तुत्य नन्दीशः कैलासं गणवैर्ययौ । गणेन्द्रास्तुष्टुवुः शम्भुं सोमनाथं मुदा तदा ॥

[1]वयं सोमनाथत्रये तेऽद्य निष्ठा वसिष्ठादिशिष्टास्तनस्त्वत्पदाब्जे ।
महाभस्म रुद्राक्षमालां तनूषु त्वदीयाङ्कचिह्नैर्निवेश्योरुपापैः ॥ ६३ ॥

विमुक्ताश्वराभो विभीमोऽद्य शम्भो ॥ ६४ ॥

इत्थं स्तुत्वा गणा याता नन्दिकेशेन सादरम् । स राजा विस्मितश्चासीत् शाम्भवैस्तत्कथ रसैः ॥

ईश्वरः –

चक्षुःश्रोत्रविभूषणैकमुमहालिङ्गार्चने सक्तधीः
न्यस्ताशाम्मुखो भवादिविषयप्रीतिं तदा वै नृपः ।
कामादिप्रमदादिषट्ककलुषैः कल्कीकृतान्तःस्फुरद्-
भ्रान्तद्वोधशिवप्रसादजनितानन्देन विज्ञानभाक् ॥ ६६ ॥

भूमानन्दैकभूमा रविशशिहुतभुग्धामसीमाऽहमीशे
तस्मिन् लिङ्गेऽस्तमाये शतमखमुखगीर्देवबृन्दैकपूज्यः ।
सामस्तोमैरनेकैर्निखिलमुनिकृतैर्होमधूमादिमार्गैः
गम्यः सोऽयं मतानि श्रुतिशिखरवरैः स्तुत्यमाशासमादि
[2]सोमेशाख्ये गणेन्द्रै[3]र्मम तनयवरैश्चाम्बया चाद्रिजाते[4] ॥ ६७ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे नन्दिकेशबृहद्बलसंवादे सोमनाथमहिमवर्णनं नाम षोडशोऽध्यायः ॥

---

१ यतः सोम C.   २ अब्जैः C.   ३ मम तु वरतैः C.   ४ पञ्चपादोऽयं श्लोकः

S. 23

## ॥ सप्तदशोऽध्यायः ॥

ईश्वरः —

स राजा पुनरीशानं सोमनाथाख्यमीश्वरम् । पूजयामास देवेशि भक्त्या चानन्यया तदा ॥ १ ॥

ऋषयः —

कथं तस्य तदा सूत सोमनाथो महेश्वरः । प्रसन्नः पार्वतीनाथो निशानाथनभच्छिराः ॥ २ ॥

तद्वदस्वानुपूर्व्येण नैव तृप्यामहे वयम् । [1]भगनेत्रपदद्वन्द्वकथया पाविता वयम् ॥ ३ ॥

भवाख्यदावदग्धानां शमने जलदो भवान् । महादेवकथाधारासुधाशीकरविग्रहान् ॥ ४ ॥

कुरुष्व त्वं मुनिश्रेष्ठ कृपापात्रं वयं हि ते ॥ ५ ॥

ईश्वरः —

इति पृष्टो मुनीन्द्रैस्तैः सूतस्तच्चरितं पुनः । प्राञ्जलिर्विनयेनाह प्रणिधाय मनः शिवे ॥ ६ ॥

सूतः —

स राजा शाम्भवैः सार्धं शिवाराधनतत्परः । पञ्चाग्निमध्ये निरतस्तस्मूर्यगभस्तिभिः ॥ ७ ॥

मासमेकं फलाहारो मासं पर्णाशनोऽभवत् । मासं कन्दाशनो राजा मासं चैव जलाशनः ॥

मासं यवागुभक्षी स्यात् मासं चानिलभोजनः । वर्षास्वभ्रावकाशश्च हेमन्ते जलसंश्रयः ॥ ९ ॥

ग्रीष्मे पञ्चाग्निमध्यस्थो रुद्रमावर्तयन् स्थितः । एवं तपस्यतस्तस्य कालात् प्रादुर्बभौ हरः ॥ १० ॥

ब्रह्मविष्ण्वादिभिर्देवैः तस्मै तद्दर्शनं ददौ । नीलकण्ठो जटामौलिस्त्रिशूलविलसत्करः ॥ ११ ॥

सुधाधामकलामौलिः फालोज्ज्वलितलोचनः । त्रिपुण्ड्रलेखाविलसत्फालभागमनोहरः ॥ १२ ॥

फणिकङ्कणशोभाढ्यवृत्तबाहुचतुष्टयः । विधिजातमहामुण्डकल्पितस्रग्विभूषितः ॥ १३ ॥

महावृषभमारुह्य छत्रचामरपाणिभिः । नन्दिकेशमहाकालगणवृन्दैर्निषेवितः ॥ १४ ॥

उमासंश्लिष्टवामाङ्गो राजानं समुदैक्षत । दृष्ट्वा स राजा देवेशं महेशं करुणाकरम् ॥ १५ ॥

प्रणम्य दयया भक्त्या सानन्दजललोचनः । तुष्टाव भक्तिभरितः साम्बं चन्द्रार्धशेखरम् ॥ १६ ॥

राजा —

सुरेश्वरं निरीश्वरं गिरीश्वरं नटेश्वरं महेश्वरं मयस्करं शिवं भजेय शङ्करम् ।
भुजङ्गराजहारकं सुमारमारहारकं महाविषाग्निधारकं भजे विमुक्तिदायकम् ॥ १७ ॥

---

१ भगनेत्रघ्नकथया पाविताः स्म त्वयाद्य हि C.

सुरारिवृन्ददुःखदं शुभाङ्गदं शुभास्पदं सुबद्धकर्ममोक्षदं भजे शिवं विमुक्तिदम्।
विधीन्द्रविष्णुसन्मुखं महागिरीन्द्रजासखं धनेशमुख्यमत्सखं भजे शिवं मदुन्मुखम्॥ १८॥
उमापतिं सभापतिं दिशां पतिं पशोः पतिं गिरां पतिं पतेः पतिं भजे शिवं दिवस्पतिम्॥ १९॥
दन्तित्वक्परिधान शङ्कर महादेवेश मा मा जहि बिभ्रन्मेरुशरासनं हरिशरो हस्तेन जिघ्रन् शिरः।
तूर्णं तर्णकमेत्य प्रस्नुतपयःपूग यथा गौर्भवेत् तद्वत् त्वं गिरिजामनोहर विभो हृत्पद्मसंस्थो मम॥
त्वत्पादभ्रमरस्य भक्तिसुरसामोदाप्तये केवलम्। २१॥
विष्णुर्वेदे च गीतस्त्वमसि भगवन् शङ्कर विभो सुधन्वा चापि त्वं त्वमसि भव विश्वाधिक भिषक्।
तमीशानं यक्ष्ये निखिलसुपनस्त्राय च हरं नमामि त्वत्पादं शरणद शिवं स्तौमि वचसा॥२२॥

[1]उन्मत्तकुम्भिकरसन्निभकण्ठसंस्थ कुम्भीनसोल्लसद्विलोलसुभूरिहारम्।
कुम्भीन्द्रवक्त्रोज्ज्वलपुत्रवर्यं भजामि कुम्भोद्भवपूजिताङ्घ्रिम्। २३॥

इति स्तुत्वा महादेवं प्रणम्य स नृपोत्तमः। देवीं देवाङ्कभागस्थां तुष्टाव विनतो नृपः॥ २४॥

राजा—

विद्रुमाधरनिराकृतबिम्बां वक्त्रनिर्जितसुधाकरबिम्बाम्।
ईश्वरीमनिशमात्तकदम्बां मन्मनः स्पृशतु तां जगदम्बाम्॥ २५॥

पादयोरवनतामरदारान् भक्तलोककलुषाटविदारान्।
भावुकस्य हृदयाधिविहारान् मन्मनो भज जगत्पतिदारान्॥ २६॥

पापराशिषु शिखां भृशमौर्वीं बिभ्रतीमधिकचं स्मरमौर्वीम्।
नेत्रपद्मजघनेषु सुगुर्वीं मन्मनः स्पृशतु तां हृदि गुर्वीम्॥ २७॥

स राजा गिरिजां स्तुत्वा सादरः प्रणिपत्य च। बद्धाञ्जलिकरस्तत्र देवदेवमुदैक्षत॥ २८॥
तस्य तद्भावमाज्ञाय भवो भवविनाशकः। वरेण छन्दयामास राजानं वाक्सुधासैः॥ २९॥

ईश्वरः—

स्तुत्याऽनया नृपश्रेष्ठ तुष्टोऽस्मि गिरिकन्यया। मम भक्तः त्वया तुल्यो नास्ति भूमण्डलेऽधुना॥
ये मां त्वत्कृतया स्तुत्या स्तोष्यन्ति [2]भुवि मानवाः। तेषां मुदेऽहमत्यर्थं भविता नात्र संशयः॥
क्ष्मामण्डलाखण्डलस्ते पुत्रो भूयान्नृपोत्तम। स नाम्ना भविता राजन् उत्तमः सविदूरथः॥
सोऽपि मां सोमनाथाख्यं समाराध्य गणो भवेत्। अश्वमेधादिभिर्यज्ञैः स यष्टा च भविष्यति॥

---

१ उन्मत्तकुम्भीकरसन्निभोरुकुम्भीनसोल्लासविलोलहारम् C. २ भाविताः C.

तस्य तुष्टोऽहमुत्कृष्टस्तत्कष्टं नाशयाम्यहम् । तस्य पुत्रशतं भूयान्महारथसमाह्वयम् । ३४ ॥
त्वं चान्ते गणपश्रेष्ठो भविष्यसि ममाग्रणीः । सोमनाथमिदं लिङ्गं सोमराज्ञा प्रपूजितम् । ३५ ॥

ये पश्यन्ति सदा भक्त्या तेषां कामान् ददाम्यहम् ।
सदारस्त्वं चिरायाद्य भुक्त्वा राज्यमकण्टकम् । ३६ ॥

वंशं लोके प्रतिष्ठाप्य यास्यस्यन्ते ममाग्रतः । इति तं समनुज्ञाप्य देवदेवो घृणानिधिः । ३७ ॥
तस्मिन् लिङ्गवरे पुण्ये सोमनाथाह्वये द्विजाः । तिरोऽधत्त क्षणात् साम्बो भक्तसंसारमोचकः ॥
पश्यतां चैव सर्वेषां शांभवानां नृपस्य हि । तत्सर्वमद्भुतं सर्वं दृष्ट्वा राजा च विस्मितः । ३९ ॥
शांभवैः संस्तुतो राजा धन्यस्त्वमिति तत्र हि । साक्षाद्यतस्त्वया दृष्टं महेश्वरपदाम्बुजम् । ४० ॥
तव भाग्यस्य नेयत्ता त्वया धन्यतमा वयम् । इत्थं स्तुतस्तदा राजा शांभवान् पूज्य भक्तितः ॥
स्वदारामात्यरहितो नत्वा सोमेश्वरं तदा । सैन्यभारसमायुक्तो रथकुञ्जरवाजिभिः । ४२ ॥
स्वदेशाय ययौ राजा प्राप्तसर्वमनोरथः ॥

सूतः —

तदुत्कृष्टमिदं क्षेत्रं पुण्यं सोमेश्वराह्वयम् । देव्यै देवेन कथितं पयोष्णीतीरसंस्थितम् । ४३ ॥
दर्शनात् सर्वकामानां सिद्धिः स्याच्छङ्कराज्ञया । सौराष्ट्रमेतद्देशानां पुण्यदेशोऽयमुत्तमः । ४४ ॥
सोमनाथाख्यलिङ्गेन पुनर्भूयो विराजते । सोमनाथं महादेवं प्रदोषे यस्तु पश्यति । ४५ ॥
बिल्वीदलादिभिः पूज्य स मोक्षमधिगच्छति । पयोष्ण्यां यः सकृत् स्नात्वा सोमनाथं प्रणम्य च ॥
स मुक्तः सर्वपापैश्च मोदते दिवि देववत् । इन्दुग्रहे कुरुक्षेत्रे यो दद्याद्वै शतं द्विजे । ४७ ॥
सकृद्दृष्ट्वा सोमनाथं तत्फलं प्राप्नुयान्नरः । महापातादिवेलासु अयने विषुवे तथा । ४८ ॥
पर्वकाले तथाष्टम्यां यो दृष्ट्वा प्रणमेत च । सोमनाथं महालिङ्गं स वसेच्छिवलोकगः । ४९ ॥
सोमवारे सोमनाथं रात्रौ संपूज्य भक्तितः । बिल्वपत्रैः सकृद्भक्त्या स ज्ञानं विन्दते महत् ॥
सोऽपि राजाऽथ कालेन पुत्रं भद्रगुणान्वितम् । प्राप नामापि चक्रेऽथ विदूरथ इति द्विजाः ॥
सोऽपि चान्ते शिवं प्राप सदारोऽथ वृषध्वजः । पित्र्यं राज्यं तदा प्राप विदूरथनृपस्तदा ॥ ५२ ॥
सोमनाथमहालिङ्गे तस्याभूद्भक्तिरुत्तमा । सौराष्ट्रं स जगामाथ साष्टाङ्गस्पृष्टभूतलः । ५३ ॥
संपूज्य परया भक्त्या नानाविभवविस्तरैः । उवाच राजा तत्रैनं हृष्टो धर्ममथाकरोत् ॥ ५४ ॥
शैवान् नैवेद्यराशीभिर्भोजयामास कोटिशः । पयोष्णीतीरबन्धं च नानासंस्थानमण्टपान् । ५५ ॥
महारथं महादेवे मण्टपोद्यानगोपुरम् । प्राकारसंस्थवृषभं सुधाचित्रविचित्रितम् ॥ ५६ ॥

कारयामास विभवैः विमानछत्रचामरम् । धूपदीपादिपात्राणि सौवर्णानि तदाऽकरोत् ॥ ५७ ॥
शिवपूजाभिवृद्ध्यर्थं ददौ ग्रामाननेकशः । द्विजानां शांभवानां हि ग्रामान् विप्रगृहोज्ज्वलान् ॥
कारयामास नृपतिर्गृहोपकरणान्वितान् । ददौ स शांभवान् दृष्ट्वा सोमनाथस्य तुष्टये । ५९ ॥
स कोटिबिल्वपत्रैश्च पूजयामास तं सदा । कृष्णगोघृतदीपैश्चादीपयत् स शिवालयम् । ६० ॥
धूपधूमगणैर्वा स धूपयामास चाम्बिके । नैवेद्यैश्च घृतापूपराशिभिर्न्यवेदयत् । ६१ ॥
स्वाद्वन्नराशिभिर्देवि विदूरथसमाह्वयः । नाट्यकन्यास्तु चार्वङ्ग्यस्तेन दत्ता महेश्वरि ॥ ६२ ॥
वेणुवीणामृदङ्गाश्च शङ्खकाहलवादकाः । कल्पितास्तेन देवेशि नादितो मे शिवालयः ॥ ६३ ॥
सोमनाथे मयि सदा तस्य भक्तिः पराऽभवत् । तया भक्त्या चिरं राज्यं भुक्त्वा मल्लोकमागतः ॥
तस्य पुत्रशतं त्वासीत् सर्वं मद्भक्तिभावितम् । धनुष्मन्तं महाबाहुं परवीर्यनिबर्हणम् ॥ ६५ ॥
क्षयद्वीरवरं सर्वं नानाशस्त्रास्त्रपण्डितम् । तस्य ज्येष्ठसुतस्त्वासीन्महारथ इति स्मृतः ॥ ६६ ॥
सोऽपि सोमेश्वरे भक्तः सौराष्ट्रेशोऽभवच्छिवे । पितुः शतगुणं तेन कृता मेऽपचितिः शिवे ॥
तस्मिन् शासति भूलोके शैवा एव सदा जनाः । भस्मरुद्राक्षहीनाङ्गान् शास्ति भूपोऽयमुत्तमः ॥
नारुद्राक्षधृगत्रासीन्न रुद्राध्यायवर्जितः । पञ्चाक्षरविहीनश्च शिवलिङ्गार्चनोज्झितः । ६९ ॥
नाभस्मफालस्तत्रासीत् तस्मिन् राजनि शासति । समर्यादमभूत् तेन क्ष्मातलं तेन सुन्दरम् ॥
यथा विद्योतते भानुः स्वांशुभिर्नाशयंस्तमः । तथा वेदोदिताचारैर्जगत्तापमपाकरोत् ॥ ७१ ॥

ईश्वरः –

इत्येतत्ते मयाख्यातं तवाद्येदं कथानकम् । सोमनाथमहेशस्य श्रुत्वा पापैर्विमुच्यते ॥ ७२ ॥
योऽपि तत्कथयेन्नित्यं सदा पर्वणि पर्वणि । ब्राह्मणो नियतं देवि मुक्तिमन्ते प्रयाति च । ७३ ॥
शम्भुर्वेन शिवाहमण्डलगतं स्वान्तस्थहृत्पद्मगं कोशातीतमनन्तमव्ययमजं स्वात्मानमेकाद्वयम् ।
विश्वातीतमनेकविश्वजनकं गौर्या समालिङ्गितं ध्यात्वा शोकशतैर्विमुक्तहृदयः सद्यो भवत्यम्बिके ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे नन्दिकेशबृहद्बलसंवादे सोमनाथमहिमवर्णनं नाम सप्तदशोऽध्यायः ॥

## ॥ अष्टादशोऽध्यायः ॥

ईश्वरः —

[1]आवंढ(वढ्ढ)कं महापुण्यं क्षेत्रमस्त्येकमम्बिके । नागनाथाह्वयं लिङ्गं ममास्ति भुवनेश्वरि ॥ १ ॥
तत्रत्यसिकताः सर्वा लिङ्गरूपाश्च केवलम् । तत्र सन्ति महाशैवा नागनाथार्चने रताः ॥ २ ॥
भस्मरुद्राक्षसंपन्नाः शिवध्यानपरायणाः । रुद्रावर्तनशीलाश्च रुद्रलिङ्गैकपूजकाः ॥ ३ ॥
मन्नामनिरता नित्यमन्यनामपराङ्मुखाः । मल्लिङ्गालोकनेनैव तेषां प्रीतिरहर्निशम् । ४ ॥
कामुकाः कामिनीं दृष्ट्वा यथा प्रीतो भवेच्छिवे । मम लिङ्गं तथा शैवा बिल्वसंपूजितं मुदा ५ ॥
नागनाथं स्तुवन्त्येव वीक्षन्ति प्रणमन्ति च । वसन्ति तत्र मुनयो विनयोज्ज्वलविग्रहाः ॥ ६ ॥
नागनाथं महादेवं पूजयन्ति गणेश्वराः । नागकुण्डमिति ख्यातं पातालविवरं महत् ॥ ७ ॥
तन्मार्गेण समागत्य शेषोऽनन्तफणामुखः । स्वमौलिरत्नजालैर्मां पूजयत्येव शङ्करि ॥ ८ ॥
सहस्रवदनेनापि रुद्रसूक्तैर्महेश्वरम् । मां स्तौति भक्त्या नियतं स मे गणवरोत्तमः ॥ ९ ॥
तस्मिन् प्रीतिर्ममात्यन्तं कुमारे गणपे यथा । त्वयि सर्वामरेशानि तथा शैवोऽयमम्बिके । १० ॥
शैवं शरीरं देवेशि मदालयमनुत्तमम् । तस्यैव हृदयांभोजगर्भागारे मनोरमे ॥ ११ ॥
नीवारशूकवद्दश लिङ्गाकारोऽस्मि शङ्करि । तद्देहं येन संपूज्य स्थितं सोऽपि मदर्चकः । १२ ॥
शैवसंपूजनादेव मम प्रीतिर्महेश्वरि । स्वतन्त्रस्य महेशस्य सर्वभाग्ययुतस्य मे । १३ ॥
किं नाम क्रियते देवि पूजया वा सुमैः शिवे । लोकसंरक्षणार्थाय लिङ्गे गृह्णामि पूजनम् ॥
भक्तैर्मम कृता पूजा तुष्ट्यै भवति शोभने । सूक्ष्मं मदीयं लिङ्गं तत् पश्यन्ति शिवयोगिनः ॥
लिङ्गमेतन्महादेवि ज्ञानहीनो न पश्यति । नत्वा तं वेदवाक्यैश्च जायते मत्कृपाबलात् ॥
[2]कथमन्येऽपि पश्यन्ति नानाकामैकगामिनः । सखण्डान्यन्यलिङ्गानि चाखण्डं व्यापकं मम ॥
कस्यचिद्भूरिभाग्येन समायात्येव शङ्करि । निर्भाग्यानां महादेवि तज्ज्ञानं नैव जायते । १८ ॥
मत्कृपामात्रमेकं हि शैवगात्रं गिरीन्द्रजे । शैवः शिवैकशरणः शिवलिङ्गार्चनप्रियः । १९ ॥
शिवक्षेत्ररतो नित्यं श्रीरुद्रजपतत्परः । भस्मरुद्राक्षसंपन्नः षडक्षरजपादरः ॥ २० ॥
शैवसंपूजको नित्यं शिवनैवेद्यभोजनः । मन्नामपरमो नित्यं त्यक्त्वाऽन्यसुरकीर्तनम् । २१ ॥

---

१ अवढ्ढकं C.  १ C कोशेऽधिकः पाठः ।

शिव शम्भो महादेव प्रसीदेति वदन् मुदा । आपादमस्तकं भस्म समुद्धूल्य यथाविधि ॥ २२ ॥
रुद्रावर्तनशीलो यः स मे भक्तः सदाम्बिके । वेदवेदान्तवाक्यैश्च बोधज्ञानपरः सदा ॥ २३ ॥
तस्यैव जायते ज्ञानं नान्यथा कर्मकोटिभिः । असत्यमिति तत्सर्वं त्रैगुण्यं परमेश्वरि ॥ २४ ॥
अविद्यकानि शास्त्राणि मिथ्याज्ञानप्रदानि हि । मच्छास्त्रं सत्यमेवेदं ब्रह्मैवेदमिति श्रुतिः ॥
आत्मैवेदमिदं दृश्यं तस्मिन् जगदिदं मृषा । जगत्प्ररोचनाशास्त्रं सत्यत्वे कल्पयिष्यति ॥
मूढानां स्वर्गनरकपुण्यपापादिवासनाः । त्रैगुण्यविषयो वेदः स्वाधिकारानुरूपतः ॥ २७ ॥
पुण्यपापफलं भोक्तुं व्यावहारिककल्पनैः । सर्वं तरति वै शोकं शैवो मत्पादसंश्रयः ॥ २८ ॥
अत्रेतिहासं वक्ष्यामि नागनाथस्य वैभवम् । मम लिङ्गात्मनो देवि शृणु श्रवणभूषणम् ॥ २९ ॥
स चक्षुःश्रवसां राजा शेषोऽशेषगुणैर्युतः । ब्रह्मणा समनुज्ञातो भूमिसन्धारणाय वै ॥ ३० ॥
दृष्ट्वा सर्वतवनां साब्धिद्वीपोरुरचनाम् । विषादमगमत् तीव्रं शेषो मां शरणं गतः ॥ ३१ ॥
आवट्टकमिदं क्षेत्रं प्राप्य कुण्डं तथाऽकरोत् । नागकुण्डमिति ख्यातं तत्तीरे तपसि स्थितः ॥
स्वपुच्छवेष्टनैर्भूमिमधिष्ठायोच्छ्रयन् फणाः । मां विलोक्य महादेवि भस्मरुद्राक्षभूषणः ॥ ३३ ॥
रुद्रमावर्तयन् तस्थौ शरदां शतमुत्तमम् । लिङ्गं सुचक्षुषा पश्यन् चक्षुषा संश्रवन् कथाः ॥ ३४ ॥
शेषः पवनभुङ्नित्यं तपसाऽशोषयत् तनुम् । ग्रीष्मे कूपसरितं भानुश्चण्डभानुकरैर्यथा ॥ ३५ ॥
ब्रह्माद्या देवताः सर्वा द्रष्टुं तं तपसि स्थितम् । समागतास्तदा देवि तान् सर्वान् कुण्डलीश्वरः ॥
अगणय्य तदा तस्थौ मां ध्यायन् लिङ्गरूपिणम् । तस्य तद्दार्ढ्यमाज्ञाय ह्यददं दर्शनं शिवे ॥
दृष्ट्वा मां स्वफणाभिश्च ननाम शिरसा शिवम् । सहस्रवदनेनापि नाम्नां साहस्रतः शिवे ॥ ३८ ॥
अपूजयद्बिल्वपत्रैः तुष्टाव जगदीश्वरम् । ३९ ॥

शेषः —

विश्वेश शिव मदनान्तक विश्वमूर्ते विश्वम्भरावरणकारण शक्तिदायिन् ।
भर्गान्तकान्तक महेश्वर कृत्तिवासः पाह्याशु माऽखिलजगत्सनकादिपाल ॥ ४० ॥
पाहीश मामकधिया परिपाहि शम्भो दक्षाध्वरेषविधिशिक्षणकामशत्रो ।
सुत्रामवज्रकरदारण चण्डिकेश गोत्रात्मजासखसुजात पुरां निहन्तः ॥ ४१ ॥
पिनाकविलसत्करं दिवसनायकान्तर्गतम् । विनायकसुतप्रियं भजत नाकनाथस्तुतम् ॥ ४२ ॥

यामिनीरमणशोभिमस्तकं भामिनीविधुतसामिविग्रहम् ।
योगिनीगणकृतस्तुतिप्रियं मोहिनीपतिमुपास्महे शिवम् ॥ ४३ ॥

चारुभूधरशिरोविहारिणं भोगिभोगकृतकण्ठभूषणम् ।
क्षिप्रदग्धपुरकामवैरिणं चन्द्रचूडचरणं भजेऽन्वहम् ॥ ४४ ॥

इति स्तुतोऽहं शेषेण भक्तियुक्तेन शङ्करि । धराधरणसामर्थ्यं मया दत्तं तदाम्बिके ॥ ४५ ॥
तेन संप्रार्थितं चापि स्वकुण्डं ख्यातिमेत्वतु । नागकुण्डमिति ख्यातं सर्वपापहरं शुभम् ॥ ४६ ॥
तस्मिन् कुण्डवरे स्नात्वा नागनाथं प्रणम्य च । विषचोरभयं तस्य कदाचिन्नैव जायते ॥ ४७ ॥
तर्पयित्वा तु तत्तोयैः पितॄन् प्रीणाति मानवः स्नात्वा त्रिरात्रयज्ञस्य फलमाप्नोति मानवः ॥
एवं मत्तो वरं लब्ध्वा स शेषो विवरं ययौ । स पर्वतनदीयुक्तां दध्रे भूमिं तदाम्बिके ॥ ४९ ॥

ईश्वरः —

कद्रुः सुपर्णी च पुरा विवदेते परस्परम् । अश्ववालांस्तदा श्वेतान् कृष्णांश्चक्रे विषाग्निना ॥ ५० ॥
दास्यं सरूपाः पुत्रा कृत्वा अनृतेनैव सा पुरा । तत्पापनुत्तये गौरि नागनाथं प्रणम्य सा ॥५१॥
सा पुत्रान् मोचयामास सुपर्णभयपीडितान् । भूषणार्थं मदङ्गानां पुत्रान् दत्तवती तदा ॥ ५२ ॥
कम्बलाश्वतरौ नागौ कर्णकुण्डलतां गतौ । वासुकिस्तक्षकश्चैव मद्बाहुवरकङ्कणौ ॥ ५३ ॥
मत्पादनूपुरौ देवि शङ्खपालैलपत्रकौ । मत्कण्ठहारशोभायै धृतगण्डः [1]पिपिच्छिलः ॥ ५४ ॥
पुत्रान् मह्यं तदा दत्वा सा कद्रूर्वीतकल्मषा । नागनाथं तदा मां सा तुष्टावाथ कृताञ्जलिः ॥

कद्रूः —

पुत्रस्तेऽश्वपतिर्महासुरवरं मल्लं निहत्यादरात् देवानामभयं ददौ स भगवान् स्वर्लोकवासं चिरम् ।
शक्रायामरपुङ्गवैः स तु तदा त्वत्पादपूजाबलैर्जासुर्यै[2] कनकेतनः स्तुतिपरस्त्वां सेवते सर्वदा ॥
[3]कूपारशिखरे वरे धृतवरोरुशक्तीश यः स तारकप्रमुखासुरान् निखिलशूरपद्मादिकान् ।
निहत्य निखिलैः सुरैरमरसैन्यनाथोऽभवन् त्वदीयपदसेवया शिव सुनागनाथ प्रभो ॥ ५७ ॥

नीलकण्ठकृतवाहनमुख्यः तारकारिरखिलागमवन्द्यः ।
सद्य एव कुरुतादघनाशं सैन्यनायक इति श्रुतिसूक्तः ॥ ५८ ॥

मोरेश्वरक्षेत्रनिवासशीलः शूलाङ्कतनुः प्रथितोरुशुण्डः ।
त्वत्पादपद्मप्रणतोरुगण्डो गण्डस्थलान्दोलितपद्मषण्डः ॥ ५९ ॥

त्वं गणाधिपतिरीश पाहि मां त्वत्सुतो गणपतिः श्रुतिश्रुतः ।
विघ्नजालदुरितं मम हन्यात् दण्डिताखिलसुरारिसमूहः ॥ ६० ॥

१ पिलिप्पिलः C.  २ जासुर्यो C.  ३ शिरसा नमो C.

इति स्तुत्वा तदा कद्रूः ययौ सा कश्यपं मुनिम् । नागनाथं प्रणम्येशं बिल्वपत्रैः समर्चयत् ॥
नागनाथं महालिङ्गं दर्शनात् स्वर्गमोक्षदम् । तल्लिङ्गमहिमा देवि त्वयि सङ्कीर्तितो मया ॥ ६२ ॥
शृण्वन् वदंश्च मेधावी मम भक्तिपरो भवेत् । तत्र बिल्ववने देवि मल्लिङ्गं परितोऽम्बिके ॥ ६३ ॥
शिवध्यानरताः शैवास्तिष्ठन्ते मत्पदाश्रयाः । एतत्तेऽभिहितं पुण्यं स्वर्ग्यं पुत्रप्रदं नृणाम् ।
दर्शनात् तस्य लिङ्गस्य मोक्षभागी भवेन्नरः ॥ ६४ ॥

ईश्वरः—

तस्मिन् पावनपावने हि विपिने मालूरसंघावृते
तत्पुष्पोत्थमरन्दसुन्दररजोगुम्भीकृतैस्तुन्दिलैः ।
वद्वातैः सुखशीतलैः फणिफणाभूत्कारतापापहैः
शीतीकृत्य ममाङ्गगन्धमतुलं जिघ्रन् वसाम्यम्बिके ॥ ६५ ॥

तद्गन्धं वनमित्यवैमि गिरिजे यस्मिन्न बिल्वद्रुमः
तस्मिन्नेव वसामि शाखिशतकैर्युक्तेऽपि पुष्पान्वितैः ।
शूले वापि मरुस्थलेऽपि निवसेत् पर्णानुजः केवलं
तन्मूले शिवलिङ्गसङ्गतवपुस्तुष्टो वसाम्यम्बिके ॥ ६६ ॥

श्रीवृक्षप्रभवैर्नवारुणदलैर्यः सायमभ्यर्चयेत्
रेवालिङ्गवरे प्रदोषसमये सन्नार्मदेनाम्भसा ।
तस्माहं वितरामि भुक्तिमखिलां मुक्तिं तथा तेऽम्बिके
त्रिः कृत्वा प्रवदामि सत्यमधुना सम्यक् शृणुष्वादरात् ॥ ६७ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे शिवगौरीसंवादे नागनाथमहिमवर्णनं नाम
अष्टादशोऽध्यायः ॥

---

## ॥ एकोनविंशोऽध्यायः ॥

---

ईश्वरः—

अस्त्येकं क्षेत्रमचले घुसृणीश्वरसंज्ञकम् । ज्योतिर्लिङ्गं महादेवि शृणु तन्महिमां पुनः ॥ १ ॥
इतरजाः पुरा सर्वे क्षीरसागरपूर्वकाः । समुद्रास्तेषु संभूय तपोऽतप्यन्त दारुणम् ॥ २ ॥
परिम्लानमुखाः सर्वे वेलाकल्लोलवर्जिताः । हृतमण्डं यथा भाति दधिभाण्डं सुराधिपे ॥ ३ ॥

निस्सारभूता निःसाराः सागरा मामुपाययुः । भस्मनोद्धूल्य सर्वाङ्गं रुद्राक्षवरकङ्कणाः ॥ ४ ॥
जपन्तः शतरुद्रीयं पञ्चाक्षरपरायणाः । लिङ्गपूजापरा नित्यं घुसृणीशार्चने रताः ॥ ५ ॥
बिल्वपत्रैश्च कमलैः रक्तनीलोत्पलैरपि । ततः कालान्तरे देवस्तेषां प्रादुर्बभूव पुरः ॥ ६ ॥
दृष्ट्वा शिवं तुष्टुवुस्ते समुद्रा मां तदाम्बिके । पुण्यमार्थं पुराराविमराति मन्मथस्य च ॥ ७ ॥
अन्तकस्य च देवेशं महेशं वृषभध्वजम् । अन्तकान्तकमाम्नास्यं त्रियम्बकमुमासखम् ॥ ८ ॥
प्रणमामो महादेवमुदाराङ्गं कपर्दिनम् ॥ ९ ॥

महोदारसद्रत्नहारोल्कण्ठं भुमुण्ठीकराब्जं गरानीलकण्ठम् ।
गृणद्रुद्रजाप्याघहारं हरन्तं महाकामठाब्धकू(?) परीतं लुठन्तः ।
सदा नो भवाब्धौ परित्राहि शम्भो ॥ १० ॥

तवाङ्घ्रिद्वन्द्वार्च्याविधिनियतमाशात्मकतया सदा नेदिषुश्चेन् त्वयि च सहितो जापनपरः ।
स एवानुग्राह्यस्तव हि सततं ह्यनम इत्यहो भावो भावेभवहर भवाब्धि स तरते ॥ ११ ॥
तव गुणगणगणना वा केन कार्या महेश श्रुतिशिखरनिविष्टः शान्तचित्तैकगम्यः ।
भुवनभवनमध्ये कश्चिदस्त्येव शम्भो तव पदकमलोत्थामोदसंमोदितात्मा ॥ १२ ॥

अस्मिन् महत्यर्णवगस्त्वमीशो विश्वेश आशास्य इति प्रतीतः ।
निषङ्गभूतान् भयतश्च सागरान् अस्मानथो पाहि महेश दिष्ट्या[1] ॥ १३ ॥

इति सागरवाक्यानि श्रुत्वाऽहं गिरिजे तदा । तेषां प्रसन्नो ह्यभवं तांस्तदा पूरयामि वै ॥ १४ ॥
रत्नैरनर्घ्यैः शतशस्तिमिङ्गिलगणैस्तदा । पुरान्धकासुरं हत्वा तद्रक्ताक्तं करे मम ॥ १५ ॥
न धार्यमिति देवेशि भूमौ शूलं महत्तरम् । तदा त्यक्तं मया देवि घुसृणीश्वरसन्निधौ ॥ १६ ॥
शूलपातमभून्नाम्ना तत्तीर्थं सुमनोहरम् । तत् सागरजलैः पूर्णं शूलपातं महत्सरः ॥ १७ ॥
वसन्ति शैवा नियतं शूलपातसरस्तटे । पञ्चाग्निनिरताश्चान्ये वायुभक्षास्तथापरे ॥ १८ ॥
अश्मकुट्टा महादेवि दन्तोलूखलिनस्तथा । सर्वे मल्लिङ्गपूजाभिः नयन्त्यायुर्मुनीश्वराः ॥ १९ ॥
भस्माभ्यक्ताः सदा गौरि शिवनामजपादराः । तत्र तान् सततं दृष्ट्वा निर्लिपा भयकम्पिताः ॥
इन्द्रोपेन्द्रा वचयित्वा विष्णोर्देवपदेषु च । तेषां वाञ्छा नैव गौरि मत्पादार्चापरायणाः ॥ २१ ॥
तृणाय ते महेशानि विष्ण्वादीनां पदं शुभम् । मत्पादभाव[2]सकला भावानां भूतयः सदा ॥ २२ ॥
पदे पदे भविष्यन्ति मातुकानि न संशयः । भवानि नियतं सत्यं मम भक्तस्य केवलम् ॥ २३ ॥

---

१ दृष्ट्या C २ सक्तानां C

मद्भक्तवर्यैर्ध्यत्यस्ता लोकाः सर्वे चतुर्दश । अगस्त्येनापि भक्तेन सागराश्चुलकीकृताः ॥ २४ ॥
वीरभद्रगणेनापि ब्रह्मविष्ण्वादयः सुराः । दक्षयज्ञे तदा गौरि शिक्षिताश्चापि खण्डिताः ॥ २५ ॥
एतादृशानां भक्तानां सुरेषु गणनाऽपि न । किं चतुर्दशलोकोत्थश्रिया तेषां भविष्यति ॥
आपातमधुरा सा श्रीः संयोगा हि वियोगजाः । धनधान्यानि सर्वाणि रत्नानि विविधं वसु ॥
नश्वराण्यतिदुःखानि भयमूलानि शङ्करि । मम भक्तिः सदा गौरि अनश्वरसुखं धनम् ॥ २८ ॥
मुक्तये मम भक्तिश्च बन्धाय नरकाय च । धनं तद्भौतिकं गौरि सर्वापन्निलयं सदा ॥ २९ ॥
आनन्दकन्दं मद्भक्तिर्मोक्षदा कामदा ध्रुवम् । तया भक्त्या विराजन्ते चन्द्ररेखेव शारदी ॥
मद्भक्ता नियताः सर्वे वसन्ति शिवपूजकाः । तृणीकृतेन्द्रचन्द्राणां तेषां स्वर्गस्तु तुच्छकः ॥
अच्छानां च निरिच्छानां मच्छासनयतात्मनाम् । आनन्दनन्दितस्वान्त आनन्दघनपूजया ॥
ते वै शिवरसास्वादनन्दिताखिलवृत्तयः । घुसृणीशपदद्वन्द्वपूजाक्षपितकल्मषाः ॥ ३३ ॥
वसन्ति सततं शैवाः तस्मिन् क्षेत्रे गिरीन्द्रजे ॥ ३४ ॥

पार्वती –

कुत्र क्षेत्रमिदं शम्भो त्रिनेत्रप्रियकारकम् । तत्क्षेत्रमहिमापारकथाश्रवणलालसम् ॥ ३५ ॥
मम चित्तमभूद् देव दयया तद्वदस्व माम् । शिवो गौरीवचः श्रुत्वा तत् क्षेत्रं प्राह शङ्करः ॥

ईश्वरः –

भीमरथ्या उदग्भागे त्रिंशत् क्रोशोपरि स्थितम् । शूलपातं स्थितं तीर्थं तत्रास्त्येव शिवालयः ॥
शूलपातसरस्तीरे ततान परमं तपः । उद्दालको मुनिर्नाम्ना ज्ञानार्थं शङ्करस्तदा ॥ ३८ ॥
समभ्यर्च्य महादेवं बिल्वपत्रैर्महेश्वरम् । घुसृणीशं महादेवं मां तुष्टाव तदाम्बिके ॥ ३९ ॥

उद्दालकः –

घुसृणीश महेश शङ्कर प्रणतामरभूरुह प्रसीद ।
दुरितापह पादपद्ममाद्यं घुसृणारुणमानतोऽस्मि नित्यम् ॥ ४० ॥
[[1]अरुणारुणवह्निसोमनेत्रं करुणाशालि सुधायुतापपाङ्गम् ।
द्युमणिप्रभचारुदेहकान्ति घुसृणीशं नु नतोऽस्मि देवराजम् ॥ ४१ ॥
वरुणाद्यमरार्चिताङ्घ्रियुग्मं वरुणालयदैत्यपूज्यपादम् ।
भगणाधिपशोभितोरुमौलिं घुसृणीशं नु नतोऽस्मि दुःखनाशम् ] ॥ ४२ ॥

---

१ कोष्ठान्तर्गतं श्लोकद्वयं C. कोशे नास्ति ।

करुणाकर देव दीनबन्धो सरणिं देहि विमुक्तिमार्गहेतौ ।
करणं विनिवेशयाशु ते पदाब्जे घुसृणीशान नतोऽस्मि भक्तियुक्तः ॥ ४३ ॥

मरणावसरे न कोपि शम्भो विनिवारक इत्यवैमि बुद्ध्या ।
शरणं चरणं शिव त्वदीयं घुसृणीशान नतोऽस्मि दुःखनाशम् ॥ ४४ ॥

उत्फालकूटजेनैवं मुनिनोद्दालकेन च । संस्तुतः परमेशानस्तस्य दृष्टिपथं गतः ॥ ४५ ॥

प्रणतोन्थापितो दोर्भ्यां पादयोः पतितो मुनिः । वरेण छन्दितश्चापि स उवाच कृताञ्जलिः ॥

उद्दालकः—

ज्ञातुमिच्छामि ते ज्ञानं वेदवेद्यमहेश्वर । न ज्ञानेन विना मुक्तिरिति वेदा वदन्ति हि ॥ ४७॥

उद्दालकस्य वचसा तत्स्तुत्याहं तु तोषितः । तमवोचं तदा देवि प्राञ्जलिं पुरतः स्थितम् ॥

वत्सोद्दालक ते स्तुत्या भक्त्या चानन्यया तव । तद्ज्ञानं दातुमिच्छामि किञ्चैकं वच्मि तच्छृणु ॥

न विरक्तस्य संसारादुक्तं तद्ज्ञानमुत्तमम् । नो बोध्यं च भवेदेवाविरक्तस्य च संसृतौ ॥ ५० ॥

प्रसरत्यखिलं ज्ञानं निम्नमापो यथा मुने । नाविरतो दुश्चरितादित्याह श्रुतिरादरात् ॥ ५१ ॥

तस्माद्भवविरक्त्यर्थं भवदुःखानि मे शृणु । गर्भान्तावधिदुःखानां शतानि मुनिपुङ्गव ॥ ५२ ॥

इत्थं संबोधितोद्दालः प्राहेति स शिवोऽवदत् । तदेतद् शृणु देवेशि सावधानमनाः सुखम् ॥

ईश्वरः—

शृणूद्दालक दुःखानि संसारस्य विशेषतः । मामप्राप्य नरो बाढं दुःखान्यत्यन्तमश्नुते ॥ ५४ ॥

गर्भपेशीं गतो जन्तुर्मां सदा स्तौति मोचकम् । तद्दुःखानि शृणुष्वार्ये वैराग्यार्थं शिवे सदा ॥

हाहा गर्भनिवासदुःखमधुना वक्तुं न वै तत् क्षमं
कः सोढा नरकानि दुःखशतकं भोक्तुं कथं कालतः ।
कुम्भीपाकासिपत्रैः पटुतरगदया ताडनैस्तप्तमार्गैः
सन्तप्तभ्राष्ट्रजालैर्मलसलिलवसापूयकण्ठोत्थकीटैः ॥ ५६ ॥

वस्तुं नेच्छामि गर्भे मलजलकलिलापारदुर्गन्धिपूरे
मातुः कुक्ष्युद्भवास्थिक्रकचकिणतनुः कीटदंष्ट्रादिदष्टः ।
अन्तर्जान्वर्धमस्तं कटुविदहिरसैर्मातृभुक्त्या विदग्धं
रक्तक्लिन्नान्त्रबद्धं शिव शिव शिव मां मोचयाद्याशु शंभो ॥ ५७ ॥

पयोधरपयःशतैर्निभृतपीतकुक्षिहृदो महेशि विविधान्नकैः समभिपूर्यमाणोदरः ।
अधोमुखविलम्बितो हृदयकोशपेशीगतः कदा खलु भवत्पदं शिव भजामि योन्युज्झितः ॥ ५८ ॥

इत्थं गर्भशतेषु मातृजनितापारव्यथाताडितो
वातोत्थाखिलवेगपीडिततनुर्योन्युन्मुखाभिःसृतः ।
ज्ञानं तन्निखिलं जहाति शिशुराजातः स्तनं तव पिबन्
दुर्गन्धादिमलाविलाखिलतनुः क्रान्तोऽधिखट्वाशयः ॥ ५९ ॥

क्षुत्कालं न च वेत्ति रौति विवशः शीतादितापासहः
स्वाद्वन्नं मुहुरीक्षते दृढतरं नाश्नाति कौमारके ।
पित्राद्यैर्गुरुभिश्च सोऽक्षरविधौ सन्ताडितो भीतिभाक्
रोगाद्यैस्तदपायकारिभिषजैः कट्वम्लकाषायभुक् ॥ ६० ॥

मारोन्मादशरैर्विदारिततनुः कान्तामुखं वीक्षते सोत्साहं शरदिन्दुकुन्दरदनावक्त्रं जगत् पश्यति ।
तत्प्राप्त्यर्थमुदारहारवलयान् वासांसि धान्यं धनं चौर्येणापि समार्जयत्यतितरां स्रग्गंधतांबूलकम् ॥

निष्टप्तामलहेमकुम्भविलसत्कान्ताकुचालिङ्गनैः पीनश्रोणिकटीतटान्तरदलैर्दत्तेक्षणः कामुकः ।
रंभास्तम्भनिभोरुकलनैः संसारवार्तारसैः पापैर्धन्यधनार्जनादिविवशः कालं नयत्यादरात् ॥ ६२ ॥

यातायातशतैर्धनार्जनपरो न क्वापि विन्देत् सुखं
राज्ञां द्वारि सदा निविष्टहृदयो द्वार्स्थान् सदा पश्यति ।
का वेला हि सदाद्य को ह्यवसरो मां ज्ञापयेत्येव तान्
तत्कोपारुणलोचनैः प्रतिपदं खिद्यन्ति हृष्यन्ति च ॥ ६३ ॥

हृष्टो राजा धनाढ्यो द्रविणगणचयं प्राप्य तस्मात् कृतार्थं
लब्ध्वा तद्धनधान्यकं जनिजरारोगोत्थभैषज्यकैः ।
चोरैर्वा कुपितो विनश्यति धनं पापादिपुण्यैः परं
विष्टब्धः सुतदारपीडिततनुर्दारिद्र्यपङ्काप्लुतः ॥ ६४ ॥

वेदानुच्चैरधीते मृततिथिविधिभुक् पात्रता(?) पूर्तयेऽसौ
याज्यान् याजयति प्रकृष्टवचसा बोधं वदन् द्रव्यभाक् ।
केचिन्मान्त्रिकयान्त्रिका ग्रहगतिमतयो गीतवाद्यैः कथाभिः

रोगार्तान् भिषजो धनादिभिरहो पूजाभिरत्यादरा-
देतच्चद्धनहारणेषु चतुरान् [1]पश्यन्त्यहो सर्वदा[2] ॥ ६५ ॥

किं दारैस्तनयैः सुखेषु सुखदैर्दुःखेषु निन्दारतैः
किं वा बन्धुगणैः कृतप्रतिकृतैरामन्त्रणाद्युत्सुकैः ।
किं वा विप्रगणातिथेयनिरतैः पात्रैः [3]समस्तैः सदा
भृत्यैर्वैभवकामुकैर्न तु शिवे न क्वापि तुष्टो जनैः ॥ ६६ ॥

क्षुत्क्षामैर्ज्वलिता मृदिष्टकलहा भृत्यास्तथा ये नरा नानाकार्यशतेषु सक्तमतयो दारासुतार्थाप्तये ।
लोकः शोकविदग्धकष्टहृदयः पश्याधुना शैलजे विष्टब्धजठरादिपूर्तिनिरतं दुःखोत्थसौख्येक्षणम् ॥

अन्ये क्षुत्क्षामदग्धा रविकरनिकरैः शीतवातादिवर्षैः
पङ्कैः क्लिष्टोरुकाष्ठैस्तृणभरभरणैः कष्टतः प्लुष्टगात्राः ।
केचिद्वै धनिनां गृहेषु सुभृता भृत्यास्तथा शिक्षिता-
स्तत्कोपप्रभवप्रसादमुखरास्तत्कार्यलोलाः सदा ॥ ६८ ॥

नानाकर्मविचित्रचित्रगतिभिः पश्याधुना शैलजे
भाग्यं भोक्तुमनीश्वरा गदशतैर्भोक्ता न चान्नं लभेत् ।
पुत्रादिश्च सदैव तस्य तनयानन्दाद्विहीनो धनी
पाण्डित्ये च दरिद्रता विधिवशान्मूढो न मोक्षार्थभाक् ॥ ६९ ॥

दाता वाऽथ च याचको धनपरस्त्वेवं जगच्चाद्रिजे
वेदज्ञाश्च बहुश्रुताश्च सततं तद्द्वारि तिष्ठन्त्यहो ।
पुण्येच्छोर्न भवेद्धनं धनयुते पात्रार्पणे नो मनः
रूपिण्यां च न सन्ततिश्च गिरिजे रूपाद्विहीने प्रजाः ॥ ७० ॥

षण्डे दारशतं सुयौवनजने नास्त्येव दारस्मृतिः
एवं दुःखसहस्रकं भवशते नास्त्येव सौख्यैकभाक् ।
पुत्रोऽनल्पपरिश्रमैर्विधिवशाज्जाते स दाराहृतो
वृद्धां स्वां जननीं तथैव पितरं सद्मागतान् भर्त्सयेत् ॥ ७१ ॥

---

१ पश्यन् परं ध्यायति २ पञ्चपादोऽयं श्लोकः ३ परं निर्मितैः, C पात्रेषु दानार्पणैः काले देशविशेषभृत्यभरणैः इति पाठान्तरमपि A कोशे दृश्यते ।

भार्याश्चापि पतिं त्यजन्ति विवशा दारिद्र्यकामाशयाः
कश्चित्सर्वजनानुरक्तहृदयः पुत्रो भवेच्छांभवि ।
राजा चेत् सकलात्मकार्यकरणो भृत्यैः सदा जीवति
पातुं चात्तुमहो महेशि सततं स्वप्ने न चैव प्रभुः ॥ ७२ ॥

राज्याङ्गानि सदैव कष्टहृदयो वीक्षन् सुदुःखोरुभाक्
राजाऽस्मीति मदान्धलोलनयनः सौख्यभ्रमं याति हि ॥ ७३ ॥

सत्क्षत्रियश्चापि रणे त्यजत्यसून् स्वपुत्रदारानिव भुक्तिसिद्ध्यै ।
मृतो हि कः केन सुखेन जन्तुः लभेत सौख्यं सहि मूढवचरः ॥ ७४ ॥

वैश्योऽपि गोरक्षणपण्यविक्रये लाभादिलाभे च धनेषु वृद्धिभाक् ।
न्यासक्षये वृद्धिविपर्यये वा परार्घ्यकाले न हि तस्य सौख्यम् । ७५ ॥

रत्नानां च परिक्रये पटगणे धान्ये धने वा शिवे
नित्यं स्यात् कलहानुरक्तहृदयो राज्ञा सदा भर्त्सितः ॥ ७६ ॥

चातुर्वर्ण्याश्रमेपि फलजनितमहाकामपाशैश्च पुण्यं
सेवन्ते वै यमितकरणा दुःखरूपक्रियाभिः ।
प्रायश्चित्तभयं सदा द्विजगणे पातित्यमप्यन्ततः
शूद्रः सर्वजनार्चनादिविवशो न क्वापि सौख्यं जने ॥ ७७ ॥

यद्यङ्गनाजन्म समाप्नुयादुमे सापत्न्यवैधव्यमथाप्रजत्वम् ।
दारिद्र्यपीडा पतिकोपताडनं गर्भे प्रसूतो तदपारदुःखम् ॥ ७८ ॥

वियोगसंयोगमृतानुगम्यता पाकक्रियाश्चाथ बहुप्रजातता ।
कन्याप्रसूतिः शिशुरोगवीक्षणं न क्वापि सौख्यं शृणु देवि सर्वथा ॥ ७९ ॥

चराचरशरीरिणां रविकरैश्च वातादिभिः कुठारकृतवृक्णतो विपिनशीतदावादिभिः ।
वियोगवधबन्धनैर्मृगखगादिजन्मस्वपि सदा हि सुखमल्पकं न भवतीति मन्ये शिवे ॥

खरसृणिमुखघातैर्भिन्न कुम्भा गजेन्द्राः सरणिगतिरुतज्ञा मन्त्रिता यन्त्रिभिस्ते ।
स्वबलमिति विमूढाः शृङ्खलाबद्धपादाः सुदृढकठिनकाया नित्यमालानसंस्थाः ॥ ८१ ॥

तुरगनिवहदुःखं सादिपादैः कशाग्रैः खरतरखलिनास्यैर्घर्मचर्माद्रंरक्तैः ।
विविधगति विधिज्ञा नित्यशो हिण्डति स्म[1] ॥ ८२ ॥

---

१ त्रिपादयं श्लोकः

शकटहलमुखोत्थैर्धुर्ययुक्ताः सुगोणी भखरपरिखिद्यत्स्कन्धपृष्टास्थिसंघाः ।
मुखविवृति विनिर्यत्स्थूलदन्तोरुजिह्वा वृषखरमहिषोष्ट्रा भिन्ननासोरुसूत्राः ॥ ८३ ॥

उरगखगपिकाद्या भिन्नदंष्ट्रा रुदन्ताः कपिवृषनकुलाद्या मत्स्यगोधादयश्च ।
परभृतबलिभोज्याः कूर्मचाषा मयुराः वनहरिणशशाद्या भेकमल्लूककोलाः ॥ ८४ ॥

मनुजकठिनहस्तैस्ताडिता नित्यभीताः निहितसुखमुखास्ते नित्यदुःखाभितप्ताः ॥ ८५ ॥

वर्णी स्वर्णानुरक्तो भवजनितकथासारधारानुरक्तो
भिक्षुर्भक्ष्येषु सक्तो विपिनभुवि गतो ग्रामतर्षोत्थहर्षः ।
स्वख्यातिख्यापनार्थं मखमुखविधये दीक्षितो मन्त्रहीनः
कालो बालाबलासु प्रचरति तरुणे वृद्धरुग्णान् विहाय ॥ ८६ ॥

धनिनां न सुखायते धनं तनयैर्बान्धवदारचोरराज्ञा ।
न सुखाय भवेज्जनस्य तद् सततं भीतिकरं हि याचकेभ्यः ॥ ८७ ॥

पशुकनकधनाङ्गनाभिरेतज्जगतो जालमुमे निबद्धतृष्णम् ।
न सुखाय भवे हि कस्यचिन्मम भक्तः शममाप्नुयात् सुखाय ॥ ८८ ॥

दुःखेन धान्यधनतां समवाप्य मन्दो दारासुताप्तनिजबन्धुजनं च हित्वा ।
मर्त्यस्य मृत्युभवने सुखदोऽस्ति कश्चित् तस्याधिकं धनमुमे परकीयभोगः ॥ ८९ ॥

न शिवालयकल्पनेन वा सततं शाम्भवहस्तदानतो वा ।
मखजातविधिप्रचारतो वा न हि तस्यास्ति रुचिर्मुदा भवानि ॥ ९० ॥

दुरदृष्टवशाभिकृष्टभावः सततं कष्टजभोगसक्तितुष्टः ।
कचकुचजघनेषु दत्तदृष्टिः वनितायाः वनतोरुमूलभागे ॥ ९१ ॥

भार्यापुत्रसुबन्धुमित्रजवियोगार्तो रुदन्नस्तधी-
र्दौर्भाग्यं मम दैवतैश्च कृतमित्युत्कृष्टकर्मा स्वपन् ।
हा कष्टं मम जीवितेन करुणाविष्टः सदा याचते
लोको मुह्यति शङ्कराद्यशरणो वृद्धः सदा कष्टभाक् ॥ ९२ ॥

दृष्टिर्नश्यति काशपुष्पसमितैः केशैः प्रकम्पाङ्गको लालाजालविदूषितोरुवदनो जिह्वाचलद्दन्तकः ।
रोगैः पित्तकफानिलोत्थितमहाहिक्कादिसंघूर्णवाक् तल्पेऽनल्पविचारयुक्तहृदयो मृत्योर्मुखं गच्छति ॥

न मे पुत्रः पौत्रो गृहमपि च जीर्णं च धनकं
कृपिर्नष्टा वृष्ट्या धनमपि च वृत्तं न च पुनः ।
स वै दातुं शक्तो मम तु गृहिणी बालतनया
तथेयं गौश्चापि प्रतिपदघटोघ्नी न तृणकैः
मया पुष्टा रुष्टो मयि तरणिपुत्रोऽद्य हि कथम् ॥ ९४ ॥

शयानं तल्पे तं विविधभवचिन्ताधिनिवशं मुहुः पुत्रान् दारान् तरलनयनापाङ्गजजलैः ।
स्खलल्लालाहिक्काध्वनिघुरघुरोत्कण्ठजरवैः चलच्छ्वासैर्बन्धून् न हि खलु विजानाति विवशः ॥

मुहुः कर्णे पृष्टोऽप्यभिहितकृताक्रन्दनरवैरहो जानासीमं जनमिति मुहुर्बन्धुनिवहैः ।
शिव गाढं निद्रो व्रणगुणपरतुद्यत्खरमुखैः मुहुः सूचीजालैः श्रवणुगतदुःखं स लभते ॥ ९६ ॥

यावन्न वाङ्मनसि संक्रमते मुमूर्षोस्तावत् सदारतनयान् स्वाह वेत्ति देवि ।
प्राणो मनस्यस्तमिते च तेजस्यन्धो न जानाति स वै कुतस्त्व ॥ ९७ ॥

अन्नप्राणमनादिकोशनिवहैर्विज्ञानकोशात्मकैर्भूतैः पञ्च विलोडितेन्द्रियगणैर्व्यापारहीनैः शिवे ।
यद्वात्तुङ्गतरङ्गवल्गितमहीपृष्ठोत्थशंकूनिभैः प्राणैर्मर्मविघट्टनोत्थितरुजो देहात् स निष्क्रामति ॥

देहेऽहंमाननोत्थैः प्रतिभवसुकृतैः पापजालैरनेकै-
र्विद्याकर्मनिबद्धपूर्विकतनुं [1]प्रज्ञाजनः सजति ।
यात्यन्यं कुणपं तृणाग्रगतिवः कीटो यथान्यं त्यजेत्
तद्वद्देहवशानि सक्रमति वै सूक्ष्मेन्द्रियैर्देहिकैः ॥ ९९ ॥

करालदंष्ट्रैर्विकटोरुदण्डकशादिपाशैर्यमदूतपाशैः ।
पापान्वितो याति यमस्य सद्म प्रकृष्टदुःखानि सदैव भुङ्क्ते ॥ १०० ॥

विमानवर्येण मनोहरेण संपूजितो वीजितचामरौघः ।
संपूजितो याति सुरेन्द्रसद्म स्वर्गेष्टभोगानि सुखानि भुङ्क्ते ॥ १०१ ॥

तत्कर्णकटिभागगतं हिरण्यं वासो हरन्ति मृतपा इव बान्धवास्ते ।
तं निर्हरन्ति च गृहात् पितृकाननाय दुःखानुयानमबलाजनबालसङ्घैः ॥ १०२ ॥

हाहा भ्रातः पितस्त्वं जनमिममधुना क्वाद्य त्यक्त्वा गतोसि
बन्धो मित्र क्व मित्र सत्तम इति क्रन्दन्ति तद्बान्धवाः ।

---

१ प्रज्ञान्वितः C

चिताशतविदीपितं नरकपालदग्धास्थिकं
श्मशानमसितोत्थितश्वगणकाकगृध्रारवम् ॥ १०३ ॥

अहो प्रियतमेरितः कुलकराब्जमित्रेत्ययं जनोत्थरुदितार्भटीघटकपालदग्धोल्मुकम् ।
विदग्धकुणपं तदा महदपारकाष्ठोत्थितैर्ज्वलच्छिखिशिखरगणैर्हरितपीतधूमारुणैः ॥ १०४ ॥

वसाविदहधीःकृतैर्मुहुरनीक्षणैर्बान्धवैः स एव किल गच्छति न च सन्दृश्यते भस्मभाक् ॥ १०५ ॥

न रुद्राक्षमालाभिरेतस्य देहं न भस्मै (?) र्विलिम्पन्ति मूढास्तदीयाः ।
न शर्वार्पितं बिल्वपत्रं तदीयं शिखायां निबध्नन्ति दुःखैकलोलाः ॥ १०६ ॥

न चेशान शम्भो शिवेशेति कर्णे जपन्तो मुखे वा न दास्यन्ति तीर्थम् ॥ १०७ ॥

प्रायश्चित्तशताद्भिनैव पश्येद्गोदानभूदानकं
सत्यं मृत्युमुखे स्थितस्य हि शिवे मन्नाम चैकं परम् ।
मुक्तिं तद्वितनोति पापमखिलं तन्नाशयेत् सर्वथा
भस्माभ्यक्ततनुस्त्रिपुण्ड्रनिटिलो रुद्राक्षमालाधरः ॥ १०८ ॥

प्राप्नोत्येव मदीयलोकमधुना पापान्वितोऽपि प्रिये
यातायातमनोत्थिताखिलगतिर्मुक्तस्य नोत्पद्यते ।
तस्य प्राणमनुक्रमत्यतितराहंमानवर्गोज्झितः
कर्मण्याश्च महेश्वरेश्वरि तथैवोपासकानां गणाः ॥ १०९ ॥

पुण्यैस्त्रिविष्टपगतोऽपि सदैव पापाद्भीतः सदा सुकृतनाशनजातखेदः ।
पापादवश्यं नरकं विचित्रं समाप्नुयात् कर्मफलेन देही । ११० ॥

तिर्यक्स्थावरमानुषेषु बहुधा भ्रान्तस्य विप्रत्वता
तत्रापि श्रुतिवाक्यदर्शनगतं ज्ञानं परं जायते ।
भक्तिं चापि लभेत् स वै मम चिरात् पुण्यैरगण्यैः शिवे
तस्माद् ज्ञानमवाप्य मय्यनुगतो मुक्तो न संसारभाक् ॥ १११ ॥

न कोपि सुभगे शिवे कुमुदनाथचूडार्चने निशासु सितभस्मधृक् कमलपुष्पबिल्वादिभिः ।
समुद्यतमनाः सदा विविधकष्टपुष्टं भवं प्रकृष्टतरमश्नुते मयि निविष्टभावो न तु ॥ ११२ ॥

वरविधि निशाकरस्फुटकरोरुदिग्वक्त्रके विधूततमभां गणे विधृतचन्द्रमौलिं शिवम् ।
समर्चयति पुण्यभाक् जनिजरादिहीनो भवेत् न कालवरदण्डना भवति तस्य सत्यं शिवे ॥ ११३ ॥

मयोक्तं जगत्कष्टमेतद्विनष्टं भवत्येव मद्भक्तिनिष्ठो यदि स्यात् ।
वरिष्ठो विशिष्टः कृपापात्रमिष्टं भवेत सोऽपि लिङ्गार्चनातुष्टचित्तः ॥ ११४ ॥

सुतुङ्गरभङ्गमेधाकर्मबन्धैर्विमुक्तो भवत्येव तुष्ट्या ममैव ।
जनः कोऽपि जानन् महाबाणलिङ्गं समभ्यर्च्य बिल्वैः विमुक्तिं प्रयाति ॥ ११५ ॥

मद्भक्तिवैराग्ययुतस्य सौख्यं संप्राप्य लिङ्गार्चनभस्मधारिणः ।
सदा विरक्तस्य शिवैकयोगो भवेत् सदा गौरि सुदुर्लभः स हि ॥ ११६ ॥

गर्भे पैतृकशुक्लनोत्थतनुभाक् दुःखी सदा पुरुषो
देहान्तावधि तद्विनाशनपरं भक्त्यैव गम्यं हि माम् ।
प्राप्यानन्दमयो भवत्यनुदिनं विज्ञानमासाद्य मे
नित्यो जन्मजराविनाशरहितो मुक्तो भवत्यम्बिके ॥ ११७ ॥

सूतः —

(इति) पशुपतिवचनान्मुनिः प्रहृष्टः प्रणनामाथ महेश्वरस्य पादौ ।
भवभक्त्या विशदीकृतान्तरात्मा समुपोद्यत्पुलको बभाण देवम् ॥ ११८ ॥

शम्भो त्वदीयकृपया जगतोऽद्य दुःखं सम्यक् श्रुतं मम विरागदबुद्धिबोधम् ।
मायामयेन गुणपाशशतेन बद्धं मायी भवान् प्रणमतां विनिवारकोऽसि ॥ ११९ ॥

ईश्वरः —

गोकर्णमागच्छ कृताप्तदारः पुत्रानथोत्पाद्य सुकन्यकाश्च ।
आधाय चाग्नीन् मुखभागक्लृप्तान् देवान् समभ्यर्च्य विमुक्तितर्षः ॥ १२० ॥

नैष्कर्म्यमासाद्य मयि प्ररूढं दृश्यं जगत् पश्यसि मय्यथोत्थितम् ।
तथेति मत्वा भगवन्तमादरान्मुनिर्ययौ देवि तदा मुदाऽऽश्रमम् १२१ ॥

मया यथोक्तं हि तथा चकार गोकर्णमासाद्य स वै मुनीन्द्रः ।
मया महादेवि तवैतदाद्यं [1]प्रज्ञानमुत्कृष्टतया हि दत्तम् ॥ १२२ ॥

तेनैव नष्टाखिलसंशयास्ते मुक्तिं गता मय्यथ भक्तियोगात् ॥ १२३ ॥

---

१ प्रज्ञानमुक्तं भुवि दत्तमिष्टम् C

सूतः –

शूलपातसरस्तीरे घुसृणेशं महेश्वरम् । दृष्ट्वा नत्वा च तल्लिङ्गं मुच्यते भवबन्धनात् ॥ १२४ ॥

चन्द्रोपेन्द्रादिविबुधैर्मुनिभिः पूजितः सदा । प्रातः सङ्गवमध्याह्ने दृष्ट्वा तु घुसृणीश्वरम् ॥ १२५ ॥

महाघसंघैर्मुक्तिश्च भक्तिं मयि लभेत सः । इत्येतद्देवि ते प्रोक्तं घुसृणीश्वरवैभवम् ॥ १२६ ॥

शृण्वन् पठन् वा मनुजो मम भक्तिरतो भवेत् । तत्र मां सम्यगाराध्य वसन्ति शिवतत्पराः ॥

तेषां मद्ज्ञानमखिलं दातुमिच्छाऽस्ति मे शिवे । ज्ञानं तल्लभते गौरि घुसृणीश्वरपूजनात् । १२८॥

एकेन जन्मना मुक्तिर्भवेदज्ञाननाशिनी ॥ १२९ ॥

ईश्वरः –

चक्षुःश्रोत्रविभूषणोत्तमकथापीयूषपानादरा हारा भस्मकृतत्रिपुण्ड्रनिटिला रुद्राक्षमालाधराः ।
रुद्राध्यायजपादराः शिवमनुव्याहारमात्रादरा माल्लूप्रभवारुणोत्तमदलैर्लिङ्गार्चनात्यादराः ।

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे घुसृणेश्वरमाहात्म्य उद्दालकं प्रति संसारक्लेशवर्णनं नाम एकोनविंशोऽध्यायः ॥

---

## ॥ विंशोऽध्यायः ॥

ईश्वरः –

शृणु त्वमगजे पुण्यां मम भक्तस्य सत्कथाम् । भक्तभक्तं च मां विद्धि भाववश्योऽस्मि शङ्करि ॥

यः कश्चिदस्तु मद्भक्तः स मे प्रियतमोऽम्बिके । भक्तः प्रियो मे सततं चण्डालोऽस्तु द्विजोऽथवा ॥

भक्तानस्य क्षुधाविष्टः त्रिनेत्रः पात्रमम्बिके । वनखण्डमिति ख्यातं क्षेत्रमत्युत्तमोत्तमम् ॥ ३ ॥

वैद्यनाथोऽहममले तल्लिङ्गे संवसाम्यहम् । कामार्थी जनकामानां पूरकोऽहं सदाम्बिके ॥ ४ ॥

अरण्यशरणो नित्यं वनानां पतिरस्म्यहम् । ब्रह्मविष्ण्वादिभिर्देवैः गणवृन्दैश्च सेविता ॥ ५ ॥

पूजितो बिल्वपत्राद्यैर्निवसामि त्वया सह । बदरीखदरैर्बिल्वैः हरीतकविभीतकैः ॥ ६ ॥

वैकङ्कतैः केतकैश्च वंशैः कण्टकभूरुहैः । अन्यैश्च शाखिशतकैः फलपुष्पावनामिभिः ॥ ७ ॥

संवृतं वनमत्युग्रं सिंहव्याघ्ररवाकुलम् । वेणुकेङ्कारनिनदैः झिल्लिकागणपूजितैः ॥ ८ ॥

केसरीविकटारावभीतदन्तिजबृंहितैः । घूकोलूकोत्थघूत्कारसंवर्धितदिगन्तरम् ॥ ९ ॥

केकिकोकिलनादैश्च शिवाकोलजघुर्घुरैः । भीषणं भीषणस्यापि तत्रारण्यपतिस्त्वहम् ॥ १० ॥

निवसामि त्वया गौरि तद्वने सञ्चरन् सदा । फलपुष्पाण्यपाराणि पश्यन् जिघ्रन् वनस्थलीः ॥
अरण्यपतिरेवाहं तदा हि वनगोचरः । तत्रास्ति भिल्लराट् कश्चित् सदाऽत्यन्तसखा मम ॥ १२ ॥
भक्तश्च सततं देवि मयि प्रीतिसमन्वितः । बद्धगोधाङ्गुलित्राणो मृगचर्मलसत्कटिः ॥ १३ ॥
वराहचर्मादिकृतपादत्राणसमन्वितः । मातङ्गकृत्तिविलसत्कञ्चुकावृतविग्रहः ॥ १४ ॥
पिनाकसदृशं तस्य धनुरस्त्येकमुत्तमम् । मुष्टिना हस्तलग्नेन धनुषा स विराजितः ॥ १५ ॥
तन्निषङ्गशरैः पूर्णं धारयन्ती तदङ्गना । सत्वर्णवाससा तं हि समायात्यति पृष्ठतः ॥ १६ ॥
गुञ्जादिविधृतापारभूषणावलिभासुरा । स मृगाजिनसर्वाङ्गो मधुपिङ्गललोचनः ॥ १७ ॥
तद्दृष्टिपातभीत्यैव पलायन्ते मृगाण्डजाः । किं पुनस्तच्छराघातं मृगः कः सोढुमर्हति ॥ १८ ॥
मृगं वा महिषं वापि सृमरं चमरं रुरुम् । कोलं शललकं चैव शशं खड्गं च विध्यति ॥ १९ ॥
करीन्द्रशुण्डाकाण्डानि गिरीन्द्रशिखराण्यपि । स्वकाण्डशरकाण्डैश्च खण्डयत्येव भिल्लराट् ॥ २० ॥
व्याघ्रं वापि तरक्षुं वा स विध्यत्येव दुःसहः । सदा कटितटोद्भासिखड्गखेटकशोभितः ॥ २१ ॥
आखेटकपरीवारैर्जालजालैः सदाऽऽवृतः । त्रिसहस्रमहाभिल्लैः क्रूरैः क्रूरतरैर्वृतः ॥ २२ ॥
ते नित्यं शस्त्रपाषाणखड्गखेटधराः सदा । धनुःशरकराश्चान्ये नित्यं तमनुयायिनः ॥ २३ ॥
व्याघ्रवीर्यैः श्वभिश्चैव करालोन्नतदंष्ट्रिभिः । कूजद्भिरनुधावद्भिस्तैः साकं वक्रपुच्छकैः ॥ २४ ॥
जृम्भमाणललज्जिह्वादीर्घश्रोत्रोरुलोचनैः । नीलपीतारुणैर्वर्णैर्लालातन्तुयुतैर्मुखैः ॥ २५ ॥
श्रशान्वराहांश्च मृगाननुद्रुत्याशुचिस्तदा । विदारयन्ति दशनैस्तद्रक्तापूरितैर्मुखैः ॥ २६ ॥
मृगान् पार्श्वोदरान्त्रेषु व्रणैश्च व्रणैस्तथा । शरपातात् पूर्वमेव धावन्त्येते सुदुःसहाः ॥ २७ ॥
भिल्लानां पुरतो देवि तस्मिन् सुगहने वने । स मुष्टिधृतचर्मस्थशरैनैरग्र्यरुणाक्षिभिः ॥ २८ ॥
पक्षिजालं निहन्ति स्म विसृष्टकरबन्धनैः । स मण्डलपरिभ्रश्यत्खगतुण्डोरुकुट्टनैः ॥ २९ ॥
पक्षपादप्रहारैस्तां बलाकापङ्क्तिमुत्थिताम् । नीलनीरदमध्यस्थविद्युल्लेखेव सुप्रभाम् ॥ ३० ॥
पातयन्ति महीपृष्ठे विष्टब्धवरकार्मुकाः । गजनीला महाभिल्लाः सर्वे मल्लिङ्गपूजकाः ॥ ३१ ॥
तेषां श्रेष्ठोऽथ मेधावी जपो नाम्ना महाबलः । पत्न्या समन्वितो नित्यं झषान् सरसि हन्त्यपि ॥
हत्वा वराहान् पृषतान् रुरूनन्यांश्छशांस्तथा । सुस्वादुमांसमुत्कृत्य निष्टप्यास्वाद्य शोभते ॥
अन्यदादाय जालेन वारयन् भूरि तद्बलम् । संप्रेषयति तद्गौरि गृहं भिल्लगणैस्तदा ॥ ३४ ॥
सुस्वादुमांसं पेश्यां स निक्षिप्याशाति मां तदा । भवरोगहरं नाम्ना तीर्थं तत्रास्ति शैलजे ॥

आयुर्वेदः पुरा दत्तो मयाऽश्विभ्यां सुपूजितः । स्नात्वा तस्मिन् महातीर्थे पूतौ देवभिषग्वरौ ॥
देवपङ्क्तिगतौ चापि भवतां सोमपीथिनौ । ताभ्यां स्तुतोऽहं कल्याणि तत्स्तुतिं शृणु शैलजे ॥
पूजितो बिल्वपत्रैश्च वैद्यनाथो[1] महेश्वरि ।

अश्विनौ –

भिषग्वरं देववरं महेशं गङ्गाधरं सोमहुताशनेत्रम् ।
सुपद्ममित्रानलवर्णिनं त्वां भजाव शम्भुं सुहिरण्यबाहुम् ॥ ३९ ॥

दशशतवदनेक्षणोरुपादैः दशशतनयनेन संस्तुताङ्घ्रिम् ।
दशशतरुद्रगणाभिपूज्यलिङ्गं दशशतकिरणाक्षिमानतौ स्वः ॥ ४० ॥

ताभ्यां स्तुतोऽहं कल्याणि कृतौ देवभिषग्वरौ । तीर्थोत्तमे तदा स्नात्वा गृह्णात्याख्येन वै जलम् ॥
दवभस्माङ्कितागः स पृष्ठबद्धशरावरः । शिञ्जिनीसहितो भास्वद्दुपवीतशरासनः ॥ ४२ ॥
बिल्वपत्राण्यथादाय मांसपेशीं तथा करे । स समायाति मां गौरि पत्न्या सह समन्वितः ॥
सुरैः पूर्वकृतां पूजां रत्नैर्बिल्वैश्च शङ्करि । पादत्राणपदा गौरि सदा दूरीकरोति सः ॥ ४४ ॥
स्वगण्डूषजलैः स्नाप्य लिङ्गं मङ्गलदं मम । पातयित्वा बिल्वपत्रं तन्मांसं विनिवेद्य च ॥ ४५ ॥
लिङ्गमौलिं कराभ्यां च स्पृष्ट्वा क्रोशति भैरवम् ॥ ४६ ॥

भिल्लः –

अहो महादेव सदाशिवेश प्रसीद मन्ध्यघ महाघपुञ्जे ।
त्वत्पादभक्त्या गणयामि नामरान् द्विजा मनुष्याश्च कियन्महेश्वर ॥ ४७ ॥

कियन्ति पापानि कृतानि चेन् किमु उत्पाटये[2] युष्मवतोऽद्य शिष्यम् ।
यदि स्मरारेश्चरणारविन्दं स्मरामि तस्मान्न भयं ममाद्य ॥ ४८ ॥

इत्थं मद्भक्तिगर्वेण भिल्लो वदति शङ्करि । सुप्रीतोऽस्तु महादेव पूजया मम केवलम् ॥ ४९ ॥
इति श्रुत्वाऽथ तद्वाक्यं तद्भक्त्याहं सुतोषितः । त्रिरोंकारध्वनियुतं प्रतिशब्दं ददाम्यहम् ॥

तच्छ्रुत्वा प्रणतो गौरि भिल्लो याति स्वकं गृहम् ।
पत्न्या तथा विशालाक्षि स भुङ्क्ते बान्धवैः सह ॥ ५१ ॥

---

१ नाथोऽहमीश्वरि C

२ उत्पाटयेयुश्च मदीयशष्पम् (C)

मृगाजशशगोधानां मांसं स्वादु निवेदितम् । अत्यन्तं घर्मतप्तोऽपि वृष्टिधारान्वितोऽपि वा ॥
क्षुच्छ्रान्तोऽपि महादेवि नियमान्मम पूजकः । प्रत्यहं मां समभ्यर्च्य भुङ्क्ते मांसानि केवलम् ॥
एवं संवसतस्तस्य कालो भूयानवर्तत । तद्भीत्या वायुरपि च न वाति मनुजः कथम् ॥ ५४ ॥
समायाति वनं गौरि ब्रह्मविष्ण्वादयः सुराः । निशि प्रत्यहमागत्य साङ्गं कुर्वन्ति पूजनम् ॥
प्रातः सङ्गवमध्याह्नकालादपि महेश्वरि । सायङ्काले महादेवि पूजा प्रियकरी मम ॥ ५६ ॥
तत्रापि निशि पूजा मे देवि प्रीतिकरी मम ॥ ५७ ॥

निशासु सितभस्मधृग् विमलशाङ्कलिङ्गार्चको शिवे भवति भाग्यतो मुहुरपारबिल्वार्पणैः ।
सुपीततरकेतकैः समभिपूज्य भुक्तो भवेन्न याम्यभवयातनामपि मृणोति तन्नार्चकः ॥ ५८ ॥

शैववर्यगणाः सर्वे मुनयो धैर्यतत्पराः । तस्याज्ञया समायान्ति पर्वकालेषु सादरम् ॥ ५९ ॥
स्नात्वा तत्सरसि स्वच्छे भस्मरुद्राक्षभूषणाः । हरिद्वारात् समानीय शुभं गङ्गाजलं शिवे ॥ ६० ॥
रुद्रसूक्तैर्महादेवं वैद्यनाथं तथाम्बिके । तदा कार्पटिकाः शैवाः मल्लिङ्गं सेचयन्त्युमे ॥ ६१ ॥
पञ्चामृतैः फलैश्चापि गन्धाद्यैर्बिल्वपत्रकैः । पुष्पैर्वन्यैरपारैश्च नैवेद्यैः परिकल्पितैः[1] ॥ ६२ ॥
प्रदक्षिणप्रणामाद्यैः स्तुवन्ति स्तव्यमीश्वरम् । वैद्यनाथमहालिङ्गं भवरोगहरं शिवम् ॥ ६३ ॥

मुनयः –

त्वामालोक्य मुनिर्वृता मुनिगणाः प्राप्ताभयाः शङ्करं
विश्वेशं मदनान्तकं सुरवरैर्वेदैश्चतुर्भिः स्तुतम् ।
धात्रा वृत्रहणेन मारजनकेनाराधितस्त्वं सदा
विश्वं त्वं तमसां परः श्रुतिशिरोवेद्यस्त्वमाद्यो भिषक् ॥ ६४ ॥

या चोमा भगवंस्त्वदङ्कवसतिर्यस्याः कपालेशतो
जातं विश्वमिदं विचित्रजनकं या सा स्वयं मोहयेत् ।
यां देवा मुनयोऽप्यमी स्तुतिशतैः स्तुत्वा तदीयं शुभं
विज्ञानं समवाप्य मुक्तकरणा मुक्तिं प्रयान्त्येव ते ॥ ६५ ॥

भिक्षादस्माच्छिवो यत्करधृतधनुषो भीतिरस्माकमुग्रा-
दुग्रस्त्वं शैववर्ये विततयशःसीम्नि विस्तीर्णधाम्नि ।

१ फल्कल्पितैः C

सुधाधामा मूर्धा त्वयि च तदुभयं भिल्लगण्डूषवारि
नो सह्यं नो महेश भवदभयकृपापात्रभूतान् (?) प्रसीद । ६६ ॥

इत्थं सर्वमुनीन्द्रैश्च प्रार्थितोऽहं सदाम्बिके । तद्भक्तिदार्ढ्यं विज्ञातुं तान् प्रदर्शयितुं तदा ॥ ६७ ॥
वातवृष्टिः समानीता स्तनयित्नुप्रगर्जितैः । शिलापातोपमासारशुण्डाधारातिवर्षणैः ॥ ६८ ॥
मेघमालावृतं व्योम समभूत् सुरतस्करम् । तया वृष्टिभयात् सर्वे विलीनास्ते महालये ॥ ६९ ॥
भिल्लभीत्या वृष्टिभिया शैवाः कम्पितविग्रहाः । एतस्मिन्नन्तरे भिल्लः पत्न्या स्नात्वा समाययौ ॥
मांसान्यादाय हस्तेन बिल्वपत्राण्यथैकतः । शरावरेण धनुषा पृष्ठलग्नेन शांभवि ॥ ७१ ॥
पादत्राणेन च तदा गण्डूषपयसाऽपि च । वैद्यनाथमहालिङ्गे पादत्राणपदा तदा ॥ ७२ ॥
तैः शांभवैः कृतां पूजां बिल्वपत्राण्यपातयत् । स्वगण्डूषजलैः स्नाप्य तल्लिङ्गं मम मुक्तिदम् ॥
अपातयद्बिल्वपत्रं मांसं तच्च निवेद्य सः । धृत्वा लिङ्गशिरो भिल्ल उदक्रोशद्यथापुरम् ॥ ७४ ॥
तद्भक्तिदार्ढ्यं शैवानां प्रदर्शयितुमम्बिके । मया नोच्चरितः शब्दस्तदा भिल्लोऽतिदुःखितः ॥
स्फुटितं चक्षुरेकं मे सवद्रक्तं च लिङ्गगम् । तस्मै सन्दर्शयामांशे दृष्ट्वा मां तादृशं तदा ॥ ७६ ॥
शूलीमुखमुखेनैव स्वनेत्रं स तदोत्खनत् । उवाच दुःखितो भिल्लः केन तत् कृतमीश्वर ॥ ७७ ॥
तमद्य पातयिष्यामि अहो बत बतेति च । तद्वचनक्षणालेन लिङ्गनेत्रेण शोभितः ॥ ७८ ॥
द्वितीयं मे तदा नेत्रं तथा स्फुटितमीश्वरि । स्रवद्रक्तं दर्शयामि तस्मै भिल्लवराय हि ॥ ७९ ॥
तदा स्वनेत्रमुत्फुल्लं शराग्रेण समुत्खनत् । पश्यन्ति मुनयः सर्वे तद्भिल्लकृतसाहसम् ॥ ८० ॥
उवाच भिल्लो हृष्टः सन् पाणिना नेत्रगोलकम् । प्रगृह्य विनयोपेतः पश्यन्त्या भार्यया तदा ॥

भिल्लः —

त्वदीयं लोचनं केन स्रवद्रक्तमहो कृतम् । तेन त्वं दुःखितोऽसीति करेणालिङ्ग्य मां तदा ॥
गृहाण मन्नेत्रवरे फुल्लाम्बुजसमप्रभे । इति तद्वाक्यमाकर्ण्य त्वया सह सुमध्यमे ॥ ८३ ॥
मया चन्द्रकलामौलि महावृषभसंस्थितम् । नीलकण्ठं विरूपाक्षं तस्मै रूपं प्रदर्शितम् ॥ ८४ ॥
गणेश्वरैः परिवृतं वृतं मुनिगणैस्तदा । दृष्ट्वा मां मुनयः सर्वे भिल्लस्य पुरतोऽम्बिके ॥ ८५ ॥
अन्योन्यं वीक्षयन्तस्ते मां भिल्लं च मुहुर्मुहुः । मत्पाणिकमलेनेश्चि तन्मुखं रक्तसंवृतम् ॥ ८६ ॥
स्पृष्टं तस्येक्षणे दत्ते फुल्लाम्बुजसमप्रभे । अत्यन्तविस्मयाविष्टाः शैवा ऊचुः परस्परम् ॥ ८७ ॥
अहोऽस्य तादृशी भक्तिर्दृष्टा न क्वापि न श्रुता । दृष्ट्वास्यैतादृशीं भक्तिं सर्वे सहति शङ्कराः ॥

सहमानो महादेवो भक्त्या सर्वं सहिष्यति । एतादृशं भक्तिमार्ग्यं प्रापायं वनगोचरः ॥ ८९ ॥
सहस्रकमलैर्लिङ्गं यदा संपूजयद्धरिः । सहस्रगणनाशून्ये स्वनेत्रकमलेन हि ॥ ९० ॥
हरिणा पूजितः शम्भुरित्येवं शुश्रुमः कथाम् । नेत्रद्वयमयं प्रादाद् वैद्यनाथाय सत्तमः ॥ ९१ ॥
हरेरप्यधिकश्चायं भक्त्या भिल्लो गणोत्तमः । धन्योऽयं कृतकृत्योऽयं मान्योऽस्माकमहो द्विजाः[1] ॥
एतादृशी भक्तिरपि अस्मास्वद्य न विद्यते । भिल्लमालिङ्ग्य ते शैवा धन्यो मान्योऽसि नः सदा॥
त्वमेव भक्तवर्योऽसि धन्यं त्वत्कुलमुत्तमम् । योऽल्पोऽपि भक्तियुक्तः स्याद्देवदेवे महेश्वरे ॥
भाग्यवानेव भूलोके मान्यो देवगणेष्वपि । यो वै समुन्नतो हीनो भक्त्या देवे महेश्वरे ॥ ९५ ॥
सोऽधमश्चेति विज्ञेयो मुनिभिस्तत्त्वदर्शिभिः । इत्थं वदन्तस्ते शैवा हर्षनिर्भरमानसाः ॥ ९६ ॥
मां प्रणम्याथ ते सर्वे तुष्टुवुः प्रमथाधिपम् । ९७ ॥

शैवाः –

तारानाथसहोदरापतिकृतापाराब्जपूजाङ्घ्रिकं संसारातिमपारदुःखशमनं घोरादिपापापहम् ।
धीरोदारकुमारशूरजनकं कर्पूरगौरं हरं वारं वारमनुस्मराम हृदये वीरं कृपासागरम् ॥ ९८ ॥
इति स्तुत्वा तदा शैवा मां संस्मृत्य सदा स्थिताः । सारूप्यं च मया दत्तं गणत्वं तस्य शङ्करि ॥
तस्मै भिल्लाय मल्लोके वासो दत्तस्तदानघे । पूर्वज्ञानविहीनश्च स मां तुष्टाव हर्षितः ॥ १०० ॥
पत्न्या सह विशालाक्षि सगणो देवरूपया ॥ १०१ ॥

[2]भिल्लगणः –

निधनपतिमनीशं शासितारं परेशं गुरुममरवराणां चारणानां च शम्भुम् ।
भुवनजनकमाराद्वेदशीर्षेषु गम्यं कनकगिरिनिवासं वैद्यमाद्यं नतोऽस्मि ॥ १०२ ॥
अमेयस्त्वच्छेद्यो निखिलभवरोगादिहरणो महानाद्यो वैद्यस्त्वमसि विबुधाद्याद्य वचसाम् ।
नमोऽन्ताद्यैर्मन्त्रैः प्रकटितयजुर्वेदतिलकैः भवांस्तव्यः सेव्यो हर हरसि पापं मम विभो ॥ १०३ ॥

ईश्वरः –

इति स्तुत्वा तदा भिल्लः स्वभिल्लैर्भार्यया तदा । गणाधीशोऽभवद्देवि विकुण्ठोपरि कल्पिते ॥
विष्णुभोगवताधिक्ये लोके वै स्थापितो मया । एतत्तेऽभिहितं गौरि वैद्यनाथस्य वैभवम् ॥
यः शृणोति सदा भक्त्या मयि भक्तिं लभेत् स वै । खिन्नमेतत् सकृद् दृष्ट्वा स्नाप्य गङ्गाम्भसा नरः॥

---

१ सदा C　　२ भिल्लः C

कृतकृत्यो भवेद्गौरि स साक्षाद्गणपो भवेत् । वैद्यनाथमहालिङ्गं सकृद् दृष्ट्वा विमुच्यते ॥ १०७ ॥
अनन्तैरपि पापौघैः सद्य एव न संशयः । शैवाश्च सततं भक्त्या बिल्वैर्गङ्गाम्भसा शिवे ॥
तल्लिङ्गं पूजयन्त्येव भवबन्धविमुक्तये ।

लिङ्गं मङ्गलदं मनोज्ञममलं श्रीवैद्यनाथाभिधं
दृष्ट्वा संपूज्य बिल्वैः सकृदपि च नरः प्राप्नुयान्मुक्तिकान्ताम् ।
त्यक्त्वा पापौघतापं जनिमृतिगदजापारदुःखैर्विहीनो
हीनोऽपि स्यादवश्यं भवशतजनितं भूरिपुण्यं लभेत ॥ १०९ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे वनखण्ड वैद्यनाथमाहात्म्ये भिल्लभक्तिवर्णनं नाम विंशोऽध्यायः ॥

---

## ॥ एकविंशोऽध्यायः ॥

ईश्वरः —

त्रियम्बको नाम गिरिरस्ति प्रियतमो मम । मन्दराचापि कैलासात् तथैव कनकाचलात् ॥ १ ॥
मे निवासा महेशस्य त्रियम्बकगिरिस्त्वहम् । त्रियम्बकेश्वरं नाम्ना तल्लिङ्गं परमाद्भुतम् ॥ २ ॥
तल्लिङ्गं येन दृष्टं स्यात् तेन दृष्टा त्रिलोकिका । त्रैलोक्ये यानि लिङ्गानि तानि सर्वाणि शङ्करि ॥
त्रियम्बकेश्वरं लिङ्गं मम सर्वार्थसिद्धिदम् । येन दृष्टं श्रुतं वापि प्रणतं वा समर्चितम् ॥ ४ ॥
स एव धन्यधौरेयः पुरुषार्थैकभाजनम् । तत्र सन्ति महाशैवास्त्र्यंबकेशसमर्चकाः ॥ ५ ॥
भस्मोद्धूलितसर्वाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः । रुद्राक्षमालाभरणा रुद्रसूक्तजपादराः ॥ ६ ॥
पञ्चाक्षरपरा नित्यं सदा मल्लिङ्गपूजकाः । बहवस्तत्र देवेशि त्र्यम्बकेशं यजन्ति माम् ॥ ७ ॥
बिल्वपत्रैश्च कमलैस्तथा गोदावरीजलैः । पूतैर्मां स्नापयन्तीशे रुद्रमन्त्रैरहर्निशम् ॥ ८ ॥
फलमूलैश्च विविधैर्नैवेद्यैश्च सदाम्बिके । मत्पूजारहितास्ते तु जलमन्नं फलादिकम् ॥ ९ ॥
नाश्नन्ति नियतं देवि नैवेद्यैर्वर्तयन्ति ते । गौतमार्थे समानीता स्वमौलिस्थजटाग्रतः ॥ १० ॥
पुण्या गोदावरी देवि वृद्धगङ्गेति विश्रुता । तस्यां स्नात्वा महानद्यां दृष्ट्वा श्रीत्र्यंबकेश्वरम् ॥ ११ ॥
अश्वमेधशतात् पुण्यं भविष्यति न संशयः ॥ १२ ॥

सूतः —

सा गौरी देवदेवस्य श्रुत्वा वाक्यं मुनीश्वराः । प्राह देवं विरूपाक्षं प्राञ्जलिः प्रणयान्विता ॥

पार्वती –

गौतमार्थं महादेव कथं गोदावरी नदी समानीता महेशान तन्ममाचक्ष्व विस्तरात् ॥ १४ ॥

पार्वतीवदनांभोजाच्छ्रुत्वा वाक्यं महेश्वरः । प्राह देवीं महादेवो गौर्यै तां गौतमीं कथाम् ॥

ईश्वरः –

शृणु देवि पुरा विप्रो गौतमो नाम शाङ्करः । मम भक्तवरोऽत्यन्तं सदा मल्लिङ्गपूजकः ॥ १६ ॥

अहल्यां तां पुरा त्यक्त्वा सुत्राम्णा च प्रधर्षिताम् ।
तद्वियोगेन दुःखार्तः स्मृत्वा तां सुप्रियां प्रियाम् ॥ १७ ॥

शिवक्षेत्राणि पुण्यानि भ्रमंस्तद्दुःखकर्शितः । कोकामुखं च केदारं ओंकारामरकण्टकम् ॥ १८ ॥

कुरुक्षेत्रं प्रभासं च पुष्करं विरजं तथा । कालञ्जरं च बदरीं गयां चैव प्रयागकम् ॥ १९ ॥

हरिद्वारमयोध्यां च पुण्यं पिण्डारकं तथा । श्रीगङ्गासागरं देवि हलसङ्गं महेश्वरि ॥ २० ॥

तत्रत्यपुण्यतीर्थेषु पूज्य लिङ्गानि भक्तितः । वाराणसीमपि प्राप्य तत्र नो नष्टकिल्बिषः ॥ २१ ॥

श्रीविश्वनाथं तुष्टाव स्नात्वा च मणिकर्णिकाम् । बिल्वपत्रैः समभ्यर्च्य स्नाप्य गङ्गाम्भसा शिवम् ॥

गौतमः –

रत्नेश वीरेश त्रिलोचनेश केदारसंघेश सुमध्यमेश ।
श्रीकृत्तिवासेश्वर शूलटङ्क श्रीवृद्धकालेश्वर मङ्गलेश ॥ २३ ॥
भाण्डीश्वरेशानकमारभूत कपर्दिशम्भो हरिनारदेश ।
क्षेमेश्वरेशान सुमङ्गलेश व्यासेश दक्षेश्वर देविकेश ॥ २४ ॥
सर्वेश विश्वेश्वरा पाहि दीनं मां गौतमं दुःखशताभिविष्टम् ॥ २५ ॥

आताम्रारुणत्वजटोरुपटलीलीलाविहङ्गायिता गङ्गाव्योमपथप्रचारनिकरैर्देवैस्तरां संस्तुता ।
स्वात्मोद्दत्यपदद्रुमङ्गकुहरे नागावरद्राविणी जह्नोर्यज्ञसदःप्रचारशमनी तान् नागराप्लाविनी ॥

ईश्वरः –

इत्थं स गौतमो देवि मां विश्वेशं प्रणम्य च । मया चाज्ञापितो विप्र त्र्यंबकं गच्छ सुव्रत ॥

तत्र गोदावरीस्नानं सिंहयुक्ते बृहस्पतौ । अश्वमेधशतात् पुण्यं प्राप्स्यसेऽति मदर्चनात् ॥ २८ ॥

मत्तो विश्वेश्वराद्गौरि लब्धानुज्ञः स गौतमः । त्रियम्बकं गिरिं प्राप्य त्र्यंबकेशं समर्चयन् ॥२९॥

बिल्वपत्रैर्महादेवि मां तदा लिङ्गरूपिणम् । भस्मोद्धूलितसर्वाङ्गो रुद्राक्षकृतभूषणः ॥ ३० ॥

पञ्चाग्निमध्यनिरतः संसाराद्विरतस्तदा । मां ध्यायन् रविबिम्बस्थं त्र्यंबकेशं स भक्तितः ॥ ३१ ॥
स्वमानसवरोद्बोधं दशश्लोकैरुदाहरत् ॥ ३२ ॥

गौतमः —

रे रे मानस मुञ्च लौल्यमनिशं नश्यत्सु वित्तादिषु
तन्नैसर्गिकमप्यमीषु पदयोः प्रेतेशसंहन्त्रिणः ।
कामासुक्षपणकदीक्षितललाटेक्षे कुरुष्वास्ति चे-
द्गौरासेचनके जटेन्दुशकले शम्भोर्गले चासिते । ३३ ॥

किं यत्नेन बहुज्ञकर्तृसुलभेनायासवित्तादिभिः
साध्येनेप्सितभोगदाननिपुणेनाज्ञाननाश्येन च ।
शम्भोस्ताण्डवसुन्दरं पदयुगं भक्त्याभिगच्छेत्र सक-
न्मुक्तिः स्यात् सुखरूपिणी तदवरं सर्वं सुखं मानस ॥ ३४ ॥

चेतः संसृतिलोलमानवशुचं तत्रापि संसार्यसि
शम्भोः पादसरोरुहं सदनमस्त्यस्ति स्वसा भक्तिका ।
श्रद्धा ते गृहिणी स पूजनविधिः पुत्रोऽस्ति सुभ्रातृता
शान्त्यक्रोधदयाशमादिषु सुखं भुंक्ष्वाक्षयं शाश्वतम् ॥ ३५ ॥

शाठ्येर्ष्यामदलोभमोहकरणैः किं वाऽधिकारैर्धनैः
किं दारैः स्वसुखैकसाधनतया शुश्रूषमाणैः पतीन् ।
छायामात्रफलैरगारवलयैः किं भूरुहापेक्षया
सर्वं भ्रान्तिविजृंभितं हृदय मे मुक्त्वा शिवं भावय ॥ ३६ ॥

वित्तं रिक्तजनैकदुर्लभतमं कृच्छ्रेण लब्धं यदि
भोक्तुं न प्रभुरेष दुर्गुणगणैरालिप्यते केवलम् ।
मृत्यावापतति क्षणादविदितं तद्वंशजैर्जीर्यते
किं तेनास्ति भजस्व शंभुचरणाविष्टार्थदाने चणौ ॥ ३७ ॥

चेतस्त्वं कुरु चिन्तनं त्यज शुचं सांसारिकीं किं तया
ब्राह्मण्येन सह स्थितस्य तव यत् साध्यं तदेवाचर ।
यत् तत्त्वार्थनिबोधनं श्रुतिगिरां तासामनुष्ठानतः
साफल्योद्यममीश्वरार्पणधिया निःसङ्गतामावह ॥ ३८ ॥

चेतस्त्वं सकलप्रमाणपदवीदूरेऽल्पसारे पुनः
संसारे रमसे त्वदेकविदितं सारं समालम्ब्य वै ।
एतादृग्यदि शम्भुमेव भजसे तत्रैव रागो भवेत्
सौवर्णाण्णुकेन तोषमयतः प्राप्ता सुमेरुर्यदि ।' ३९ ॥

चेतो यत्परिचिन्त्यते च भवता तत्र पौरुषं चेद्बलं
विघ्नस्तत्र क्रियास्तथाप्यविगतं किं वा सुखैकोत्तरम् ।
यत् साध्यं श्रुतिचोदितं व्यवसितं [1]नित्यशतद्यक्षतं (?)
तद्धेतौ यदि यत्नमद्य कुरुषे तच्छ्लाघनीयं भवेत् ॥ ४० ॥

बोधादित्यकरप्रसारविरहादम्लानशाखच्छदैः
सच्छायां विषयाख्यकन्दजनितां प्रेमाम्बुपूराद्रितां ।
स्वस्थित्या मृतिदायिनीमपि फलभ्रान्त्याज्ञसंमानितां
आशाख्यां विषवल्लीं त्यज मनः तन्मुक्तिबीजं तव ॥ ४१ ॥

रे रे मानसराजहंस नितरां शम्भोः पदाब्धेस्तटे
भक्त्या चञ्चुपुटेन साधुविलसन्मुक्तावली गृह्यताम् ।
तेन त्वं भविता जरादिरहितो रोगादिहीनः सुखं
गच्छोड्डीय दिवानिशं द्विजकुलैर्जुष्टं महेशालयम् ॥ ४२ ॥

सूतः —

स इत्थं चेतसोद्बोधं कृत्वा पल्लकनन्दनः । गौतमः पूजयामास बिल्वैर्गोदावरीजलैः ।' ४३ ॥
ततः कालेन महता तद्दृष्टिपथमागतः । ४४ ॥

रैक्वाद्यैर्मुनिभिर्वृतः स भगवानारुह्य सच्छाकरं
हिक्कारोगगणान्वितान्तकहरस्तत्राययौ गौतमम् ।
दृष्ट्या साधु सुधार्द्रया करुणया पश्यंस्तदीयं वपु-
र्भस्माक्षादिसमन्वितं च तपसा कार्श्यं गतः शङ्करः ॥ ४५ ॥

दृष्ट्वा मामम्बिकायुक्तं नीलकण्ठं त्रिशूलिनम् । सन्तुष्टावाष्टमूर्तिं मां गौतमो हृष्टधीस्तदा ॥४६॥

गौतमः —

करधृतमृगबालं भक्तचित्तानुकूलं श्रितजनसुरसालं हस्तवर्यैकशूलम् ।
गललसदहिमालं नेत्रसंशोभिफालं श्रितसुरतरुमूलं तं भजे कालकालम् ॥ ४७ ॥

---

१ नित्येष विद्यक्षतं C

श्रेयांसि सन्दिशति पापमपाकरोति बुद्धिं प्रसादयति सौख्यततिं तनोति ।
दुःखं विनाशयति शङ्करपादपद्मसंपूजनं जनमिमं सफलीकरोति ॥ ४८ ॥

विनिहतनरसिंह चर्मचेलाजकपालोद्धृत विष्णुरक्तपानलोल ।
धृतचन्द्रकलानलाक्षिफाल कवहालाहल पानतो गलेन्द्रनील ॥ ४९ ॥

कुरङ्ग लसत्पाणि पद्मामलाक्षस्फुरद्भोगिमालावृताशादिचेल ।
महाशूलहस्ताखिलाण्डादिलोल वलावलप्रस्वाम्बुक्रबालैकपाल ॥ ५० ॥

इत्थं तेन स्तुतोऽहं वै देवि बिल्वैः समर्चितः । वरेण छन्दितो गौरि गौतमः शांभवोत्तमः ॥
[1]स्वपावनार्थं तेनैवं प्रार्थितोस्मि गिरीन्द्रजे ।

गौतमः –

त्वद्भक्तिरावितस्याद्य स्नातुमम्भो महेश्वर । प्रदेहि पावनं पुण्यं लोकानामघनुत्तये ॥ ५२ ॥
भगीरथार्थं देवेश [2]पूता गङ्गा त्वया धृता । सागराश्च तदंभोभिः प्लाविताास्ते दिवंगताः ॥ ५३ ॥
मत्पावनार्थं विश्वेश देहि पुण्यां नदीं शिवाम् । लोकानामपि देवेश पापतापविनाशिनीम् ॥
शिवे गौतमवाक्येन तत्स्तुत्या चापि हर्षितः । निसृष्टा मज्जटामूलान्मम पर्वतरूपिणः ॥ ५५ ॥
सा पपात महीपृष्ठे तरङ्गावलिभासुरा । मत्स्यकर्कटनक्राद्यैः प्लावयन्ती तटद्वयम् ॥ ५६ ॥
त्रियम्बकोत्तमाङ्गेन निर्जगामाथ सागरम् । तत्र ब्रह्मादयो देवा गन्धर्वोरगकिन्नराः ॥ ५७ ॥
विद्याधराप्सरोमुख्या नारदाद्या मुनीश्वराः । वैहायसेन मार्गेण समाजग्मुस्तदाम्बिके ॥ ५८ ॥
दृष्ट्वा तदाश्चर्यकरं गोदावर्युद्भवं तदा । त्रियम्बको महालिङ्गजटाजूटतरङ्गिताम् ॥ ५९ ॥
गोदावरीं तदा सर्वे दृष्ट्वा नत्वा महेश्वरम् । स्नात्वा तस्यां गौतमेन सिंहसंस्थे बृहस्पतौ ॥ ६० ॥
समुद्धूल्य तदाङ्गानि त्रिपुण्ड्रावलिभासुराः । त्रियम्बकेश्वरं देवाः संपूज्याथ प्रणम्य च ॥ ६१ ॥
बिल्वपत्रैः समभ्यर्च्य रुद्रसूक्तैस्तदा सुराः । जहुः स्वपापजं तापं वृद्धगङ्गाजलाप्लवात् ॥ ६२ ॥
शिवलिङ्गोत्तमाङ्गोत्थपतनधुङ्क्वैर्जलैः । स्नात्वा स गौतमो विप्रस्तदाऽभून्मुक्तकिल्बिषः ॥ ६३ ॥
शिलारूपापि तत्पत्नी अहल्या शापिता शिवे । गोदावरीतरङ्गोत्थशीकरैर्धूतकिल्बिषा ॥ ६४ ॥
भासुरं स्वं तदा रूपं प्रापाश्चर्यकरं शिवे । पत्न्या समन्वितो देवि गौतमं मां तदाऽस्तुवत् ॥ ६५ ॥

गौतमः –

---

१ इदमर्धं C कोशे नास्ति २ दत्ता गङ्गत C

त्रियंबकं त्वा सुभगं सुगन्धिं पुष्टिवर्धनम् । यजामि सततं देवि मृत्युभीतोऽहमीश्वर ॥ ६६ ॥
महेश्वर महादेव चन्द्रचूड महेश्वर । नमस्ते पार्वतीकान्त प्रपन्नं पाहि मां सदा । ६७ ॥
विश्वाधिक महेशान वृषभध्वज शङ्कर । नमस्ते रुद्र देवेश बाहुभ्यां ते नमो नमः ॥ ६८ ॥
धन्वने ते नमस्तुभ्यं जगतां पतये नमः । पत्तीनां पतये तुभ्यमश्वानां पतये नमः ॥ ६९ ॥
बभ्लुशाय नमस्तुभ्यं नमस्ते कृत्तिवाससे । नम उग्राय भीमाय नमः सोमाय शम्भवे । ७० ॥
नमस्ते सहमानाय आषाढाय नमो नमः । नमः शिवाय शान्ताय नमः शिवतराय च । ७१ ॥
गिरीशाय नमस्तुभ्यं त्र्यंबकाय नमो नमः ॥ ७२ ॥
द्रापिन् हिरण्मय शरीर हिरण्यबाहो त्वामन्धसां पतिरिति प्रवदन्ति वेदाः ।
दारिद्र्यं मम दुष्कृतं च भगवन् सद्यो विनश्याधुना संपूर्णं धनधान्यगोगणशतैस्तूर्णं गृहं मे कुरु ॥

यो मां न नन्दत्यभिमानगर्वान्निन्दत्यनिन्द्यं तव पादसेविनम् ।
योऽस्मानहो द्वेष्टि च यं च द्विष्मः तं रुद्र जम्भे विदधामि शम्भो ॥ ७४ ॥

वाजादिप्रथितं महाफलगणं त्वत्पादुकाराधकं
प्राप्यं देव दयानिधे चमकवाक्यार्थसंसूचितम् ।
भक्तिः शांभवपुङ्गवैस्तव सदा सर्गिभः सपीतिश्च मे
ऽप्यास्तु महेश तेऽद्य कृपया नैवेद्यसंभोजने ॥ ७५ ॥

ईश्वरः—

इत्थं स्तुत्वा गौतमोऽपि मां प्रणम्याम्बिके तदा । प्राह मां देव पूतोऽस्मि धन्योऽस्मीति मुहुर्मुहुः ॥
तल्लिङ्गमौलिसङ्गैकपूतया वृद्धगङ्गया ॥

दर्शनादखिलपापनाशकं स्पर्शनादखिलकामदं शुभम् ।
प्राशनाच्च निजबोधदायकं चन्द्रचूडचरणोदकं भजे ॥ ७७ ॥

इति स्तुत्वा प्रहृष्टात्मा त्र्यम्बके शिखरे मुनिः । तत्रोवास महादेव्या हल्यया च समन्वितः ॥

सूतः—

इत्थं त्र्यंबकभूधरोरुशिखरात् तुङ्गैस्तरङ्गैर्युता गङ्गा वृद्धतमा शिवाय शिरसो भूता जगत्पावनी ।
सा सर्वान् सुरसत्तमानथ मुदा शैवं मुनिं गौतमं पुष्णन्ती त्वघसङ्घभञ्जनकरी गङ्गेव गोदावरी ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे गोदावर्युत्पत्ति-अहल्यापावनकथनं नामैकविंशोऽध्यायः ॥

---

## ॥ द्वात्रिंशोऽध्यायः ॥

ईश्वरः —

ब्रह्मादयस्तदा देवि त्रियम्बकमुमामतम् । मां तुष्टुवुस्तदा भक्त्या नदीं गोदावरीं तथा ॥ १ ॥

ब्रह्माद्याः —

गणाधिपमदनान्तक प्रमथनाथ नः सर्वदा सुरासुरमुनिव्रजप्रणतपादपङ्केरुह ।
प्रपन्नजनरक्षक प्रमथनाथ विश्वाधिक प्रसीद दुरितापह प्रवरनाम देवोत्तम ॥ २ ॥
प्रकृष्टजनिनाशद प्रवरमाय मायाहर उमाधव रमाधव प्रणतपादकञ्ज प्रभो ।
शचीधवमुखामर द्विरदवक्त्र नन्दिस्तुत गरादर निशाकराद्यमर चारुपाणाव नः ॥ ३ ॥

ईश्वरः —

एवं ब्रह्मादयस्तत्र त्र्यम्बकं मां महेश्वरि । ययुः स्वस्थानममलं ब्रह्मलोकं सनातनम् ॥ ४ ॥
वर्णयन्तो विमानेषु गोदावर्यास्तदुद्भवम् । त्रियंबकोरुशिखरात् गोदावर्यास्तदाम्बिके ॥ ५ ॥
तत्र सप्तमुखी भूत्वा कुशावर्ते महेश्वरि तत्रत्यान् पावयन्ती सा शैवान् मम पदाश्रयान् ॥ ६ ॥
तत्रस्था मुनयः सर्वे प्रवरातीरवासिनः । गोदावरीं तदा देवीं युक्तां प्रवरया सह ॥ ७ ॥
तत्र स्थानवरं देवि मम सान्निध्यकृत्तमम् । भीमशङ्करसंज्ञं तल्लिङ्गं मम मनोहरम् ॥ ८ ॥
तत्र पूर्वं महादेवि ब्रह्मणः पञ्चमं शिरः । मया विवदता तस्य सम्यग्वादेन शङ्करि ॥ ९ ॥
तत्पञ्चमं तस्य शिरो हृतं मम नखाग्रतः । तत्र स्तुवन्ति मां विप्रा भीमशङ्करसंज्ञितम् ॥ १० ॥

मुनयः —

स्वन्साप्यवादपरिचिह्नितपञ्चसंस्थं पञ्चाननस्य करकोणनखाग्रकृत्तम् ।
तत्कन्धरेण विलसत्करपल्लवं ते शूलामलेन विलसत् तव घोररूपम् ॥ ११ ॥
त्वं भीमशङ्कर इति श्रुतिषु प्रसिद्धः स्थानं तवैतदमलं मुनयो वदन्ति ।
गोदा सदा वहति या प्रवरासमेता तत्तीरगोऽसि विधिहन् पुरकामशत्रो ॥ १२ ॥

एवं स्तुवन्ति मुनयो भृग्वाद्या मां महेश्वरि । सापि गोदावरी पुण्या तटलिङ्गैर्विभूषिता ॥ १३ ॥
समुद्रं सङ्गता गौरि तरङ्गावलिभासुरम् । गोदावर्यां सकृत् स्नात्वा सदा पर्वणि सत्तमे ॥ १४ ॥
[1] अग्निष्टोमातिरात्राणां फलं प्राप्नोति मानवः । स्नात्वा योऽब्धौ महादेवि गोदावर्याश्च सङ्गमे ॥
सर्वमेधफलं प्राप्य ब्रह्मलोके निवसेच्चिरम् । गोदावर्यां शिवे स्नात्वा सिंहसंस्थे बृहस्पतौ ॥ १६ ॥

---

१ अयं श्लोकः C कोशे नास्ति ।

सप्तजन्मकृतैः पापैस्तत्क्षणादेव मुच्यते । भूग्रामेनत्नासिकारूयं क्षेत्रमासीन्मनोरमे ॥ १७ ॥

तस्या[1]नासात्र्यंबकारूयं वर्णयन्ति पुराविदः ; अविमुक्तं च भूस्थानं हालास्यं द्वादशान्तकम् ॥

श्रीशैलोज्जयिनी देवि नेत्रे मम मनोरमे । ओङ्कारः कण्ठममलं श्रवणे कुण्डलीश्वरम् ॥ १९ ॥

केदारं चैव कल्याणि अन्यान्यङ्गानि सत्तमे । भूमण्डलगतानीह शिवक्षेत्राणि शङ्करि ॥ २० ॥

द्विसप्ततिसहस्राणि नाडीशतं ममाङ्गने । श्रीमच्चिदंबरं देवि हृदयं यन्मम सच तत् ॥ २१ ॥

तत्राहं सर्वदा देवि निवसामि स्वरूपतः । त्वया च गणपैः सार्धं स्कन्दविघ्नेश्वरेण च । २२ ॥

चिदम्बरमिति प्रोक्तं वेदवेदान्तसंस्तुतम् । मां सर्वे तत्र नृत्यन्तं वर्णयन्ति मुनीश्वराः ॥ २३ ॥

देवी —

तत्र त्वां देवदेवेशं नृत्यन्तं ते मुनीश्वराः । कथं स्तुवन्ति हे शम्भो श्रोतुमिच्छामि तत्स्तुतिम् ॥

सूतः —

महादेवो गिरिजया तदा संप्रार्थितो द्विजाः । स्वनृत्तचिंतं तद्देव्यै कथयामास विस्तरात् ॥

ईश्वरः —

व्याघ्रपादादयो देवि शेषाद्याः प्रमथाधिपाः । जैमिनिप्रमुखाः सर्वे मन्नृत्यं वर्णयन्ति च ।

तत्तेऽहं वर्णयिष्यामि सावधानमनाः शृणु ॥ २६ ॥

व्याघ्रपादजैमिनिशेषादयः —

विनिहितविधिजातमुण्डमालाकलितोरःस्थल शूलमूलबाहो ।
मणिगणखचितांघ्रिनूपुरोद्यत्प्रभवविदीपितदिक्तट प्रसीद ॥ २७ ॥

डमरुकविनदोत्थितप्रकर्षप्रतिशब्दैर्बधिरीकृता(खिला)मरेन्द्र ।
करचालनखेलनोर्ध्वपादप्रतिहतभूतलनम्रमस्तनाग ॥ २८ ॥

पतधाराजालस्फुटितगगनाभोगविलसद्विमानस्थैर्देवैः कलितसुमनोवर्षनिकरैः ।
अदभ्रादभ्राभ्रस्थलकृतनिवासैर्मुनिगणैर्भवज्ज्ञातं दृष्टं नटनमखिलैः सायमुमया ॥ २९ ॥

वारंवारमघापहारिचरणं लीलाकृताण्डस्फुट-
त्त्रुट्यत्तारपतङ्गदीप्तिविशिखैर्विध्वस्तध्वान्तं स्फुटम् ।
पातालान्तरगाग्निकेशनखरैर्दंष्ट्राऽसिजिह्वोल्लस-
द्वक्त्रान्तोत्थितलोचनोत्स्युगलं नत्कंधरसान्तकृत् ॥ ३० ॥

[1] नासां त्र्यंबकाख्यां C

श्रीमच्चारुगङ्गाकुङ्कुमसङ्कुलमिलद्गङ्गातरङ्गोल्लसल्लीलालोलजटाघटाविघटनत्रुट्यन्मरोडुच्छट
ढक्का डंखर्धांशुमध्वनिकृतागह्वारदिक्चक्रकं तालोद्भदमृदङ्गकाहलकरापारप्रमोदैः सुराः ।
त्वां सेवन्ति शिवं मुकुन्दविधयः सेन्द्राः प्रदोषे [3]मुदा । ३१ ॥

वीणावाणिनखप्रघट्टनभवैः शब्दैः सुरागैः क्वण-
द्वाणी तालकरा महेश परमानन्दोल्लसत्ताण्डवा ।
शर्वाण्या सहित प्रसीद सततं सङ्गीतपारायणैः
संप्रीणाति शिवं प्रदोषसमये मां शङ्करं चाम्बिके ॥ ३२ ॥

जटाहीन्दुगङ्गातरङ्गोत्तमाङ्गं लसत्पाणिपादोज्ज्वलच्च स्वनागम् ।
कृपासान्द्रपाङ्गैर्निरीक्षन्तमीशं नटद्वामगात्रार्धनारीमुखाङ्गम् (?) । ३३ ॥

नन्दिभृङ्गिकृतमर्दलवाद्यैर्झल्लझल्लरकरैर्गणवृन्दैः ।
तण्डुचण्डकरतालल्योत्थैर्नर्तनैर्मणिझणत्कृतशब्दैः ॥ ३४ ॥

शिञ्जिनैर्मधुरनूपुरघोषैर्मण्डितं च नटनं श्रुतिघोषम् ।
श्रेष्ठः सुराणां पतिरङ्घ्रिपानां रौद्रं तवार्द्रा प्रथितं च ऋक्षम् ॥ ३५

तस्मिन् प्रभाते तव पादयुग्मं दृष्ट्वाऽभिनन्दत्यथ भक्तपद्मम् । ३६ ।

अंबरचर डम्बरधर घोषणशिभूषण फणिकङ्कण गरळोषण स्मरमारण भगवन् ।
अरुणारुण चरणाश्रित जनरक्षण भगहरण पुरहन् ।
करुणाकर भवतारण वरुणालय कृपारण मुनिकारण परिपालय शिव माम् ॥ ३७ ॥

ईश्वरः—

तत्रैवं देवदेवेशि मां स्तुवन्ति मुनीश्वराः । तत्क्षेत्रमहिमानं ते कथयाम्यग्रतः शिवे ॥ ३८ ॥

गोदावर्यां तदा देवि तपस्तप्तं ममाग्रतः । भस्माभ्यक्ता सदा देवि रुद्राक्षावलिभासुरा ॥ ३९ ॥

पञ्चाक्षरपरा नित्यं मां ध्यायन्ती हृदम्बुजे । संवत्सरगणांश्चैके तपः परमदुष्करम् ॥ ४० ॥

प्रसन्नोऽहं मुदा तस्यै गोदावर्यै तदाम्बिके त्रियम्बकं नीलकण्ठं व्याघ्रचर्मोत्तरीयकम् । ४१ ॥

नन्दिकेशादिगणैः समन्तात् परिवारितम् । वृषारूढं तदा मां सा प्रणताथास्तुवत् तदा । ४२ ॥

---

३ पञ्चपदोऽयं श्लोकः

गोदावरी–

अनलानिलभास्करेन्दुबुद्धोद्धतदर्पघ्नमुग्रपद्मजान् ।
मथनोत्पतितान् गराबधूतान् समरक्षत् तमुपास्महे महेशम् । ४३ ॥
पद्मोत्पलानिलसखे कनचारुनेत्रं कुबेरमित्रं हृतदक्षसत्रम् ।
गोत्रात्मजाश्रितकपालपात्रं भजामि शम्भुं सुकुमारपुत्रम् ॥ ४४ ॥
मा चुक्रुधस्त्वं भगवन् महेश सुरेन्द्र चाह्वानमहं करोमि ।
इमं पशुं ते समुपाकरोमि पतिः पशूनामसि शङ्करोऽसि ॥ ४५ ॥
नाथस्तथाऽऽद्योसि सुरासुराणां वंद्योसि संसाररुजां निहन्ता ।
अच्छेद्यभेद्योऽसि निरिन्द्रियोऽसि गधंस्तथा पद्मगणैः स्तुतोसि ॥ ४६ ॥

ईश्वरः–

एवं स्तुत्वा तदा देवि वरं गोदावरी नदी। अर्चयन्ती तदा पादौ मदीयौ प्रणनाम सा ॥४७॥

गोदावरी–

त्वज्जटामूलतो देव गौतमार्थं विनिर्गता। देयो वरो मे भगवन् त्वत्कृपागौरवाच्छिव ॥ ४८ ॥
गङ्गा त्वदङ्गसङ्गेन त्वन्मौलिकृतकेतना। तस्यां तव रतिर्देव अविमुक्ते स्थितं त्वया ॥ ४९ ॥
विश्वेश्वर महालिङ्गरूपेण त्वं सदा स्थितः। नर्मदायामपि विभो लिङ्गरूपोऽसि शङ्कर ॥ ५० ॥
गङ्गा मत्तोऽधिका वापि पावनी वा महेश्वर। वृद्धगङ्गाहमेवाद्य भवेयं त्वत्प्रसादतः ॥ ५१ ॥
मदंबुकणसंस्पर्शात् साऽपि पूततमा भवेत्। त्वल्लिङ्गसेचने योग्या भवेयं वै महेश्वर ॥ ५२ ॥
इति देयो वरो मेऽद्य त्रियम्बक दयानिधे। गोदावर्या तदा देवि मत्तः संप्रार्थितो वरः ॥५३॥
तस्यै मयोक्तं देवेशि तच्छृणुष्व त्वमादरात् ॥ ५४ ॥

ईश्वरः–

त्वदम्बुलवसेकेन गङ्गा पूततमा भवेत्। सर्वदा मम पूज्या त्वं त्वत्तीरेऽहं सदा स्थितः ॥ ५५ ॥
वृद्धगङ्गासि नाम्ना त्वं भगिनी ते कनीयसी। गङ्गा पापौघशमनी त्वं च कैवल्यदा सदा ॥
त्वत्पाथोलवसेकेन गङ्गा हृष्टतरा भवेत्। गङ्गागोदावरीमिश्रं जलं मल्लिङ्गमस्तके ॥ ५७ ॥
यो ददाति नरो भक्त्या तस्मै मुक्तिं ददाम्यहम्। त्रियम्बकजटाजूटतटिनी पापघातिनी ॥
त्वयि स्नात्वा पूततमो भविष्यति न संशयः। त्वज्जलैर्यः पितॄन् देवि सन्तर्पयति पर्वणि ॥ ५९ ॥
तस्य षोडश वर्षाणि पितरस्तृप्तिमासते। किं पुनः श्राद्धकरणात् त्वत्तीरे पावने शुभे ॥ ६० ॥

गोदावर्यां सकृत् स्नात्वा दृष्ट्वा श्रीत्र्यम्बकेश्वरम् । सर्वपापैर्विमुच्येत नात्र कार्या विचारणा ॥
ब्रह्मविष्ण्वादयो देवा मुनयश्चापि तापसाः । सिंहसंस्थे देवगुरौ तस्यां स्नान्ति च भक्तितः ॥
ब्रह्महत्यासुरापानस्वर्णस्तेयादिपातकैः । विमुच्येत नरः सद्यो गोदावर्यवगाहनात् ६३ ॥
श्रीमत् त्रियम्बकं दृष्ट्वा शतकृच्छ्रफलं लभेत् । अशीतिकृच्छ्रं स्नानं तद्गोदावर्यां वरानने । ६४॥
सिंहसंस्थे देवगुरौ महादानफलादिकम् । संप्राप्नोति नरो गौरि गोदावर्यवगाहनात् । ६५ ॥
रुद्रसूक्तैर्महादेवमभिषिच्य त्रियम्बकम् । शतगोदानजं पुण्यं लभते नात्र संशयः ॥ ६६ ॥
गोदावरीजलं शुद्धं समं क्षीराभिषेचनैः । यस्तु बिल्वदलैः पूज्यं त्र्यम्बकेशं हि पूजयेत् । ६७॥
तेन सर्वे कृता यज्ञास्तेन सर्वमनुष्ठितम् । नैवेद्यं यः शिवे दद्यात् तदनन्तफलं स्मृतम् । ६८ ॥
इत्थं मत्तो वरं लब्ध्वा गङ्गा सा सागरङ्गमा । यः शृणोति सकृद्भक्त्या त्र्यम्बकाख्यानमुत्तमम् ॥
तस्य पापानि नश्यन्ति बहुजन्मार्जितान्युमे ।

सूतः —

रे चित्तभ्रमराशु शङ्कर महेशानेश पादाम्बुजे
तद्भक्त्याख्यमरन्दसारमपकृत् पेपीयतां केवलम् ।
विश्रान्तः क्षणकं षडिन्द्रियपदैर्वैर्योरुशाखां दध-
न्मा गच्छ त्वमगन्धगन्धफलकं कामैकदुष्केतकम् । ७० ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे त्र्यम्बकेशगोदावरीमहिमवर्णनं नाम द्वाविंशोऽध्यायः ॥

---

## ॥ त्रयोविंशोऽध्यायः ॥

ईश्वरः —

ममास्ति देवि सुभगे क्षेत्रं गोकर्णसंज्ञकम् । गोकर्णेशं समाराध्य विमुक्ता बहवो जनाः ॥ १ ॥
पश्चिमे सागरोपान्ते तत् क्षेत्रं मम कामदम् । भोगमोक्षप्रदं देवि सर्वपापविनाशकम् ॥ २ ॥
तत्रैव ब्रह्मविष्ण्वाद्या मुनयः काश्यपादयः । पुलस्त्यभार्गवाद्याश्च विश्वामित्रपराशराः ॥ ३ ॥
पौलस्त्याद्याश्च तत्रैव रावणाद्या महौजसः । गन्धर्वाः किन्नरा यक्षा नागा विद्याधरा गणाः ॥
नन्दिभृङ्गिप्रभृतयो नारदाद्या मुनीश्वराः । दैत्यनाथाश्च तत्रैव तप्त्वाऽमितबला भवन् ॥ ५ ॥
अन्ये सुरासुराः सर्वे मुनयस्तापसास्तथा । गोकर्णेशं समाराध्य लेभिरे तपसः फलम् ॥ ६ ॥

गोकर्णेशमहो दृष्ट्वा महाबलमनुत्तमम् । तत्रैव भार्गवो रामो रेणुकातनयः शिवे ॥ ७ ॥
निःक्षत्रियकृतं पापं त्यक्त्वा मां शरणं गतः । वामदेवोऽपि सार्वात्म्यं यत्र प्राप महाबले ॥ ८ ॥
गोकर्णेशं समाराध्य मुनयो भक्तितत्पराः ज्ञानं वेदान्तवाक्योत्थं लेभिरे मुक्तिदायकम् ॥ ९ ॥
गोकर्णसंज्ञकं लिङ्गं दर्शनान्मुक्तिदायकम् । संसारपाशबद्धानां मोचकं भवमेश्वरम् ॥ १० ॥
शक्रो दुर्वाससा शप्तो निःश्रीकश्चाभवत् पुरा । गोकर्णेशं समाराध्य महतीं श्रियमाप्तवान् ॥ ११ ॥
गोकर्णे सागरैः पूजा कृता भक्तिपुरःसरम् । अत्र सन्ति महाशैवाः सदा भस्माङ्गपाण्डराः ॥
रुद्राक्षमालाभरणा रुद्रावर्तनतत्पराः । पञ्चाक्षरपरा नित्यं मम लिङ्गार्चनादराः ॥ १३ ॥
मद्भक्तार्चनपरा मन्त्रावजपतत्पराः । वेदवेदान्ततत्त्वज्ञा यतयश्च तथाम्बिके ॥ १४ ॥
गृहस्था यतयश्चैव वनस्थाश्च तथा परे । वर्णिनोऽपि तथा गौरि पर्णाम्बुफलभोजनाः ॥ १५ ॥
गोकर्णनिलयं शम्भुं अपर्णापतिमीश्वरम् । बिल्वपत्रैः समभ्यर्च्य नित्यं नैवेद्यभोजिनः ॥ १६ ॥
अगस्त्योऽपि सदा भक्त्या नित्यं मां स्तौति शङ्करि । रुद्रसूक्तैर्महादेवि बिल्वपत्रैः समर्च्य च ॥
वेदाः साङ्गोपनिषदो मूर्तिमन्तः सदाम्बिके । सेवावसरमालोक्य महाबलमुपासते ॥ १८ ॥
ब्रह्मा चतुर्भिर्वदनैश्चातुर्होत्रैः स्तुवन् तदा । षण्मुखोऽपि सदा भक्त्या मामुपास्तेऽम्बिकासुतः ॥
गणेशोऽपि सदा देवि बिल्वैरभ्यर्चयत् सदा । शेषः प्रत्यहमागत्य पातालविवरादुमे ॥ २० ॥
स्वफणामणिमाणिक्यैर्बिल्वैः संपूज्य मां सदा । सहस्रवदनैरीशं नामभिश्च सहस्रकैः । २१ ॥
कोमलैर्बिल्वपत्रैश्च कमलैः पूजयत्युमे । दिग्गजाश्च सदा गौरि स्वशुण्डाबलयोद्धृतैः ॥ २२ ॥
पानीयैः बिल्वपत्रैश्च साञ्जनालैस्तथाम्बिके । पूजयन्ति महालिङ्गं गोकर्णेशं महाबलम् ॥ २३ ॥
विष्णुश्चात्रातपत् देवि दानवैश्च पराजितः । पुनराप्यायितश्चासीत् मत्कटाक्षेण शोभने ॥ २४ ॥
ब्रह्मणापि तपस्तप्तं सृष्टिविज्ञानहेतवे । भूम्यन्तरिक्षगा रुद्रा ये दिव्यप्सु प्रतिष्ठिताः ॥ २५ ॥
निषङ्गिणः कवचिनः खड्गखेटधनुर्धराः । ईशानप्रमुखाः सर्वे महाबलमुपासते ॥ २६ ॥
अश्विनौ मरुतश्चापि वस्वादित्या दिगीश्वराः । तप्यन्ति मत्प्रसादार्थं धनदोऽपि सदा मुदा ॥
मत्प्रसादात् धनेशत्वं सखित्वं तस्य चाभवत् । अत्र चन्द्रोऽपि देवेशि [1] तपस्तप्त्वा सुदुष्करम् ॥
गुरुदाररतात् पापान्मुक्तोऽभून्मत्प्रसादतः । चण्डांशुरपि देवेशि गोकर्णेशं समर्चयन् ॥ २९ ॥
छायात्यागजपापेन मुक्तोऽभूदत्र सुन्दरि । गोकर्णेशं समाराध्य महतीं श्रियमाप्तवान् ॥ ३० ॥

---

१ गोकर्णेशं समर्चयन् C

दैत्यराजस्तथा बाणो विरोचनसुतो बली । प्रचित्तिर्विघसश्चैव मुरो जम्भस्तथान्धकः ॥ ३१ ॥
वृत्रश्च नमुचिश्चैव असुरौ मधुकैटभौ । सुन्दोपसुन्दौ देवेशि शूरस्तारक एव च ॥ ३२ ॥
हिरण्याक्षश्च कशिपुः प्रह्लादो मन्थरस्तथा । बलो नामासुरेन्द्रश्च महतीं प्राप्नुवन् श्रियम् ॥ ३३ ॥
[2]शक्रोऽपि वृत्रवध्यातेऽप्यहल्यासङ्गपातकात् । विमुक्तः सर्वदा विप्राः गोकर्णेशसमर्चनात् ॥
एते सर्वे तपस्तप्त्वा गोकर्णेशं समर्च्य च । सर्वे प्राप्तबलाः शूराः शत्रुविलासकाः सदा ॥ ३५ ॥
गोकर्णेशं समागम्य पूजया तपसाऽपि च । गन्धर्वाद्या महाभागे चित्रवर्मा हहाहुहूः ॥ ३६ ॥
तुम्बुरुश्चापि कण्डुश्च नारदो देवगायनः । गान्धर्ववेदमखिलं प्राप्नुवन् मत्प्रसादतः ॥ ३७ ॥
नागनाथा महाभागे गोकर्णेशार्चने रताः । धृतराष्ट्रः शङ्खपालः कम्बलाश्वतरौ तथा ॥ ३८ ॥
अनन्तो वासुकिश्चैव तक्षकः कुण्डरस्तथा । स्वफणाभिर्महालिङ्गं छाद्य संपूज्य बिल्वजैः ॥ ३९ ॥
कोमलैः कमलैरीशं दलैः संपूजयन्ति हि । कामधेनुगणाश्चापि सुरभिर्नन्दिनी तथा ॥ ४० ॥
स्वोधःसंभूतपयसा सफेनेनाभ्यषेचयन् । बिल्वैर्महाबलेशानं संपूज्य मुदमाप्नुवन् ॥ ४१ ॥
धर्मोऽपि वृषरूपेण तपस्तप्त्वात्र मां शिवे । भक्तो लब्धवरो देवि मां वहत्येव पृष्ठतः ॥ ४२ ॥
गोकर्णेशप्रसादेन चन्द्रसूर्यान्वयोद्भवाः । राजानश्च सहस्राणि नित्यं मां पर्युपासते ॥ ४३ ॥
मनुर्विकुक्षिः कुक्षिश्च शशबिन्दुर्भगीरथः । रघुश्चैवाथ मान्धाता युवनाश्वो गयस्तथा ॥ ४४ ॥
रन्तिदेवः पृथुर्वैन्यो मुचुकुन्दो दृढाश्वकः । दिलीपः सगरो त्रिशो नाभागश्च करन्धमः ॥ ४५ ॥
आयुः पुरुश्च भरतो ययातिर्नहुषः कुरुः । खट्वाङ्गोऽथ नृगोऽरिष्टस्तथा संवरणो नृपः ॥ ४६ ॥
गोकर्णेशं समाराध्य पृथिव्याः पतयोऽभवन् । देवि किं बहुनोक्तेन गोकर्णेशप्रसादतः ॥ ४७ ॥
समभ्यर्च्य महालिङ्गं स्वं स्वं स्थानं सुरासुराः । लेभिरे परमेशानि महाबलसमर्चनात् ॥ ४८ ॥
भुक्तिमुक्तिप्रदं क्षेत्रं सर्वसंपत्प्रदायकम् । अत्र जप्तोऽथ यः कश्चिन्मन्त्रसिद्धिं गमिष्यति ॥ ४९ ॥
पञ्चाग्निमध्यनिरता वायुभक्षास्तथाऽपरे । जटोरुशिरसः केचिद् दन्तोलूखलिनः परे ॥ ५० ॥
भस्माभ्यक्ताः सदा केचिद् रुद्राध्यायजपादराः । पञ्चाक्षरपराः केचिद् केचिन्मन्नामजापकाः ॥
शिव शङ्कर देवेश गोकर्णेश महेश्वर । प्रसीद परमेशेति तत्र शैवा वदन्ति माम् ॥ ५२ ॥
केचिल्लिङ्गार्चनपराः बिल्वपत्रादिभिः शिवे । साग्नयोऽनग्नयः केचिद् यतयो भक्तिभाविताः ॥
वर्णिनो वनसंस्थाश्च ब्राह्मणा मामुपासते । ब्रह्मण्यपतिरेवाहं महाब्राह्मण ईश्वरः ॥ ५४ ॥

---

२ अयं श्लोकः C कोशे नास्ति ।

वसन्ति शैवा गोकर्णे मन्नैवेद्यैकभोजनाः। अत्र शैवं समभ्यर्च्य मम लोके वसेन्नरः ॥ ५५ ॥
अत्र सर्वेषु कालेषु सागरस्नानकृन्नरः। एकं शैवं भोजयित्वा मत्प्रीत्यर्थमुमे शुभे ॥ ५६ ॥
मत्स्यभोज्यैः सदन्नैश्च स मां भोजयिताम्बिके। गोकर्णेशं पूजयित्वा बिल्वपत्रादिसाधनैः ॥
कोटिलिङ्गार्चनफलं प्राप्नोति स वरानने। पुरा वसुमना नाम राजासीदतिधार्मिकः ॥ ५८ ॥
विदर्भविषये देवि स कैङ्कर्यपरो मम। नानाप्रकारशोभाढ्यैर्भूधराकारगोपुरैः ॥ ५९ ॥
प्राकाराद्युत्तुङ्गमधूपध्मानपताककैः। नवरत्नचितानेकमण्डपैः शोभितं नृपः ॥ ६० ॥
वाहनैश्चैव देवेशि रथैश्च शतचक्रकैः। महागारवरो राजा मुकचणाराधिनायकः। ६१ ॥
छत्रचामरजालैश्च स्वर्णशय्यादिभाजनैः। क्षौमाम्बरैः स्वर्णकल्पैः भूषणैर्मणिकल्पितैः। ६२ ॥
कारयामास नृपतिर्गोलकं रत्ननिर्मितम्। धूपैर्दीपैश्च नैवेद्यैः स्नापनीयैरहर्निशम् ॥ ६३ ॥
सलक्षगोघृतापारदीपैर्दीपयदम्बिके। ताम्बूलपर्वतांश्चापि दत्तवान् मत्कृपाप्तये ॥ ६४ ॥
कर्पूरखण्डैः शतशो दीपयामास मां शिवे। छत्रचामरकोटीभिर्व्यजनादर्शकैरपि ॥ ६५ ॥
नानावाद्यरवैर्देवि पूरयामास मद्गृहम्। नाट्यकृन्नारदा तेन कल्पिताः सुमनोहराः ॥ ६६ ॥
सहस्रं कम्बुकण्ठ्यस्ताः पीनश्रोणिपयोधराः। शैवान् संभोजयामास शिवनैवेद्यराशिभिः। ६७ ॥
प्रफुल्लपुष्पारामं च मत्पूजार्थं प्रकल्पयत्। सोमवारप्रदोषेषु चतुर्दश्यष्टमीषु च ॥ ६८ ॥
शिवरात्रिषु देवेशि पर्वस्वपि विशेषतः। पूजयत्येव भूपालो नित्याद्दशगुणं शिवे ॥ ६९ ॥
तत्प्रदोषे कृतां पूजां शृणु त्वमगजे शुभाम् श्रुत्वाऽपि लभते गौरि मम लोकं न संशयः ॥
प्रदोषे पूजनं कुर्वन् नित्यमास्ते प्रहृष्टधीः। गोकर्णेशं महालिङ्गं परमष्टोत्तरकिरीषः ॥ ७१ ॥

प्रदोषपूजारतचित्तवृत्तिः नृपस्तदा मत्पदपूजनोत्सवैः।
समभ्यषिञ्चत् गिरिजे महेशं गोकर्णलिङ्गस्त्वपारभाग्यैः ॥ ७२ ॥

क्षीराज्यादिघटैः सुतैलजघटैः सक्षौद्रसच्छर्कराभारैः खण्डदधिप्रसर्पितसुपर्युत्थानवपण्डादिभिः।
रंभाम्रादिफलैस्तथेक्षुजरसैर्जम्बीरनीरैः शिवैः सनारिकेलोद्भवद्रवसुक्षौद्रमहोल्कोशैः। ७३ ॥

आसिच्य गन्धोदकरत्नपुष्पसौवर्णनीरैश्च सुगन्धपूरैः।
पाटीरसारैर्मृगनाभिपूरैः कर्पूरसारैश्च सुशोधितैर्जलैः ॥ ७४ ॥

आलिप्य गन्धेन तदोरुलिङ्गं संवेष्टय शुभ्रोत्तमधौतवस्त्रैः।
दत्त्वोपवीतान्युपवीतिने मे अखण्डशाल्युद्भवतण्डुलाक्षतैः ॥ ७५ ॥

[३]अनर्घ्यैरत्नोत्तम भूषणैर्मां अभूषयद्देवि तदा नृपाग्रणीः ।
बिल्वैश्च पत्रैः करवीरमल्लिकाजातीफलैः गन्धफलीसरैश्च ॥ ७६ ॥

उत्फुल्लनीलोत्पलपुण्डरीकैः कल्हारजालैररविन्दपुष्पैः ।
समर्चयन्नामसहस्रतो नृपस्तदा मुदा मां शशिशेखरं शिवम् ॥ ७७ ॥

चिरन्तनकपरिकल्पितागरुसारैर्धूपैस्तदा दीपतो दीपैर्गोघृतपूरितैरतिसितैर्वर्तीभिरत्युज्ज्वलैः ।
नैवेद्यैर्दधिखण्डसारसुभगैः सत्सोपदंशान्वितैः सूपापूपादिराशिप्रभवपरिमलामोदिस्वाद्वन्नजालैः ॥

शुभ्रद्रोणसुमप्रमानमहाराशीभिरीशं शिवे
सूपापूपमरन्दसुन्दरमहाहैयङ्गवीनोत्थितैः ।
आज्यैः प्राज्यैः सुतप्तप्रभवपरिमलैः कालकाले निवेद्य
हृष्टोऽभूत् पार्थिवेन्द्रो जनितबहुविततानन्दपुण्यैकमूर्तिः ॥ ७९ ॥

सन्नागवल्लीदलभारकल्पितैः निष्टप्तहेमादिविशालपात्रैः ।
ताम्बूलैः कतकैर्लवङ्गमुख्यैः पूगीफलैश्चूर्णकैः ॥ ८० ॥

उडुगणपतिमौलिं घेनुकर्णेशलिङ्गं तुरगगगकूटैः वाद्यजातोत्थशब्दैः ।
गणपतिकरशुण्डालग्नकण्ठोत्थनादैः दशशतवरदीपैर्दीपयामास भूपः ॥ ८१ ॥

सुधासारगण्डोत्थितापारदीपैरखण्डैश्च विदैस्तदाऽऽखण्डलाद्याः ।
सुधाधामखण्डोज्ज्वलन्मौलिलिङ्गं अखण्डैकतोषाय नीराजयन्ति ॥ ८२ ॥

हर हर शिव शङ्कर प्रसीद दुरितोत्थिततापहरास्तदोषे ।
इति सुरवरकिन्नरोक्तिशब्दैः करबद्धाञ्जलिभिस्तदा प्रदोषे ॥ ८३ ॥

छत्रैश्चामरकोटिभिश्च गिरिजे मां वीजयन्त्यादरा-
न्मायूरैर्व्यजनैस्तथैव विमलादर्शैश्च नाट्यैरपि ।
देवि प्रस्तवनप्रदक्षिणनमस्कारैः शिवं तोषय-
न्गीतैर्गानमृदङ्गकाहलरवैर्नाट्याङ्गनाकल्पितैः ॥ ८४ ॥

नाट्यैस्तालमृदङ्गनूपुरझणत्काराखैः शङ्करं सन्तोष्य प्रमथेश्वरं स मुमुदे धन्यः स भूपाग्रणीः ॥

---

३ इत आरभ्य श्लोकद्वयं C कोशे नोपलभ्यते ।

राजा —

श्रीमद्गोकर्ण शंभो भवशतजनितापारतापैकभङ्गं
त्वल्लिङ्गं दृष्टिसङ्गं यदि भवति महाभाग्यपूर्णे जनेऽस्मिन् ।
काले वीतभये प्रदोषसमये सर्वैः सुरैः सेविते
त्वत्पादांबुरुहं प्रकृष्टभवजापारव्यथां संहरेत् ॥ ८६ ॥

शिवः —

इत्थं मामम्बिकेशं सुरवरनिकरैः शाङ्करैर्देवि पुण्यैः
काले तस्मिन् प्रदोषे गिरिवरतनये सर्वसौख्यैऽस्तदोषे ।
भूपस्तापैर्विहीनो मुदितवसुमनाः सन्मनास्तत्पदाब्जं
संपूज्यालोक्य पूतो मम गणवरभाक् भाग्यवर्यैः कृतो मे ॥ ८७ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे गोकर्णक्षेत्रमाहात्म्ये वसुमनोनृपानुष्ठितप्रदोषपूजाकैङ्कर्यवर्णनं नाम त्रयोविंशोऽध्यायः ॥

---

## ॥ चतुर्विंशोऽध्यायः ॥

---

ईश्वरः —

श्रीगौरि भार्गवो रामो मामाराध्याविसद्यदा । तदा तदाख्यानवरं तेऽद्य वक्ष्ये शृणुष्व तत् ॥

देवी —

कथमाराधयद्रामस्त्वत्पादाम्बुजमीश्वर । कृपया देवदेवेश तद्वदस्वानुपूर्वशः ॥ २ ॥

ईश्वरः —

कृतवीर्यो महादेवि माहिष्मत्यामभून्नृपः । यज्वा स विभवोपेतो धर्मात्मा क्षत्रियर्षभः ॥ ३ ॥

कुमुद्वती तस्य भार्या तस्यां तस्य सुतोऽभवत् । कार्तवीर्यार्जुनो नाम्ना स शास्ति पृथिवीमिमाम्॥

दत्तात्रेयो गुरुस्तस्य सदा मद्भक्तिभावितः । स पर्यटन्नर्मदायास्तीरे सुन्दरकानने ॥ ५ ॥

ददर्शाश्रममेकान्ते क्षुत्तृड्भ्यां समन्वितः । जमदग्निं मुनिवरं शाम्भवं प्रणनाम च ॥ ६ ॥

पृष्टस्तेनापि कुशलमातिथ्येन न्यमन्त्रयत् । कामधेनुपयोभूतैर्विभवैस्तं समर्चयत् ॥ ७ ॥

स कामधेनुं चकमे नृपो बाहुबलोद्धतः । तवैच्छज्जमदग्निश्च गोगणानां शतैरपि ॥ ८ ॥

विमृश्य शरशतैर्विप्रं कामधेनुं नृपोऽग्रहीत् । विद्धं सा स्वपतिं दृष्ट्वा रामं विपिनगं तदा ॥ ९ ॥

रुरोद रेणुका दीना दृष्ट्वा पुत्रं समागतम् । उवाच रुदती माता राम रामेति सुस्वरम् ॥ १० ॥
तदा तत् करुणं श्रुत्वा स्वमातुः परिदेवनम् । स क्रुद्धो वचनं रामः श्रुत्वोदन्तं तपस्विभिः ॥
उवाच मातरं दीनां भर्तारमनुगच्छतीम् ॥

रामः —

मैवं रुदो विशालाक्षि भर्तुर्गच्छ सलोकताम् । अस्य शांभववर्यस्य हनने कः सुखी भवेत् ॥
अपराध्यपि विप्रो वै न हन्तव्य इति श्रुतिः । शांभवश्चेत दशगुणं तस्य पापं भविष्यति १३ ॥
ब्रह्मघ्ने निष्कृतिर्मातः कल्पितास्ति क्वचित् सुरैः । अबुद्धिपूर्वं बुद्धौ तु मरणान्तमिति श्रुतिः ॥
शांभवस्याद्य हनने विद्धि बुद्धिकृतांहसाम् । नैव निष्कृतिको भूयाद्रुद्रकोपोन्मुखो हि सः ॥
रुद्रकोपाग्निदग्धस्य को वा त्राणकरो भवेत् । अमरैश्च वृतः पूर्वं स्मरो देवादिकार्यकृत् । १६ ॥
विष्णोः लक्ष्म्याश्च यः पुत्रः पुष्पैरिषुगणैः शिवम् । अन्यसाधारणं ज्ञात्वा प्रविध्यत महेश्वरम् ॥
क्षणेन भस्मतां नीतः किं पुनर्द्रोहकृज्जनः । शांभवो हि शिवस्यैव चरः मूर्तिरिति श्रुतिः । १८ ॥
ब्रह्मा ब्रह्मामवधस्य सदस्यो विष्णुरेव हि । रुद्रकोपाग्निदग्धस्य को दक्षस्य परायणम् । १९ ॥
पश्यतां सर्वदेवानां वीरभद्रेण नाशितः । दक्षमन्युस्तदा मातः स ममास्ते परायणम् ॥ २० ॥
शांभवस्य च बालस्य मार्कण्डेयस्य पीडनात् । कालमृत्योरपि शिवान्मातर्मृ युरुपागतः ॥ २१ ॥
शिवे शांभववर्ये च नान्तरं पश्य मेऽधुना । क्षत्रबन्धुरयं पापी न चिराद्वर्तयिष्यति ॥ २२ ॥
शाम्भवद्रोहकृन्मर्त्यः सुरो वाप्यसुरोऽपि वा । न ब्रह्मा न हरिर्वापि किमन्ये पामरा नराः ॥
कृत्वाऽपि सर्वपापानि यो रुद्रं मनसा स्मरेत् । सद्यस्तत्कृतपापानि भस्मीभूतानि शोभने ॥ २४ ॥
तस्यैव चापराधेन को वा तन्मोचको भवेत् । तमाराध्यतमं देवं समाराध्यैव भक्तितः ॥ २५ ॥
कार्तवीर्यकुलं सर्वं निहन्ता विज्वरा भव । अहं सत्यप्रतिज्ञश्च त्वत्तो जातोऽस्मि माशुचः ॥ २६ ॥
इति सा सान्त्विता माता रामेणाक्लिष्टकर्मणा । भर्तारमनुगच्छत् सा ध्यायन्ती साम्बमीश्वरम् ॥
नैधनेन विधानेन रामः संस्कृत्य तौ तदा । श्रीमद्गोकर्णमगमत् कोपदुःखसमन्वितः ॥ २८ ॥
स सागरे तदा स्नात्वा भस्मरुद्राक्षभूषणः । रुद्रमावर्तयन् मां स वत्सरत्रयमादरात् ॥ २९ ॥
बिल्वपत्रैः समभ्यर्च्य पञ्चाक्षरपरायणः । विनिःश्वासपरो नित्यं कुम्भरुद्धोऽद्रिराडिव ॥ ३० ॥
मातापित्रोस्तदा दुःखं संस्मृत्य मनसा शिवे । कृतं तत् कार्तवीर्येण पापिना क्षत्रबन्धुना ॥
क्षत्रमुत्सादयन् रामः तताप परमं तपः । पञ्चाग्निमध्यनिरतः फलपर्णाम्बुभोजनः ॥ ३२ ॥

भस्मनिष्ठो भस्मशायी रुद्राध्यायपरायणः । गोकर्णेशं लिङ्गरूपं मां तुष्टाव समर्चयन् । ३३ ॥

रामः —

महेश्वर सुरासुरप्रवर धीर विश्वेश्वर प्रसीद परमेश्वर प्रमथनाथ नाथाव माम् ।
भवच्चरणसारसप्रवरगन्धमन्दानिलो विनाशयतु मच्छुचं पितृवधेन सन्तापितम् ॥ ३४ ॥

त्वं माता जनकस्त्वमेव भगवन् त्वत्पादुकाराधकं
त्वत्सङ्गानिलगन्धबन्धुरयुतं दृष्ट्या सदा शीलये ।
त्वत्पादाब्जरजोविघूर्णितशिरा विष्णुः समस्तासुरान्
सङ्ग्रामे त्रिपुरान्तकान्तक विभो चक्रप्रदानात् पुरा ॥ ३५ ॥

त्वत्पादाब्जप्रणमनपरः शक्तिहस्तः कुमारः
शूरादींस्तानसुरगणपान् सङ्गरादौ निहत्य ।
स्वर्गं शक्रे ददद्खिलपो वीरवीरस्त्वमीशो
मामालोक्याऽऽधितप्तं हरहर भवहन् पाहि गोकर्णनाथ ॥ ३६ ॥

तदा रामस्तुतिं श्रुत्वा तुष्टोऽहं परमेश्वरि । प्रसन्नोऽहं तदा राममवोचं दुःखितं शिवे ॥ ३७ ॥
तस्मै दत्तो मया देवि स्वहस्तपरशुस्तदा । सान्त्वितश्च तदा रामः प्रणतः पुरतः स्थितः ॥ ३८ ॥

ईश्वरः —

पिता ते जमदग्निश्च शांभवो मत्परायणः । तस्याद्य हनने राम कः सुखी भविता सुत ॥ ३९ ॥
कृतवीर्यादयः पूर्वं स्वर्गलोके च संस्थिताः । शांभवस्याद्य हननात् लम्बन्ते नरके नृपाः ॥ ४० ॥
दत्तस्ते परशुस्तेऽद्य निष्टप्तकनकत्सरुः । अनेन सेनाजालं तद् गजवाजिरथाकुलम् ॥ ४१ ॥
निहन्ताऽसि न सन्देहः क्षत्रद्वेषपरो यतः । गच्छ राम प्रहृष्टात्मा जहि क्षत्रियपांसनम् ॥ ४२ ॥
निःक्षत्रियां च पृथिवीं कृत्वा त्वं मामगाः पुनः । शांभवेष्वद्य [1]पापेषु यः पापं सम्यगाचरेत् ॥
तान् हनिष्यामि तद्वंश्यान् नाशयामि सुखं व्रज । इत्युक्तवन्तं मां देवि प्रणम्य स विनिर्गतः ॥
दत्तो मया रथस्तस्मै साश्वस्तूणीरखड्गवान् । शरी निषङ्गी कवची सपताकोरुकूबरः ॥ ४५ ॥
सहाध्यायिरभवत् तस्य अकृतव्रणसारथिः । स मां प्रणम्य देवेशि लसत्तूणीशरासनः ॥ ४६ ॥
कवची स शरी खड्गी तदा रथगतिं मुदा । शैवः शङ्खवरो दत्तस्तदा रामजयाय मे ॥ ४७ ॥
शङ्खमादाय रामः अकृतव्रणसारथिः । श्रुत्वा शङ्खरवं सर्वे क्षत्रिया निष्प्रभास्तदा ॥ ४८ ॥

---

१ भक्तेषु C

अभवन् कान्दिशीकास्ते केचिदाजिं गतास्तदा । वाहनानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ॥
हस्तिनोऽपि मदान्धा ये निर्मदास्तेऽभवन् शिवे । माहिष्मतीं तदा प्राप्य रामोऽप्यर्जुनसैनिकान् ॥
गजोरुशुण्डादण्डेषु हस्तिमात्रेषु रक्षिषु । रथेषु वाहनाश्वेषु तदा योक्त्रकशासु च ॥ ५१ ॥
चक्रकूबरसंघेषु व्यधमत् तिलशः शरैः । शूराणां च विशीर्णानां शिरोहस्ताङ्घ्रिसन्धिषु ॥ ५२ ॥
शतं सहस्रमयुतं नियुतं प्रयुतं तथा । चकार शरवर्षाणि गिरावम्बुदवृष्टिवत् ॥ ५३ ॥
ते रामं शरवर्षेण समन्तात् पर्यवारयन् । शतघ्नीभिर्भुसुण्ठीभिः लगुडैः प्रासमुद्गरैः ॥ ५४ ॥
चक्रैः खड्गोरुधाराभिः तदा तेऽर्जुनसैनिकाः । आपतन्ति गजैरश्वैः स्यन्दनैस्तूर्यनादितैः ॥
तान् रामः समरे सर्वाननयद्यमसादनम् । शरोरुकाण्डैः शतशः चिच्छेद करवालतः ॥ ५६ ॥
केचित् द्विधा कृताः खड्गैः चक्रवृत्तास्तथाऽपरे । भुसुण्डीनिहताश्चान्ये शक्तिचास्तथाऽपरे ॥
गिरिमात्रा गजास्तत्र शेरते गतजीविताः । छिन्नभाण्डोरुमस्तिष्का निर्जिह्वान्त्रास्तथाऽपरे ॥५८॥
अश्वा विनिहतास्तत्र शतशः परमेश्वरि । कबन्धाश्च समुत्पेतुः खड्गहस्ताः शरार्दिताः ॥ ५९ ॥
रामं ते ददृशुः सर्वे धनुर्मण्डलमध्यगम् । किरन्तं शरवर्षाणि प्रावृट्कालाम्बुदप्रभम् ॥ ६० ॥
विसारथिरथास्तत्र बभ्रमुः चस्खलुः पथि । रथिनो रथमध्यस्था गतासव इवासते । ६१ ॥
तान् रामः शरवर्षेण चिच्छेद तिलशोऽम्बिके । मनुष्यशीर्षपाषाणां गजोरुपुलिनां नदीम् ।६२॥
असृग्ग्राहां मेदपङ्कां केशशैवलशाद्वलाम् । [1]तां कापुरुष दुस्तारां शरैस्तस्तार तां नदीम् ॥ ६३ ॥
कङ्कगृध्रबलारावैः फेरुनादैश्च भीतिदाम् । चकार क्षणमात्रेण रामो युद्धं सुदारुणम् ॥ ६४ ॥
विनाशितं तदा सैन्यं दृष्ट्वा पुत्रैः समन्वितः । हयस्थैश्च गजस्थैश्च रथस्थैश्च तदा नृपः ॥ ६५ ॥
सोऽर्जुनः काद्य रामेति भ्रुकुटीकुटिलाननः । आभिमुख्येनाजगाम तदा रामरथं प्रति ॥ ६६ ॥
रथेनायाति सैन्येन पुत्रैश्चाश्वैः परीवृतः । सहस्रभुजदोर्दण्डैः मण्डलीकृतकार्मुकैः ॥ ६७ ॥
किरन्निषुगणान् रामं यन्तारं चोदयन्रणात् । स रथं चोदयामास अग्निमारुतसारथिः ।। ६८ ॥
जवनाश्वैस्तदा देवि शीघ्रं माहिष्मतीपतिः । आपतन्तं तदा राम अकृतव्रण सारथिः ।। ६९ ॥
चिराद् दृष्टोऽयमधुना दृष्टो मे पितृघातकः । सञ्चोदयाश्वान् सुप्रीतोऽस्म्यद्याहमकृतव्रण ॥
क्षणेन तं निहन्तास्मि शीघ्रं त्वत्प्रसादतः । तच्छ्रुत्वा रामवचनं चोदयच्चाकृतव्रणः (?) ॥ ७१ ॥
अश्वान् मनोजवांस्तस्मै तद्वै रथमभुच्छिवे । कृतप्रतिकृतैरश्वैः शतेनोच्चध्वन्विनम् ।। ७२ ॥

---

१ स कापुरुषेति C कोशे युक्तः पाठः ।

रामं चकर्त निशितैः भल्लैः सोऽच्छिनदन्तरा । पुनर्नवत्या रामोऽपि अर्जुनं समवाकिरत् ॥ ७३ ॥
अर्जुनं तमथो रामः शिरोवक्षोरुबाहुषु । विशिरस्कांस्तदा कांश्चित् चक्रे रामो महाबलः ॥ ७४ ॥
भल्लैश्च वत्सदन्तैश्च क्षुरप्रैर्निचकर्त ह । ते रामशरनिर्भिन्ना व्यसवः पतिताः क्षितौ ॥ ७५ ॥
वाजिभ्योऽथ गजेभ्यस्ते रथोपस्थे तथा परे । रथाश्च गजसंघाश्च हयास्तदनुयायिनः ॥ ७६ ॥
व्यसवः पतिता भूमौ छिन्नभाण्डकुथाङ्कुशाः । निरस्तजिह्वा मातङ्गा रथाश्च शकलीकृताः ॥
विकूबरयुगाश्चैव विचक्राः शीर्णबन्धनाः । सिन्धुरा भिन्नकुम्भाश्च नराः कृत्ताः सहस्रशः ॥७८॥
तस्तार शरवर्षेण स रामश्चार्जुनीं चमूम् । दृष्ट्वा विनिहतान् पुत्रानर्जुनः कोपमाददे॥ ७९ ॥
शरैः किरंस्तदा रामं याहि सूतेत्यचोदयत् । तं रामः शरवर्षेण महता समवाकिरत् ॥ ८० ॥
सोऽपि चिच्छेद रामस्य ध्वजं कार्मुकमेव च । तस्याश्वान् सारथिं चापि ललाटे च त्रिभिः शरैः ॥
स रामोऽप्यर्जुनं संख्ये नवभिर्मर्मभेदिभिः । शरैर्जघान कवचे धनुर्मुष्टौ तथाम्बिके ॥ ८२ ॥
चिच्छेद तद्बाहुजालं उत्प्लुत्योत्प्लुत्य वेगतः । पश्यतां देवसंघानां साधु रामेति वादिनाम् ॥
वसन्ते किंशुकस्येव तदार्जुनशराहतः । रामो बभौ महादेवि सोऽपि खड्गैरताडयत् ॥ ८४ ॥
तं रामो लाघवाद्देवि चकार विफलं तदा । तदा परशुधारेण सकुण्डलशिरो महत् ॥ ८५ ॥
अर्जुनस्याथ भूपृष्ठे पातयामास शङ्करि । ववर्षुः पुष्पवर्षाणि देवास्तन्मूर्ध्नि सत्तमे ॥ ८६ ॥
प्रावाद्यन्त तदा भेरीनिस्साणपणवादयः । मां प्रणम्य तदा रामः संपूज्य परशुं मम ॥ ८७ ॥
तद्रक्तैस्तर्पयामास स पितॄन् क्रोधमूर्छितः । एवं निःक्षत्रियां रामश्चक्रे पृथ्वीं तदाम्बिके ॥
पितृभिः स निषिद्धश्च रामो घोरपराक्रमः । संन्यस्तशस्त्रो मेधावी परशुं तं समर्च्य च ॥ ८९ ॥
तदा परशुरामाख्यां प्राप मत्पादपूजकः । स्वपावनार्थं देवेशि हयमेधमुपाहरत् ॥ ९० ॥
तुष्टये मेधपतिं मां स अयजद्भूरिदक्षिणः । स्वाद्वन्नैस्तर्पयन् विप्रान् गोभिः कनकपर्वतैः ॥
कश्यपे काश्यपीं दत्वा मां तदा पुनरागतः । तस्याश्रमपदं देवि कृतं [1]शूर्पाकारं मया ॥ ९२ ॥
षट्शतं धनुषोऽन्ते मे स्थापितो लवणाकरः । तप्त्वा मां स तदा रामो लेभे शान्तिं मुदाम्बिके ॥
गोकर्णेशं समाराध्य प्रापायं चण्डविक्रमम् । क्षत्रियान्तकरो घोरो भक्तो रामः सदा मयि ॥

ईश्वरः —

इदं ते परमाख्यानमुक्तं मे गिरिकन्यके । गोकर्णेशप्रसादेन सर्वां सिद्धिं लभेन्नरः ॥ ९५ ॥

---

१ शूर्पारिकं तथा C

यो गोकर्णेश्वरं भक्त्या शिवरात्रौ समर्चयेत । तस्य मुक्तिप्रदं ज्ञानं भविष्यति न संशयः ॥
महाबलं महादेवं गोकर्णेशं महेश्वरम् । सकृद् दृष्ट्वाऽपि मनुजो गाणपत्यं स विन्दति ॥ ९७ ॥
गोकर्णे परमा सिद्धिर्गोकर्णे परमं तपः । गोकर्णे परमं ज्ञानं साधको लभते शिवे ॥ ९८ ॥

स्तवः —

श्रीमद्गोकर्णलिङ्गं भवशनजनितापारपापैकभङ्गं
शान्तस्वान्तैकसङ्गं करनलविलसद्बाललीलाकुरङ्गम् ।
वन्दे भूमीशताङ्गं फणिगणविलसत्तुङ्गगङ्गोत्तमाङ्गं
लीलाबद्धप्रसङ्गं धृताङ्गं हरिगरकलितापारसिन्धूनिषङ्गम् ॥ ९९ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे परशुरामेतिहासवर्णनं नाम चतुर्विंशोऽध्यायः ॥

---

## ॥ पञ्चविंशोऽध्यायः ॥

ईश्वरः —

वसिष्ठाद्याश्च मुनयो वामदेवादियोगिनः । विश्वामित्रोऽङ्गिरास्तिश्च[1] भरद्वाजोऽथ गौतमः ॥ १ ॥
व्यासः पराशरो धौम्यः उतथ्यो भार्गवो मुनिः । सुमन्तुर्जैमिनिः पैलः कहोलो जमदग्निश्च ॥
जैगीषव्यः श्वेतकेतुर्मन्युश्चैव महामुनिः । दुर्वासोद्दालको योगी सनातनसनन्दनौ ॥ ३ ॥
सनत्सुजातः सनकः तथा भृङ्गिरिटिर्मुनिः । उद्दालको हरीतश्च दत्तात्रेयोऽथ कश्यपः ॥ ४ ॥
मंकणः शकुनो दाल्भ्यः शौनकस्ताण्डवः कशः । काशकृत्स्नश्चौडुलोमिः शिलादः पैप्पलायनः ॥
बोधायनो मरीचश्च तथा चैत्राश्वलायनः । एते चान्ये च मुनयो वेदवेदान्तपारगाः ॥ ६ ॥
भाष्याणि धर्मशास्त्राणि कल्पसूत्राणि सत्तमे । कृत्वाऽपि संशयापन्ना मां गोकर्णेशमीश्वरम् ॥
संशयोच्छेदनं ज्ञानं मत्तो लब्धुं मुनीश्वराः । तपस्यन्ति महाभागे शुद्ध्यर्थं तपसा शिवे । ८ ॥
शुद्धे मनसि च ज्ञानं प्रतिबिम्बति नान्यथा । पञ्चाग्निनिरताश्चान्ये कटधूमाशनाः परे ॥ ९ ॥
पर्णाशिनस्तथा केचिद्वायुवारिफलाशनाः । निराहारास्तथा केचित् केचित् पक्षोपवासिनः ॥
कृच्छ्राणि केचित् कुर्वन्ति विविधानि सदाशिवे । गृहस्था यतयः केचिद्वानप्रस्थाश्च वर्णिनः ॥
जटाजिनधरा मुण्डा भस्मरुद्राक्षभूषणाः । अग्निरित्यादिभिर्मन्त्रैः सर्वाङ्गोद्धूलने रताः ॥ १२ ॥

---

[1] अङ्गिराश्चैव C

त्रिपुण्ड्ररेखाविलसत्फालभागमनोहराः कौपीनाच्छादनैर्हीनाः केचित् कौपीनधारिणः ॥ १३ ॥
अश्मकुट्टास्तथा केचित् दन्तोलूखलिनस्तथा ; गोचर्मवसनाः केचित् केचिद्व्याघ्राजिनाम्बराः ॥
अलाबुवैणवादीनि [1]वार्क्ष्यमृद्धादिपात्रकैः । प्राणयात्रां प्रकुर्वन्ति मत्रैवैकैकमोजिनः ॥ १५ ॥
अयाचितास्तथा केचित् सप्तागारचराः परे । मन्नामनिरताः सर्वे मम लिङ्गार्चनप्रियाः । १६ ॥
पञ्चाक्षरजपासक्ताः केचित् प्रणवजापकाः । भस्मनिष्ठाभस्मशय्यारुद्राध्यायजपादराः ॥
लिङ्गार्चनपराः केचित् बिल्वपत्रादिसाधनैः : केचिल्लिङ्गे नीरधारां कल्पयित्वा च संस्थिताः ॥
रुद्राध्यायावर्तनैस्ते कालकालार्चने रताः । बिल्वमूलेषु लिङ्गानि पूजयन्त्यथ केचन ॥ १९ ॥
शिव शम्भो महादेव प्रसीदेति वदन्ति च स्थानासनादिभिः केचित् केचिदेध्यूर्ध्वबाहवः ॥
ग्रीष्मे घर्मांशुसन्तप्ताः वर्षास्वाकाशगोचराः । शिवशब्दवपध्वस्तपापपञ्जरसुन्दराः ॥ २१ ॥
गोकर्णनिलयं मां हि ध्यायन्तो लिङ्गरूपिणम् एवं संवसतां तेषां ज्ञानं दातुं महेश्वरि ॥ २२ ॥
तेषां पुरः प्रादुरासं नीलकण्ठोऽम्बिकायुतः । मां दृष्ट्वा ते मुनिगणाः प्रणम्य भुवि दण्डवत् ॥
तुष्टुवुर्जयशब्दैश्च गोकर्णेशं मुनीश्वराः ।

मुनयः—

जय देव विरूपाक्ष जय भक्तार्तिभञ्जन । जयानन्त महादेव जय विश्वाधिक प्रभो ॥ २४ ॥
जयामरेश सर्वेश जय प्रमथनायक । जय शाश्वत सर्वज्ञ जय लिङ्गार्चकप्रिय ॥ २५ ॥
जय कालकलातीत जय शम्भो महेश्वर । जय शिष्टजनप्रीत जय श्रीकण्ठ शाश्वत ॥ २६ ॥
जयोग्र भीम कामारे जय लिङ्गस्थ शङ्कर । जय गङ्गाधराव्यग्र जय चन्द्रकलाधर ॥
जय बिल्वदळप्रीत जय भीम प्रसीद नः ॥ २८ ॥

त्वं ब्राह्मणः सर्वसुरैर्विशिष्टः शिष्टैश्च पूज्यो भगवन् श्रुतिश्रुतः ।
वयं मनुष्यप्रवरा हि विप्रास्त्वामाश्रयामोऽखिलबन्धमुक्त्यै ॥ २९ ॥

सुखाभासैर्धर्मैर्जनिमृतिनिदानादिनिवहैरविद्यां तीर्त्वैव प्रतिभवशतेष्यूचमधियः ।
असारं संसारं निरवधिककष्टैकजनकं मुहुर्निन्द्यं शम्भो विधिरहितबुद्धया गतधियः ॥ ३० ॥
लुठन्तो मोहान्धाः फलजनितकामाः सुखमये तथा स्वर्गे दुःखे नरकशतवैचित्र्यनिवहे ।
महेशं विश्वेशं अखिलहृदयाब्जैकवसतिं न जानन्तो मोहाद्भवदमयभक्त्या विरहिताः ॥ ३१ ॥

---

[1] धार्क्षात्यादिकपात्रकैः C

ईश्वरः—

इत्थं संस्तुत्य ते सर्वे जयस्तुत्या तदाम्बिके । संसारजनकाज्ञाननिवर्तनकरं तदा ॥ ३२ ॥
विज्ञानं मां तदा प्रोचुर्देहीति परमेश्वरि ॥

मुनयः—

पशुपाशविमोचको भवान् पशवोऽज्ञानविजृम्भिता वयम् ।
भगवन् शरणागतानथास्मान् शिव तद्वद गुह्यमपि प्रभो मुदा ॥ ३३ ॥
भवपाशविमुक्तये पदं मनसः पारमतीव सौख्यदम् ।
यदि त्वत्करुणाकटाक्षलेशैः भवदीयैरभवाय जायते ॥ ३४ ॥
भवसागरतारकं वयं ते पदपद्मं प्रथमं समाश्रिताः ।
वद तन्नो दुरवाप्यमप्यवाप्तुं श्रुतिवर्यैर्निखिलं विमुक्तिदायिन् ॥ ३५ ॥
अतितुच्छमनोविलासितैः प्रथमानैर्जननादिदुःखदैः ।
विभवैरसुखाय कल्पितैः सुखबुद्ध्यैव भ्रमन्ति पामराः ॥ ३६ ॥

दारापत्यधनैश्च धान्यनिकरैः सद्धेमपट्टाम्बरैरश्वैर्गोमहिषैरजाविकगणैर्दन्त्युत्तमैः स्यन्दनैः ।
प्रासादैर्विविधैर्महोन्नततलैर्मञ्चैः परार्ध्यास्तृतैः नानारत्नवरादिभूषणगणैराज्यैर्विमोहस्सहो ॥

ईश्वरः—

एवं प्रार्थयतां तेषां मुनीनां भावितात्मनाम् । तानन्वमहं गौरि तद्‌ज्ञानं परमेश्वरि ॥ ३८ ॥
तल्लिङ्गदक्षिणात् वक्त्रादघोरान्मूर्तिमान् स्थितः । तान् मुनीनुपदेष्टुं तद्‌ज्ञानं परममम्बिके ॥
पिशङ्गितजटाकुटीविधृतचन्द्रगङ्गानलोज्ज्वलन्निटिललोचनं वटतरोरधस्तात् स्थितम् ।
कटीतटमृगाजिनं कृतसुयोगपट्टोल्लसत् कराम्बुजमुमासखं गरलनीलकण्ठं शिवम् ॥ ४० ॥
अपस्मृतिशिरःस्थितप्रकटपादफुल्लाम्बुजं विनिद्रघुसृणारुणोत्पलकरोत्थचिन्मुद्रिकम् ।
सुरासुरमुनिव्रजभ्रमदहार्दविध्वंसनं तमोगुणगणारुणप्रमुविदीप्तिविद्योतकम् ॥ ४१ ॥
मां तादृशं तदा देवि दक्षिणामूर्तिरूपिणम् । स्वाज्ञानविनिवृत्त्यर्थं तुष्टुवुर्मुनयोऽमलाः ॥ ४२ ॥

मुनयः—

कटीतटपरीलसत्स्फटिकचिकाद्यं शिवं तडिन्निभजटाकुटीविधृतसोमकोटिप्रभम् ।
सुरोरुतटिनीशिखं वटतरोरधस्तात् स्थितं सुरासुरगणाननोज्ज्वलकिरीटकोटिप्रभा-
विराजितपदाम्बुजं निटिललोलनेत्रं नुमः[1] ॥ ४३ ॥

---

१ पञ्चपादोऽयं श्लोकः ।

काशिकोशगतकाशविहीन काशिकापुरनिवासकाशय ।
काशपूज्यपद व्योमकेश नो ज्ञानकोशमखिलं भवमुक्त्यै ॥ ४४ ॥

मुनीनां वदनाद्देवि प्रश्रयाणां तदा मयि । तुष्टः कष्टविनाशाय तद्ज्ञानं संवदाम्यहम् ॥ ४५ ॥

ईश्वरः—

शृण्वन्तु वामदेवाद्या मुनयो मत्प्रसादतः । भवतां ज्ञानममलं भविष्यति न संशयः ॥ ४६ ॥
नातप्ततपसे देयं इति श्रुत्यनुशासनम् । भवन्तस्तप्ततपसः सर्वे मत्पदपूजकाः ॥ ४७ ॥
दास्यामि मत्परं ज्ञानं [1]प्रणिपातपुरःसरम् । एतदर्थं पुरा देवैः पृष्टोऽहं मुनिसत्तमाः ॥ ४८ ॥
तानब्रवं सुरगणाः तच्छृण्वन्तु सुरर्षयः । अहमेकोऽद्वितीयश्च व्यापकोऽलिङ्ग एव हि ॥ ४९ ॥
मत्तो नान्यज्जगत् किंचित् पृथगस्ति मुनीश्वराः । ब्रह्मैवेदमिदं सर्वमात्मैवेदं न संशयः ॥ ५० ॥
नेह नानास्ति दृश्यं यत् सर्वं मय्येव कल्पितम् । यथोर्णनाभिः सृजते ग्रसते तन्तुजालकम् ॥
तद्वज्जगन्ति जातानि ग्रसामि विसृजामि च मय्येवेदं स्थितं विश्वं मय्येव लयमेष्यति ॥ ५२ ॥
नित्योऽहं निर्विकल्पोऽहं अशरीरोऽहमेव हि । आकाशात्मा व्यापकोऽहं न हि तद्धर्मभागहम् ॥
यतो भूतानि जातानि येन जीवन्ति तान्यपि । यस्मिन् लीनानि विप्रेन्द्राः तद्ब्रह्माहं न संशयः ॥

अपाणिपादो जवनो ग्रहीता पश्याम्यचक्षुः स शृणोम्यकर्णः ।
अहं विजानामि जगद्व द्विजा न मामहो वेत्ति च मायया वृतः ॥ ५५ ॥
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।
नैवास्ति बन्धो न ममास्ति मुक्तिरच्छो निरच्छास्मि मनोविवर्जितः ॥ ५६ ॥
अगाधमस्पर्शनरूपभूतं तथाऽरसं नित्यमसङ्गमीशम् ।
भूतेन्द्रियाणामतिरिक्तमीश्वरं कोशादिहीनं तमसः परस्तात् ॥ ५७ ॥

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं [2]मनसा ततम् । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धविवर्जितः ॥ ५८ ॥
सत्यज्ञानानन्दमय अहमेव मुनीश्वराः । मां यो वेद स वै वेद सर्वमित्याह वै श्रुतिः ॥ ५९ ॥
ईशावास्यमिदं सर्वं यत् किञ्चिज्जगतीगतम् । देशकालाद्यवच्छिन्नं मां ज्ञात्वा मृत्युवर्जितः ॥
अद्वितीयोहमीशानः एक एवाहमीश्वरः । ज्ञात्वा मां न बिभेत्येव न द्वैतं तत्र विद्यते ॥ ६१ ॥
द्वैते भयं हि भवति ईषद्वा दुःखमश्नुते । सर्वेन्द्रियगुणातीतः सर्वेन्द्रियविवर्जितः ॥ ६२ ॥
सर्वस्य प्रभुरीशानः सर्वस्य शरणं सुहृत् । प्राक्प्रतीची उदीच्योऽहं दक्षिणा विदिशस्तथा ॥ ६३ ॥

---

१ शालिपात C    २ रजसा C

अधश्चोर्ध्वं च यत् किञ्चित् भूतं माऽप्यहमेव हि । पूर्णं पूर्णमदः पूर्णं संपूर्णोऽस्मि निरामयः ।
अशरीरः शरीरेषु प्राणापानौ मनोमनः । देहेन्द्रियाण्यथ प्राणा मनसा मुनयो ह्यहम् ॥ ६५ ॥
कूर्मोऽङ्गानीव सर्वत्र सृजामि विसृजामि च । विनश्यत्स्वविनश्यन्तं मां यो वेद स वेदवित् ॥

दिक्स्वहीनं हि मां ज्ञात्वा शोकं तरति सत्तमाः ।
को मोहस्तस्य कः शोकः छिन्नग्रन्थिः स एव हि ॥ ६७ ॥

मामात्मानं प्रियं ज्ञात्वा आनन्दं न बिभेति च । मय्येव च जगज्जातं मय्येव स्थितमेव हि ॥
मय्येवान्ते समभ्येति तत्तद्धर्मोपलेपितः । वाचो मत्तो निवर्तन्ते मनसा मुनिसत्तमाः ॥ ६९ ॥
मां ब्रह्मविद् ब्रह्मैव भविष्यति न संशयः । मयि ज्ञातेऽखिलं ज्ञातं पुच्छं पुरुष एव हि ॥ ७० ॥
काष्ठा गतिः परा चाहं मुक्तोऽहं मोचकोऽस्म्यहम् । स्वाविद्यया संसरामि विद्यया मोचकोस्म्यहम् ॥
अजिघत्सोऽपिपासोऽहं देहप्राणमनोऽतिगः । अशीर्योऽहं सदाऽग्राह्य असङ्गः पुरुषस्त्वहम् ॥ ७२ ॥
मद्रसं परमं ज्ञात्वा नन्दितो भवति द्विजाः । नैव जीवो न च ज्ञानं स्वे महिम्न्यहमास्थितः ॥
पुरुषस्त्वौपनिषदो ज्ञातुं शक्यो न कर्मणा । भीत्याऽनलानिलेन्द्राद्या भान्ति वान्ति सृजन्ति च ॥
सत्यकामोऽस्म्यसङ्कल्पः षडूर्मिरहितस्त्वहम् । न जायते वा म्रियते नायं जातो जनिष्यति ॥
प्रातिभासिकमेवेदं जगद्ध्येतन्मुनीश्वराः । तद्धर्मैर्नैव लिप्तश्च न बन्धो मोक्ष एव हि ॥ ७६ ॥
नैव जातं जगत् किञ्चिन्नास्त्यान्तः परमार्थतः । मृगतृष्णानिभं विप्राः स्वाज्ञानपरिकल्पितम् ॥
मृगाणां मृगतृष्णाब्धौ यथा सत्यत्वकल्पना । तद्वद्देहाभिमानेन जगत्सत्यत्वकल्पना ॥ ७८ ॥
नराणां ज्ञानिनां विप्रा मृगतृष्णेति तद्विदाम् । कथं पिपासा भवति अज्ञानां तद्वदेव हि ॥ ७९ ॥
स्वमात्मानं परं दृष्ट्वा देहादिरहितं शिवम् । सद्य एव विलीयेत स्वाज्ञानोत्थजगद्गणः ॥ ८० ॥
अहं भूमाऽखिलानन्दो रसोऽहं शाश्वतः प्रभुः । विशुद्धेदेहेन्द्रियाख्यां वै गमितो मूढकल्पनात् ॥
एकोऽहमेव भूतात्मा भूते भूते व्यवस्थितः । देहोदयविनाशेषु अविनाश्यहमेव हि ॥ ८२ ॥
यथान्धकारे पुरुषं संवृतं नीलवाससा । न जानन्ति यथान्ये वै स्वात्मानं जानते स्वयम् ॥८३॥
तथा सर्वेन्द्रियाणां हि प्रतिष्ठाऽहं गतागतौ । पुरुषः षोडशात्माहं विविधेन्द्रियकल्पकः ॥ ८४ ॥
[1]चक्षुः श्रोता तथा द्रष्टा मन्ता बोद्धाऽहमेव हि । एवं ब्रह्मैव सर्वं हि नान्यथा श्रुतिराह हि ॥
अयमात्मा तथा ब्रह्मन् ब्रह्मैवाहं तथा द्विजाः । तत्त्वमस्यादिवाक्यानि [2]अहं ब्रह्मास्मि निश्चयः ॥

१ वक्ता C युक्तः पाठः । २ बोधार्थं ज्ञानिनां तथा C मूले च पाठान्तरतया तस्योल्लेखः ।

अभोक्तारमकर्तारमसङ्गमविनाशकम् । जीवश्चात्मेति [1]तद्विद्वत्तत्त्ववाक्यार्थकल्पना ॥ ८७ ॥
अज्ञानामैक्यविज्ञानज्ञानार्थं मुनिसत्तमाः । द्वासुपर्णादिवाक्यानां कल्पितद्वैतकल्पने ॥ ८८ ॥
तत्त्वमस्यादिवाक्यानां बोधनात् सर्वमेव हि । असत्ये सत्यमारोप्य मूढानां बोधदायिनी ॥ ८९॥
अर्थवादोपासनाभिः कर्मभिः श्रुतिराह हि । शाखाचन्द्रगवार्ताभिः कल्पयिष्यन्ति सत्तमाः ॥
करोति तारतम्येन स्वाधिकारानुरूपतः । रत्नकान्तिर्यथा रत्ने दृश्यते चलितेव सा ॥ ९१ ॥
आत्मानन्यतया भाति तथा मयि जगद्गतम् । नेत्रमालिन्यतो भाति चन्द्रे द्वित्वं जले रविः ॥
अभ्रैर्गच्छन्दिवाभाति स्वे महिम्न्यहमास्थितः ॥ ९३ ॥

ईश्वरः —

एतदेव परं ज्ञानं नानाश्रुतिशिरोगतम् । अहं ब्रह्मेति विज्ञानान्मुच्यते नान्यथा द्विजाः ॥ ९४ ॥
ज्ञाने चास्तमिते विप्राः वेदनादिविवर्जितः । अहमेवास्मि तद्ब्रह्म वाचारम्भणमित्यपि ॥ ९५ ॥
नैव वाचा न मनसा शक्योऽहं ज्ञातुमेव हि । तमेकं जानथात्मानं नान्यः पन्थाऽयनाय हि ॥
ज्ञानेनैव परा मुक्तिर्भवत्येव न चान्यथा । अहं ब्रह्मेति विज्ञानं तद् द्विजाः परमार्थतः ॥ ९७ ॥
शाब्दज्ञानमहो विप्राः न मुक्त्यै भवति ध्रुवम् । श्रवणायापि नो विप्रा न लभ्यः (?) परमेश्वरः ॥
शृण्वन्तोऽपि महादेवं न विद्युर्यं पिनाकिनम् । भक्त्या ह्यनन्यया लभ्यो दुर्लभोऽयं मुनीश्वराः ॥
भावग्राह्यमनीशाख्यमित्याह श्रुतिरादरात् । सर्वमन्यत् परित्यज्य ध्येयोऽहं परमेश्वरः ॥ १०० ॥
चतुर्थोऽहं सदा विप्राः तुरीयः शिव एव हि । अहमात्मा मुनिश्रेष्ठाः सत्यं सत्यं न संशयः ॥
ब्रह्मणश्चापि विष्णोश्च तथान्येषां दिवौकसाम् । जनिताहं महादेवः परमात्मा श्रुतिश्रुतः ॥ १०२ ॥
न कर्मणा न प्रजया न धनेनेज्यया द्विजाः । नान्यः पन्था द्विजश्रेष्ठाः मज्ज्ञानं परमार्थतः ॥
यस्यैव वृणुते स्वात्मा तेन लभ्यमिदं द्विजाः । यदाकाशं चर्मवेष्टं वेष्टयेयुर्जना द्विजाः ॥ १०४ ॥
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति । इन्द्राग्निमितं वरुणं विष्णुं ब्रह्माणमेव च ॥ १०५ ॥
एकमेव महादेवं बहुधा कल्पयन्ति हि । मामविज्ञाय विप्रेन्द्राः किमृचा स करिष्यति ॥ १०६ ॥
यो मां वेद स वै मुक्तिममी लोकाः समासते । किं वोऽद्य बहुनोक्तेन श्रद्धध्वं मुनिसत्तमाः ॥
साधनान्यधुना वक्ष्ये ज्ञानोत्पत्त्यर्थमेव हि । ज्ञाने चाप्यर्थविज्ञानदार्ढ्यार्थं मुनिसत्तमाः ॥ १०८ ॥
भस्मनोद्धूलनं पुण्यं त्रिपुण्ड्रस्य च धारणम् । व्रतमेतत् पाशुपतमामनन्ति मुनीश्वराः ॥ १०९ ॥

---

१ हित्वैषा न श्रुतिर्वदति स्वयं C मूले चास्य पाठस्योल्लेखः ।

शिरोव्रतमिदं पुण्यं ज्ञानसाधनमेव हि । रुद्राक्षधारणं पुण्यं रुद्राध्यायानुवर्तनम् ॥ ११० ॥
रुद्रलिङ्गार्चनं भक्त्या बिल्वपत्रादिसाधनैः । पञ्चाक्षरजपश्चैव [1]मन्नैवेद्यैकभोजनम् ॥ १११ ॥
शिवक्षेत्रनिवासश्च नित्यानित्यार्थचिन्तनम् । शिव शम्भो महेशेति अनिशं शिवचिन्तनम् ॥
मैत्री भूतेषु करुणा शान्तिदान्त्यादयो गुणाः । यमश्च नियमश्चैव जिह्ममायादिवर्जनम् ॥ ११३॥
वेदवेदान्तवाक्यानां विचारो गुरुवाक्यतः । लोकानुदर्शनं चैव वैराग्यार्थं मुनीश्वराः ॥ ११४ ॥
दुःखितानां नराणां च विनष्टानां मुनीश्वराः । सर्वं जुहोति विज्ञानं नेति नेत्यादिवाक्यतः ॥
गुरौ शिवेऽविनाभावो मन्मूर्तौ चिन्तनं तथा । उमासहायं देवेशं नीलकण्ठं प्रशान्तकम् ॥
एतद्वः संग्रहेणैव प्रोक्तं ज्ञानं मुनीश्वराः । उद्दालकश्रुतार्थस्य चिन्तनं कुरु मत्तम ॥ ११७ ॥
मननं श्रवणं भक्त्या निदिध्यासनमेव च । आसुप्तेरामृतेर्विप्राः कुरुध्वं भक्तिभावनाः । ११८ ॥
एतदेव मुनिश्रेष्ठा मम ज्ञानाङ्गमुच्यते । अन्यदेवस्मृतिश्चापि भस्मपुण्ड्रस्य धारणम् । ११९ ॥
स एव तमसाऽऽविष्टो नैवेदं प्राप्नुयात क्वचित् । मत्प्रसादेन विज्ञानं मत्प्रसादेन मुक्तयः ॥
मत्प्रसादेन मुनयः सर्वं प्राप्यत एव हि । यस्य कस्यापि नो देयं ज्ञानमेतत सुदुर्लभम् ॥ १२१ ॥
नावेदविदुषे देयं गोप्यमेतत् प्रयत्नतः । अपात्रेषु ददन्नेतत मद्ज्ञानं भूसुरोत्तमाः ॥
नरो नरकमाप्नोति सह पूर्वैः पितामहैः ॥ १२२ ॥
इत्थं मत्तो महादेवि ज्ञानं प्राप्य मुनीश्वराः । प्रणम्य मुनयः सर्वे मामाहुर्वीतकल्मषाः ॥ १२३॥

मुनयः —

न जानन्ति बोधं न वाऽऽनन्दसिद्धिं भवद्भक्तिलेशाद्विहीनातिहीनाः ।
श्रुतेर्वाक्यतः सिद्धिमीयुस्तुरीयां महेशान शम्भो गुरौ वा लभेत (?) ॥ १२४ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे वसिष्ठादिभ्यो ज्ञानोपदेशवर्णनं नाम पञ्चविंशोऽध्यायः ॥

---

१ भक्तानामन्नभोजनम् C

## ॥ षड्विंशोऽध्यायः ॥

ईश्वरः –

तद् ज्ञानं परमं प्राप्य मुनीनामपि शृण्वताम् । वामदेवो मुदा नृत्यन् मत्तो लब्ध्वा मुनिर्वृतः ॥

ज्ञानानन्देन महता विवशो मुनिपत्तमः । गोकर्णेशं तदा पश्यन् मुनिमध्ये मुनिस्तदा ।

इदं प्राहात्मविज्ञानं मां स्तुवन् जगदम्बिके ॥ २ ॥

वामदेवः –

अहं विश्वाधीशो मनुरहमहो सूर्य इति वै अहं विश्वं सर्वं भुवनमखिलं त्वच्छुविबलात् ।

उताहोस्विच्छम्भो निखिलमरुतां नायक विभो भवत्पादाम्भोजोद्भवभजनपुण्याकरमतिः ॥ ३ ॥

पूर्णं पूर्णमदस्त्वदीयमहसा संपूर्णमेतज्जगत्
त्वां पूर्णं समुपैति तूर्णमथ वै संपूर्णकामोऽधुना ।
पूर्णात् पूर्णमहार्णवप्रतिनिधिं तूर्णं हृदाकाशगं
त्वां [1]त्राणं जगदेव तस्य हृदये संपूर्णमाविष्टते ॥ ४ ॥

ईशावास्यमिदं च सर्वमधुना त्वद्धानमात्रं सता-
मेकं द्वन्द्वविहीनमद्भुतमहो नेहास्ति नाना जगत् ।
आत्मैवेदमिदं उमाह्वयमिदं ब्रह्मेदमालोक्यतां
वेदान्तैर्गुरुबोधवाक्यजनितानन्दैस्त्वमात्मा विभुः ॥ ५ ॥

लोकद्वारमपावृतं मुनिगणप्राप्यं दुरापं सदा
दुष्टानां तु हिरण्यपात्रपिहितं सत्यस्य तद्वै मुखम् ।
तत् पश्येम भवत्कटाक्षलहरीपाथेयपान्थाः सदा
सम्राडादिचतुर्थलोकगतयः शम्भो त्वदीयार्चनात् ॥ ६ ॥

एष ब्रह्मैव शक्रः श्रुतिरियमधुना सर्वमेतद्विचित्रं
प्रज्ञानेत्रमितीरयत्यपि विभो ब्रह्मेदमात्मेत्यपि ।
शारीरादिषडूर्मिकृत्यरहितो देवस्त्वमीशानदृक्
दृश्यं भूतभवद्भविष्यप्रमुखरं त्वय्येव विद्योतते ॥ ७ ॥

---

१ मत्वा C

त्वामानन्दनिधिं त्वदीयसहजानन्दोत्थसच्छीकराः
ब्रह्माद्या मुनयस्तथा यमिगणा जीवन्ति नो मात्रया ।
आकाशादिशरीरमद्वयघनं बुद्ध्यादिबोधप्रदं
ब्रह्माप्नोति परं त्वदीयकृपया जानासि त्वं त्वामनु ॥ ८ ॥

भीषेतोदेति भानुः सकलग्रहगणैः सप्तविप्रैश्च यक्षैः
वह्नीन्द्रावपि सूर्यमनुरथ वै शम्भो त्वदीयाज्ञया ।
निःश्वासोऽपि भवत्कृतो हि भगवन् साम्नामृचां याजुषां
आथर्वाणगणास्तदङ्गमखिलं त्वत्तो विभो निःसृतम् । ९ ॥

यतो वाचां गुम्भः सह परिकरैरप्रतमयते मनो वाक् शम्भो तज्जडमखिलचापल्यजनकम् ।
अस्थूलोऽप्यनणुस्तथाऽप्यविदुषामङ्गुष्ठमात्रोऽन्तरा नीवारोद्भवशूकसंमितविभो पीताकृतिर्भासि वै ।

त्वमाकाशकोशस्य चैतन्यदाता महाकाशमेतज्जगद् व्याप्य तिष्ठन् ।
कुतो जातमाकाशमप्राणमित्थं न चानन्दलेशं समाप्नोति कश्चित् ॥ ११ ॥

त्वमात्मा वियद्वायुरग्निर्जलं क्ष्मा [1]तवौषध्यजालं तदन्नं तु (पू) वर्षैः ।
प्रमोदोऽथ मोदस्तथैवास्य पक्षौ त्वमीशान आनन्द आत्मा तुरीयः ॥ १२ ॥

त्वां सर्वान्तरगं तथापि विवशा मोहादियं वै श्रुति-
श्चात्मन्यावसथादिकल्पनमिदं द्वौ वा सुपर्णेत्यपि ।
एकस्तत्फलमत्ति [2]साक्षिगतिको द्वित्वं कथं त्वद्गतं
एकं त्वां तमसः परं सुकृतिनो जानन्ति वोर्धंहृदा ॥ १३ ॥

अस्तं द्वित्वनिवृत्तभावभवुके स्वात्मन्यखण्डात्मके
नानाकारमबुदबुद्धिजनकं भ्रान्त्या भयं जायते ।
ज्ञाते रज्जुनि सर्पभृत्कृतिभयं त्यक्त्वा जनो मोदते
तद्वत् त्वय्यखिलात्मके शिवतरे ज्ञाते भयं नास्ति हि ॥ १४ ॥

आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं प्रभो ।
तस्मिन् मनः प्राणगतीन्द्रियाणि भूतानि पञ्चापि च त्वां न विदुः ॥ १५ ॥

यत्र त्वमात्मा भगवन् श्रुतिश्रुतः तत्र केन किं पश्य महो गुणार्थान् ।
नद्यो यथा सरमाणाः समुद्रे तथेन्द्रियार्थास्त्वयि नाशमेति ॥ १६ ॥

---

१ ततौषध्यजालं C २ साक्षिकतया द्वित्वं कथं भावये इति मूलेऽपि पाठान्तरोल्लेखो दृश्यते।

ज्ञाते तथात्मन्यखिलं संविदः श्रुतिर्नवाभ्यासपरा वदत्यथार्थम् ।
वाचा समारंभणमेव युक्त्या एकेन मृत्पिण्डमयेन सर्वम् ।। १७ ।।

भूमात्वेव सुखं त्वदीयकृपया नाल्पे सुखं संसृतौ
नान्यद्यत्र विपश्यति प्रियतरं नान्यद्विजानात्यपि ।
भूम्यन्तर्गतमेव हाटकनिधिं नैवाप्नुवन्ते जना
ऊर्ध्वं संचरतोऽप्यहोऽप्यहरहस्त्वामीश मोहात् सदा ।। १८ ।।

आदित्यसोमदहनेषु तथैव वाचि अन्योन्यनाशमुपलक्ष्य जयादिकेषु ।
त्वं ज्योतिषां ज्योतिरनुत्तमोऽसि आत्मासि विश्वमखिलं त्वयि सन्निधत्ते ।। १९ ।।

अन्तर्यामितया त्वमेव भगवन् जाड्यं जगत्सर्गजं
वारि त्वं पृथिवीन्द्रियाणि च मनः सर्वं नियम्याखिलम् ।
त्वामेतेन विदन्ति बाह्यमतयः सूक्ष्मादिदृश्यं शिवं
तं त्वामन्तिकसंस्थितं मुहुरहो देवापि मुह्यन्ति वै ।। २० ।।

त्वां दृष्ट्वा हृदयाब्जगं मुनिगणाः शोकं तरन्तेऽखिलं
तेषां त्वं तमसो गणं भिद्यन्ति च ग्रन्थयः ।
सर्वाक्षिश्रुतिहस्तपादवदनः सर्वेषु भूताश्रयः
सर्वं विश्वमिदं विचित्रजनकं चावृत्य संतिष्ठसे ।। २१ ।।

त्वं चक्षुषां चक्षुरसि श्रुतीभ्यः श्रुतेः श्रुतिः प्राणगणस्य प्राणः ।
त्वं वै मनस्यापि(?) मनः महेश सङ्क्ष्वसङ्गस्त्वशरीरकोऽसि ।। २२ ।।

अपाणिपादो मनसो दवीयः पश्यस्यचक्षुः स शृणोष्यकर्णः ।
त्वं वेत्सि सर्वं न विदन्ति हि त्वां त्वामाहुरग्र्यं पुरुषं पुराणम् ।। २३ ।।

मनः परोऽसि प्रकृतेः परोऽसि बुद्धेः परोऽसि महतः परोऽसि ।
अव्यक्तव्यक्तात् पुरुषात् परोऽसि काष्ठा गतिर्ब्रह्म पुच्छं त्वमीश ।। २४ ।।

अशरीरस्त्वमसि प्रसिद्धकर्मा शरीरिणां नाशगतिक्रियासु ।
तस्मादवस्थारहितं च शम्भुं त्वां यो विजानाति न शोचते पुनः ।। २५ ।।

सृष्टानि खानि परमेश विमोहनाय त्वय्येव देव जगतीष्वथ एक एव ।
तस्मात् परं पश्यति विश्वमूर्तेर्नात्मानमिच्छन्ति बहिर्मुखा जनाः ।। २६ ।।

विश्वं दृश्यमिदं विभाति सकलं त्वय्येव विद्योतते
जाग्रत्स्वप्नसुषुप्तिषु प्रलयकृत् कोशादिहीनः सदा ।
त्वामात्मानमखण्डमिन्द्रियगणैरप्राप्यमाशामुखं
नित्यं वांछति ब्रह्म तद्धृदि सदा चानन्दलब्धः सुखम् ॥ २७ ॥

चतुर्थस्तुरीयः शिवोऽद्वैत आत्मा महाभूतदेहेष्वसङ्गः पुराणः ।
स सत्येव तन्नामरूपैर्गुणैर्वा शिवः पुरुषः केवलः कोशहीनः ॥ २८ ॥

अमेयो ह्यदाह्यस्तथा छेद्यहीनस्त्वशोष्यास्ति वाक्पाणिदेहादिबन्धः ।
स्वतन्त्रो विभुर्नित्यशुद्धो विभासस्त्वमासा जगज्जालमेतद्विभासि ॥ २९ ॥

यतो वा महाभूतसङ्घानि जातान्यसंख्येयकर्माणि भिन्नानि नित्यम् ।
येनैव जीवन्ति विभान्ति देहैर्विदेहानि नान्यत्र सन्तिष्ठतेऽन्ते ॥ ३० ॥

तदेतत् त्रिनेत्रं विचित्रं पवित्रं उमाश्लिष्टगात्रार्धचन्द्रार्धचूडम् ।
विजिज्ञास्य तद्ब्रह्म नीरूपरूपं महारूपमेकं जगत्पालनाय ॥ ३१ ॥

त्वमात्मा त्वं ब्रह्म त्वमसि भगवन् घोरमखिलं
त्वया भेदं जानात्यविकलधिया यस्तु यमिराट् ।
अजानन् यथेत्थं त्वमसि च परात्परात् स तमनु[1] ॥ ३२ ॥

एके त्वय्यद्वितीये जगदिदमखिलं नेह नानास्ति किञ्चित्
श्रुत्या युक्त्या गुरूक्त्या मननयुतधिया तत्त्ववाक्यात् तपोक्त्या ।
द्वित्वे भीतिर्महेश त्वयि भयजननी द्वासुपर्णादिवाक्यैः
मन्दान् संबोधयत्सा श्रुतिरियमधुना साक्षिणं त्वां फलादम् ॥ ३३ ॥

एषोऽन्तरादित्यगतो महेशो हिरण्यरूपः स हिरण्यकेशः ।
हिरण्यरेताश्च तथाम्बिकापतिः ध्यानैकगम्यस्तमसः परस्तात् ॥ ३४ ॥

एषोऽन्तर्याम्यमृतः पुराणः कविस्तथा प्राणभृत् प्राणहेतुः ।
त्वां ब्रह्मन्वास उपासते चिरं मुक्त्यै धृतात्मान उग्रो महेशम् ॥ ३५ ॥

त्वं षोडशात्मा पुरुषः पुरीशयो न लोकदुःखैस्त्वमसङ्ग एकः ।
न सज्जसे तद्गुणभाववृत्तिषु स्थितोऽसि दूरे च तदन्तिकोऽसि ॥ ३६ ॥

---

१ त्रिपादयं श्लोकः ।

अपाणिपादो गुणकर्महीनो गुहाहितो निष्कलस्त्वं तुरीयः ।
सत्यं तथाऽऽनन्दमयस्त्वमात्मा ज्ञानं सुखं संविदिति क्रमेण ॥ ३७ ॥

यदा तमस्त्वं न दिवा निशापि वा न सन्न चासच्छिव एव केवलः ।
त्वमक्षरं तत् सवितुर्वरेण्यं प्रज्ञा त्वदाज्ञावशतो विनिःसृता ॥ ३८ ॥

कोशातीतमखण्डमेकममरं गन्धादिहीनं तदा नश्यद्देहकदंबकेषु नितरां नाशादिहीनं विभुम् ।
स्वात्मानं प्रियदेहजालरहितं तत्साक्षिणं सर्वदा दृश्यं दर्शनदिग्भ्रमादिरहितं जानन् नरो मुच्यते ॥

क्वचिज्जातं विश्वं क्वचिदपि विलीनं सुरगणैः क्वचित् स्तब्धं दीनं क्वचिदपि च नादैकविवशम् ।
षडूर्मिप्राविद्धं त्वयि तु भगवन्नब्धिविलसत्तरङ्गा द्योतन्ते न हि तु च[1] भवांस्तद्गतगुणः ॥ ४० ॥

स्वात्मानमानन्दमखण्डबोधं ईशानमाद्यं जगतस्तस्थुषश्च ।
सर्वेन्द्रियानन्तगुणैर्विहीनं तत्सत्यमानन्दमजं महेश्वरम् ॥ ४१ ॥

त्वय्येवान्तः प्रविशति जगन्नामरूपैर्विचित्रं गतोपाधिद्वन्द्वं पवनरहिताब्धिप्रतिनिभे ।
यथा नद्यः सर्वाः शरणगतयः सागरमहो तथा नाम्ना रूपैः परमपुरुषे त्वय्यखिलदे ॥

यथोर्णनाभिः सृजते तन्तुजालं जगद्विचित्रं सृजसि त्वमीश ।
अणोरणुस्त्वं महतो महीयान् अथापि च क्षरमथो नदन्ते ॥ ४३ ॥

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
ऋतं सत्यममृतं परं ब्रह्म धाम ज्ञानान्नान्यदस्तीह पन्थाः ॥ ४४ ॥

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं नमाम्यहम् ॥ ४५ ॥

ये त्वा जगज्जगत्याहितं पदं यदेतद्विदुरमृतास्ते भवन्ति ।
त्वदज्ञानादिह जात्यादिधर्मैः निबध्नते जना दुःखिताः सदा ॥ ४६ ॥

ऋचो अक्षरे परमे त्वा महेशमखिलमाकाशसधर्मकं विभुम् ।
त्वां यो न वेद किमृचा करिष्यति साम्नाऽथवा यजुषाथर्वणैर्वा ॥ ४७ ॥

हृदा पश्यन्ति मनसा मनीषिणो जानन्ति त्वां प्रथमं कवीनाम् ।
अक्षैव तद्ब्रह्मग उज्जभार स्वाविद्यया संसरसे च मुच्यसे ॥ ४८ ॥

---

१ भगवान् C

शुद्धं बुद्धमबुद्धिबोधजनकं बद्धैकमोक्षप्रदं सिद्धं साध्यगणाख्यविद्धशरकं आत्मैक्यबोधे रतम् ।
ओंकारात्मककार्मुकं निजसुखामोदैकमुष्टिं ध्रुवं तं ब्रह्माखिलकोशकाशमनिशं शम्भुं परं धीमहि ।

श्रद्ध्यात्र स जातु धीरहृदयो मामन्तको मारये-
दित्युक्त्या गुरुवाक्यबोधजनितानन्दोज्झिताहंकृतिः ।
आत्मानं तमसः परं मृगयतां शीर्णेष्वशीर्णं सदा
देहाक्षादिषु भूतभव्यगणनाकालेऽपि दृश्येऽपि च ॥ ५० ॥

उद्गीथप्राणनामैर्मधुदहरपर्यङ्कतपनैः तथा वह्नीन्द्राद्यैः श्रुतिशिखरविद्योत्थसुपथा ।
अतः पारंपर्यक्रममकृतवाक्यैर्विधियुतैर्महेशाज्ञाबद्धैर्न भवति हि साक्षात् परःशिवः ॥ ५१ ॥

चतुर्जालं कोशं तव च विहितं मृत्युरहितं शिरोधर्मस्तेऽद्य प्रतिसुरशरीरो विधिहनुः ।
तव ब्रह्म क्षत्रं भवति भगवन्नोदनमिदं यमस्तूपादंशः क इह वेत्ता गुणगणम् ॥ ५२ ॥

आयुर्दाता त्वमेव श्रुतिशिखरगतापारमाहात्म्यजाल
एकस्त्वत्तोऽभिजातं जगदिदमखिलं स्रष्टुकामो विधिश्च ।
विश्वं चाप्येति चान्ते त्वयि तु भगवन्नायुषेऽहं प्रपद्ये
मृत्योर्भीतः सदा त्वां घृतमधुकृतया धारया तर्पयामि ॥ ५३ ॥

नान्तःप्रज्ञमिदं तथा च न बहिःप्रज्ञं न नैवोभयं
न प्रज्ञानघनं विशेषजनकं चानन्दबोधात्मकम् ।
अदृश्यं न ग्राह्यं शिवममयमावादिरहितं
असारं सारं तज्जनितभवभावादिकारणम् ॥ ५४ ॥

उत्फुल्लामलरक्तपद्मसमितं कोशासनोत्थप्रभं ज्योक् पश्येम विचित्रवर्णमधुना सौवर्णमत्यादरात् ।
उद्यन्तं भगवन्तमाशु तमसां नाशैककान्ति सदा जीवेम प्रतिवासरं द्रविणदं त्वामाश्रिताः सर्वदा॥

यतो ब्रह्मविष्ण्वीशरुद्रेन्द्रपूर्वा जगच्चापि नित्यं विभो संप्रसूताः ।
अहो ध्यायितेध्यानमध्ये हृदन्तर्महापद्मसद्मो भवव्योमगः शम्भुरीशः ॥ ५६ ॥

तमेवं विजानीयमात्मानमेकं किमन्याभिर्वार्ताभिर्दुस्तर्कजालैः ।
निसर्गा विसर्गा विभो दुःखवार्ता विमुञ्चन्तु मुञ्चन्तु दुःखैकतापम् । ५७ ॥

ध्येयो महेशः श्रुतिजातकीर्तिः विशिष्टः शिवः शङ्करश्चादिकर्ता ।
समास्तं शिखायास्तथा वाक्यजालं किमन्यत्र वाक्यादिशङ्कावकाशः ॥ ५८ ॥

न तत्र सूर्यः प्रतिभाति सोमो वह्निर्न ऋक्षाणि तथा हि विद्युत् ।
त्वद्भासनाद्भाति विचित्रमेतत् त्वं ज्योतिषां ज्योतिरसि प्रसिद्धः ॥ ५९ ॥

विश्वं हि भूतं भुवनं विचित्रं अनेकधा जातमहो दिगीश्वरैः ।
न जायमानं विधिभिर्महेश रुद्रस्त्वमात्मन भगवन् प्रसीद ॥ ६० ॥

ईशानमाहुरमृतस्य [1]विष्पति त्वत्तेजसः पादमिदं जगद्गतम् ।
यतो विष्णुर्महिमा संबभूव ततो विराट् पुरुषश्च क्रमेण ॥ ६१ ॥

न कर्मणा न प्रजया धनेन न विद्यया तपसा वाऽपि शम्भो ।
चित्तस्य संकल्पविकल्पजालत्यागेन त्वां संश्रयन्त्येव धीराः ॥ ६२ ॥

वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयो भक्तिभावाः ।
ते ब्रह्मणो लोकमवाप्य धीराः तस्मान्तकाले प्रविशन्ति च त्वाम् ॥ ६३ ॥

यस्मिन्निदं संच विचैति सर्वं यस्मिन् देवा अधिविश्वे निषेदुः ।
तदेव भूतं तदु भव्यमाहुः तदक्षरं त्वां श्रुतयो वदन्ति ॥ ६४ ॥

त्वया वृतं खं च दिवं महीं च त्वयादित्यस्तपति तेजसेद्धः ।
अन्तः समुद्रे कवयो निचिक्युः त्वां दुर्दशं गूढमनुप्रविष्टम् ॥ ६५ ॥

दृष्ट्वा विकोत्सङ्गगतं च बालं शूली भवल्लोलविलोचनान्तैः ।
स वज्रजंभारिकरं महेश संस्तंभयद्यो भुवनानि सप्त ॥ ६६ ॥

दहनपवनशक्रा यक्षरूपं महेशं तृणमपि च तदग्रे दग्धुमादातुमैच्छन् ।
निवृत्तभावा भगवन्तमारात् उमाप्रसादेन विदग्धमोहाः ॥ ६७ ॥

या चोमा भगवंस्तदेकवसतिर्यस्याः कृपालेशतो
जातं विश्वमिदं विचित्रजनकं या सा स्वयं मोहयेत् ।
यां देवा मुनयोऽप्यमी स्तुतिशतैः स्तुत्वा त्वदीयं शुभं
विज्ञानं समवाप्य मुक्तकरणा मुक्तिं प्रयान्त्येव ते ॥ ६८ ॥

ईशानस्त्वं सर्वविद्याधिनाथस्त्वं वेदादौ स्वर एको महेशः ।
तस्य त्वं वै प्रकृतौ संप्रलीनः प्राणो देवः प्रणवस्त्वं महेश ॥ ६९ ॥

---

१ विशां पतिस्त्वं तेजसः C

सदैव त्वा सन्तं न विदुरमराः केवलमहो त्वमात्मा ह्यकस्य प्रतिहतगुणो देव ह्यतथा ।
चरस्येको नाडिष्वमितपरमानन्दमधुरो हृदा पश्यन्तीशं यमितकरणास्ते हि मनसा ॥ ७० ॥

यो वै रुद्र इति श्रुतिः प्रतिपदं वक्ति त्वदीयांशकं
चन्द्रेन्द्रानलभास्करा हरिविधिस्कन्दा गणानां पतिः ।
एवं त्वन्मयमेतदेव जगति तज्ञादिशब्दैः [1]स्तुतिः
निर्वक्ति प्रमथाधिनाथ सुतरां त्वां देवदेवं सदा ॥ ७१ ॥

वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात् ।
सर्वाणि रूपाणि सदैव शम्भो कृत्वाभितिष्ठस्यथ पद्मजेन ॥ ७२ ॥

स्तुतोऽसि सृष्टिप्रथनाय चाग्रे इन्द्रेण चाशामधिपैश्च सर्वदा ।
ज्ञात्वा परे त्वां भवने वीतशोकाः नान्यः पन्था विद्यतेऽयनाय ॥ ७३ ॥

त्वन्मन्यवे करजातधनुःशरणां हेतिं तथैव शरधिं नमसां गणैश्च ।
वक्ति श्रुतिः प्रमथनाथ तवोरुभावं सर्वात्मकं बहुमयात् किल वेदवेद्य ॥ ७४ ॥

हिरण्यादिनामैः भवाद्यैश्च सोमैः शिवायेति च त्वां महेशं नतोऽस्मि ।
इन्द्रं मित्रं वरुणमनलं पङ्कजाज्जातमेकं नानारूपं हरिमिति मखे त्वां ह्वयन्तेऽध्वरेशम् ॥

तेषां तत्तच्छ्रुतिभिः परिपिबसि महासोममीशान तुष्टः ।
सार्धं कामैश्च पुष्णास्यखिलभवहरो ब्राह्मणान् सोमपूतान् ॥ ७६ ॥

त्वं वेदेषु प्रथितो विप्रवर्यो मनुष्योहं ब्राह्मणश्चाप्तकामः ।
तस्मात् सोमो ब्राह्मणानां हि राजा वेदेषु त्वं प्रथितश्चोपवीती ।
तस्माच्छ्रेयस्त्वत्पदाब्जं महेश ॥ ७७ ॥

द्वैधीभावैरनेकैः श्रुतशतविहितैः पूर्वपक्षैरनेकै-
र्नानादेहैस्त्वयीशे उपवसनपराः कल्पयन्त्यद्वितीयम् ।
देहैर्भूतेन्द्रियोत्थैर्जनिशतविततैः कर्मसंकल्पजातैः
सर्वैर्भिन्नस्त्वमात्मा भवसि श्रुतिगतैर्नेतिनेत्यादिवाक्यैः ॥ ७८ ॥

शुक्तिस्त्वं रजतं जगत् त्वयि सदा भातीदमत्यद्भुतं
त्वज्ज्ञाने सति भेदभानमखिलं त्वय्येव संलीयते ।

---

१ श्रुतिः C

यस्मिन् ज्ञाते हि श्रुत्या मननपरिगता वादयुक्त्या गुरूक्त्या
वेदान्तार्थैकसक्त्या त्वमसि भवशतोच्छेदकः साधकानाम् ॥ ७९ ॥

प्रज्ञानं ब्रह्म एवायमात्मा ब्रह्म पुच्छं प्रतिष्ठ-
त्यहं ब्रह्मास्मीति श्रुतिशिखरगतैस्तत्त्वमस्यादिवाक्यैः ।
तत्त्वंशब्दार्थभेदव्यपगमनियता ये यतन्ते यतीन्द्रा-
स्तेषां कोटीशतेषु त्वमसि भवशतोच्छेदकस्त्वन्तरात्मा ॥ ८० ॥

तव ज्ञानमेकं भवच्छेदहेतुः श्रुतिश्चाह नान्यः पथेत्याह सत्यम् ।
भवद्भक्तिलभ्यं हि तद्ज्ञानमिष्टं न तत् श्रवणेनापि लभ्यं कदाचित् ॥ ८१ ॥

यद्वन्मद्यपपित्तचित्तमनिशं नाङ्गानि संवेत्त्यहो
तद्वद्देहचतुष्टयं च मनसः संकल्पचित्तोत्थितम् ।
त्वामानन्दघनं महोदधिमिव प्राप्तो यथा शीकरः
नाम्ना रूपविनिष्टः स तु विधमनसा तद्ब्रह्म न ब्रह्मवित् । ८२ ॥

त्वामात्मानमखण्डबोधसहजानन्दैकवृत्तिस्फुर-
च्चिन्तावृत्तकथां च तत्र तनुते कर्पूरमग्निप्रभा ।
दग्ध्वा नाशमुपैति तद्वदधुना चित्तं महाकामदं
सा वृत्तिः परमार्थदाननिपुणा तद्ब्रह्म न ब्रह्मवित् ॥ ८३ ॥

न मुक्तिर्न बन्धोऽद्य ईशान शम्भो न चापारवेदान्तमार्गः कुतो वा ।
न भेदो न चाद्वैतगन्धादिलेशो नचाज्ञानविज्ञानशङ्का कुतो वा । ८४ ॥

अहं विश्वं सर्वं भुवनमधुना वेदवचसा गुरूक्त्या त्वद्भक्त्या अभवमखिलानन्दकुहरः ।
अहो सत्यारत्निप्रमितमतिदेहादिषु मुधा अहं मानापन्नो भवशतजसंकल्पवशगः ॥

शून्ये वा विपिने महागिरितटे सामानि गायन्नसौ
आहावुहावु इति त्रिरुन्नतपदं तत्त्वंपदैर्वर्जितः ।
जातानन्दभरः स एव त्वमसि तद्ब्रह्म न ब्रह्मवित्
लिङ्गान्मे स विनृत्यति प्रतिदिनं कौतूहलैरन्वितः ॥ ८६ ॥

यदाकाशकोशं जगच्चक्षुयुक्तं विमूढ यदा चर्मवद्वेष्टयन्ति ।
तदा त्वां महेशं ह्यविज्ञाय दुःखैर्विमुक्ता भविष्यन्ति सत्यं लिसत्यम् ॥ ८७ ॥

एवं सदात्मानमसंशयेन यो वेत्ति धीरः श्रुतितर्कयुक्त्या ।
स त्वामनु त्वं तमनुप्रविष्टः तस्यैव शान्तिर्नेतरस्याऽऽह वेदः ॥ ८८ ॥

वामदेवः –

भवत्प्रसादलेशतः सुजात वेदवाक्यतः भवन्ति जन्मनिर्वृता न बोधतः परं पदम् ।
न वेदान्तबोधैर्न चापारवाक्यैः गुरूक्त्यादिसिद्धान्तराद्धान्तवाक्यैः ॥ ८९ ॥

श्रुतिश्रावणैः शास्त्रवार्तादिगर्तैः महावर्तजातैः शिरोभ्रान्तिभूतैः ।
अगन्धमस्पर्शमरूपमद्भुतं अणोरणुं त्वां महतो महान्तम् ॥ ९० ॥

एवं त्वमज्ञातुमशक्तभावाः उमासहायादिगुणैर्भजन्ति ।
अलिङ्गलिङ्गं परमीशितारं आत्मानमानन्दमगाधबोधम् ॥ ९१ ॥

तथापि लिङ्गेषु समर्चयन्ति बिल्वीदलैः कोमलपल्लवैस्त्वाम् ॥ ९२ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे वामदेवकृतोपनिषत्स्तुतिनिरूपणं नाम षड्विंशोऽध्यायः ॥

---

## ॥ सप्तविंशोऽध्यायः ॥

---

ईश्वरः –

वामदेवस्तुतिं श्रुत्वा ते सर्वे मुनिसत्तमाः । सर्वोपनिषदां सारं श्रोतॄणां ज्ञानबोधदम् ॥ १ ॥
ऊचुः प्राञ्जलयः सर्वे मां गोकर्णेश्वरं तदा । दक्षिणामूर्तिरूपेण संस्थितं जगदंबिके ॥ २ ॥

मुनयः –

वामदेव महायोगिन् त्वत्तो ज्ञानवतां वर । शम्भो मुनिसहस्रेषु कश्चित् त्वद्ज्ञानभाजनम् ॥ ३ ॥
भविष्यति महादेव इत्युक्त्वा छिन्नसंशयाः । उद्दालकोऽपि देवेशि मत्तो लब्ध्वात्मनिर्वृतिः ॥
प्रणम्य मुनिभिः सार्धं गोकर्णेशं ययौ तदा । वामदेवो महायोगी नत्वा मां परमेश्वरम् ॥ ५ ॥
कौपीनसंवृतो देवि सदा भस्मविभूषणः । मन्मयं जगदालोक्य ययौ स्वैरगतिर्मुनिः ।
गोकर्णेशं समाराध्य विमुक्ता बहवो जनाः ॥ ६ ॥

देवी –

वामदेवस्तुतिः पुण्या वामदेव श्रुताऽधुना । नातः परतरा देव श्रुतीनां सार एव हि ॥ ७ ॥

शम्भो ज्ञानप्रदा नित्यं स्वद्बोधानन्ददायिनी । किं वाऽन्यत् क्षेत्रमस्तीति भूलोके तव सिद्धिदम् ॥
तद्वदस्व महादेव संप्रीतास्मि कथारसैः ।

सूतः —

शिवोऽम्बिकावचः श्रुत्वा प्रहृष्टः प्राह तां तदा । ९ ॥

शिवः —

शृणु देवि प्रियं नित्यमस्ति क्षेत्रवरं मम । यत्रैतद् ज्ञानममलं दत्तं स्कन्दाय शङ्करि ॥ १० ॥
श्रीशैले हि महादेवि मत्पुत्रस्य तपस्यया । तुष्टोऽहं तस्य च स्तुत्या ज्ञानं दत्तं मयाम्बिके ॥ ११ ॥

देवी —

कुत्र श्रीशैलसंज्ञोऽस्ति भूधरस्तवतिप्रियंकरः । वद तन्महिमानं मे स्कन्दे तुष्टो भवान् कथम् १२॥
तत्कथां श्रोतुमिच्छामि वद तन्मह्यमादरात् । इति श्रुत्वाम्बिकावाक्यं प्राह देवो घृणानिधिः ॥

ईश्वरः —

श्रीशैलोऽपि च देवेशि निवासो मम विश्रुतः । श्रीशैलेश्वरलिङ्गात्मा तत्र नित्यं वसाम्यहम् ॥
भ्रमराम्बेति विख्याता गौरि त्वं तत्र संस्थिता । तत्रापि बहवः शैवाः श्रीशैलेशार्चने रताः ।१५॥
भस्मरुद्राक्षसंवीतास्त्रिपुण्ड्रोज्ज्वलफालकाः । रुद्रलिङ्गार्चनरता रुद्राध्यायजपादराः ॥ १६ ॥
पञ्चाक्षररता नित्यं पञ्चास्यध्यानपूर्वकम् । श्रीशैले निवसामीशे गणवृन्दैश्च संवृतः ॥ १७ ॥
तत्र त्वया तपस्तप्तं ब्रह्मविष्णुमुखैः सुरैः । इन्द्राद्या विबुधाः सर्वे तप्यन्ति परमं तपः ॥ १८ ॥
अन्यैर्मुनिवरैर्देवि गौतमात्रिपराशरैः । तपःसिद्धिकरं स्थानं मम श्रीशैलमुत्तमम् ॥ १९ ॥
अत्र जप्तो महादेवि मन्त्रः कोटिगुणो भवेत् । अत्रान्नं ये प्रयच्छन्ति स्मृत्वा जपतिमादरात् ॥
अन्नं मत्प्रीतये देवि बहु कुर्वीत च श्रुतिः । ग्रामवं भोजयित्वैकं सन्तोषयति मां सदा ॥ २१ ॥
कृष्णा नाम महापुण्या नदी सागरगामिनी । भित्वा श्रीशैलमूलं मे स्नातानामघहारिणी ॥
सन्तर्प्य पाथसा तस्याः पितॄन् देवानृषीनपि । पितरस्तस्य तृप्ताः स्युर्मल्लोके निवसन्ति ते ॥
तत्पत्नीरैर्बिल्वैर्मां समाराध्यातिभक्तितः । मदालयस्य शिखरं दृष्ट्वा नैवाप्नुयाज्जनुः । २४ ॥
शिवलोकप्रियान्मर्त्यः श्रीशैले निवसेच्च यः । प्रातःसङ्गवमध्याह्नसायाह्नेष्वर्च्य शङ्करम् ॥ २५ ॥
बिल्वपत्रैर्महादेवि मुक्तश्चाज्ञानतो भवेत् । अश्वमेधादयो यज्ञाः येन साङ्गाः सदक्षिणाः ॥ २६ ॥

कृतास्तेनैव लभ्येत श्रीशैलेशस्य दर्शनम्[1] । नातप्ततपसो देवि श्रीशैलेश्वरदर्शने ॥ २७ ॥
मतिर्भवति तस्यैव येन तप्ततपोऽधिके । अद्यापि ब्रह्मविष्ण्वाद्या मुनयश्च तथाऽपरे ॥ २८ ॥
पश्यन्ति नियतं गौरि तल्लिङ्गं द्रष्टुमिच्छवः । रुद्राध्यायावर्तनैश्च पञ्चाक्षर जपादिभिः ॥ २९ ॥
शिवलिङ्गार्चको यः स्यात् भूरिभाग्येन शांभवि । यो भस्मनिष्ठः सततं रुद्राक्षकृतकङ्कणः ॥३०॥
त्रिपुण्ड्रधारी सततं तस्य मे दर्शनं भवेत् · प्राप्य नारं वपुरिदं दृष्ट्वा श्रीशैलनायकम् ॥ ३१ ॥
तज्जन्म सफलं गौरि नो चेज्जन्म निरर्थकम् । शतायुः पुरुषो यो हि जन्ममध्येऽपि मां शिवम् ॥
श्रीशैलेशं सकृद् दृष्ट्वा मुच्यते भवबन्धनात् । अन्यत्रापि मृतो देवि मम लोके वसेच्चिरम् ।३३।
श्रीशैले च मृतो जन्तुर्न पुनर्जन्मभाग्भवेत् । अत्रापि देवि लिङ्गानि श्रीशैले सन्ति तान्यपि ॥
पूजितानीह मुक्तिः स्याद् दृष्टान्यपि मनोरमे । बिल्वपत्रैः सदा देवि पुष्पैर्दूर्वाङ्कुरैरपि ॥ ३५ ॥
उत्फुल्लपद्मैरमलैः फुल्लनीलोत्पलैरपि । भूधराराधितं लिङ्गं त्रिपुरान्तकसंज्ञितम् ॥ ३६ ॥
तल्लिङ्गदर्शनेनैव सर्वपापक्षयो भवेत् । दृष्टे लिङ्गे महादेवि मुक्तो भवति शङ्करि ॥ ३७ ॥
पूर्वं त्रिपुरसंहारं कृत्वा देवैस्तथा स्तुतः । त्रिपुरान्तकलिङ्गस्थः श्रीशैले सर्वकामदे ॥ ३८ ॥
घण्टाकर्णेश्वरं लिङ्गमत्रास्ति भुवनेश्वरि । घण्टाकर्णगणेशेन पूजितं मुक्तिदायकम् ॥ ३९ ॥
यस्तल्लिङ्गं सकृद् दृष्ट्वा पूज्य बिल्वैश्च कोमलैः । मुक्तिकान्ता कराक्रान्ता तस्य देवि भविष्यति ॥

तत्रास्ति च सुधाकुण्डं सुधास्वादुजलं शिवे ।
तस्मिन् कुण्डे सकृत् स्नात्वा न याम्यां यातनां व्रजेत् ॥ ४१ ॥

घण्टाकर्णमहालिङ्गं दृष्ट्वा यः स्तोष्यति प्रिये । तस्य मुक्तिं ददामीशे या देवैरपि दुर्लभा ॥
अनेन स्तोत्रवर्येण घण्टाकर्णस्तदास्तवीत्[1] ।

घण्टाकर्णः —

विश्वेश प्रमथाधिनाथ पुरहन् श्रीशैलगोले स्थित
पापानङ्गपतङ्गसङ्गजनितानन्दाङ्गविद्युत्प्रभ ।
त्वन्नामान्यनिशं वदामि भगवन्नन्यानि नामानि मे
घण्टाकर्णोऽहमीश त्वयि शिव सततं भक्तिरस्त्वद्य शम्भो ॥ ४३ ॥

---

१ येन मोदकदानानि ब्रह्माण्डादीनि सत्तमे ।
कृतानि तस्य देवेशि श्रीशैलेश्वरदर्शनम् । इति पादद्वयमधिकं C कोशे

१ इदमर्धं C कोशे नास्ति

अथान्यदपि देवेशि लिङ्गं तच्छिखरेश्वरम् । तच्च लिङ्गं सकृद् दृष्ट्वा बिल्वैः संपूज्य मुक्तिभाक् ॥
विभूतिकुण्डं तत्रास्ति स्नानात् पानावगाहनात् । पापनाशकरं देवि सर्वसौभाग्यदायकम् ॥
हाटकेशं तथान्यत् हि लिङ्गमस्त्येकमुत्तमम् । संपूज्य हाटकेशं तु बिल्वैर्मुक्तस्तथाम्बिके ॥ ४६ ॥
हाटकाख्यं महाकुण्डं तल्लिङ्गाग्रे महेश्वरि । तत्र स्नात्वा स गौरीशसेवया गणपो भवेत् ॥ ४७ ॥
स तु लिङ्गमयो देवि नानाकुण्डविराजितः । श्रीपर्वतः श्रिया युक्तो नानालिङ्गविराजितः ॥
भ्रमरांबा च गौरि त्वं सदा तच्छिखरे स्थिता । तव पादांबुजद्वन्द्वदर्शनान्मुक्तिभाङ् नरः ॥
श्रीशैलेशोऽहमीशानि तत्तुङ्गशिखरे स्थितः । ब्रह्मविष्ण्वादिभिर्देवैर्गणेन्द्रैरपि सेवितः ॥ ५० ॥
तत्र मां नियमाद् दृष्ट्वा सर्वपापैः प्रमुच्यते । पुरा श्रिया तपस्तप्तं तत् शृणुष्वाम्बिके मुदा ॥
यदाऽनङ्गो मया दग्धः श्रियः पुत्रो महेश्वरि । तेन दुःखेन सन्तप्ता भस्मरुद्राक्षभूषणा ॥ ५२ ॥
पञ्चाग्निनिरता देवी पञ्चाक्षरपरायणा । [1]लक्ष्मीः सन्तपदस्युग्रं वर्षाणां शतकं शिवे ॥ ५३ ॥
दत्तं च दर्शनं देवि तस्याः कालान्तरे मया । मां दृष्ट्वा नियता गौरि तुष्टाव नियता तदा ॥

लक्ष्मीः —

शर्वरीरमणखण्डमौलिनं शर्वरीकृतविहारहारिणम् ।
शर्वसर्वपतिमाश्रये सदा दूर्वया तु सततं समर्च्यसे ॥ ५५ ॥

कुंभिकुम्भदलनोज्ज्वलत्पदं कुंभिवक्त्रवृतमान्यपुत्रकम् ।
कुंभसंभवमुनीन्द्रपूजितं कुंभिभिन्नटनमीशमाश्रये ॥ ५६ ॥

[2]इत्थं स्तुत्वा हि मां लक्ष्मीस्त्वामस्तौषीत् तदाम्बिके ।
अमरीकबरीभारचञ्चरीकैः मुखरितवेदशिरोभिरीड्यपादाम् ।
सुखकरकिन्नरमौलिपुष्पजालैः भ्रमराम्बां प्रणतास्मि शङ्करीं ताम् ॥ ५७ ॥

इत्थं स्तुत्वा तदा मां त्वां ययाचे वरमुत्तमम् ॥ ५८ ॥
अनङ्गः कोपतस्तेऽद्य त्वया दग्धो महेश्वर । साङ्गतां प्राप्नुयाच्छंभो एष देयो वरो मम ॥
तदा लक्ष्म्या वचः श्रुत्वा तामवोचं तदाम्बिके ।

ईश्वरः —

त्वत्कटाक्षेण देवेशि पुनरुज्जीव्यतां स्मरः । पुत्रिणीयं भवेल्लक्ष्मीः सदा मुदितमानसा ॥ ६० ॥

१ ततापं तप अत्युग्रं C   २ इदमर्धं C कोशे नास्ति

इत्थं मद्वचनात् त्वं हि त्वत्कटाक्षोत्थकोणतः । अनङ्गः साङ्गतां नीतो विबभौ स यथापुरम् ॥
ऐक्षवं कार्मुकं बिभ्रत् पुष्पबाणांस्तथाऽम्बिके । रत्या सह तदा गौरि मां तुष्टाव प्रहृष्टधीः ॥ ६२॥

मन्मथः —

दुग्धाब्धिप्रभवप्रचण्डउरगक्ष्वेडव्यथासंहृतौ
त्वामेकं ददृशुर्निलिपमुखराः सोत्कंपगात्राः शिवम् ।
तत्पानारुणलोलनेत्रयुगलं वीक्ष्याकृतार्थस्मितं
शम्भो शङ्कर शाश्वतेति बहुधा त्वां तुष्टुवुः सुस्तवैः ॥ ६३ ॥

इत्थं स्मरेण देवेशि श्रीशैलेशः स्तुतोऽस्म्यहम् । लक्ष्मीः पुत्रं तदा वीक्ष्य साङ्गमुद्यतकार्मुकम् ॥
प्रहृष्टा साऽभवद्गौरि वृतश्चापि तया वरः ॥ ६५ ॥

लक्ष्मीः —

मन्नामा पर्वतश्चायं भवत्वद्य महेश्वर । तस्यै दत्तो वरो देवि तन्नामरूपापनाय मे ॥ ६६ ॥
कृतः श्रीपर्वतो नाम्ना सापि पुत्रयुता ययौ । पुरा दैवासुरे युद्धे तारकादीन् महाबलान् ॥ ६७॥
न्यपातयत् शक्तिपातैः कुमारो मेऽम्बिके तदा । नानावाहनसंपन्नान् दैत्यकोटिसमावृतान् ॥
निहत्यैव च राजानं त्रिविष्टपनिविष्टितम् । चकारातिबलो देवि तारकारिः सुरासुरान् ॥ ६९ ॥
तदा काण्वेन शप्तः स भव त्वं मोहमास्थितः । तच्छापविनिवृत्त्यर्थं श्रीशैलं मे समागतः ॥ ७० ॥

देवी —

कुमारो मे महादेव कथं काण्वेन शापितः । तद्धेतुं विस्तरेणाद्य मह्यं कथय शङ्कर ॥ ७१ ॥

ईश्वरः —

शूरपद्मादयो दैत्यास्तारकाद्या महाबलाः । शस्त्रास्त्रैः शक्तिभिर्घोरैर्निहता दानवोत्तमाः ॥ ७२ ॥

तान् सर्वान् निहतान् शिष्यान् काण्वो दृष्ट्वाऽतिकोपनः ।
शशाप षण्मुखं गौरि मोहयुक्तो भवेति तम् ॥ ७३ ॥

द्विजिह्वः फणिरूपश्च सर्वेषामिष्टदायकः । स्कन्द षष्ठीपराणां त्वं साक्षात् कामप्रदो भव ॥७४॥
सा तिथिस्ते प्रियतमा कृत्तिकाभं च ते प्रियम् । एवं शशाप काण्वोऽसौ षण्मुखं केकिवाहनम् ॥
तदा काण्वस्य तच्छापं स्वीचकार कृपाबलात् । लोकानामुपकाराय कुण्डलीशोऽभवत् तदा ॥
ग्रस्तं स्कन्दं तदा ज्ञात्वा महाक्रोधान्मया तदा । काण्वो ग्रस्तस्तदा गौरि जठरे मय्ययोगतः ॥
तदा मज्जठरे तिष्ठन् तुष्टाव प्रणतस्तदा ॥ ७८ ॥

काव्यः —

कञ्जजकन्धर कञ्जनेत्रकृतपूज्यशिर कञ्जमित्रकृतनेत्र विचित्रां दुर्गतिं मम विनाशय शम्भो ॥

वह्निपुत्रगणवसुसोमकैः शूरमारजनकाब्जजपूज्य ।
पापतापहृदयेन कंपितं देवभूप सततं दयस्व माम् ॥ ८० ॥

इत्थं तेन स्तुतो देवि विसृष्टः शुक्रतो मया। [1]स वै शुक्र इति प्रख्या तस्याऽभूद्देवि चोत्तमा ॥
स्कन्दः श्रीशैलमागत्य मां प्रणम्याम्बिके तदा। ततांप च तपो घोरं वायुभक्षः सुतस्तव ॥ ८२ ॥
ज्वलत्पञ्चाग्निमध्यस्थो भस्माभ्यक्तोऽर्चयन् हि माम्। प्रजपन् शतरुद्रीयं दृष्टो ब्रह्मादिभिस्तदा ॥
तत्तपःक्षुब्धहृदयाः प्रार्थयन्ति स्म मां सुराः। श्रीशैलेशं समभ्यर्च्य बिल्वपत्रैश्च कोमलैः ॥ ८४ ॥
देवास्तुष्टुवुरीशाने भ्रमराम्बापतिं शिवे ।

ब्रह्माद्याः —

उपेन्द्रविधिकारणं निगमरमौलिसंचारिणं कुरङ्गकिणधारिणं नमकनामगण्यं गुणम् ।
भजामि भवहारिणं मुनिसुगदिमौलिस्फुरत् सरोरुहगणारुणं शिवदचरणं कालहरणम् ॥ ८५ ॥

फणीन्द्रकृतकङ्कणं धृतत्रिपुण्ट्रफालेक्षणं सुशैवकृतरक्षणं गिरिसुताब्जवक्त्रेक्षणम् ।
यमस्मरपुरान्धकप्रबलदक्षसंशोषणं भजाम गिरिधारिणं सुकृतराशिसंपूरणम् ॥ ८६ ॥

इति स्तुत्वाम्बिके देवाः श्रीशैलेशं तदा हि माम्। तत्क्षणादाविरासं च गणेन्द्रैरमरैस्त्वया ॥
स्कन्दपार्श्वं तदा गत्वा समुपस्पृश्य तं तदा। अजिघ्रं तस्य मूर्धानं तमवोचमहं प्रिये ॥ ८८ ॥
मत्करस्पर्शमात्रेण हित्वैहं रूपमम्बिके। मुदा शक्तिधरः स्कन्दो मां प्रणम्यास्तुवत् तदा ॥

स्कन्दः —

सुन्दरवरमन्दरगिरिकन्दरचर कुन्दजसुमसुगन्धमधुरबन्धुरतर इन्दुजकरनन्दितकुमुदाकाहारजमकरन्दरपित पन्नगजननन्दनकरवन्दित मुनिवृन्दजकृतवेदवचनबन्दिजगुणतुन्दिल मम मानसवरनन्दित शिव पालय माम् ॥ ९० ॥

उन्दुरकृतवाहनसुतसिन्दुर भव कृत्तिवसन तिन्दुकसुमपूजितपद इन्दुनिवहबिंबितकरचुंबितजटिलोत्तमपूजन जननन्दनविदिशान(?) नन्दिवाहन परिपालय माम् ॥ ९१ ॥

काव्यशापान्महेशान नष्टज्ञानोऽस्मि शङ्कर। तद् ज्ञानं देहि मे देव स्थानं मेऽद्य दिश प्रभो ॥

---

१ सर्वै शुक्रो महादेवि तस्याख्याभवदुत्तमा । C

तदा स्कन्दवचः श्रुत्वा ब्रह्मादीनां च शृण्वताम् । अवोचं वेदवाक्योत्थं ज्ञानं स्कन्दाय पार्वति ॥

ईश्वरः —

अनाख्येयमिदं गुह्यं यस्य कस्यापि देहिनः । अहं मां च परं ब्रह्म निरुपाधिर्निरीश्वरः ॥ ९४ ॥

ततः सर्वमिदं जातं दृश्यते श्रूयते च यत् । मय्येव संस्थितं विश्वं मय्येव लयमेष्यति ॥ ९५ ॥

अगन्धमरसस्पर्शमशरीरेन्द्रियोज्झितम् । मामात्मानं च यो वेद मद्य एव विमुच्यते ॥ ९६ ॥

मम कार्यं न वै किञ्चित न करोमीह किञ्चन ।
न मत्समोऽस्ति कोऽप्यन्यो नाधिको दृश्यतेऽपि वा ॥ ९७ ॥

ममैव शक्तिर्विविधा यया व्याप्तमिदं जगत । अणोरणीयसां चाय महतोऽपि महत्तरः ॥ ९८ ॥

न च मां विदुरन्यानि अहं वेदेदमेव हि । सत्यं ज्ञानोऽहमानन्दं विश्वं विश्वाधिको ह्यहम् ॥९९॥

न मत्तोऽस्ति पृथक् किञ्चित नेह नानास्ति किञ्चन ।
मामविज्ञाय दुःखेषु निमज्जन्त्यखिला जनाः ॥ १०० ॥

मां विज्ञाय न वै कश्चिन्मोमुह्यति न वै नरः । भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ॥१०१॥

अदाह्योहमशोष्योऽहं देहजालेषु सत्तम । नाहं स्त्री नैव पुरुषो न तिर्यक् स्थावरोऽपि वा ॥१०२॥

विभान्ति यान्ति उद्यन्ति चन्द्रेन्द्राग्निलभास्कराः । मद्भासा भासते लोको जडोऽयं काष्ठसन्निभः ॥

ऋतमात्मा परं ब्रह्म सत्यं ज्ञानोऽहमीश्वरः । यो मां वेद स सर्वं हि वेदेत्येव परा श्रुतिः १०४॥

एवं न कर्मणा प्राप्यं पूजया न धनेन वा । न चैवोपासनाभिश्च ज्ञानादेव हि केवलम् ।१०५॥

एतद्गुह्यतमं ज्ञानं नाख्येयं यस्य कस्यचित् । प्रियपुत्राय ते दत्तं शिष्याय च हिताय च ॥

मां प्रणम्य तदा स्कन्दो मुदा तुष्टाव हृष्टधीः ॥ १०७ ॥

स्कन्दः—

शशिखण्डशिखण्डमण्डनं विधिमुण्डामलषण्डकण्ठमालम् ।
धृतनागसुकुण्डलं भजे हृतचण्डांशुसुतप्रचण्डगर्वकाण्डम् ॥ १०८ ॥

अखण्डबोधाय सुचण्डदीधितिप्रचण्डनेत्रं कृतताण्डवं सदा ।
भजामि वेतण्डमुखस्तुतं मुदा सुमेरुकोदण्डधराखिलाण्डगम् ॥ १०९ ॥

सुचण्डबाहुं रणचण्डविक्रमं सुपुण्डरीकोज्ज्वलहारलीलम् ।
तं खण्डपर्शुं प्रणमामि शम्भुमाखण्डलाद्यैरभिवन्दनीयम् ॥ ११० ॥

मुनीन्द्रवर्यैरखिलैः समर्चितं करीन्द्रकुम्भस्थितपादपद्मम् ।
गिरीन्द्रजाप्राणसखं भजे शिवं विधीन्द्रनारायणवेदसंस्तुतम् ॥ १११ ॥

भुजङ्गहारं गलनीलकन्धरं महाजटाभारधरं हरं सदा ।
भजामि गङ्गाधरमीशितारं परात्परं कालहरं महेश्वरम् ॥ ११२ ॥

वसुधाधरधारकं महेशं भ्रमरेन्द्रं च सुधाकरोरुचूडम् ।
प्रणमाम्यर्जुनदीप्तिदीधितिं भगवन्तं तमगाधबोधदम् ॥ ११३ ॥

जगतां मम देवदेव शम्भो जनकस्त्वं भगवन्नुमा जनित्री ।
प्रियपुत्रे मयि दत्तमेतदाद्यं श्रुतिगुह्यं जगतो विमुक्तये ॥ ११४ ॥

इति स्तुतोऽहं स्कन्देन स्तोत्रवर्येण सत्तमे । अवोचं तं तदा स्कन्दं तत्स्तुत्या तोषितोऽम्बिके ॥

ईश्वरः —

स्कन्द त्वत्कृतभक्तिशक्तिभिरहो स्तुत्यं स्तुवन् मां मुदा
युक्तः पातकवर्गजातमहितो मुक्तः स वै पुण्यभाक् ।
तस्मै तद्वयुनं दिशामि च यदा शक्तोऽस्तु तत्वाधिकः ॥ ११६ ॥

वस त्वं भूधरे स्कन्द सिंहाद्रौ सुरसेविते । स्वामिपुष्करिणीतीरे नानावृक्षैकशोभिते ॥ ११७ ॥
निवासो विहितस्तेऽद्य यावदाभूतसंप्लवम् । मदाज्ञया ययौ स्कन्दो ब्रह्मादिविबुधैः सह । ११८ ॥
प्रणम्य मां तदा देवि श्रीशैलेशं कृपानिधिम् । संपूज्य भ्रमराम्बां त्वां नत्वा स्कन्दो गणैर्वृतः ॥
बिल्वैः पद्मैस्तथा पूज्य प्रदक्षिणपुरःसरम् । भुजङ्गेनोज्ज्वलचञ्च्वा केकारावैर्विराजता ॥ १२० ॥
मयूरेणोह्यमानश्च ययौ स्कन्दः सुरैर्वृतः । स्वामिपुष्करिणीतीरे सिंहाद्रौ भक्तिभावितः ॥ १२१ ॥
उवास च तदा स्कन्दो देवीं शक्तिधरस्तदा ।

ईश्वरः —

श्रीशैलेश्वरलिङ्गमेतदमलं मुक्तिप्रदं शाश्वतं दृष्टं येन समस्तपुण्यफलदं स्वर्गापवर्गप्रदम् ।
तेनेवीं सकला सुशांभववरे दत्ताऽखिलैः पातकैः मुक्तो मत्कथया सुसुन्दरतरे श्रोत्रे च पात्रीकृते ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे श्रीशैलेशमाहात्म्ये लक्ष्मीवरप्रदान-स्कन्दशापविमोचन-ज्ञानोपदेश-स्थानकल्पनवर्णनं नाम सप्तविंशोऽध्यायः ॥

## ॥ अष्टाविंशोऽध्यायः ॥

ईश्वरः —

शृणु देवि प्रियतमे अस्ति क्षेत्रवरं मम । सेतुबन्धमिति प्रोक्तं भुवि साक्षाद्विमुक्तिदम् ॥ १ ॥
गन्धमादनसंज्ञश्च तत्रास्ति धरणीधरः । स तु लिङ्गमयो देवि नानातीर्थमयो हि सः ॥ २ ॥
बिल्वामलकहिन्तालल्लोध्रसालवरावृतः । रसालसुरसामोदचन्दनामोदमोदितः ॥ ३ ॥
अन्यशाखिवनोपेतो नानावल्लीविराजितः । तच्छैलशिखरे देवि शिवलिङ्गाकृतिस्त्वहम् ॥ ४ ॥
मध्ये तच्छैलशिखरं दृश्यते लवणार्णवे । दूरतो वापि शिखरं दृष्ट्वा शिखरिणोऽस्मिके ॥ ५ ॥
तत्रस्थवातपोतेन पापतापैर्विमुच्यते । निवसामि त्वया गौरि सदा गणवरैर्वृतः ॥ ६ ॥
नाम्नाऽहं भूधरे तस्मिन् गन्धमादन ईश्वरः तत्र शैववरा नित्यं निवसन्ति शुभानने ॥ ७ ॥
अग्निरित्यादिभिर्मन्त्रैः भस्मोद्धूलितविग्रहाः । अनन्तरुद्राक्षकृतकिरीटेन विराजिताः ॥ ८ ॥
रुद्राक्षहारवलयबाहुकङ्कणभूषिताः । त्रिपुण्ड्रनिटिलाः सर्वे तृणीकृतजगत्त्रयाः ॥ ९ ॥
पञ्चाक्षरपरा नित्यं पञ्चास्यध्यानतत्पराः । रुद्राध्यायार्थविज्ञानतज्जपप्रवणाः सदा ॥ १० ॥
शिवलिङ्गार्चनरतास्त्रिकालं बिल्वपत्रकैः । सदान्नपानविमुखा शिवनामैकजीवनाः ॥ ११ ॥
स्कन्दनन्दीश्वरमुखामरेश्वरगणेश्वराः । तत्र मां बिल्वपत्रैश्च गन्धमादनशङ्करम् ॥ १२ ॥
पूजयन्ति सदा भक्त्या विष्णुब्रह्मादयः सुराः । स्तुवन्ति स्तुतिभिर्नित्यं मां सदा लिङ्गरूपिणम् ॥

देवर्षिगणेन्द्राः --

संसारदर्पोद्धृतसर्पदष्टा जना न जानन्ति महेश्वरं त्वाम् ।
ते वै महाकामविषप्रदिग्धा दग्धा महामृत्युमुखाग्निमध्ये ॥ १४ ॥

सन्तप्तभ्रष्टतप्ताः शिवनतिविमुखाश्छिन्नहस्तास्त्वदर्चा-
हीना विच्छिन्नमस्ता भगवति गिरिशे प्रक्रमे पङ्गवो ये ।
त्वन्नामोच्चारणे ये प्रतिदिनमसकृन्मूकभावं प्रपन्ना-
स्त्वल्लिङ्गेक्षाविहीना यमभटपटलीदण्डखण्ड्या भवन्ति ॥ १५ ॥

एवं स्तुवन्ति मां तत्र मुनिदेवगणा गणाः । तत्र लिङ्गान्यनन्तानि सुरर्षिस्थापितान्युमे ॥ १६ ॥
तीर्थानि चैव पुण्यानि स्नातॄणां मुक्तिदानि हि । दक्षिणाम्भोनिधेः कोटिः पिनाकधनुषा मया ॥

त्रिपुरांस्तांस्तदा हत्वा मद्धनुःकोटिदेशतः । दक्षिणाब्धौ तदा रेखा कृता लीलार्थमम्बिके ॥
तद्धनुष्कोटिरित्याख्यां गमितं तीर्थमुत्तमम् । [षट्षष्टिकोटितीर्थानि स्वाघपापनिवृत्तये ॥ १९ ॥
तत्र स्नान्ति महादेवि तदा लवणसागरे । ब्रह्मविष्ण्वादयो देवाः शक्राद्या मरुतां गणाः ॥ २० ॥
मुनीनां कोटयो देवि स्नात्वा तत्र दिवं गताः । ब्रह्महत्यादिपापानां शोधकं तीर्थमुत्तमम् ॥]
मयैवं धनुषः कोट्या कृतं लोकहिताय वै । स्नातानां तत्र देवेशि मद्ध्यानं परमं भवेत् ॥ २२ ॥
ब्रह्मणापि पुरा कन्या निर्मिताऽऽसीत् तिलोत्तमा । तां तदा चकमे कामात् तया स मिथुनं गतः॥
तदा पापनिवृत्त्यर्थं स्नात्वा तत्र महोदधौ । दृष्ट्वाऽभिपूज्य मां बिल्वैस्ततः शुद्धश्चतुर्मुखः ॥ २४ ॥
ईशानोऽपि पुरा गौरि हृत्वा ब्रह्मशिरस्तदा । मम निन्दाकरं क्रोधाद्ब्रह्महत्या(?)मवाप सः ॥

स चापि धनुषः कोटौ स्नात्वा पूतश्च किल्बिषात् ।
शक्रोऽहल्यां पुरा गत्वा स्नात्वा पापैर्विमोचितः ॥ २६ ॥

अग्निश्च सर्वभक्षोत्थपापैः स्नात्वा विमोचितः । वरुणोऽपि महारोगपीडितो मुनिशापतः ॥ २७ ॥
स्नात्वात्र धनुषः कोटौ रोगान्मुक्तोऽभवच्छिवे । दक्षशप्तश्चन्द्रमापि स्नात्वा पापैर्विमोचितः ॥
भृगुणा च हरिः शप्तः स्वपत्नीवधदुःखितः । नारायणं शशापासौ भार्गवः क्रोधमूर्छितः ॥ २९ ॥

देवी –

कथं नारायणो देव शप्तो हि भृगुणा शिव । तन्मे ब्रूहि महादेव श्रोतुं कौतूहलं हि मे ॥ ३० ॥

ईश्वरः –

पुरा दैत्यैः सुराणां हि स्वर्गार्थं विग्रहोऽभवत् । देवैः संपीडिता दैत्या भृगुपत्नीं तदा गताः ॥
तां प्रणम्य तदा गौरि शरण्यां शरणं ययुः । सुरैः संप्रार्थितो विष्णुः तां हनच्चक्रधारया ॥ ३२ ॥
भृगुः क्रोधवशाद्विष्णुं शशाप स नियोगतः ।

भृगुः –

मानुषेषु हरे जन्म तव भूयाज्जनार्दन । स्त्रीवधान्निर्घृणोऽसि त्वं तव पत्नीवियोगजम् ॥ ३४ ॥
त्वयाऽपि दुःखं भोक्तव्यं ये वै दैत्यास्त्वया हताः । तैरेव पत्नीहरणं प्राप्स्यसे त्वं हरे सदा ॥

इत्युक्त्वा स भृगुः पत्नीं तदा स्वतपसो बलात् ।
सञ्जीव्याश्रमं प्राप मम भक्तोऽम्बिके तदा ॥ ३६ ॥

---

१ कोष्ठान्तर्गतः पाठः C कोशे नोपलभ्यते

स चापि विष्णुः कालेन तिर्यग्योनिशतेष्वभूत् ।
स चोन्मत्तो मया तत्र शूलाग्रेणावदारितः ॥ ३७ ॥

कोसलेष्वभवद्राजा नाम्ना दशरथस्तदा । स चानपत्यस्तस्यासीत् पुत्रो विष्णुस्तदाम्बिके ॥ ३८ ॥
देवैः संप्रार्थितो देवि पौलस्त्यवधहेतवे । सुरान् स पीडयामास रावणो लोकरावणः ॥ ३९ ॥
तस्यासील्लक्ष्मणो भ्राता भार्या जनकनन्दिनी । पित्रा विवासितो भ्रात्रा सभार्यो विपिनं ययौ ॥
तस्य भार्या जनस्थानाद्रावणेन हृता बलात् । स दुःखितो वसन् भ्रात्रा सुग्रीवं नाम वानरम् ॥
शरणं स गतो देवि तदा क्षत्रियनन्दनः । तेन वानरवृन्दैश्च समुद्रं शरणं गतः ॥ ४२ ॥
तत्रागस्त्यमुनिं दृष्ट्वा गन्धमादनवासिनम् । भस्मरुद्राक्षसंपन्नं शिवलिङ्गार्चने रतम् ॥ ४३ ॥
प्रणम्य तं तदा रामो अगस्त्यं मुनिसत्तमम् । दीनस्तदाऽऽह विनयाद्भार्यापहरणं शिवे ॥ ४४ ॥
रावणेन तदा रामः प्राञ्जलिर्दुःखितो मुनिम् ॥ ४५ ॥

रामः —

भगवन् शांभवश्रेष्ठ मामत्यन्तं सुदुःखितम् । समुद्धराव मां दीनं भार्याहरणकर्शितम् ॥ ४६ ॥
मुनीन्द्रोऽपि तदा रामं दीक्षयित्वा विधानतः । भस्मनोद्धूल्य तस्याङ्गं दत्वा पञ्चाक्षरं मनुम् ॥
गन्धमादनसंस्थं मां दर्शयामास भक्तितः । तल्लिङ्गं पूजयामास रामेण स तदा मुनिः ॥ ४८ ॥
बिल्वपत्रैर्वन्यपुष्पैः फलैर्नैवेद्यमातनोत् । तदा तुष्टाव रामो मां स्वकष्टविनिवृत्तये ॥ ४९ ॥

रामः —

श्रीकालकालानलफालमूल देव त्वमाद्यो जगतः प्रतिष्ठा ।
शूलामलोद्यत्कर बालपाल हालाहलालङ्कृतनीलकण्ठ ॥ ५० ॥

त्वं भक्तिगम्योऽमरपाल शम्भो मालाकृताहीन्द्र विशालबाहो ।
लीलाकृतं ते जगदेकजालं मे दुःखमूलं सहसा हरस्व ॥ ५१ ॥

इति स्तुत्वा तदा रामो गन्धमादनमीश्वरम् । तस्मै च दर्शनं दत्तं जेता त्वं रावणं मृधे ॥ ५२ ॥
गच्छेति च तदा चोक्तो मां प्रणम्याम्बिके तदा । अगस्त्येन तदा दत्तं खड्गं चापि महाप्रभम् ॥
तूणीरं च शरैः पूर्णं ययौ भ्रात्रा समन्वितः । सेतुं मत्कृपया बद्ध्वा युद्धे रावणमद्भुतम् ॥ ५४ ॥
सानुजं ससुतं हत्वा सीतां प्राप्य महाबलः । पौलस्त्यवधसञ्जातब्रह्महत्यापनुत्तये ॥ ५५ ॥
धनुष्कोटिमहातीर्थे मासं स्नात्वा स भक्तितः । भ्रात्रा च भार्यया सार्धं वलीमुखसमन्वितः ॥
स नार्मदं समानीय लिङ्गं तत् पवनात्मजात् । स्थापयामास हृष्टात्मा मुनिना रावणान्तकः ॥

गन्धमादनपृष्ठे वै गन्धमादनशङ्करात् । पश्चिमे परमेशानि संपूज्यामरनायकम् ॥ ५८ ॥
रामेश्वरं तदा देवि स्वनाम्ना लिङ्गमुत्तमम् । समर्चयित्वा बिल्वाद्यैः पूजया मां तदाम्बिके ॥
स भ्रात्रा च तदा पत्न्या सुग्रीवाद्यैश्च वानरैः । लिङ्गानि स्थापयामास गन्धमादनमस्तके ॥
तीर्थानि कल्पयित्वाथ देवं रामेश्वरं तदा । शुद्धगङ्गाजलैः स्नाप्य पूज्य बिल्वैश्च पङ्कजैः ॥
प्रणम्य रामः साष्टाङ्गं तुष्टावाथ कृताञ्जलिः ।

रामः —

रामेश्वरेश्वर महेश पिनाकपाणे गम्भीरसागरनिषङ्ग भुजङ्गहार ।
द्राविन हिरण्मयशरीर सुचन्द्रमौले गङ्गोत्तमाङ्ग भव भूतपते नमस्ते ॥ ६२ ॥
विश्वोदयस्थितिलयान्तकर प्रसीद मामाशु पाहि दयया प्रमथाधिनाथ ।
दुर्वारदुःखतरसंसृतिबन्धनाशं शश्वत् कुरुष्व भगवन् करुणाकटाक्षैः ॥ ६३ ॥
पाहि प्रसीद परमेश्वर पञ्चवक्त्र भर्ग त्रियंबक सुरासुरपूज्यपाद ।
पौलस्त्यसंहृतिभवाघभरं हरस्व मद्दुःखजालमपराधगणं क्षमस्व ॥ ६४ ॥
इति स्तुतोऽहं रामेण तदा देवि ससीतया (?) । तं प्रसन्नस्तदा वाक्यमब्रवं प्रणतं शिवे ॥ ६५ ॥

ईश्वरः —

मा भैषीः सर्वभद्रं ते कृतं लोकहितं त्वया । बद्धः सेतुः समुद्रे मे रावणः सानुजो हतः ॥ ६६ ॥
मत्प्रसादादभूद्राम गुरुस्ते कुंभसंभवः । एतस्य कृपया राम मत्प्रसादस्तवाभवत् ॥ ६७ ॥
राम शांभवसङ्गेन न किञ्चिदपि दुर्लभम् । शांभवाङ्घ्रिकसङ्गेन पापभङ्गोऽभवत् तव ॥ ६८ ॥
रामेश्वरमिदं लिङ्गं त्वया संस्थापितं मम । एतस्य दर्शनात् सद्यः पापनाशो भविष्यति ॥ ६९ ॥
धनुष्कोटौ नरः स्नात्वा रामेशं यस्तु पश्यति । स हि मुक्तो भवत्येव तस्यैव कुलमुत्तमम् ॥
तस्यैव पितरस्तृप्तास्तेनोर्वी सफलाम्बिके । शांभवेभ्यो मुदा दत्वा स्नापयेद्यो महेश्वरम् ॥ ७१ ॥
गङ्गांभसा महादेवि बिल्वैरभ्यर्च्य यो हि माम् । श्रीमद्रामेश्वरं लिङ्गं मद्धानं प्राप्य मुच्यते ॥
गच्छ त्वं कोसलानाशु मत्प्रसादात्तु सुखी भव । इत्युक्त्वा तं तदा गौरि तस्मिन् लिङ्गे तिरोहितः ॥
अगस्त्यं मां प्रणम्यैव ययौ रामस्तदाद्रिजे । गत्वाऽश्वमेधं मत्तुष्ट्यै समुपाहरदम्बिके ॥ ७४ ॥
तत्र राज्यं चिरं कृत्वा सोऽपि काले दिवं गतः । विष्णुर्नाम्नम्बिके नित्यं सेतुमाधवसंज्ञकः ॥
गङ्गांभसाभिषिच्येशं बिल्वैः संपूज्य भक्तितः । रामेश्वरं तदा गौरि तत्रास्ते मत्प्रसादतः ॥

सूतः —

य एतच्छृणुयान्नित्यं श्रीरामेश्वरवैभवम् । तस्य पापानि नश्यन्ति तूलमग्निमुखे यथा ॥ ७७ ॥

श्रीरामेश्वरलिङ्गमेतदमलं स्वर्गापवर्गप्रदं
बिल्वाद्यैरमरैस्तथा मुनिगणैः संसेवितं पूजितम् ।
दृष्ट्वा पापजरादिरोगरहितो मुक्तो भवत्यंबिके
धन्यो मत्पदपूजकः सुकृतिनां मान्यो वरिष्ठः स हि ॥ ७८ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे गन्धमादनपर्वत धनुष्कोटि रामेश्वरमहिमवर्णनं नाम अष्टाविंशोऽध्यायः ॥

---

## ॥ एकोनत्रिंशोऽध्यायः ॥

देवी —

त्वत्तः श्रुतानि क्षेत्राणि पुण्यानि परमेश्वर । लिङ्गानि देवदेवेश दर्शनात् पुण्यदानि च ॥ १ ॥

स्मरणान्मुक्तिदानीश पूजनाद् ज्ञानदानि च । अविमुक्तस्य महिमा त्वया नैवोपवर्णितः ॥ २ ॥

किं वा तत्कारणं शम्भो किमन्यत् त्वत्प्रियङ्करम् । क्षेत्रमस्ति महादेव वद गुह्यमपि प्रभो ॥ ३ ॥

इति देव्या वचः श्रुत्वा करुणारससागरः । शङ्करः प्राह तां देवीं शृणुध्वं मुनिपुङ्गवाः ॥ ४ ॥

ईश्वरः —

एष द्वादशलिङ्गानां महिमा ज्योतिषां शिवे । मया तवानुपूर्व्येण सेतिहासं च कृत्स्नशः ॥ ५ ॥

अविमुक्तस्य महिमा विश्वेशस्यापि वैभवम् । [1]कथयाम्यग्रतो देवि संग्रहादधुनोदितः ॥ ६ ॥

त्रियम्बकस्य महिमा तत्र किञ्चिन्मयोदितः । अस्मिन्नेवाग्रतो देवि सप्तमांशे महेश्वरि ॥ ७ ॥

वैभवं विश्वनाथस्य लिङ्गानां चानुपूर्वशः । कावेरी नाम देवेशि नदी पुण्या सरिद्वरा ॥ ८ ॥

यथा भागीरथी गङ्गा विन्ध्यस्योत्तरवाहिनी । तथैव सा महादेवि विन्ध्याद् दक्षिणमाश्रिता ॥

तत्तत्स्यदिव्यलिङ्गानां क्षेत्राणामपि शङ्करि । वैभवं कथयाम्यग्रे अस्मिन्नंशे हि सप्तमे ॥ १० ॥

अधुना संप्रवक्ष्यामि हरिद्वारस्य वैभवम् । सावधानमनाः पुण्यं शृणु भूधरकन्यके ॥ ११ ॥

हरिद्वारमिति ख्यातं तीर्थमीशानतुष्टिदम् । गङ्गायमुनयोर्यत्र प्रभेदो दृश्यतेऽम्बिके ॥ १२ ॥

तत्रास्ति लिङ्गमुत्कृष्टं हरिणा पूजितं पुरा । तत्रास्ति वनमुन्मत्तगजेन्द्रपरिसेवितम् ॥ १३ ॥

---

१ कथं अंशसंख्यापि भगवता ज्ञाता ।

करेणुभिः परिवृतं मृगेन्द्रैरुपशोभितम् । हिमवच्छिखरं चान्यत् केदारात् पश्चिमे स्थितम् ॥ १४॥
नानाद्रुमशतोपेतं तपस्विजनसेवितम् । वैखानसैर्वालखिल्यैस्तथा मुनिगणैरपि ॥ १५ ॥
तपसः सिद्धिमिच्छद्भिः तपःस्थानमनुत्तमम् । रम्यशार्दूलसंयुक्तं(?) सरिद्भिः सागरोपमैः ॥
नीलतालीवनोपेतं वातझञ्झपत्रकम् । गङ्गा प्रभूता यत्रासीत् तत्रास्ति विमलं सरः ॥ १७ ॥
कल्लोलमालाकलितं तमालकदलीवृतम् । मन्दारतरुभिः छन्नं मन्दमारुतवीजितम् ॥ १८ ॥
सहस्रपत्रैः कमलैः शोभितं स्वच्छवालुकम् । तत्रास्ति लिङ्गमीशानि हरिद्वारेश्वराभिधम् ॥ १९ ॥
तल्लिङ्गमूलतो देवि गङ्गा यत्र विनिर्गता ।

देवी —

कथं गङ्गा महादेव हरिद्वाराद्विनिर्गता । किञ्च तत्कारणं शम्भो वद मह्यं महेश्वर ॥ २० ॥

महेश्वरः —

शृणु शैलसुते बाले विशालनयनेऽम्बिके । विष्णुः पुरा तपस्तप्यन् मामाराध्यावसच्छिवे ॥२१॥
भस्माभ्यक्ततनुर्देवि त्रिपुण्ड्रावलिभासुरः । नीलिमाननभ्राजच्छारदाभ्रगणो यथा ॥ २२ ॥
नीलतोयदमध्यस्थत्रिपुण्ड्रतडिद्युतः । रुद्रमावर्तयंस्तस्थौ मम पञ्चाक्षरादरः ॥ २३ ॥
हरिद्वारेश्वरं लिङ्गं बिल्वैरभ्यर्च्य संस्थितः । त्वत्पितुर्वारुणे देवि शिखरे रमया तदा ॥ २४ ॥
कालं निन्ये तपोराशिः कालकालार्चनेन हि । रमन्तं तं तपस्यन्तं रुद्राक्षवरधारिणम् ॥ २५ ॥
रुद्रविन्यस्तमनसं रुद्राध्यायजपादरम् । फलपुष्पाणि चिन्वन्ती भर्तुः पूजाप्रकल्पने ॥ २६ ॥
दीपदा शङ्करस्याग्रे पाककर्त्री शिवाय वै । नैवेद्यैस्तर्पयामास हरिद्वारेशमीश्वरम् ॥ २७ ॥
उत्फुल्लकमलैरीशं कमलापि समार्चयत् । हरिद्वारेश्वरं लिङ्गं बिल्वपत्रैश्च कोमलैः ॥ २८ ॥
तपस्यन्तं हरिद्वारे हरिं द्रष्टुं समागताः । ब्रह्माण्डजं समारुह्य सिन्धुरं वृत्रहा तथा ॥ २९ ॥
लोकपालगणाः सर्वे नारदाद्याश्च शङ्करि । दृष्ट्वा तं हरिमत्युग्रतपसश्च परायणम् ॥ ३० ॥
ब्रह्मा प्राहामरश्रेष्ठं विबुधैः परिवारितः ॥

ब्रह्मा—

किं ते कार्यं समुद्युक्तं भवता तप्यते तपः । हिमवच्छिखरे पुण्ये लक्ष्म्या साकं हरे वद ॥ ३१ ॥
तदा पितामहवचो निशम्य हरिरव्ययः । ध्यात्वा मां स तदा प्राह प्रणम्य परमेश्वरम् ॥ ३२ ॥

विष्णुः—

विश्वेश्वरोऽयं मदनान्तकोऽयं गङ्गाधरोऽयं त्रिपुरान्तकोऽयम् ।
भगान्तकोऽयं हि यमान्तकोऽयं मखान्तकोऽयं च भवान्तकोऽयम् ॥ ३३ ॥
अस्यैव देवस्य महेश्वरस्य लिङ्गार्चनात् पूततरोऽस्मि धन्यः ।
चक्रं सहस्रारमिदं सुदर्शनं लब्धं तथाऽन्यैरपि दुर्जयोऽहम् ॥ ३४ ॥

तस्मात् पुरारिमाराध्य चक्रं लब्धं सुदर्शनम् । देवासुरे तदा युद्धे जयस्तेनाभवन्मम ॥ ३५ ॥
तस्मादुग्रान्महादेवाद् भवाद्भीमात् कपर्दिनः । लप्स्ये मनोरथान् ब्रह्मन् तेनाहं तपसि स्थितः ॥

ब्रह्मा —

कस्ते मनोरथो विष्णो देवेन त्वं प्रबोधितः । पुरा लब्धवरश्चासि देवदेवान्महेश्वरात् ३७ ॥

विष्णुः —

तत्तथैवाद्य मे ब्रह्मन् मुरो नामासुरो बली । दृष्ट्वा विवस्त्रां मत्पत्नीं रमां सर्वाङ्गसुन्दरीम्
क्रीडन्तीं सखिभिः सार्धमस्मिन् सरसि पावने । कमलान्युपचिन्वन्तीं हरिद्वारेश्वरार्चने । ३९ ॥
चकमेऽथासुरः कामाद् ज्ञातस्तस्याशयो मया । तदा चक्रनिकृत्तं तमकार्षं च विधे तदा । ४० ॥
तदा सर्वे मुनिगणा मामवोचुः प्रहर्षिताः ।

मुनयः —

साधु साधु हरे तेऽद्य कृतं कर्म सुदुष्करम् । तपस्विजनरक्षायै तपोविघ्नकरः सदा ॥ ४१ ॥
यज्ञघ्नश्च सदा पापी सुराणामपि कण्टकः । किंश्चायं देवदेवेशात् पूर्वं लब्धवरोऽसुरः ॥ ४२ ॥
भक्तश्च देवदेवेशे तस्माच्छापैर्न योजितः । भक्तस्य हनने पापममितं खलु वै हरे ॥ ४३ ॥
अत्र तत्पापशान्त्यर्थं हरिद्वारेशमीश्वरम् । तपसा तोषयस्वाद्य पूजया च सदा हरे ॥ ४४ ॥
सर्वत्र निष्कृतिर्दृष्टा शिवद्रोहे न निष्कृतिः । तस्माच्छिवैकशरणः शिवात् पूतो भविष्यसि ॥
इत्युक्तो मुनिभिर्ब्रह्मन् भक्तस्य हननेन हि । प्राप्तं पापसमूहं मे तस्माद्यक्ष्ये महेश्वरम् ॥ ४६ ॥
सपापेष्वपि भक्तेषु किं पुनः पुण्यकर्मसु । इत्युक्त्वा देवदेवेशं हरिद्वारेशमीश्वरम् ॥ ४७ ॥
प्रणम्य परया भक्त्या तुष्टाव हरिरव्ययम् ॥

विष्णुः —

तरङ्गविलसज्जटं धृतकुरङ्गखेलत्कर्ं भुजङ्गकृतकङ्कणं हरिणशाङ्कभारोद्वहम् ।
पतङ्गनयनं सदा मुहुरनङ्गदाहे रतं निषङ्गपयसान्निधिं क्षितिरथाङ्गमीशं भजे ॥ ४८ ॥

अमक्तिजनसक्तं मुनिजनार्च्यलिङ्गस्थितं दृशा करुणया ततं गिरिसुतार्धभागस्थितम् ।
विधीन्द्रसुरसंस्तुतं मुहुरनन्यभावं गतं प्रसीदतु भवान् हि मां परमपापतापेहतम् ॥ ४९ ॥

शम्भो विश्वेश भर्ग त्रिनयन भगवन् पाहि मामीश दृष्ट्या
दृष्ट्वा तुष्टोऽहमीश स्थिनिलयजननापारसंसारमग्नः ।
मत्पापानि विनाशयाशु सुनगं शुद्धे पदे देहि मे
स्नातुं वारि महाघहारि भगवन्नस्मिन् वरे भूधरे ॥ ५० ॥

सूतः –
इत्थं हरिस्तदा स्तुत्वा ब्रह्मादिविबुधैः सह । तस्मै दिशामि तत्सर्वं प्रत्यक्षीकृतविग्रहः ॥ ५१ ॥

ईश्वरः —
किं त्वत्प्रियकरं विष्णो यन्मत्तः प्राप्तुमिच्छसि । ब्रह्माद्यैस्तद्वदस्वाद्य प्रसन्नोऽहं तवानघ ॥
विष्णुः प्रणम्य देवेशं वरमेनमयाचत ॥

विष्णुः —
पुरा त्रिपथगा शम्भो पातालान्तरचारिणी । वियत्पथगता त्वेका चैका पातालवाहिनी ॥ ५३ ॥
ब्रह्माण्डोरुकटाहान्मे पूर्वं विक्रमता मया । मत्पादघट्टनाज्जाता सापि भूमितलं गता ॥ ५४ ॥
पीता च जह्नुना शम्भो निलीना सा नृपं गता । मत्पादतोयं मत्पापनाशकं नु कथं भवेत् ॥
वियत्पथगता त्वेका भगीरथवरात् त्वया । गङ्गागर्वोपशान्त्यर्थं त्वया मूर्ध्नि विधारिता ॥
तामद्येशान देवेश प्रार्थितोऽसि मयाघहन् । देहि शम्भो महादेव इत्थं प्रार्थितवान् हरिः ॥
हरिद्वारमहालिङ्गपादपीठाद्विनिर्गता । तदोत्सृष्टा मया गङ्गा दिव्या त्रिपथगा शिवे । ५८ ॥
तुङ्गस्तरङ्गैर्विततता फुल्लपङ्कजशोभिता । कल्हारमालाविनता अविमुक्तपंथ गता । ५९ ॥
हिमवच्छिखराद् देवि मत्पादतलनिर्गता । तस्यां विष्णुस्तदा लक्ष्म्या ब्रह्मादिविबुधैः सह ॥
स्नात्वा स्वपापशान्त्यर्थं अविमुक्तं तदा गतः । नानालिङ्गशतोपेतं स विश्वेशं प्रणम्य च ॥
स्तुत्वा स्तोत्रवरैर्विष्णुः बिल्वपत्रैः सुरैः सह । तुष्टाव च महेशानं कृपाराशिं तदाम्बिके ॥ ६२ ॥

विष्णुः –
उत्फुल्लकल्हारविलोलहारं मन्दारमल्लीसुमपूजिताङ्घ्रिम् ।
हल्लीसलास्यप्रियया समेतं मल्लिङ्गगं बिल्वदलोचमाङ्गम् ॥ ६३ ॥
निशाराजकलामौलिं देवराजसमर्चितम् । राजराजसखं वन्दे फणिराजाङ्घ्रिकङ्कणम् ॥ ६४ ॥

इत्थं स विष्णुः स्तुतिभिस्तथा मां स्तुत्वा तदा ब्रह्ममुखामरेन्द्रैः ।
विनिर्गतो मत्पदलोललीला मद्गाङ्गसङ्गाञ्चितरङ्गरङ्गम् ॥ ६५ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे हरिद्वारमाहात्म्ये विष्णुतपो-गङ्गानिर्गम-स्नानफलवर्णनं नाम एकोनत्रिंशोऽध्यायः ॥

## ॥ त्रिंशोऽध्यायः ॥

देवी —

कानि तीर्थानि पुण्यानि सा गङ्गाप्लावयच्छिवा । तन्मे वद महादेव नहि तृप्तास्मि शङ्कर ॥

सूतः —

तद्देव्या वचनं श्रुत्वा महादेवो महेश्वरः । प्राह गम्भीरवाक्यानि तदाऽपर्णां प्रहर्षयन् ॥ २ ॥

ईश्वरः —

मत्पादमूलतो देवि यदा गङ्गा विनिर्गता । हरिद्वारात् तदा पुण्या विबुधैश्चैव संयुता ॥ ३ ॥
कुरुक्षेत्रं गता गङ्गा तस्माच्चापि विनिर्गता । कुरुक्षेत्रं गता गङ्गा स्नानात् पापविनाशिनी ॥
प्रतिपेदे मधुवनं तत्र तीर्थे मनोरमे । मुनिभिः संस्तुता स्नाता दृष्टा पीताघहारिणी ॥ ५ ॥
प्रयागवनमासाद्य यत्र पूर्वं पितामहः । अयजद्धयमेधेन मां मेधपतिमीश्वरम् ॥ ६ ॥
तत्रासीत् सरिदुत्कृष्टा यत्र प्राची सरस्वती । तत्रावभृथमासाद्य ब्रह्मा प्राह सरस्वतीम् ॥ ७ ॥

ब्रह्मा —

सरस्वति महाभागे सर्वदा सर्वगामिनी । सरसः पावनाज्जाता पुण्यान्मानसनामकात् ॥ ८ ॥
मेरौ देवासुरैः पूर्वं प्रार्थितासि मनोरमे । अस्मिन् देशवरे पुण्ये सरसस्त्वं विनिर्गता ॥ ९ ॥
तस्मात् सरस्वतीत्याख्यां गमिष्यसि महीतले । एकांशेन वसात्रैव एकांशेन वसेर्मयि ॥ १० ॥
इत्थं सा ब्रह्मणो वाक्यं प्रणम्याह सरस्वती ॥

सरस्वती —

नाहं वसामि भूलोके त्वन्मखात् पावनाय हि । समानीताहममला त्वया यास्ये पितामह ॥११॥
ब्रह्मलोकं च सावित्र्या निवसामि त्वया सह । सरस्वत्याश्च वचनाद्ब्रह्मा क्रोधाच्छशाप ताम् ॥
यस्मान्मद्वाक्यनिर्घातः कृतो देवि त्वयाऽधुना । अदृश्या चासि भूलोके पातालतलवाहिनी ॥

भव त्वं शापिता मत्तः स इत्थं शप्तवान् शिवे । इत्थं शप्ता तदा ब्रह्मणा प्रयागेऽभूत् सरस्वती ॥
यमुनाऽपि तथैवागान्नीलनीरतरङ्गिणी । गङ्गायमुनयोर्मध्ये अन्तर्गूढाऽभवत् तदा ॥ १५ ॥
ब्रह्मणः सा महेशानी प्रयागमभितः शुभे । सितासिते ते सरितौ देवि यत्रैव सङ्गते ॥ १६ ॥
तत्राप्लुता जनाः सर्वे ब्रह्मलोकपरायणाः । तनुं यस्त्यजते तत्र स मुक्तो भवति प्रिये ॥ १७ ॥
तत्राक्षयवटो नाम विटपैर्बहुभिर्वृतः । तत्प्रतीच्यां महादेवि प्रयागेशोऽहमास्थितः ॥ १८ ॥
विष्णुनाराधितश्चाहं तेन तुष्टस्स्तुतस्तथा । प्रयागमाधवेनाहं पूजितस्तत्र शङ्करि ॥ १९ ॥
संपूज्य मां बिल्वपत्रैः तुष्टाव परमेश्वरम् ॥

माधवः —

दुरदृष्टविनाशकं महेशं जनिनाशं प्रतिबद्धकष्टजालम् ।
कनिष्ठं वरिष्ठं तथा ज्येष्ठमीशं वसिष्ठादिवन्द्यं नतोस्मीष्टसिद्ध्यै ॥ २० ॥
श्रीमत्प्रयागवनसुन्दरनीलकण्ठ पाहीश पापगिरिदारणशूलटङ्क ।
भक्तेष्वकुण्ठदय कुण्ठितवेदवाक्य वैकुण्ठपूजितपदाम्बुजोपकण्ठ ॥ २१ ॥

इत्थं स्तुतोऽस्मि तेनैव तत्स्थानेशः कृतो मया । तदुत्तरेऽहं सोमेशः पूजितः सुरसत्तमैः ॥ २२ ॥
बिल्वैर्मन्दारकुसुमैः स्तुतोऽहं विबुधैरपि ॥

देवाः —

पुरारे भवारे यमारे प्रसीद प्रसीदाधुना देवदेवेश शंभो ।
चरित्रं पवित्रं विचित्रं तवाद्य त्रिनेत्राधुना पापजालैकहारि ॥ २३ ॥

इत्थं स्तुतोऽहममरैर्निवसामि गिरीन्द्रजे । गङ्गायमुनयोः सन्धौ लिङ्गं मङ्गलदं मम ॥ २४ ॥
यः प्रयागे महातीर्थे माघे मकरगे रवौ । तत्र स्नात्वा मासमेकं विमुक्तः सर्वकिल्बिषैः ॥ २५ ॥
तीर्थाधिदेवो मां भक्त्या प्रयागेशं समर्चयन् । ततापं परमं देवि तप उग्रं समास्थितः ॥ २६ ॥
मां तुष्टावाम्बिके तत्र तीर्थराजत्वसिद्धये ॥

तीर्थराजः —

शिव शैवजनावने धुरीण श्रुतिगणकारण कारणाद्यकर्ण ।
फणिरणितपदाङ्गजकङ्कण मम पापाद्यखिलाघशोषण ॥ २७ ॥

तीर्थाधिदेवो मां स्तुत्वा मत्तस्तीर्थवरोऽभवत् । यः प्रयागं समासाद्य त्रिरात्रं समुपोषितः ॥ २८ ॥
शतजन्मोत्थपापेभ्यो मुच्यते नात्र संशयः । प्रयागेश्वरमभ्यर्च्य दृष्ट्वा नत्वा महेश्वरम् ॥ २९ ॥

स्नानदानार्चनात् सिद्धिः तस्य स्यान्नात्र संशयः । त्रिवेणीसङ्गमो यत्र तत्र पापभयं कुतः ॥ ३० ॥
तत्रावसत सदा विष्णुर्वेणीमाधवसंज्ञितः । मां ध्यायन् सर्वदा देवि स्नातॄणां फलदायकः ॥३१॥
गङ्गा च यमुना चैव यत्र गुप्ता सरस्वती । प्रवहत्यनिशं देवि यस्यान्तो नैव विद्यते । ३२ ॥
अन्तर्वेद्यां ब्रह्मणोऽपि कृतं पुण्यमनन्तकम् । ये स्नात्वाऽथ प्रयागेशं पश्यन्ति च गणोत्तमाः ॥
संपूज्य बिल्वपत्रैश्च मुक्त एव न संशयः । प्रयागमन्यतीर्थेषु यः स्मरन् स्नाति भक्तिमान् । ३४॥
स गङ्गायमुनोद्भेदे स्नाति नित्यं महेश्वरि । प्रयागे मकरे मासे माघे स्नात्वा हृतोदये ॥ ३५ ॥
स सर्वपापसङ्घेभ्यो मुक्तो मुक्तिं परां व्रजेत् । तस्माद्विनिर्गता पुण्या देवि गङ्गा सरस्वती । ३६॥
यमुना च महादेवि ब्रह्मारण्यं सुशोभनम् । अविमुक्तं तदा प्राप्य चक्रतीर्थं सरिद्वरा ॥ ३७ ॥
मणिकर्णीभवन्नाम्ना ख्याता गङ्गा च पावनी । तस्माद्योद्यां विपुला अभवत् सुरसंयुता । ३८॥
गङ्गासरय्वोर्यः सन्धौ स्नात्वा सन्तर्प्य वै पितॄन् । गयायां चैव पुण्यात्मा धर्मारण्यादिकेषु च ।
फल्गुर्नाम नदी तत्र स्नानतः पापनाशिनी । भगीरथाश्रमं प्राप्य पितॄन् सन्तारयेत् सुतः ॥ ४० ॥
गया कीकटदेशस्था पितॄणां तृप्तिदायिनी । पिण्डं तृप्तिप्रदं देवि तत्र दत्तमथाक्षयम् ॥ ४१ ॥
गयासुरशिरःस्थाने मत्पादं प्रकटीकृतम् । ईशानसंज्ञं तत्पादं सुराणां चाथ वैभवम् ॥ ४२ ॥
मत्पादे पिण्डदानेन यमलोके महेश्वरि । वासवं स्वपितॄन् भक्त्या पुनरावृत्तिवर्जिते ॥
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव पितॄणां तृप्तिदायिकाः ।
अयोध्यायां ममास्त्येकं सुधेशाख्यं महेश्वरि । लिङ्गं मङ्गलदं पुण्यं दृष्ट्वा रघुवरार्चितम् । ४५ ॥
बिल्वपत्रैस्तथा पुष्पैः सरयूसंभवैर्जलैः । समभ्यर्च्य प्रणम्येशं स्तोत्रमेतत् पठेन्नरः ॥ ४६ ॥
पापसङ्घैर्विमुच्येत नात्र कार्या विचारणा ॥ ४७ ॥
सुधाधारकलाधारपरिपूर्णोत्तमाङ्गक । नमस्तेऽस्तु महादेव दीनबन्धो प्रसीद मे । ४८ ॥
नमस्ते देवदेवेश राघवैः परिपूजित । भवरोगहरापारपापराशिविनाशक ॥ ४९ ॥
प्रसीद देव विश्वेश परमेश्वर शङ्कर । शंभो शाश्वत सर्वज्ञ विश्वाधिक जगत्प्रभो ॥ ५० ॥
नमस्ते शिव कामारे मयि देव कृपां कुरु । इति स्तुत्वा महादेवं सुधेशपरमेश्वरम् ॥ ५१ ॥
सरय्वां यः सकृत् स्नात्वा प्रणम्याथ सुधेश्वरम् । बिल्वैः संपूज्य भक्त्याथ रुद्राध्यायं पठेन्नरः ॥
मुक्त एव स पापेभ्यो नावास्ति विशयोऽम्बिके ॥

गङ्गातुङ्गतरङ्गसङ्गविलसत्फुल्लैः सरोजोत्पलैः नीलस्वच्छपतङ्गपुत्रिसहिता गुप्ता च वाण्या तदा ।
ब्रह्मादित्रिदशैर्हरीन्द्रपवनैर्याता पतिं सागरं तीरोद्भासिमहर्षिसङ्घवनजापारैः सुमैरर्चितम् ॥ ५३ ॥

शुकपिकवककाककोकघूकैर्निभृतविनादितकेकिचक्रवाकैः ।
गहनविपिनवृक्षमस्तसंस्थैः घनपाषाणकणाशनादितुष्टैः ॥ ५४ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे गङ्गानिर्गमन—प्रयागगयायोध्यामहिमवर्णनं नाम त्रिंशोऽध्यायः ॥

---

## ॥ एकत्रिंशोऽध्यायः ॥

ईश्वरः —

श्रीगङ्गासागरं गौरि पुण्यं पापविनाशनम् । गङ्गासागरसंघट्टमिन्नवाधितरङ्गकम् ॥ १ ॥
तां गङ्गां सागरो दृष्ट्वा तरङ्गावलिभासुरः । हसन् फेनगणैर्नृत्यन् समाश्लिष्यन्निव प्रियाम् ॥ २ ॥
तरङ्गहस्तैर्देवेशि गर्जन् कोलाहलारवैः । गङ्गाजलाविलतनुस्तदाऽऽसीत् सागरोऽम्बिके ॥ ३ ॥
तत्र सस्नुर्देवगणास्तथा मुनिगणाः शिवे । ब्रह्मविष्ण्वादयो देवाः परं हर्षमवाप्नुवन् ॥ ४ ॥

स्नात्वा सन्तर्प्य च पितॄन् भस्मनोद्धूल्य वै तनुम् ।
दत्वा दानानि पुण्यानि गाश्च भूमिं तिलं धनम् ॥ ५ ॥

मत्प्रीत्यर्थं महादेवि ब्राह्मणेषु तपस्विषु । यत्र गङ्गासागरस्य(योः) सङ्गोऽस्ति महेश्वरि ॥ ६ ॥
तत्र स्नानं कृतं ह्येतत् फलदं सर्वपापहृत् । अन्यत्र विंशत्कृच्छाणि पुरभिद्यः प्रकल्पयत् ॥ ७ ॥
तत्रास्ति मे बिल्ववनं नवारुणदलान्वितम् । कदम्बनिंबप्रसवैः नीपमन्दारसुन्दरम् ॥ ८ ॥
तमालतिलकोपेतं बकुलोद्दालकेतकम् । तमालताल हिन्ताल सालनालीविराजितम् ॥ ९ ॥
गङ्गातीरे महानीरभूमितर्पितभूरुहम् । नवोरुबिल्वशाखाग्रं फलभारावनामितम् ॥ १० ॥
पुष्पसौरभ्यमधुरं गन्धमारुतवीजितम् । वसन्तमुकुलोत्फुल्लमल्लीवल्ली विराजितम् ॥ ११ ॥
केतकोद्दामरजसा गन्धीकृतदिगन्तरम् । वेणुवेत्रगणच्छन्नं नानाशकुनिनादितम् ॥ १२ ॥
गङ्गासागरतीरस्थं वनमेकमभून्मम । तीरसंस्थमहालिङ्गं मम सर्वार्थदायकम् ॥ १३ ॥
तत्र शैववराः सन्ति गङ्गासागरवासिनः । भस्मरुद्राक्षसंपन्नाः पञ्चाक्षरपरायणाः ॥ १४ ॥
मल्लिङ्गार्चनपराः रुद्राध्यायजपादराः । तद्बिल्ववनजापारबिल्वपत्रैः सदाम्बिके ॥ १५ ॥
सापरेशं महालिङ्गं दृष्ट्वा नत्वा च भक्तितः । बिल्वपत्रैः समभ्यर्च्य वसन्ति नियता हि ते ॥

गङ्गासागरमासाद्य क्षेत्रमत्यन्तपुण्यदम्। सागरे चाथ गङ्गायाः स्नात्वा पुण्यप्रदेऽम्बिके।
सोऽश्वमेधमवाप्नोति दृष्ट्वा मां सागरेश्वरम्। विल्वपत्रैः समभ्यर्च्य स्नाप्य सङ्गमवारिभिः॥
कृतकृत्यो नरो भूयात् नरः सुगतिभाग् भवेत्। यो गोशतं कुरुक्षेत्रे दद्याद्वेदविदि द्विजे॥ १९॥
तस्माच्छतगुणं पुण्यं गङ्गासागरमज्जने। तत्र सन्तर्प्य च पितॄन् श्राद्धं दद्याच्च यो नरः॥ २०॥
तस्य वर्षशतं तृप्ताः पितरः सपितामहाः। एकं कोटिगुणं भोज्यं ब्राह्मणेन महेश्वरि॥ २१॥
दत्त्वैकां गां दरिद्राय शतगोदानपुण्यभाक्। यो लिङ्गं स्नापयेन्नीरैर्गङ्गासागरसंभवैः॥ २२॥
क्षीरकुम्भशतैः स्नाप्य यत्फलं तच्छताधिकम्। तरङ्गमालाकलिते गङ्गासागरसङ्गमे॥ २३॥
तत्तरङ्गोत्थवातेन पापभङ्गः प्रजायते। तत्र स्नात्वा तु मुनयो ग्रहणे चन्द्रसूर्ययोः॥ २४॥
पापसङ्घैर्विमुच्यन्ते सत्यमेव महेश्वरि। व्यतीपाते वैधृतौ च अयने संक्रमे तथा॥ २५॥
पर्वकालेषु सर्वेषु पक्षे चैवाथ पर्वणि। कृष्णाङ्गारचतुर्दश्यां गङ्गासागरसङ्गमे॥ २६॥
महोदधौ नरः स्नात्वा सर्वपापैः प्रमुच्यते। पञ्चभिः पातकैर्घोरैस्तत्र स्नात्वा महेश्वरि॥ २७॥
ग्रहणे भक्तिमान् स्नात्वा दत्त्वा च तिलपर्वतम्। मल्लिङ्गं संप्रपूज्यैव सागरेशं विमुच्यते॥ २८॥
महादानानि तत्रैव नृपैः पूर्वं कृतानि हि। इक्ष्वाकुकुक्षिनाभागमान्धातृसगरादिभिः॥ २९॥
ययातिनहुषाद्यैश्च देवि श्रद्धापुरःसरम्। सागरेशस्य देवस्य बद्धस्तैः स शिवालयः॥ ३०॥
पूजितः सागरेशोऽपि नानाविभवतः सुरैः॥
तत्र स्नात्वा सागरेशं प्रणम्य नियतो नरः। स्तोत्रमेतत् पठन् भक्त्या सर्वपापैः प्रमुच्यते॥३१॥

सूतः —

भगघ्नं पुरघ्नं मखघ्नं यमघ्नं भजाम्यन्तकघ्नं गजघ्नं स्मरघ्नम्।
उपेन्द्रादिवन्द्यं महाशैवहृद्यं महागद्यपद्यैः स्तुतं तत्त्वमाद्यम्॥ ३२॥
सुमौलौ विशङ्कं दयासान्द्रपाङ्गं भजे लिङ्गसङ्गं पदारक्षभङ्गम्।
क्षपद्धीरमीशं महाज्ञानकोशं महेशं प्रकाशं कराब्जे हुताशम्॥ ३३॥
भजाम्येकमीशं गले नीलनीलं महाशैवशीलं जगत्कृत्यलीलम्।
भजे कालकालं भजे लिङ्गसङ्गं पदारक्षभङ्गं हृदब्जान्तरङ्गम्॥ ३४॥

स्तोत्रवर्येण मां भक्त्या स्तुवन् सागरमीश्वरम्। सर्वान् कामानवाप्नोति पापेभ्यश्च प्रमुच्यते॥
अत्रेतिहासं वक्ष्यामि सावधानमनाः शृणु। तत्र बिल्ववने कश्चिदासीद् भिल्लो धनुर्धरः॥ ३६॥
स बिल्वभूरुहाणां च पालकोऽभूच्छुचिस्मिते। तस्यापारैः पुण्यबलैर्भिल्लस्याप्यभवन्मतिः॥३७॥

वनदन्तिभयार्थं च तेन कण्टकपङ्क्तिभिः । वनस्यावरणं चक्रे प्रबलैः काष्ठसंयमैः ॥ ३८ ॥
वराहमहिषाणां च गजशुण्डारदैस्तदा । वृक्षमूलानि भज्यन्ते मृगाणां च भयात् तदा ॥ ३९ ॥

मत्ताः करटिनो घोराः स्वशुण्डावलयैर्धृताम् ।
नवारुणां बिल्वशाखां भङ्क्त्वा भुक्त्वा प्रयान्ति च ॥ ४० ॥

स प्रातर्बिल्वशाखां तां दृष्ट्वा हस्तिविमर्दिताम् । दुःखितः स तदा गौरि तस्मिन्नेवाकरोद्वने ॥
स्वकुटीं पर्णकैः शाखिशाखात्रमनोहराम् । पुत्रैश्च बालकैः सार्धं पत्न्या तत्रावसच्छिवे ॥ ४२ ॥
कुद्दालपिटकोद्दामहस्तो नित्यं धनुर्धरः । हस्तियूथांश्च महिषान् वराहांस्ताडयत्यपि ॥ ४३ ॥
स शरैस्तीक्ष्णभालैश्च दन्तिकुम्भेषु शाङ्करि । शृङ्गान्तरेषु महिषान् दंष्ट्रासन्धिषु सूकरान् ॥ ४४ ॥
तद्भयान्नोपसर्पन्ति तद्बिल्वनमञ्जसा । कन्दमूलफलैरेव जीवन् स कणयाचकः ॥ ४५ ॥
सकुटुम्बस्तदा तस्थौ तस्मिन् बिल्वौघकानने । सूक्ष्ममार्गः कृतस्तेन गमनागमने तदा ॥ ४६ ॥
तमामन्त्र्यैव मुनयो गृह्णन्ति नवपल्लवान् । बिल्वमूलेषु लिङ्गानि स्थापयित्वार्चयन्ति च ॥ ४७ ॥
कोमलैर्बिल्वपत्रैश्च त्रिकालं भुवनेश्वरि । त्रियम्बकमहामन्त्रैः शैवाः संपूजयन्त्युमे ॥ ४८ ॥
तान् दृष्ट्वा सततं भिल्लस्तुष्टिमाप्नोति नित्यशः । ते भिल्लं पूजयन्त्येव वाग्भिश्च कणदानतः ॥
स भिल्लः शैवसक्त्या बिल्वानां पालनेन च । मम प्रियतरो नित्यमभूच्च गिरिकन्यके ॥ ५० ॥
बिल्वमूलानि सर्वाणि कुद्दालैर्बालकैः सह । खात्वा तन्मूलदेशेषु कृमिदष्टांश्च पल्लवान् ॥ ५१ ॥
घर्मकालेषु तत्पत्नी जलमादाय भूरिशः । घटैस्तदा महादेवि करोति वनपालनम् ॥ ५२ ॥
करोति जलदानं सा बालबिल्वप्ररोहणे । कृमिदष्टानि पत्राणि लूतातन्तुवृतान्यपि ॥ ५३ ॥
छित्वा छित्वा पातयति बिल्वभूरुहपालिका । तन्मूलेषु महाशैवाः शिवमन्त्रजपोत्सुकाः ॥
वसन्ति नियताहाराः शिवलिङ्गार्चकाः शिवे । बिल्वपत्रैश्च कुसुमैः रुद्राध्यायभिषेचनैः ॥ ५५ ॥
पूजयन्त्येव गौरीशं तन्मूलेषु महेश्वरि । रुद्राध्यायजलैः शीतैस्तन्मूलं शीतयन्ति ते ॥ ५६ ॥
सायं ते दीपयन्त्येव शिवलिङ्गं निरीक्षितुम् । शिवलिङ्गानि तुङ्गानि बिल्वयुक्तानि शङ्करि ॥
द्रष्टुमभ्युद्यताः सर्वे दीपदीप्तिविराजितम् । तत्र ब्रह्मादयो देवा नारदाद्या महर्षयः ॥ ५८ ॥
द्रष्टुं गच्छन्ति नियताः बिल्वमूले शिवार्चनम् । शिवलिङ्गेषु तुङ्गेषु महाशैवकृतं तदा ॥ ५९ ॥

स्तुवन्ति नृत्यन्ति हसन्ति दृष्ट्वा भुञ्जन्ति पश्यन्ति महेशलिङ्गम् ।
जिघ्रन्ति नैवेद्यमपारपुण्यदं शिवांघ्रिपुष्पाणि सुरा मुनीश्वराः ॥ ६० ॥

दृष्ट्वा त्रिपुण्ड्रोज्ज्वलमस्तकानि सुगन्धलिप्तानि मनोहराणि ।
सुबिल्वमूलेषु च संस्थितानि संपूज्य जन्मानि कृतार्थयन्ति ॥ ६१ ॥

तान् दृष्ट्वा प्रमथाधिनाथ गणपान् ब्रह्मादिकास्ते सुराः
धन्या मान्याक्षिभृङ्गा ... सुनरां पुण्यपुञ्जे निमग्नाः ।
दृष्ट्वा लिङ्गान्युमेशप्रियवरजनितापारपापैर्विहीनाः
प्राप्ताः प्राणात्ययेऽपि प्रियममरवरैः भिल्लमूलेषु संस्थाः ॥ ६२ ॥

सूतः —

इत्येवं स्तुतिभिः स्तुवन्ति सततं तद्बिल्वमूलार्चकान्
लिङ्गे तुङ्गे महेशं जनिमृतिजमहादुःखनाशाय शैवाः ॥ ६३ ॥

स शैवपूजितापार लिङ्गानि वनपालकः । प्रणम्य दारतनयैः संस्तौति परमार्थतः ॥ ६४ ॥

भिल्लः —

पाहि विल्ववनमीश्वर शम्भो हस्तिहस्तमृदितं नवशाखम् ।
दन्तिकृत्तिवस मामव शम्भो बन्धुरालक दयस्व [1]मय्यपि ॥ ६५ ॥

हर हर मुरभित्प्रपूजितांघ्रे स्मरहर कुरु मय्यकिञ्चने दयाम् ।
हर हर गुरुतापमारं गरधर शङ्कर चन्द्रशेखर ॥ ६६ ॥

ईश्वरः —

इत्थं शैवजनान्वितं स विपिने भिल्लोऽपि बिल्वीवने
ध्यात्वा मत्पदपङ्कजं विधिनुतं बिल्वादिसन्मौलिभिः ।
गङ्गासागरसङ्गमे विपिनवन्मल्लिङ्गसंपूजको
बिल्वार्घैर्गणनायकः स सुतरां मुक्तो भवत्यद्रिजे ॥ ६७ ॥

यो बिल्वच्छदपूतलग्नवसनैः संश्लिष्टगात्रान् द्विजान्
तन्मूले सुखशीतले पितृगणान् संभोजयेत् षड्रसैः ।
तस्यान्नं शतवर्षतृप्तिजनकं भूयात् पितॄणां मुदे
तच्छर्वार्पिततर्पितान्नपितरस्तुष्यति हृष्यन्ति च ॥ ६८ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे गङ्गासागरमाहात्म्ये सगरेश्वरभिल्लवनवर्णनं नाम एकत्रिंशोऽध्यायः ॥

---

१ इतः परं 'बालबिल्वतरुपोषणशीलं हस्तलग्नकिणफालकुद्दालम् ।
त्वं वनाधिपतिरीश पाहि मां जन्तुभिः प्रबलपापराशिभिः ॥ इति श्लोकोऽधिकः C कोशे ।

## ॥ द्वात्रिंशोऽध्यायः ॥

देवी —

कुरुक्षेत्रं गया गङ्गा उत्कृष्टेति त्वयोदितम् । कुरुक्षेत्रस्य माहात्म्यं वद सर्वसुरोत्तम ॥ १ ॥

सूतः —

इत्थं देव्या महादेवः पृष्टो वचनमब्रवीत् । शृणु देवि कुरुक्षेत्रमहिमां मत्कृपाबलात् ॥ २ ॥

कुरुसंवरणो नाम राजाऽभूत् सोमवंशजः । स राज्यं प्राप्य मेधावी वनेऽस्मिन् पावने मम ॥

नानाद्रुमशतोपेतं फलपुष्पविराजितम् । आश्रमं तं द्विजैर्युक्तं प्रशान्तं हरिमेधसः ॥ ४ ॥

प्रशान्तैर्वर्यैर्मुनिभिर्मृगैरन्योन्यवत्सलैः । तद्वनं स नृपो गत्वा ददर्श हरिमेधसः । ५ ॥

दृष्ट्वा मुनिवरं राजा प्रणतः पादयोस्तदा । निषसाद तदुद्दिष्टे विष्टरे नृपसत्तमः ॥ ६ ॥

तं पूजयित्वा राजानं हरिमेधा मुनिस्तदा । प्राह तं विनयोपेतं राजानं प्राञ्जलिं स्थितम् ॥ ७ ॥

सोमान्वयसुधासिन्धोश्चन्द्रस्त्वमसि पार्थिव । एकाकी विपिने घोरे कथं मां समुपागतः ॥ ८ ॥

स्वसैन्यवर्जितो राजा गजवाजिसमाकुलः । तदा मुनिं स विनयात् प्राह राजा कृताञ्जलिः ॥

राजा —

मृगयाव्यपदेशेन भवन्तं द्रष्टुमागतः । दृष्ट्वा त्वां मुनिशार्दूल धन्योऽस्म्यद्य कृपां कुरु ॥ १० ॥

निवासो मम धन्यो हि देशः कश्चिद्विधीयताम् । पशव्यश्च सदोषध्यः प्रभूतसलिलो महान् ॥

मान्यस्त्वं मुनिशार्दूल ध्यात्वा दिव्येन चक्षुषा । इत्थं संवरणप्रोक्तं वचः श्रुत्वा तदा ऋषिः ॥

राजानं स तदा प्राह विनयानतकन्धरम् ।

मुनिः —

शृणु वृत्तं पुराश्चर्यं राजन् मत्तः प्रवर्तितम् । तप्तवानस्मि सुमहत् तपो दीर्घं पुरा नृप ॥ १३ ॥

एतस्मिन्नेव विपिने सदा मुनिजनावृते । भस्मोद्धूलितसर्वाङ्गो रुद्रसूक्तजपादरः ॥ १४ ॥

रुद्राक्षमालाभरणो रुद्रलिङ्गार्चकः सदा । पञ्चाक्षरपरो नित्यं निवसामि ऋतून् बहून् ॥ १५ ॥

पञ्चाग्निमध्यनिरतः पञ्चास्यध्यानतत्परः । तपोयुक्तं सदा मां हि वेदवेद्यो महेश्वरः ॥ १६ ॥

प्रादुरासीद्वृषारूढः साम्बिकश्च त्रिलोचनः । गणवृन्दैः परिवृतो नानालङ्कारभूषितः ॥ १७ ॥

प्रणम्य तत्पदद्वन्द्वं भक्त्या तमहमस्तुवम् ॥

हरिमेधाः —

शम्भो मत्तेभकुम्भस्थगित महावृत्तरंमाभाण
दग्धापस्मार शिक्षाक्षपितकलुषपादाक्षपादादिवन्द्य ।
द्वन्द्वातीताव्ययेश श्रुतिशिखरगताकाशकोशाश्रयेश
धीश धृत्या ... कराग्रतोलनमिषादान्दोलितस्त्वे गिरिः ॥ १८ ॥

भीतां बाहुलतेन कण्ठमिलनाज्ज्ञातक्रुधं त्वां शिवं ।
त्वत्पादाग्रनिघर्षनिम्नगिरिराण्मूलस्थितैः स्वैः करैः ।
देवं स्तौति तदार्तनादविवशो वेदैस्तदा रावणः ॥ १९ ॥

मंराजं त्वामध्वराणां महेशं होतारं त्वा सत्यजयं रोदस्योः ।
विभ्राजं त्वां देवमीशानतोऽस्मि ताम्रं शम्भुं विश्वमीशानबाह्यम् ॥ २० ॥

इति मत्स्तोत्रजातेन तुष्टः कष्टहरः शिवः । प्राह मां प्रणतो देवो नीलकण्ठो महेश्वरः ॥ २१ ॥

ईश्वरः —

शृणु विप्रानया स्तुत्या भक्त्या तुष्टोऽस्मि सांप्रतं ।
लिङ्गेऽस्मिन् संवसाम्यद्य त्वया विल्वादिपूजिते ॥ २२ ॥

कुरुजाङ्गलमेतच्च पुण्यं क्षेत्रं भविष्यति । कुरुक्षेत्रेश्वरश्चाहं लिङ्गे नित्यं वसाम्यहम् ॥ २३ ॥

गङ्गापि परितो देव क्षेत्रं संप्लावयिष्यति । कुरुक्षेत्रकृतं पुण्यं महच्चैव भविष्यति ॥ २४ ॥

सोमवंशे कुरुर्नाम भविष्यति नृपात्मजः । स यदा त्वां समागत्य परिपृच्छत्यनामयम् ॥ २५ ॥

तस्मै मदुक्तिसर्वस्वं ब्रूहि त्वं वदतां वर । स चात्र नगरं श्रेष्ठं राजा विस्तारयिष्यति ॥ २६ ॥

प्राकारपरिखोपेतं नानासौधविराजितम् । शस्त्रास्त्रयन्त्रशोभाढ्यं चातुर्वर्ण्यजनाश्रयम् ॥ २७ ॥

विपणापणसन्धानचत्वरं वनशोभितम् । मम लिङ्गालयं पुण्यं सप्राकारं सगोपुरम् ॥ २८ ॥

नानामण्टपशोभाढ्यं कुरुक्षेत्रेश्वरस्य मे । नानावाहनशोभाढ्यं महारथवरैर्युतम् ॥ २९ ॥

कारयिष्यति भूपालस्तत्र कालः प्रतीक्ष्यताम् ।

मुनिः —

कालप्रतीक्षा हि मया शिवाज्ञापरिपालकः । निवसामि महाबाहो क्षेत्रेऽस्मिन् कुरुजाङ्गले ॥ ३० ॥

लिङ्गमेतन्महेशस्य भूरिबिल्वैः समर्चयन् । मुनिभिः शांभवैरेभिर्भवन्मार्गप्रतीक्षकः ॥ ३१ ॥

लिङ्गं मङ्गलदं प्रपद्य वसुधाधीशाद्य कष्टापहं
दृष्टं जन्मजरादिरोगजनितामृत्यादि (?) दुःखोत्करम् ।

हन्त्येवापदमुत्तमं शिवजनैः संपूजितं कष्टहृत्
तुष्टस्त्वय्यखिलाघहारकहरोत्कृष्टां विमुक्तिं त्वयि ॥ ३२ ॥
दास्यत्येव सदा हि भाग्यमतुलं जुष्टं स वै शङ्करः ।
इतः परं भवान् राजा कार्यस्यास्य परायणम् ॥ ३३ ॥

इत्थं मुनिवचोवीचीजातानन्दकुतूहलः । कुरुस्तमाह विनयाद्धरिमेधं द्विजोत्तमम् ॥ ३४ ॥

राजा —

कथं जाङ्गलमेतद्धि मम नाशाय कल्पते । नानामृगगणाकीर्णं नानाशार्दूलसेवितम् ॥ ३५ ॥

सुरम्यं चत्वरोपेतं नगरं मुनिसत्तम । कथमेतद्भवेद्भद्रं उपायश्चात्र कथ्यताम् ॥ ३६ ॥

स मुनिस्तं कुरुं प्राह देववाक्यं मुनिस्तदा ।

मुनिः —

तपसा साधयेत् सर्वं शिवाद्देवोत्तमोत्तमात् । इत्युक्त्वा तं नृपं विप्रो दीक्षयित्वा विधानतः ॥

प्राह पञ्चाक्षरं मन्त्रं राजानं भस्मभूषणम् । जजाप शतरुद्रीयं कुरुक्षेत्रेशमर्चयन् ॥ ३८ ॥

बिल्वपत्रैस्तथा पुण्यैर्धूपैर्दीपैर्मनोहरैः । नैवेद्यैः पायसापूपैः सदन्नैः कल्पयन् नृपः । ३९ ॥

तन्नैवेद्यैः शाम्भवानां भोजनानि तदा व्यधात् । प्रदक्षिणनमस्कारैः स्तोत्रैश्च विविधैरपि ॥ ४० ॥

प्रणम्य देवं तुष्टाव स नृपो मुनिना सह ।

स्तुतिनुतविबुधाद्यपादपादं दमितानेकसुरद्रुहोरुपादम् ।
यमिमानसपद्मलीलपादं भज कालानलभीतिदोग्रपादम् ॥ ४१ ।
[1]विषमाक्षमलक्ष्(?)वह्निवीक्षं विधिविष्ण्वाद्यमरादिवृन्दवीक्षम् ।
रणदक्षं जगतोऽखिलैकमक्षं भज दक्षाध्वरनाशनं सुदक्षम् ॥ ४२ ॥
वीक्षाशिक्षितमन्मथं सुरगणाध्यक्षं महोक्षाङ्कगम् ।
कुक्षिस्थाखिललोकजालममया ध्यायेन्मृगाक्षिश्रयम् ॥ ४३ ॥

सूतः —

इत्थं स राजा विविधस्तुतीभिः सपर्यया पूज्य महेशलिङ्गम् ।
स्तुवन् मुनीनां पुरतो ददर्श गौर्या वृषस्कन्धगतं तदा माम् ॥ ४२ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे कुरुक्षेत्रमाहात्म्ये राज्ञः शिवदर्शनवर्णनं नाम द्वात्रिंशोऽध्यायः ॥

---

१ अयं श्लोकः (C) कोशे नास्ति

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

राजा —

जय प्रमथमन्दार विश्वाधिक महेश्वर । जय वेदान्तसंवेद्य कामान्तक जगत्प्रभो ॥ १ ॥

जय देवाधिदेवेश प्रपन्नं पाहि मां शिव । जय भक्तजनाधार जय सर्वाङ्गसुन्दर ॥ २ ॥

जय वैद्योत्तम व्योमकेशाशावसनाव्यय । जय भूतपते शंभो करुणावरुणालय ॥ ३ ॥

जयापर्णापतेशान स्वर्णवर्णाम्बरायत । जय वाताशिपर्णाशिहृदयान्तरग प्रभो ॥ ४ ॥

पाहि पाहि महादेव रक्ष मां शशिशेखर ॥ ५ ॥

ईश्वरः —

इति राज्ञा तदा देवि कुरुणा संस्तुतोऽस्म्यहम् । तस्मै दत्तो वरो देवि पुरं भवतु जाङ्गलम् ॥

विश्वकर्मा तदेवागान्मया संस्मारितोऽम्बिके । प्राञ्जलिः किङ्करोमीति स्थितो मत्सन्निधौ ततः ॥

अस्य राज्ञो यथाकामं प्राकारपरिघावृतम् । प्रासादमालाविततं गोपुराट्टालतोरणम् ॥ ८ ॥

कुरुक्षेत्रेश्वरस्यास्य गर्भागारं मनोरमम् । प्राकारैर्मण्टपैश्चैव विस्तृतं गोपुरैरपि ॥ ९ ॥

धनधान्यसुसंपूर्णं गोगजाश्वादिसंवृतम् । नरनारीगणाकीर्णं विपणापणशोभितम् ॥ १० ॥

यन्त्रशस्त्रार्गलैर्युक्तं कुरोरस्य पुरं कुरु । इत्युक्त्वा विश्वकर्माणं कुरोर्वीक्षयतः शिवः ॥ ११ ॥

लिङ्गेऽन्तर्धिं ययौ देवो मुनेस्तस्यापि पश्यतः । तदाज्ञयैव देवस्य विश्वकर्मा च तत्र हि ॥ १२ ॥

प्राकारपरिखोपेतं पुरमिन्द्रपुरं यथा । पताकातोरणोपेतं नानाप्रासादसंकुलम् ॥ १३ ॥

क्षणाद्बभौ पुरं रम्यं कुरोस्तत् कुरुजाङ्गलम् । आलयं देवदेवस्य कुरुक्षेत्रेश्वरस्य च ॥ १४ ॥

स मण्टपं च प्राकारं गोपुरैर्दिक्षु शोभितम् । कुरुः स राजा तत्रासीत् निदेशेन्द्रेण शशास तत् ॥

तं गङ्गा प्लावयामास यमुना परिखाकृती तत्पुरस्तात् समभवत् कुरुक्षेत्रस्य सत्तमाः ॥ १६ ॥

हस्तिनामाथ तत्पौत्रस्तेनापि प्रथिता पुरी । हस्तिनापुरमित्याख्यां प्राप तत्पुरमुत्तमम् ॥ १७ ॥

कुरुक्षेत्रं प्रयागं च गयां चैवाविमुक्तकम् । एतत्प्रधानं क्षेत्राणां उत्कृष्टं प्राह शङ्करः ॥ १८ ॥

समन्तपञ्चकं तीर्थं कुरुक्षेत्रे महेश्वरि । रामेण पितृतृप्त्यर्थं ह्रदाः पञ्चैव कल्पिताः ॥ १९ ॥

तत्र स्नात्वा नरो यस्तु पितॄन् सन्तर्पयेद्यदि । कुरुक्षेत्रगतं वारि पितरः प्रार्थयन्ति हि ॥ २० ॥

तत्र श्राद्धानि देयानि सर्वैः पर्वणि पर्वणि । अमाविषुवसंक्रान्तौ राहुग्रस्ते दिवाकरे ॥ २१ ॥

सोमे चाथ व्यतीपाते कुरुक्षेत्रगतो नरः । सन्तर्प्य तारयेदेव स्वपितॄन् नात्र संशयः ॥ २२ ॥

कुरुक्षेत्रेश्वरं भक्त्या प्राप्य तत्तीर्थवारिभिः । बिल्वपत्रैः समभ्यर्च्य निवेद्याथ सुपायसम् ॥ २३ ॥
उपोषितो नरस्तत्र शतवर्षतपःफलम् । प्राप्नोति मनुजो गौरि गयापिण्डाच्छताधिकम् ॥ २४ ॥
कुरुक्षेत्रगता गङ्गा स्नाता पीता महाघहृत् । दर्शनाच्चैव तस्यास्तु मुक्तो भवति पापतः ॥ २५ ॥
किं पुनः स्नानदानार्चाशिवदर्शनतः शिवे । देवाः स्तुवन्ति मां तत्र ब्रह्माद्या मुनिसत्तमाः ॥
तत्स्तुतिं शृणु देवेशि भक्तः पापापहारिणीम् ।

ब्रह्मादयः—

[1]वासीकृतानन्दवन प्रसीद शंभो त्वमानन्दघनोऽत्युदारः ।
सुरावनः संस्तुतपाकशासनः सुपावनो विप्रनतो हुताशनः ॥ २७ ॥

सनातन नतावन त्रिपुरदक्षसन्त्रासन सुधाशनगणावन स्तुतसुवेद पंचानन ।
गराशन हुताशनप्रवलनेत्र[2] कालादन महाघमथनाशन स्मरशरादिघाराशन ॥ २८ ॥

नीललोहित भवान्त पुरान्त तातभूत जगतां मम मातः ।
पूषदन्तहननादिकरान्त दुःखितावन सदा सवधूक ॥ २९ ॥

इत्थं ब्रह्मादयो देवि मां स्तुवन्ति तदाम्बिके । कुरुक्षेत्रेश्वरं दृष्ट्वा यः स्नात्वा तत्पुरांमसि ॥
गङ्गायां त्रिदिनं देवि सर्वपापैः प्रमुच्यते । पुरा देवासुरैः साकं (?) युयुधुः शक्रपूर्वकाः ॥ ३१ ॥
वाहनैश्च गजैरश्वै रथाभटगणारवैः । मृदङ्गशङ्खझारावैर्दुन्दुभीनां च निस्वनैः ॥ ३२ ॥
नमुचिप्रमुखा दैत्या बलाद्याः सुमहाबलाः । भुसुण्ठीशस्त्रधाराभिर्मुसलैर्लगुडैस्तथा ॥ ३३ ॥
धनुर्भिः शरवर्षैश्च समवर्षन् परस्परम् । एकद्वित्रिशतैर्घोरैः शरैस्ते चिच्छिदुस्तदा ॥ ३४ ॥
परस्परं देवदैत्या अन्योन्यं समरोद्धताः । पराजितास्तदा दैत्या देवैः सन्ताडिता भृशम् ॥ ३५ ॥
ममन्युश्च पुनर्देवान् समाराध्य तदा शिवे । एवं पुनः पुनर्युद्धं स्वर्गार्थममवच्छिवे ॥ ३६ ॥
कुरुक्षेत्रगता भूमिर्युद्धभूमिर्महेश्वरि । द्वापरान्ते च भविता नृपाणां विग्रहो महान् ॥ ३७ ॥
कानीनान्तान् पुरस्कृत्य विष्णुर्भारं भुवः शिवे । हरिष्यति मयाज्ञप्तः कृष्णो नाम्ना भविष्यति ॥
कुरुनाम्नाऽथ संज्ञातमिदं क्षेत्रवरं प्रिये । मत्प्रसादात् पुरा प्राप्य कुरुक्षेत्रेशमर्चयत् ॥ ३९ ॥
तत्र सन्ति महासिद्धा गङ्गा च सरिदुत्तमा । निवसन्ति कुरुक्षेत्रे शिवतुष्टिप्रदे शिवे ॥ ४० ॥
समन्तपञ्चकं तीर्थं पितृतृप्तिप्रदायकम् । पुरा भार्गवरामेण क्षेत्रमुत्पादितं शिवे ॥ ४१ ॥

१ काशीकृता C. २ फाकानन C

क्षेत्रोत्थरुधिरैः पूर्णान् ह्रदान् पञ्च प्रकल्पयेत् । तत्तीरतीर्थे यः पिण्डं पितृभ्यो दास्यति प्रिये ॥
तर्पयेत् तद्ध्रदोत्थाभिरद्भिः प्रीणाति वै पितॄन् । तस्य स्युः पितरस्तृप्ता यावदाभूतसंप्लवम् ॥४३॥
तत्रैकां गां दरिद्राय दत्वा गोशतपुण्यभाक् । अल्पं तत्रैव यद्दत्तं तन्महज्जायते प्रिये ।। ४४ ॥
पितृतृप्तिप्रदं तीर्थं पुरा रामेण वै कृतम् । अत्रैव तद्ध्रदाः पञ्च स्नात्वा पितृगणांस्तथा ॥ ४५ ॥
श्राद्धैः संप्रीणयन् पुत्रः पुत्रत्वं तस्य सिद्ध्यति ! अत्रैव गाथां गायन्ति पितरः पुत्रिणस्तथा ॥
अपि नः स्वकुले भूयाद्यो गयायां च पिण्डदः । कुरुक्षेत्रे स वै पुत्रः ह्रदे रामकृते हि नः ॥
दृष्ट्वा मां चैव पुण्यात्मा कुरुक्षेत्रेश्वरं शिवे । धन्यो भवति पूतात्मा सत्यं सत्यं न संशयः ॥
इत्थं कुरुक्षेत्रगतं महिमानं तवोदितम् । श्रुत्वैव सर्वपापेभ्यो मुक्तो भवति नान्यथा ।। ४९ ॥

तस्मात् कुरुक्षेत्रपरायणानां तत्रैव वासो मम भक्तिदायकः ।
लभेत वै पुण्ययुतो महेश्वरि तपःस्थलं तन्मुनिभिः प्रशस्तम् ॥ ५० ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे कुरुक्षेत्रनिर्माण वर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

ईश्वरः —

तत्प्रतीच्यां महादेवि प्रभासं नाम विश्रुतम् । प्रभासे वेनिका नाम नदी पुण्यप्रदा शुभा ॥
तत्र शैववरा नित्यं भसितोद्धूलने रताः । त्रिपुण्ड्रफालाः सततं अन्यपुण्ड्रविवर्जिताः ॥ २ ॥
रुद्राक्षकवचाः सर्वे पञ्चाक्षरपरायणाः । रुद्राध्यायार्थकथनप्रवणाः शरणा मयि ॥ ३ ॥
मम लिङ्गार्चकाः सर्वे बिल्वपत्रादिसाधनैः । तैः शिवानर्पितं वारि फलं वा नोपभुज्यते ॥ ४ ॥
षट् सहस्रं मुनीन्द्राणां प्रभासे समवस्थितम् । तत्र मङ्कणको नाम पुरा सिद्धोऽभवन्मुनिः ॥ ५ ॥
तेन सिद्धेश्वरं लिङ्गं त्रिकालेषु समर्चितम् । बिल्वपत्रैश्च कल्हारैर्नीलैर्नीलोत्पलैरपि ॥ ६ ॥
नैवेद्यैः फलमूलादिकल्पितैः परमेश्वरि । सदा ममाराधनकृत् स मां तुष्टाव शङ्करि ॥ ७ ॥
सिद्धेशं सर्वसिद्धीनामाकरं भुवनेश्वरि ॥

मङ्कणकः —

सिद्धेश सिद्धगणपूज्यपदाब्जयुग्ममद्यैतदेकमनिशं दयया ददस्व ।
मुग्धेन्दुचूड मयि सिद्धिगणं त्वदीयैः (?) सिद्धोऽस्मि मोचय महापशुपाशबद्धम् ॥ ८ ॥

बुद्धिं प्रसारय महेश सुखाय शम्भो त्वत्पादपूजनविधौ दृढभक्तियुक्ताम् ।
सक्तां सुदारतनयादिधनादिकेषु धान्येषु गोषु गृहवर्णगणेषु मुक्तिम् ॥ ९ ॥
देहि प्रसीद परमेश्वर पञ्चवक्त्र लोकेशमेति निखिलं सहभूतवर्गैः ।
वैमानिकाश्च सकलाः ससुराश्च लोकाः कालस्त्वमीश वडवामुखसन्निभोऽब्धौ ॥ १० ॥

[1]क्षेत्रोत्तमं मुनिवरैः सेवितं शांभवोत्तमैः । तत्र सिद्धेश्वरं नाम्ना लिङ्गं मुक्तिप्रदं मम ॥ ११ ॥
मद्धामनाकर्णयेन प्रभासमिति विश्रुतम् ।

हरिब्रह्मरुद्रेन्द्रमायाप्राज्यजालं निकृष्टं तदुत्कृष्टकष्टैकनिष्ठम् ।
ममेशानलिङ्गार्चनध्यानतुष्टस्य लक्षस्थलिक्षायिता देववर्गाः ॥ १२ ॥

इति मङ्कणकेनेशि संस्तुतोऽहं मुदा तदा । तमाहूय मुनिं सिद्धं सिद्धयस्तेऽभवंस्त्वयि ॥ १३ ॥
इति मत्तो वरं लब्ध्वा स तु मङ्कणको द्विजः । स्वकरात् पयसो धारां निःसृतां ददृशेऽम्बिके ॥
सिद्धिः प्राप्तेति च मया तस्य हर्षोऽजनि द्रुतम् । ननर्त सिद्धलिङ्गाग्रे करतालैः स शांभवः ॥

मङ्कणकः —

स्वामिन्नन्नपते धनाधिपपते हे शैलकन्यापते हे कामान्तक हे पुरान्तक महादेवेश मां पालय ।
हे विश्वेश्वर भर्ग देव भगवन् हे चारुचामीकरस्फाराकारशरीरशोभित महासिद्धेश सिद्धिप्रद ॥
हे भीमामरनायकाखिलमहापापोरुतापं हर रुद्रोग्रामितशङ्कर त्रिपुरजापारव्यथां संहर ।
हे कालान्तक कालकाल भवहन् कालाद्भयं संहर हे गङ्गोत्तमभङ्गरङ्गितजटाभारार्धचन्द्रस्फुर ॥

कर्पूरोज्ज्वलभूतिभूष भगवन् मां सर्वदा पालय
हे भोगीश्वरकङ्कण प्रमथगणनाथे प्रसीदाधुना ।
हे विश्वान्तक विश्वमेतदधुना त्वत्तो विभो निःसृतं
पाहि त्वं परमेश्वरेश कृपया त्वन्मायया कल्पितम् ॥ १८ ॥

[2]हे लिङ्गार्चनजाननन्दिननिजानन्दैकमोदप्रद हे बिल्वादिदलोत्तमाङ्ग भगवन् मतिसिद्धिदातार्चने॥
इत्थं ननर्त स मुनिः सिद्धिविस्मापितस्तदा । तेन वृत्तेन सकलं जगन्नृत्तपरं भवत् ॥ २० ॥
सोद्विग्ना त्रिदशाः सर्वे मुनिं ते ददृशुस्तदा । निमीलिताक्षं ध्यायन्तं सानन्दजललोचनम् ॥
ब्रह्मोपेन्द्रेन्द्रविबुधान् नैवापश्यत् तदाऽम्बिके । सिद्धेश्वराग्रतः सर्वे स्तुवन्तं मां सुरास्तदा ॥
सदा सब्रह्मकाः सर्वे सिद्धेशं मां प्रणम्य च । बिल्वैः संपूज्य मां सर्वे प्रार्थयन्ति तदा सुराः ॥

१ इतः परमर्धत्रयं C कोशे नास्ति । २ द्विपादोऽयं श्लोकः ।

देवाः —

भो शम्भो त्रिपुरान्तकान्तक महादेवेश विश्वाधिक
विश्वाशास्य दयानिधे त्रिजगतां नाथ प्रसीदाव नः ।
भो भर्गामरवीर वीर भगवन् पाहीन्दुमौळे सुरान्
नृत्ये तेन मुनीश्वरेण भुवनं नृत्यन् विनश्येद्ध्रुवम् । २४ ॥

अयं मङ्कणकः सिद्धः सिद्धेश तव दर्शनात् । सिद्धिं परमिकां प्राप्तस्तेन नृत्यति मोहितः । २५ ॥
तं निवारय लोकेश लोकानां स्थितिहेतवे । तद् ब्रह्मणो वचः श्रुत्वा सिद्धरूप्यहमागतः । २६ ॥
जटामण्डलशोभाढ्यस्त्रिपुण्ड्रनिटिलोल्लसन् । रुद्राक्षहारवलयः कङ्कणाद्यैश्च शोभितः ॥ २७ ॥
भसितोद्धूलितवपुः स्वर्णवेत्रलसत्करः । शंखखङ्गादिकलितकुण्डलैः शोभिवक्त्रकः । २८ ॥
पादुकाविलसत्पादो मेखलां पादलम्बिनीम् । दधड्डमरुकं देवि नादयन् ह्यग्रतोऽम्बरम् ॥ २९ ॥
पादकङ्कणभृतस्य फणिनः श्वासफूत्कृतैः । वैनतेयमहापक्षकृतपीडो महेश्वरि । ३० ॥
तस्याग्रतः स्थितो देवि सिद्धेशोऽहं मुनेस्तदा । स मुनिर्विस्मयाविष्टो मां प्रणम्य तदा स्थितः ॥
पश्यतस्तस्य मेऽङ्गुष्ठो देवि संताडितो मया । तस्माच्च भस्मनो राशिरुदभून् पर्वतोपमः ३२ ॥
देवा मङ्कणकः शिवा अद्भुतं ददृशुस्तदा । नृत्तादुपारमद्विप्रो मया प्रोक्तः स मङ्कणः ॥ ३३ ॥
गच्छ मङ्कण सिद्धिस्ते मत्प्रसादात् परा तत्र । मैव ते विस्मयो भूयादेतल्लिङ्गं हि सिद्धिदम् ॥
प्रभासे पावने क्षेत्रे यो वा को वाऽपि मानवः । नियतः संवसेदत्र तस्य सिद्धिः परा भवेत् ॥
सिद्धिप्रदमिदं लिङ्गं सिद्धेशाख्यं तु कामदम् । दर्शनादस्य लिङ्गस्य सर्वाः सिद्ध्यन्ति सिद्धयः ।
प्रभासे मत्प्रसादेन सिद्धलिङ्गमुदीक्ष्य च । मत्सायुज्यमवाप्नोति देवि सत्यं वदामि ते ॥ ३७ ॥
पुरा जयन्तः शक्रस्य तनयो मोहमास्थितः । ऐरावतसुतं नागं समारुह्य जवात् तदा ॥ ३८ ॥
समागतो देवगणैर्मध्येमार्गं द्विजस्य हि । गोवत्सो मर्दितः पादैस्तेनोन्मत्तेन हस्तिना । ३९ ॥
शतर्चनः शशापैनं जयन्तं पाकशासनिम् । श्वित्री भवेति च तदा शापाच्छ्वित्र्यभवत् तदा ॥
इन्द्रमिन्द्रगुरुं गत्वा तत्सर्वं शापकारितम् । जयन्तः प्राह दुःखेन प्रणम्य पितरं गुरुम् । ४१ ॥

जयन्तः —

अज्ञानाद्यौवनोन्मादाद्धस्तिपादावमर्दितः । तर्णकस्तस्य विप्रस्य क्रुद्धो मयि शतर्चनः ॥ ४२ ॥
तस्याद्य निष्कृतिं ब्रूतं युवां यद्ब्रूत तद्व्रतम् । करिष्यामि न सन्देहः सुखोपायं वदाधुना ॥
जयन्तवाक्यं तच्छ्रुत्वा शक्रस्यानुमते पुनः । बृहस्पतिस्तदा प्राह प्रभासं क्षेत्रमुत्तमम् ॥ ४४ ॥

सिद्धेश्वरं प्रणम्याथ स्नात्वा वेणानदीजले । संवत्सरं वस प्रीत्या जप रुद्रं महेश्वरम् ॥ ४५ ॥
बिल्वपत्रैः समभ्यर्च्य मुक्तो भवसि नान्यथा । तदा गुरुवचः श्रुत्वा जयन्तस्तौ प्रणम्य च ॥
इन्द्रेण चाभ्यनुज्ञातः प्रभासे मां समागतः । स्नात्वा वेणानदीतोये तपोऽतप्यत दुष्करम् ॥
भस्मत्रिपुण्ड्ररुद्राक्षमालालङ्कृतविग्रहः । नमस्कारैर्महादेवं रुद्राध्यायेन शङ्करम् ॥ ४८ ॥
शक्रात्मजस्तदा गौरि सिद्धेशाख्यं तदा मुदा बिल्वपत्रैः समभ्यर्च्य प्रदक्षिणपुरःसरम् ॥
स्तुवन् जपन् सदा ध्यायन् मां निरीक्षंश्च भक्तितः । तुष्टावाथ जयन्तो मां प्रणिपत्य कृताञ्जलिः ॥

जयन्तः —

सिद्धीनां निलयस्त्वमीश दयया आगस्कृतं पाहि मां
विश्वाधीश्वर विश्वनाथ भगवन् श्रीचन्द्रचूड प्रभो ।
त्वं शक्रादिसुरासुरार्चितपदो निर्द्वन्द्वनित्यो विभुः
गुप्तो मूढधियां सुसूक्ष्मकधिया पश्यन्ति यं योगिनः ॥ ५१ ॥

सान्द्रानन्दमयं दयामयतनुं प्राप्तोऽस्मि पादं तव, मां सद्यः सुखयाशु पाहि दयया सिद्धेश भद्रं कुरु ।
इति संप्रार्थितस्तेन जयन्तेन मनोरमे । तस्माच्छित्राद्विनिर्मुक्तो नत्वा शक्रं मुदा गतः ॥ ५३ ॥
इत्थं प्रभासक्षेत्रस्य महिमायं तवोदितः । सिद्धिप्रदमिदं क्षेत्रं सिद्धेशस्यास्य दर्शनात् ॥ ५४ ॥

सूतः —

शिवप्रणतिसंभवं फलमपारपुण्याधिकं न तत् क्रतुशतार्जितैः फलगणैः समानं भवेत् ।
अनन्तमहिमास्पदं विविधपातकोच्छेदकं शिवद्रुहि जने सदा न खलु वाच्यमेतद् द्विजैः ॥५५॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे प्रभासक्षेत्रमाहात्म्ये जयन्तस्य श्वित्ररोगनिवारणवर्णनं नाम
चतुस्त्रिंशोऽध्यायः ॥

---

## ॥ पञ्चत्रिंशोऽध्यायः ॥

ईश्वरः —

शृणु देवि कथामेकां ब्रह्मणः परमाद्भुताम् । यां श्रुत्वा मयि विन्दन्ते भक्तिं सर्वार्थदायिनीम् ॥
सत्यलोके स्थितो ब्रह्मा यियक्षुरमरच्छिवे । स्वहस्तपद्मं धाता च पातयामास भूतले ॥ २ ॥
क्षेत्राणामुत्तमे तन्मे पुष्करे पुष्करं तदा । तत्र मे संस्थितं पूर्वं पुष्करेश्वरसंज्ञितम् ॥ ३ ॥
लिङ्गं मङ्गलदं पुण्यं तन्मौलौ नलिनं पतत् । वेणुगुल्मावृतं भद्रं नानावृक्षसमन्वितम् ॥ ४ ॥

तत्रान्तरेऽ[1]भवद्वाणी श्रुत्वा(?) वाणीपतिस्तदा ॥

वाणी —

एतद्विधातः क्षेत्राणामुत्तमं पुष्करं शिवम् । यजतो देवयजनं तव भूयाद् सुपावनम् ॥ ५ ॥

पुष्करं ते यतः पुण्यं पतितं पुष्करं हि तव । अत्र लिङ्गमिदं श्रेष्ठं देवदेवस्य शूलिनः ॥ ६ ॥

पश्य संपूजयात्रैव कार्तिकोऽयं सुपावनः । मासो हि पुण्यनिलये गङ्गेयं पावनी सरित् ॥ ७ ॥

कार्तिके सोमवारेषु पुष्करे पुष्करेश्वरम् । यः समर्चयिता रात्रौ बिल्वैर्द्रोणैश्च धुत्तुरैः ॥ ८ ॥

तस्य पुण्यस्य नान्तोऽस्ति स च शङ्करवल्लभः । तदा वाणीवचः श्रुत्वा विश्वकर्माणमाह्वयत् ॥

ब्रह्मणा स्मृतमात्रः स विश्वकर्मा ततो विधिम् । प्राह किं करवाणीति क्षेत्रं विस्तारयेति तम् ॥

व्यधाद् वेधास्तदा शालामाश्रमं सरितस्तटे । मण्टपं गोपुरं दिव्यं पुष्करेशस्य शूलिनः । ११ ॥

तद्ब्रह्मणो वचः श्रुत्वा नानाशिल्पसमन्वितः । शालां निर्मापयामास नानामण्टपशोभिताम् ॥

भक्ष्यैर्भोज्यैस्तथैवान्नैः सूपापूपैर्मनोरमैः । वासमां राशयस्तत्र ब्राह्मणावसथादयः ॥ १३ ॥

पुष्करेश्वरलिङ्गस्य चक्रे सोऽपि शिवालयम् । प्राकारगोपुरोपेतमाश्रमैः सुमनोहरम् ॥ १४ ॥

तत् पितामहवाक्येन विश्वकर्माऽथ शिल्पिराट् । विज्ञप्तुमथ ब्रह्माणं सत्यलोकं गतस्तदा ॥ १५ ॥

तत्र सन्ति महाशैवाः पुष्करेशसमर्चकाः । बिल्वपत्रादिभिः सम्यक् ते सर्वे भस्मभूषणाः ॥

रुद्राक्षहारवलयत्रिपुण्ड्रपरिशोभिताः । निवसन्ति महाशैवाः पुष्करैः पुष्करेश्वरम् ॥ १७ ॥

समर्चयन्ति नियतं भक्त्या बिल्वैश्च कोमलैः । तत्तत्कालेन देवेशि पुष्करं मे सुरासुरैः ॥ १८ ॥

समागतो मुदा यष्टुमश्वमेधेन तत्र हि । ऋषिभिः सह पत्न्या च दृष्ट्वा नत्वा महेश्वरम् ॥

ब्रह्मा —

शंभो गाथपतिर्भवान् पशुपतिर्मेधापतिस्त्वं पतिः सोमः सौम्ययुतो मदीयमधुना सोमं पिबस्वाध्वरे ।
मह्यं देव दयां निधेहि सततं श्रीपुष्करेश प्रभो पूर्णां च श्रियमीश्वर प्रतिपदं चायुःशतं मे स्तुहि ॥
वाजैः शांभवपुङ्गवान् हि भजतो मा त्वा वधीर्दुष्कृतं मारातीर्जहि रक्षयज्ञमधुना रक्षांसि नः संहर ।
[2]यामे प्रजा अमृताः सन्तु सर्वा नार्यो नरा गोपगणाश्चापि शंभो ॥ २१ ॥

मेषाश्वादिपशून् निवेद्य भवते त्वत्तः पशूनां पते ।
लब्ध्वाज्ञां नियुनज्मि वेदवचसा त्वं मेऽद्य सत्रावनः ॥ २२ ॥

---

१ वाणी ब्रह्माणमवदत् इति वक्तव्यम् ।

२ इदं श्लोकार्धं अर्धयोर्द्वयोरन्तरे प्रविष्टं इति भाति । मातृकास्वेवमेवोपलभ्यते ।

इत्थं मां स शिवे स्तुत्वा आजुहाव सरस्वतीम् । मानसः (?) सरसस्तस्माद्ब्रह्माहूता सरस्वती ॥
प्लावयामास तद्देशं पयोभिः साधुशीतलैः । पुष्करं सा समागत्य गङ्गया सङ्गता तदा ॥ २४ ॥
सरस्वत्याश्च गङ्गायाः सन्धौ वेद्यभवत् तदा । ब्राह्मणैश्च महेशानि ऋत्विग्भिः स पितामहः ॥
दीक्षितः सह पत्न्या च विष्ण्वादिसुरसत्तमैः । मुक्तः स तुरगस्तस्य पृथिवीं सञ्चचार च ॥
पुनः काले तदा देवि प्रवर्ग्यैर्जुहुवुर्द्विजाः । संचितोऽग्निर्द्विजैस्तस्य सहिरण्येष्टकोऽम्बिके ॥ २७ ॥
स्वाहृतो वाससा युक्तो नानाश्चर्यकरोऽभवत् । भुञ्जतां विप्रसङ्घानां नानाभक्ष्यसमन्वितम् ॥
नासीदन्तो महेशानि तत्र हृष्टोऽभवज्जनः । वेदघोषो द्विजानां हि नानावाद्यरवो महान् ॥ २९ ॥
मृदङ्गदुन्दुभिरवैर्ननृतुश्चाप्सरोवराः । विद्याधराः किंपुरुषा नारदाद्या महर्षयः ॥ ३० ॥
सर्वे समागतास्तत्र पितामहमखोत्सवे । यूपास्तथोच्छ्रिताः सर्वे हिरण्यस्राविणः शिवे ॥ ३१ ॥
ततोऽश्वः प्राविशत् पत्नी तस्मिन् कर्मणि नागता । मण्डयन्ती स्वकाङ्गानि देवपत्नीभिरादरात् ॥
विलम्बितायां सावित्र्यामाजुहावात्रिरादरात् ॥

अत्रिः —

पत्नीवान् वेधसोऽप्याद्यो यज्ञोऽयं भविता त्वया । किं विलंबेन सावित्रि मा तेऽभूत् कालविप्लवः॥
इत्थं सात्रिवचः श्रुत्वा ययौ तत्सदमम्बिके । एतस्मिन्नन्तरे क्रुद्धः शक्रमाहूय सोऽब्रवीत् ॥ ३४ ॥

ब्रह्मा —

गच्छ गच्छाधुना शक्र पत्नीमन्यां नियोजय । अङ्गन्त्वं वेदवाक्येन अपहाय यजामि ताम् ॥
श्रुत्वा स ब्रह्मणो वाक्यं शक्रोऽगच्छन्निरीक्षितुम् । तत्राभीरसुतां काञ्चित् जगृहे रूपसंयुताम् ॥
भूषणैर्मण्डयित्वा तां तत् सदः समुपानयत् । अध्वर्युमत्रिं क्रोधेन दीक्षयेति तदा विधिः ॥
प्राह संशृण्वतां तत्र द्विजानां तद्द्विजोऽब्रवीत् ॥

अत्रिः —

मा तेऽन्यथाद्य कर्तव्यं सावित्र्यपि समागता । दीक्षितस्य न वै मन्युरिति वेदानुशासनम् ॥ ३८॥
तदत्रिणो वचो ब्रह्मा समुल्लङ्घ्यात्रिमाह हि । दीक्षयस्वेति च पुनः क्रोधामर्षसमन्वितः ॥
तामत्रिर्दीक्षयामास ब्रह्मणोऽनुमते तदा । तया स तुरगो विप्रैस्तत्र संवेशितस्तदा ॥ ४० ॥
एतस्मिन्नन्तरे क्रुद्धा सावित्री तं सुरेश्वरम् । शशाप कुपिता देवमत्रिं ब्रह्माणमेव च ॥ ४१ ॥

सावित्री —

पराजितो दैत्यवर्गैर्निःश्रीकश्च भविष्यसि । नहुषो भविता शत्रुः शची तमुपतिष्ठताम् ॥ ४२ ॥
यथात्रिं सा शशापेवं सावित्री क्रोधमूर्छिता ।

सावित्री —

आत्रेया ब्राह्मणाः सर्वे निःश्रीकाश्चोंछजीविनः । अत्र त्वं भविता पुत्रैर्विहीनो मम वाक्यतः ॥
असत्कृतो द्विजानां हि भूयादेव न संशयः । स्वभर्तारं तदा प्राह क्रोधाच्चक्षूंषि वर्तयत् ॥ ४४ ॥
न प्रतिष्ठा भवेद् धातस्तव लोकेषु दुर्हृदः । हरेण तेऽद्य दुष्टेन शिरश्छिन्नं भविष्यति ॥ ४५ ॥
सावित्री विष्णुमाहेत्थं दह्यमाना सुरासुरान् । यस्मादाभीरकन्यां त्वं दृष्ट्वापेक्षितवानसि ॥ ४६ ॥
तस्मादाभीरवंशस्त्वं भविता द्वापरे भवान् । चाक्षुषे भविता यज्ञो दक्षस्य सुमनोहरः ॥
तत्र रुद्रेण देवाश्च ऋषयोऽपि सुदण्डिताः । भवन्ति मम शापेन नात्र कार्या विचारणा ॥ ४८ ॥
इत्युवाच च सावित्री तस्थौ चित्रार्पितेव सा । सर्वे ब्रह्माः सुरास्त्रस्ताः खिन्ना ब्रह्मसदो गताः ॥
तां विष्णुः सान्त्वयामास सर्वेषां (?) सुरसंसदि ॥

विष्णुः —

मैवं शप विशालाक्षि भर्ता ते पद्मसंभवः । भर्तुः प्रियहिते युक्ता सा सावित्री पतिव्रता ॥ ५० ॥
त्वं वेत्सि सर्वधर्माणां सारं देवि न संशयः । त्वया सहायं कल्याणि दीक्षां परमिकां गतः ॥
अश्वमेधो महायज्ञः पुष्करेषु प्रवर्तते । प्रियोऽत्यन्तं महेशस्य ऋत्विग्भिश्च यथाविधि ॥ ५२ ॥
धर्मपत्नी तथा ज्येष्ठा सर्वधर्मप्रवर्तनी । तवेयं सखिभावेन वर्ततां लोकसुन्दरी ॥ ५३ ॥
इत्युक्त्वा तां तदा कन्यां गायत्री पादयोर्नताम् । विष्णुवाक्यगतामर्षा सावित्री परिषस्वजे ॥
ब्रह्मणे च वरो दत्तः सावित्र्या सान्त्वितो विधिः ।

सावित्री —

यत् छिन्नं ते भवेच्छीर्षं भूयाल्लोकहिताय हि । कार्तिक्यां पुष्करे ब्रह्मन् तव भूयान्महोत्सवः ॥
इत्युक्त्वा प्राविशच्छालां तया चाभीरकन्यया । पुष्करेष्वभवद्यज्ञः स्वाढ्यो भूरिदक्षिणः ॥५६॥

ईश्वरः —

ततः स ववृधे यज्ञो ब्रह्मणः परमेष्ठिनः । तस्मिन् क्षेत्रे पुष्करे च ये स्थिताः शांभवोत्तमाः ॥
नैव संपूजितास्तेन दानमानासनादिभिः । ते पुष्करेशमासाद्य तुष्टुवुः शरणागताः ॥ ५८ ॥

शांभवाः —

श्रीपुष्करेश तव भागवतानथास्मान् विप्रांश्च शांभववरानपहाय दर्पात् ।
विश्वेश्वरस्तव [1] महाजनिमार्चकांश्च ब्रह्माप्ययं घनगणैः सहितोरुगोभिः ॥ ५९ ॥

---

१ महानतिप्रार्चकांश्च C

विप्रान् समर्चयति नैव भवत्प्रपन्नान्स्मान् महेशशरणानपहाय कष्टम् ।
त्वत्पादसंसेवनजातहर्षान् किं भाग्यजातनिकरैश्च विनश्वरैर्नः ॥ ६० ॥
तद्गर्वपर्वत महाकुलिशस्त्वमीश शम्भो सदा स्वां भवदानतुष्टः (?) ॥ ६१ ॥

इति विप्रैस्तदा देवि स्तुतोऽहं भस्मभूषणः । दिगम्बरः शूलकरः पादुकाविलसत्पदः ॥ ६२ ॥
ब्राह्मं कपालमादाय ब्रह्म यज्ञसदं गतः । निवारितो ब्रह्मगणैः सदाहमतिरस्कृतः ॥ ६३ ॥
हुङ्कारेणाथ तान् [1]भर्त्स्य लोलनेत्रयुगेन च । मत्तद्विरदसंकाशो गतस्तत्सुरसंसदम् ॥ ६४ ॥
केचिदूचुरहो मत्तः क्वायं यज्ञः सधृक् क तु । नग्नः सदाशुचिः कष्टं कपालोद्यत्करः कथम् ॥
श्वभिः समावृतः पापो हा कष्टं किमुपस्थितम् । विप्राणां वदतां तत्र सुराणां च महेश्वरि ॥ ६६ ॥
तदनादृत्य वाक्यानि ब्रह्माणं समुपस्थितः । ऋत्विग्भिश्च सदस्यैश्च विष्णवादिविबुधैर्वृतम् ॥ ६७ ॥
तमवोचं महादेवि धर्मसंप्राकृतं वचः ।

ईश्वरः —

अहो धर्म्यो महायज्ञः पुष्करेषु प्रवर्तते । स्वादन्नश्चाश्वमेधोऽयं ब्राह्मोऽयं बहुदक्षिणः ॥ ६८ ॥
श्रुत्वाहं क्षुधयाविष्टो भोक्तुमभ्यागतः सदः । इति मद्वचनं श्रुत्वा ब्रह्मा प्राह तदाम्बिके ॥

ब्रह्मा —

यज्ञोऽयं क्षुच्छ्रमैर्हीनो यथा जोषं जुषस्व मे । अन्नं च विविधं भिक्षो वासांस्युच्चावचानि मे ॥
तच्छ्रुत्वा ब्रह्मणो वाक्यं श्रुत्वा हर्षात् पुनर्विधिम् । अवोचं शृण्वतां तेषां विप्राणां ससुरैः सह ॥

ईश्वरः —

सरस्वत्यामथ स्नात्वा दृष्ट्वा श्रीपुष्करेश्वरम् । पश्चाद्भोक्ष्येऽद्य नियमो मया स्वीकृत एव हि ॥
यास्यामीति तदा वेधाः कपालं स्थापितं मया । तदैवान्तर्हितः सौम्ये सुराणां तत्र पश्यताम् ॥
विस्मिताश्चाभवन् सर्वे भूसुरास्ते सुरैः सह । इदमूचुर्वचः सर्वे कपालं स्थापितं क तु ॥ ७४ ॥
अशुच्यन्तर्बहिर्वेद्यां त्यजन्तु परिचारकाः । इत्थं श्रुत्वा तत्कपालं त्यक्तं ब्रह्मगणैः शिवे ॥ ७५ ॥
पुनस्तत्सदृशं तत्र तथैव समवस्थितम् । भ्रान्तास्ते ब्रह्मपुरुषाः कपालवहनादुमे ॥ ७६ ॥
ना(?)न्तो न दृश्यते तत्र कपालानां च राशयः । एवं ते विस्मयाविष्टा हरिब्रह्मादयः सदा ॥
दृष्ट्वाश्चर्यकरं तत्र महेशस्य विचेष्टितम् । तुष्टुवुर्मां तदा देवि ब्रह्माद्या विबुधास्तदा ॥ ७८ ॥

---

१ सर्वान् भर्त्स्य C

ब्रह्माद्याः —

त्वं राजा मखभाङ्महेश सततं त्वामाह्वयन्तेऽध्वरे
साम्ना ऋग्गणयाजुषैः प्रतिपदं रुद्रोऽग्निरित्याह हि ।
त्वन्मायाधिगमेन मोहमतयः सर्वामरैस्तुल्यतां
दृष्ट्वा त्वामधिगम्य कष्टमखिलं त्यक्त्वा प्रमोदामहे ॥ ७९ ॥

अहो देव मुग्धेन्दुचूड प्रसीद [1]निषद्यादिबर्हिस्त्वमीशान तुष्टः ।
प्रकृष्टं महाकष्टजालं ममाघं हरस्वेश शम्भो प्रसीद प्रसीद ॥ ८० ॥
यया मायया मोहमायान्ति सर्वे तवाङ्के निषण्णा भवानीति गीता ।
भवान् मायिमायी भवानादिकर्ता भवत्तोऽखिलं जातमेतद्विचित्रम् ॥ ८१ ॥

इत्थं स्तुतोऽहं देवेशि तैस्तदा दर्शितं मया । रूपं त्रिलोचनं साम्बं नीलग्रीवं त्रिशूलकम् ॥ ८२॥
पुनः प्रणेमुर्मां दृष्ट्वा ब्रह्मविष्णुसुरा द्विजाः । तदा प्राञ्जलयः सर्वे मां स्तुवन्ति तदाऽम्बिके ॥

ब्रह्माद्याः —

विश्वाधिकस्त्वं भगवान् महर्षिः हिरण्यगर्भं जायमानं च पश्येः ।
सत्यं देवः शुभया मां हि बुद्ध्या नियोजयस्वाशु महेश शम्भो ॥ ८४ ॥
त्वत्तः परं नापरमस्ति किंचित् त्वत्तो नाणीयान् न समश्चाधिको वा ।
वृक्ष इव त्वं स्थाणुरीशश्च नित्यस्त्वया पूर्णं जगदेतद्विचित्रम् ॥ ८५ ॥
न जानन्ति वेदा न जानन्ति देवा न जानन्ति त्वामात्मसंस्थं महेशम् ।
प्रकृष्टोरुपुण्यैर्यदि त्यक्तमोहो भवत्पादसक्तो भवेत् तस्य सिद्धिः ॥ ८६ ॥

ईश्वरः —

देवि तेषां स्तुतिं श्रुत्वा तानवोचं प्रहर्षितः । पुष्करे संस्थिता विप्रा मत्पादशरणास्तथा ॥ ८७॥
क्षेत्रिणो भवता पूज्यास्तथान्येऽपि मुनीश्वराः । क्षेत्रमागत्य यः कोऽपि क्षेत्रस्थान् पूजयेत्पुरा ॥
अथान्यानर्चयेत् पश्चाद्यदि पात्रानहो विधे । मद्भक्ताः शांभवश्रेष्ठा भक्तपूजा ममेष्टदा ॥ ८९ ॥
विहाय भक्तान् मय्येव अन्यं संपूजयन्ति ये । तैः कष्टं प्राप्यते ब्रह्मन् पुष्करेऽन्यत्र वा सदा ॥
पुष्करे त्वत्कृतो यज्ञः स्वाद्वन्नो बहुदक्षिणः । मत्प्रीतिजनको जातः फलं तेऽष्टगुणं भवेत् ॥
यस्तु पुष्करमासाद्य नानाधर्मगणं चरन् । तस्याष्टगुणितं भूयादिति मे व्रतमाहितम् ॥ ९२ ॥

१ निषादादि C

एतत्कपालानुगुणं जाताः पूर्वे पितामहाः । सप्रज्ञानि व्यतीतानि मन्वन्तरशतानि च ॥
अस्मिन् संसारचक्रे त्वं मा गर्वं वह पद्मज । प्रणम्य मां तदा ब्रह्मा तान् विप्रान् पूजयत्तदा ॥
गोभिरन्यैश्च वासोभिः शर्मवान पुष्करस्थितान् । स्नानार्थं सरसस्तस्मादानीतेयं सरस्वती ॥९५॥
ज्येष्ठं पुष्करमासाद्य तरङ्गावलिभासुरा । तत्रावभृथमासाद्य रराज स पितामहः ॥ ९६ ॥
सावित्र्या चैव गायत्र्या ऋत्विग्भिश्च सुरासुरैः । पुष्करेशं समभ्यर्च्य स्तोत्रमेतज्जगाद च ॥

ब्रह्मा —

[1]यं विभेद्य विमृशामहे शम्भुम् । निदधामोऽञ्जलिजालव्रतैः ॥ ९८ ॥

अनेकविधि कल्पितं हर कपालमालाधर हरस्व विलसच्छ्रुतिप्रभव पापतापापह ।
असर्वजनिदुर्दृशां प्रतिपदं विनाशाशुभं महेश जनिमार्जनाद्भव भवादिबन्धं हर ॥ ९९ ॥

ईश्वरः —

स्तुत्वा मां स तदा ब्रह्मा प्रणम्याथ जगौ सुरान् ॥ १०० ॥
पुष्करे दुष्करो वासः पुष्करे दुष्करं तपः । पुष्करे दुष्करं दानं पात्रं तत्र सुदुष्करम् ॥ १०१ ॥
सरस्वती पुण्यतमा तदा याता महार्णवम् । कार्तिक्यां तु विशेषेण स्नानं पुण्यं हि पुष्करे ॥

सूतः —

इत्थं स वेधाः प्रजगाम चोक्त्वा देवैः स्वलोकं परमं मुनीन्द्रैः ।
यः पुष्करं संस्मरति दिने दिने न तस्य पापानि भजन्ति वृद्धिम् ॥ १०३ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे पुष्करमाहात्म्ये ब्रह्मयज्ञ-पुष्करेशलीलावर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥

## ॥ षट्त्रिंशोऽध्यायः ॥

ईश्वरः —

भीमेश्वरं महादेवि स्थानं भीमरथीतटे । यत्र कालो मया जीर्णः क्षेत्रं कालञ्जरं हि तत् ॥ १ ॥
भीमेश्वरं महालिङ्गं तत्रास्त्येकं वरानने । तत्र शैवाश्च देवेशि वसन्ति भसितोज्ज्वलाः ॥ २ ॥
भवभावनया त्यक्तभवभावाश्च ते सदा । भीमेश्वरं बिल्वदलैर्मामभ्यर्च्य वसन्ति वै ॥ ३ ॥

---

१ अपूर्णोऽयं श्लोकः ।

तत्र विष्णुः समभ्यर्च्य भीमेशं बिल्वपल्लवैः । निधनेत्यादिभिर्मन्त्रैर्नैवेद्यैर्विविधैरपि ॥ ४ ॥
तुष्टाव प्रणतो लिङ्गं दर्शनादिष्टकामदम् । तत्र लक्ष्म्या विष्णुसवं यज्ञं तत्राहरद्धरिः ॥ ५ ॥
भीमरथ्यां तदा स्नात्वा तस्मिन्नवभृथे शिवे ।

हरिः —

शम्भो त्वं मरुतां पिता त्रिजगतामाराध्य ईशो हर
[1]ते सोमो नमसाभिमिक्ष्महि विभो रुद्र क्षयद्वैरिणम् ।
शम्भो सोममिमं पिब त्वमधुना गौरो यथा तर्षितः
त्वत्तृप्त्या जगदेतदद्य भगवन् इन्द्रादिभिस्तृप्यते ॥ ७ ॥

इन्द्रस्यात्मा परमस्त्वं महेशः यज्ञस्यात्मा दक्षिणा तेऽद्य पत्नी ।
सहैव त्वा सन्तं न विदन्ति देवाः सर्वात्मा त्वं सर्वगतश्च नित्यः ॥ ८ ॥

इत्थं भीमेश्वरं स्तुत्वा विष्णुर्नत्वा पुनर्हि माम् । अयाचत वरं मत्तस्त्वत्समीपे वसाम्यहम् ॥ ९ ॥
सुरासुरैरहं युद्धे श्रान्तोऽस्मि परमेश्वर । त्वया सह वसाम्यद्य भीमरथ्यास्तु दक्षिणे ॥ १० ॥
कुणिकुम्भात् प्रतीच्यां हि स्नात्वा कालञ्जरे हरिः । प्रभाते स सदा देवि मल्लिङ्गं शिरसा दधत् ॥
इति स्तुत्वा तदा देवि गच्छेत्यभिहितो मया । तत्रावसत स मल्लिङ्गं दधन्मूर्ध्ना हरिस्तदा ॥
उवास दक्षिणे तीरे भीमरथ्यास्तदाम्बिके । तत् पाण्डुरङ्गक्षेत्रं हि विष्णोः प्रियकरं सदा ॥

देवी —

कुत्र कालस्त्वया जीर्णः किमर्थं वद मे शिव । कुणिकुम्भमिति क्षेत्रं किं तत् क्षेत्रं वद शिव ॥

सूतः —

तदा देवीं महादेवः तत्क्षेत्रस्य च वैभवम् । कथयामास विप्रेन्द्राः गौरीं प्रति महेश्वरः ॥ १५ ॥

ईश्वरः —

पश्चिमांभोनिधेस्तीरे कुणिकुम्भं महेश्वरम् । समभ्यर्च्यैव नियतं कुणिर्नाम महामुनिः ॥ १६ ॥
उवास तस्य नाम्नैव क्षेत्रं तत् प्रथमं शिवे । स मां तुष्टाव हृष्टात्मा कुणिकुम्भेश्वरं हि माम् ॥

कुणिः —

विश्वनाथ मम नाथ सुनाथ घोरसंसृतिभयं प्रमथाथ ।
स्वर्गपान्थकृतपाथ सुनीथ पाहि मां सुरगणाधिपनाथ ॥ १८ ॥

---

१ त्वां सोमं इति पाठो युक्तः ।

तत्स्तुत्वा तस्य नाम्नाहमभवं गिरिजे तदा । श्वेतो नामाभवद्राजा कालमृत्युप्रपीडितः ॥ १९ ॥
मृत्युञ्जयं मामाराध्य तत्र काले महेश्वरम् । रुद्रमन्त्रैः समभ्यर्च्य बिल्वपत्रैर्मनोरमैः ॥ २० ॥
तुष्टाव भक्तिमान् राजा तस्य मृत्युं हराम्यहम् ॥

श्वेतः —

मृत्युञ्जय महादेव जगदीश्वर शङ्कर । मृत्युग्रस्तं मोचयाशु त्रियम्बक नमोऽस्तु ते ॥ २१ ॥

देवदत्तकृतनेत्र सुमित्रीभूत यक्षराज दक्षसुशिक्ष ।
पक्षिवाहनुत पूज्यपदाब्ज व्यस्तपूष भगनेत्र पाहि माम् ॥ २२ ॥

तत्स्तुत्याऽहं तदा कालो विशीर्णः परमेश्वरि । कालञ्जरमभूत् क्षेत्रं ततः प्रभृति शङ्करि ॥ २३ ॥
भीमेश्वरं मां दृष्ट्वैव भीमपापैः प्रमुच्यते । अत्रेतिहासं ते वक्ष्ये शृणुष्वावहिता मम ॥ २४ ॥
वने गोपालकोऽसीत्स नाम्ना गोनन्दकः पुरा । सितासितास्तथा कृष्णाश्चित्राः कल्माषकापिलाः ॥
तस्यासन् विविधा गावः सवत्सा जाविका गणाः । महिषीणां गणास्तस्य बह्वासन् गोपसंकुलाः ॥
स गोरसैः श्रीभीमेशमभिषिञ्चति नित्यशः । दधिखण्डैश्च सघृतैर्धूपैर्दीपैस्तथाम्बिके ॥ २७ ॥
पयसां स घटैरीशं स्नापयत्यनिशं मुदा । तस्य गोगणमध्यस्था नन्दिनीनामविश्रुता ॥ २८ ॥
बालवत्सा तथा सा गौः हुंभारावैर्गता वनम् । गोभिर्गोपसुतैर्याता वनं हरितशाद्वलम् ॥ २९ ॥
भीमरथ्यास्तदा तीरे चरन्ती सा ददर्श माम् । तस्यास्तद्धृदयं ज्ञात्वा शार्दूलोऽहं तदाम्बिके ॥
करालैर्विकटैर्दन्तैर्भीषणैर्भीषणाकृतिः । मां दृष्ट्वा दुद्रुवुर्गोपाः गावो वत्सा वनाद्वनम् ॥ ३१ ॥
तन्ममाक्रन्दितं श्रुत्वा गावो गर्भान् विसुस्रुवुः । वितत्य लोचने श्रोत्रे पुच्छं धुन्वन्त्यगादियम् ॥
नन्दिनी नाम गोरत्नं मां प्रणम्याह सादरम् ॥

नन्दिनी —

अहो व्याघ्र महाभाग किं ते कार्यं मयोद्यतम् । तद्विधेहि महाव्याघ्र शरीरं ते ददाम्यहम् ॥
किन्त्वेकं वचनं मेऽद्य मृगेन्द्र शृणु सत्यतः । बालो मे तर्णकोऽत्यन्तं पाययित्वा च तं पुनः ॥
दृष्ट्वा सखीगणं सर्वं गोपान् गोपीश्च मातरम् । जीर्णभृङ्गद्विजाऽद्युं सा घासं चापि नहि क्षमा ॥
इत्युक्तं नन्दिनीवाक्यं श्रुत्वा व्याघ्रोऽहमम्बिके । तामवोचं क्षुधाविष्टस्तदानीं तां पयस्विनीम् ॥

व्याघ्रः —

क्षुत्क्षामोऽहं जराव्याप्तः शुष्ककण्ठोऽस्मि नन्दिनि । पिपासा बाधते मां हि त्वमस्त्वद्रक्तपानतः ॥
यथागमिष्यसि पुनः शपथान दातुमर्हसि । सा नन्दिनी तथा व्याघ्रवचः श्रुत्वा तदाम्बिके ॥

स्वपयैर्मां महाव्याघ्रं श्रापयामास पादयोः ॥ ३८ ॥

नन्दिनी —

तर्णकं पाययित्वाऽहं दृष्ट्वा सख्यश्च मातरम् । नागमिष्ये यदि व्याघ्र भीमेशाग्रे शपाम्यहम् ॥

बालवत्सां तु यो गां वै समग्रां दोग्धुमिच्छति । तत्पापं मे भवेद्व्याघ्र यद्यहं नागमे पुनः ॥ ४० ॥

अरक्षिता च यो राजा बलिषड्भागहार्यपि । तत्पापं मे भवेद्व्याघ्र यद्यहं नागमे पुनः ॥ ४१ ॥

वेदाध्ययनहीनश्च सन्ध्याहीनश्च यो द्विजः । तत्पापं ... ... पुनः ॥ ४२ ॥

पतिव्रता पतिं त्यक्त्वा या चान्यं कुरुते पतिम् । तत्पापं ... ... पुनः ॥ ४३ ॥

शिवार्चनादिहीनो यो भवेद्रुद्राक्षवर्जितः । तत्पापं ... ... पुनः ॥ ४४ ॥

रुद्राध्यायविहीनो यः पञ्चाक्षरविवर्जितः तत्पापं ... ... पुनः ॥ ४५ ॥

अन्यदेवसमं पश्यन् महेशं यश्च निन्दति तत्पापं .... .... पुनः ॥ ४६ ॥

सोमवारे प्रदोषे च चतुर्दश्यष्टमीषु च । दिवा भुङ्क्ते च यो मोहात् शिवलिङ्गार्चनोज्झितः ॥

तत्पापं ... .... ... ... पुनः । ४७ ॥

ऊर्ध्वपुण्ड्राङ्कितो यश्च चक्राङ्को मृद्भिरेव च । तत्पापं ... ... पुनः ॥ ४८ ॥

एवं सा नन्दिनी शापानुक्त्वा वत्सं सखीं ययौ ।
सा पाययित्वा वत्सं स्वमापृच्छय च सखीजनम् ॥ ४९ ॥

मातरं तां समालिङ्ग्य ययौ सा हृष्टमानसा । तां वत्ससहितां व्याघ्रो ददर्शागच्छतीं तदा ॥

व्याघ्रं प्रणम्य सा तस्थौ विनयावनतानना । प्राह व्याघ्र तदा देवी नन्दिनी विश्वनन्दिनी ॥

नन्दिनी —

यथेष्टं मां महाभाग खाद त्वं रुधिरं पिब । भीमेश्वरो मे तुष्टः स्यात् प्राणदानान्महेश्वरः ॥

एतस्मिन्नन्तरे वत्सो व्याघ्रं प्राह महाबलम् ।

वत्सः —

मुञ्च मन्मातरं व्याघ्र भक्षाद्य पललं मम । कोमलं तव तृप्तिश्च भविष्यति न संशयः ॥ ५३ ॥

व्याघ्रस्तर्णकवाक्येन नन्दिन्याः सत्यवाक्यतः । हर्षवर्षेण महता स्वरूपं परमास्थितः ॥ ५४ ॥

त्रिनेत्रो नीलकण्ठश्च महोक्षवरवाहनः । सवत्सा नन्दिनी पादौ मदीयौ प्रणता तदा ॥ ५५ ॥

तुष्टाव मां तदा शम्भुं वरं दातुं समुद्यतम् । ५६ ॥

नन्दिनी —

देवस्त्वं नभसां पतिः पशुपतिश्चोमापतिर्विट्पतिः
पत्तीनां च पतिर्वनस्य च पतिस्त्वं वै दिशानां पतिः ।
लुंचानां च पतिः सदोगणपतिस्त्वं वै हिरण्यपतिः
अश्वानां च पतिः सभापतिरसि. गृहस्य त्रातेः (?) पतिः । ५७ ॥

सेनायाश्च पतिस्त्वदीयशरणं प्राप्ता पशुत्वं हर ॥ ५८ ॥

इत्थं सा नन्दिनी प्राह तां पशुत्वादमोचयम् । मत्सारूप्यं तदा दत्तं तत्स्तुत्या तोषितोऽम्बिके ॥.

इदं ते भीमनाथस्य चरितं कथितं मया । श्रुत्वा सत्यपरो देवि नानृतो भविता नरः ॥ ६० ॥

सत्येन लोकान् जयति सत्येन तपते रविः । सत्येन संस्थिता पृथ्वी सत्ये सर्वं प्रतिष्ठितम् ॥

पशुपतिमथ मां प्रणम्य सा गौः गहनतरं विजहौ भवोग्रबन्धम् ।
पुरहरविधिदेववन्द्यमौलिं सुरवरमम्बिकया नतोऽसि (?) भीमम् ॥ ६२ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे कालञ्जरक्षेत्र—भीमेश्वरमाहात्म्ये नन्दिनीगोसारूप्यदानवर्णनं नाम षट्त्रिंशोऽध्यायः ॥

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

ईश्वरः —

शृणु शैलसुते कश्चिदासीदावन्तिको द्विजः । सदारतनयस्तत्र नाम्नाऽभूत् स सुदर्शनः । १ ॥

तेन संपादितं द्रव्यमसंख्यं हेमरूप्यकम् । दासीदासाश्च तस्यासन् महिष्यजगवादिकम् ॥ २ ॥

स दारभोगेन सदा वेश्याचेटीरतिर्द्विजः । कालो नीतः सदा तेन दुर्वार्ताकलहादिभिः ॥ ३ ॥

तेनान्नदानं न कृतं ब्राह्मणेभ्यो महेश्वरि । न हिरण्यं न वस्त्रं च न गृहं शयनादिकम् ॥ ४ ॥

नैवारामः कृतस्तेन छायावृक्षोऽपि नो पथि । न बिल्वारोपणं तेन कृतं नाश्वत्थरोपणम् ॥ ५ ॥

तटाकं वापि विपुलं शरण्यं सर्वदेहिनाम् । न कूपः खानितस्तेन तृषार्तेभ्यो मरुस्थले ॥ ६ ॥

ग्रीष्मे घर्मांशुतप्तानां प्रपा नैव च कारिता । छायामण्टपनिर्माणं वर्षत्रातपवारणम् ॥ ७ ॥

नाकारि तेन देवेशि शिवलिङ्गालयस्तथा । नैव भूतिर्गलाङ्गेषु ललाटे चापि मस्तके ॥ ८ ॥

त्रिपुण्ड्रो लेपितो नैव नैव भस्मावगुण्ठनम् । नैव पञ्चाक्षरो मन्त्रः श्रुतो वा का जपे कथा ॥

रुद्राध्यायजपस्तेन न दृष्टो नापि वा श्रुतः । शिवलिङ्गार्चनं नैव कृतं बिल्वदलैः शिवे ॥ १० ॥
शिवनैवेद्यवार्तापि तस्य दूरत एव हि　शांभवैः सह संलापे तस्य हुल्लास एव न ॥ ११ ॥
शिवलिङ्गं नैव दृष्टं जन्ममध्ये शिवालये । न गृहे किमु वक्तव्यं लिङ्गं बिल्वदलार्चितम् ।१२॥
न स्नानं न जपो होमः स्वाध्यायः पितृपूजनम् । न श्रौतस्मार्तकर्माणि न करोति द्विजोऽपि सन् ॥
न सन्ध्या वन्दिता तेन काले पापप्रणाशिनी । गायत्रीजपमात्रो वा नाभूत् स हि द्विजाधमः ॥
शिवालये वा देवेशि न दृष्टस्तेन शङ्करः । शिवोत्सवे रथस्थोऽपि वृषस्थो वा महेश्वरः ॥ १५ ॥
न दृष्टस्तेन देवेशि प्रदोषे शशिशेखरः । सोमवारे तथाष्टम्यां चतुर्दश्यादिपर्वणि ॥ १६ ॥
न दृष्टा दीपमाला वा दूरस्थेनापि शांभवि । प्रदक्षिणनमस्कारैः स्तुतिभिर्न स्तुतः शिवः ॥
सहस्रनामभिः पूजा न शताष्टादिनामभिः । नाभ्यर्चितः पशुपतिः साक्षात् कैवल्यदायकः ॥१८॥
तरुणीमेव सततं वारुण्या सह सेवते । स तु पापान्यनन्तानि असकृच्च करोति हि ॥ १९ ॥
स ग्रामपालानाहूय द्विजानां गोधनं वसु । सुलुण्ठयति पापात्मा गृहाणुद्दीपयत्यपि ॥ २० ॥
मधु मांसं तिलं तैलं तण्डुलं कम्बलानि च । स विक्रीणाति सततं धनवृद्ध्यैव जीवति ॥
आहूय धीवरान् वापि क्रयार्थं मत्स्यघातकः । सदा कृषिपरो नित्यं देवतातिथिदूषकः ॥ २२ ॥
विषवासक्तनिरतः स कन्यासूपसेवते । ब्रह्मद्रोहरतो नित्यं शिवनिन्दापरः सदा ॥ २३ ॥
पिशुनो राजगामी च वाचाटोऽसूयकः खलः । श्रोत्रियैः कृशवृत्तिस्थैर्याचितस्तानसूयति ॥२४॥
न पार्वणं कृतं तेन श्राद्धं पितृमृतेऽहनि । गवां संरक्षको देवि क्षीरपानार्थमेव हि ॥ २५ ॥
स बालवत्सां गां दोग्धि वत्सक्षीरं विवर्जयन् । शिवद्रोहपरो नित्यं सर्वदा जनपीडकः ॥ २६ ॥
स्त्रीणां द्रव्याण्यथादाय गणनावर्जितान्यथ । वृद्ध्या दास्यामि चेत्युक्त्वा निष्कं तासां न यच्छति॥
दुर्भिक्षं ध्यायति सदा धान्यादिक्रयहेतवे । गोगजाश्वाविकं चैव सौनिके क्रयकृत् सदा ॥ २८ ॥
धनार्जनं सदा देवि पापेनैवाकरोद् द्विजः । तद्ग्रामवासिविप्राणां धान्यानि सुबहून्यपि ॥ २९ ॥
गृह्णाति च तदा तेषां हीनार्घाण्येव दीयते (?) । तद्रसानां च विक्रेता सदा वार्धुषिकः खलः ॥
एवं संवसतस्तस्य तदासीच्च जलोदरः । स वृद्धिमगमद्रोगस्तस्य पापबलेन हि ॥ ३१ ॥
न भिषक्संप्रदानेऽपि औषधार्थं तदांबिके । मतिरासीच्च लुब्धस्य परद्रव्यापहारिणः ॥ ३२ ॥
न शान्तौ होमकार्येषु नैवासीत् तद्धनव्ययः । सदा तल्पगतश्चासीत् जलोदरनिपीडितः ॥ ३३ ॥
अतिवृष्ट्या तदा सायं तद्गृहं विस्तृतं स्थितम् । समागतस्तत्र शैवः प्रदोषशिवपूजकः ॥ ३४ ॥

तस्य भार्याऽथ तं विप्रं पाचयामास वै गृहे । सोऽपि विप्रस्तदा सायं स्नात्वा भस्मविभूषितः ॥
रुद्राक्षमालाभरणश्चकार शिवपूजनम् । बिल्वपत्रैर्धूपदीपैः प्रणामप्रक्रमैस्तथा ॥ ३६ ॥
शिवनैवेद्यताम्बूलैर्नीराजनपुरःसरम् । स शयानो गदार्तश्च पश्यंस्तत्कृतपूजनम् ॥ ३७ ॥
नैव किञ्चिदथोवाच तद्भार्या तं तदा द्विजम् । वासयामास तद्रात्रौ भोजनाच्छादनादिभिः ॥
तामनुज्ञाप्य शैवोपि ययौ प्रातर्यथागतम् । तस्मात् स पञ्चमे चाह्नि हिक्कारुद्धोर्ध्वकण्ठकः ॥
विवृत्तनयनोऽत्यर्थं प्रसार्य चरणावुभौ । मृतो यमभटैर्नीतो बद्ध्वा पाशैः कशादिभिः ॥ ४० ॥
ताडितश्च तदा नीतो मार्गे वैवस्वतं तदा । तद्भार्या चापि रुरुदे जहृषुस्तत् परे जनाः ॥ ४१ ॥
ततो दग्धो बान्धवैश्च हा मृतोऽयमिति द्विजः । नानायातनया विप्रो नीतो वैवस्वतान्तिकम् ॥
यमोऽपि स्वभटानाह चित्रगुप्तं पुरः स्थितम् ।

यमः —

किमनेन कृतं पापं विचार्य वद लेखक । पापमूर्तिरयं तावदस्मिन् कार्या दया न हि ॥ ४३ ॥
चित्रगुप्तस्तमाहेदं विनतः प्राञ्जलिस्तदा ।

चित्रगुप्तः —

एतस्य पापगणनाफणितौ फणीन्द्रो नालं सहस्रफणको द्विसहस्रजिह्वः ।
संपीड्यतामयमहो कशयोरुघातैः पातैः शिलाप्रपतनैः शरमुद्गरैश्च ॥ ४४ ॥

विवृत्य नयने तदा प्रबलचण्डभानोः सुतः तटिच्चटचटारवप्रतिभटार्भटीदन्तजैः ।
मुहुर्भटगणास्तदा वदति पात्यतां क्वाथ्यतां सुघोरनरकाग्निभिः प्रबलशस्त्रधारादिभिः ॥

यमस्य वचनाच्छिवे भटगणास्तदाक्रन्दनैर्भुसुण्ठिलगुडादिभिः परिघतीक्ष्णनाराचकैः ।
द्विजाङ्गपरिकर्तनैः प्रबलतैलदीपोल्मुकैस्तदा तदगुरूल्वणं निखिलयातनां ते व्यधुः ॥

ईश्वरः —

हाहा न कोऽपि सुभगे शिवलिङ्गपूजां कर्तुं यतन्ति विविधैः कुसुमैश्च नीरैः ।
तस्मादिमां शमनघोरमहाग्निभीतिं प्राप्यापि ते हि विवशा विधिकर्मजालैः ॥ ४७ ॥

मन्दारकुन्दनवचम्पकबिल्वपत्रैः मन्दप्रदोषसमये तरुणेन्दुचूड ।
लिङ्गार्चने मतिरहो गिरिशे स धन्यो वृन्दारनन्दितगुणो मुनिवृन्दमान्यः ॥ ४८ ॥

पापान्यमन्दतरसंसृतिघोरबन्धकृन्दायितान्यपि विधूय महानुगः स्यात् ॥ ४९ ॥

किं वक्तव्यमहो गिरीन्द्रतनये यः सायमभ्यर्चयेत्
लिङ्गं मङ्गलदं प्रदोषसमये बिल्वैश्च दूर्वाङ्कुरैः ।
तस्यापारफलाम्बुराशिगणनां कर्तुं न ईशो फणी
स्वस्यास्यान्तरतः सहस्रद्विगुणजिह्वाग्रधारारसैः ॥ ५८ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे शिवगौरीसंवादे सुदर्शनोपाख्यानवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥

## ॥ अष्टत्रिंशोऽध्यायः ॥

ईश्वरः —

असिपत्रोरुविपिनेष्वसिधारासु पातितः । कुम्भीपाके तथा गौरि पक्वश्चात्यन्तमुत्कटम् ॥ १ ॥
तप्ततैलकटाहेषु पाचितः स मुहुर्मुहुः । भटोरुशस्त्रधाराभिस्ताडितः स द्विजस्तदा ॥ २ ॥
गदामुसुण्ठीपरिघैः शूलैः पोथितमस्तकः । शरकृत्तमहामर्मा स्रवद्रक्तस्तथाऽम्बिके ॥ ३ ॥
तुद्यमानस्तथा काकैः सृगालैः श्वभिरावृतः । हाहेति प्रलपन् विप्रः परिधावन्नितस्ततः ॥ ४ ॥
करालदंष्ट्रैः श्वगणैर्दष्टश्चानुद्रुतस्तदा । अन्ये नारकिनश्चापि ब्राह्मणक्षत्रियादयः ॥ ५ ॥
वैश्याः शूद्रास्तथा पापा नानासङ्करजातयः । नानादुःखशतैर्घोरैः पीड्यन्ते यत्र किङ्करैः ॥ ६ ॥
पूयविण्मूत्रकुण्डेषु कशाघातोत्थितैर्व्रणैः । स्रवद्रक्तैः क्षारसेकमहादुःखकृतारवैः ॥ ७ ॥
खड्गताडितहस्तैश्च पादैर्मुण्डैश्च खण्डिताः । विनिष्क्रान्तान्त्रमस्तिष्काः श्वभिश्च बलिभोजिभिः ॥
तप्ततैलपटैरङ्गैर्ज्वलद्भिर्दुःखसङ्कुलैः । दीपितैः केचिदुन्मत्तं धावन्ति च रुदन्ति च ॥ ९ ॥
सन्तप्तवालुकामध्ये लोलयन्त्यपि पापिनः । एवं नारीनरांस्तत्र रोदमानांश्च पापिनः ॥ १० ॥
गर्जन्तस्ताडयन्तस्ते भटा मुद्गरपाणयः । वदन्ति क्रूरवचनैर्भ्रुकुटीकुटिलेक्षणाः ॥ ११ ॥

भटाः —

अहो दुष्कृतकर्माणः सुखबुद्ध्यैव पातकम् । कृतं भवति मोहेन तत्फलं भुज्यतेऽत्र हि ॥ १२ ॥
एनं छिनत दुर्बुद्धिं एनं पोथयताधुना । एनं ताडयताद्याशु एनं खण्डयतासिभिः ॥ १३ ॥
अनेन राज्ञोन्मत्तेन प्रजाः संपीडिता भृशम् । देवद्रव्यपरः पापी द्विजद्रव्यापहारकः ॥ १४ ॥

बान्धवानतिथीन् भृत्यांस्त्यक्त्वा भुङ्क्ते नृपाधमः । तप्ततैलकटाहेषु पात्यतामयमुद्धतः ॥ १५ ॥
अयं द्विजो महापापी श्रौतस्मार्तपराङ्मुखः । त्रिपुण्ड्रभस्मरुद्राक्षरुद्रपञ्चाक्षरोज्झितः ॥ १६ ॥
शिवलिङ्गार्चनाहीनो बिल्वपत्रैस्तथा सुमैः । पराभादः सदा पापी नित्यं पर्वण्यपि द्विजः ॥
धनधान्ययुतश्चापि भार्यापुत्रसमन्वितः । सन्तप्तभ्राष्ट्रमध्येऽयं मर्द्यतां तर्ज्यतां द्विजः ॥ १८ ॥
वैश्योऽयं सर्वदा पापी अन्यन्यासापहारकः । वृद्ध्याधिक्येन पापात्मा स तु दौष्ट्येन जीवति ॥
अत्यन्ततीक्ष्णशस्त्रौघैः सन्तप्तमुसलैरपि । खण्ड्यतां दण्ड्यतां पापः तिलशः पर्वसन्धिषु ॥ २० ॥
अयं शूद्रोऽपि मन्दात्मा ब्राह्मणानवमन्यते । गां ताडयति पादेन ... वृषमानयम् ॥ २१ ॥
हलैरुद्वेजयामास विप्रवित्तापहारकः । अधोमुखोर्ध्वपादोऽयं दग्धः खदिरवह्निना ॥ २२ ॥
अयं भार्यापरित्यागी दोषदर्शनवर्जितः । सन्तप्तकण्टकैर्घोरैः सूचीतुन्नतनुर्भवेत् ॥ २३ ॥
अयं युवा महापापी परदारोपसेवकः । सकामं च सदा पापः परस्त्रीदर्शनोत्सुकः ॥ २४ ॥
शिश्नं सवृषणं चास्य नेत्रे तुद्यन्तु दंशितैः । शूलाग्रैर्मुसलैर्घोरैरुत्पाट्यान्त्राणि दंशितैः ॥ २५ ॥
अयं सर्वत्र निन्दां च करोति सुदुरात्मवान् । उत्पाट्यतामस्य जिह्वा तप्तसन्दंशनैर्भटाः ॥ २६ ॥
तुलां हिरण्यगर्भं च गोसहस्रप्रतिग्रही । विद्वांसः पापभूयिष्ठा वावदूकाः सदा खलाः ॥ २७ ॥
अपापानां च साधूनां निन्दका वादकौशलात् । दग्धाङ्गान् वह्निनरके पातयन्तु मलह्रदे ॥ २८ ॥
अनिष्कृतिपराः पापाः सर्वदा प्रेतभोजिनः । गोद्वयं प्रतिगृह्यापि तद्विक्रयपरायणाः ॥ २९ ॥
श्लेष्मह्रदे सदा पापाः पतन्तु शतवत्सरम् । कन्याविक्रयकृच्चायं स्थितो रक्तमलह्रदे ॥ ३० ॥
मातरं पितरं साधून् कटूक्त्या भर्त्सयत्ययम् । मलह्रदे च पतितस्तथा स्त्रीधनहारकः ॥ ३१ ॥
तद्गत्थकृमिभिर्घोरैर्दष्टसर्वाङ्गसन्धिकः । वैश्वदेवाग्निरहितास्त्रेताग्निपरिवर्जिताः ॥ ३२ ॥
आतिथ्यादिविहीनाश्च देवतातिथिदूषकाः । अयाज्ययाजकाः पापाः सदा धनपरायणाः ॥ ३३ ॥
सन्तप्तवालुकासंस्था दग्धाः सूर्यकरैस्तथा । दम्भाहङ्कारमात्सर्यलोभकामपराः सदा ॥ ३४ ॥
सर्वभूतेष्वविश्वस्ता अमित्राः क्रूरवाक्पराः । कुम्भीपाकेषु पच्यन्ते गोवधे निरतास्तथा ॥ ३५ ॥
विश्वासघातकाः पापाः भर्तृकार्यविरोधिनः । क्रकचैर्दन्तुरैर्भिन्ना द्विधा ते शकलीकृताः ॥ ३६ ॥
विधवासङ्गनिरताः कन्यासन्दूषकाश्च ये । अश्मपातैः सुघोरैस्ते विपोथितकलेवराः ॥ ३७ ॥
सुरापानरताः पापा देवद्रव्यापहारकाः । सन्तप्तशस्त्रधाराभिर्दन्दशूकमहाविषैः ॥ ३८ ॥
दग्धा वृश्चिकजालैश्च स्रवद्रुधिरकर्दमाः । तिष्ठन्ति हा हताः स्मेति वदन्ति करुणं बहु ॥ ३९ ॥

इयं नारी मदोन्मत्ता पतिनिन्दापरायणा । परसङ्गरता नित्यं सन्तप्तायसदण्डकम् ॥ ४० ॥
समालिङ्ग्याशु कशया ताड्यते यमकिंकरैः । परदारोपसेवी च आयसीं प्रतिमां सदा ॥ ४१ ॥
समालिङ्ग्य विदग्धोऽयमाक्रन्दति दिवानिशम् । परान्ननिरतो नित्यं स्वगृहे पाकवर्जितः ॥ ४२ ॥
कृमिराशिं समश्नाति प्रेतात्मा मलभुक् सदा । उभयास्यां च गां गृह्य ताड्यते तप्तपिण्डकैः ॥
ब्राह्मणोऽयं महापापी अन्यश्चक्राङ्कनोत्सुकः । शिवनिन्दापरो नित्यं शांभवद्विट् सदा मुदा ॥
प्रदोषसोमवारे च शिवरात्रौ तथैव च । भुङ्क्तेऽन्नानि दिवा पापी चतुर्दश्यष्टमीषु च ॥ ४५ ॥
तिलशः खण्ड्यतां दुष्टः शस्त्रौघैः क्षारसेचनैः । ब्रह्मचार्ययमुन्मत्तो वेदाध्ययनवर्जितः ॥ ४६ ॥
कामातुरश्च श्राद्धान्नो भिक्षुश्चायं दुरात्मवान् । मिष्टमश्नाति सततं बलादाक्रम्य पीड्यताम् ॥
मर्दयंतां लगुडैर्घोरैर्मुसलैश्चायसैर्दृढम् । ऊर्ध्वपुण्ड्रधरो नित्यं मुदाऽयं ब्राह्मणब्रुवः ॥ ४८ ॥
श्वभिः सन्दश्यतां पापो वायसैर्वृश्चिकैरपि । त्रिपुण्ड्रफालान् दृष्ट्वैव सदा निन्दत्ययं द्विजः ॥
उत्पाट्यतामस्य जिह्वा नेत्रे सूच्या तुदन्तु च । शृण्वन् निन्दां महेशस्य देवानां च द्विजस्य च ॥
आशीविषविषैर्घोरैर्दह्यतां शणवल्कलैः । एवं ते नरका घोरा भटाभटरवैरपि ॥ ५१ ॥
छिन्धि भिन्धीति वादैश्च हाहेति च प्रलापितैः । नानादुःखशतैर्घोरैर्दुःखितः परिधावति ॥ ५२ ॥
असह्यं देवि तद्दुःखं वर्णितुं चापि न क्षमम् । तं दृष्ट्वा दुःखितं विप्रं धावन्तं करुणास्वम् ॥
अन्यानपि शिवे दृष्ट्वा करुणा मे समागता । तत्र शैवकृता पूजा दृष्टा तेनेति तं तदा ॥ ५४ ॥
समानेतं गिरिसुते मया संप्रेषिता गणाः । ममाज्ञया तमावन्त्यं समानेतुं तदाऽम्बिके ॥ ५५ ॥
दृष्ट्वा त नरकं घोरं ते यमेन सुपूजिताः । प्राह तान् प्राञ्जलिः सौरिः कुत्र वा गम्यते गणाः ॥
भवतां दर्शने योग्यः किमयं नरकार्णवः । गणा यमवचः श्रुत्वा प्राहुस्ते तं शिवाज्ञया । ५७ ॥

गणाः —

आवन्त्योऽयं पापयुक्तस्तथापि भगवत्प्रियः । किं वाऽनेन कृतं पुण्यं सूक्ष्मं जानाति शङ्करः ॥
यमानेन कृता पूजा प्रदोषे शैवकल्पिता । दृष्टा तेन महादेवस्तुष्टः कष्टविनाशकः ॥ ५९ ॥
तत्समानयने सौरे प्रेषिताः श्रीशिवेन हि । अतः परं त्वमस्माकं गणनीयोऽसि किं वद ॥ ६० ॥
गणानां वचनं श्रुत्वा प्राह सौरिः कृताञ्जलिः ॥ ६१ ॥

यमः —

शिवाज्ञापालकश्चाहं यथेच्छति च स प्रभुः । अस्यैव दण्डनार्थेऽहं शङ्करेण नियोजितः ॥ ६२ ॥

इति ते गणपाः सर्वे यमेन च समन्विताः । द्रष्टुं तं नरकं घोरं तेऽपि शम्भुगणास्तदा ॥ ६३ ॥

सूतः —

केचिच्छरीरविनिकृत्तमहाङ्गबन्धाः केचिज्ज्वलज्ज्वलनदीप्तविदीप्तदेहाः ।
केचिच्च दण्डवरखण्डितमुण्डषण्डाः केचित् स्रवद्रुधिरदिग्धसमग्रकायाः ॥ ६४ ॥

केचिन्महामुसलमण्डलखण्डकायाः केचिद्विदीर्णदशनान्तविभिन्नपादाः ।
केचित् सुतीक्ष्णशरखड्गविभिन्नहस्ताः केचिन्महायसुशृङ्खलजालमालाः ॥ ६५ ॥

दृष्ट्वा यमेन गणपा अतिघोरमुग्रं जगर्जुरीशानमहेशनाम ।
शम्भो शिव प्रमथनाथ त्रिलोचनेति पाहीश नारकमुपैं रमहाभवाब्धेः ॥ ६६ ॥

गणाः —

हाहाहा बहुपातकाकुलरवैराक्रन्दितं दिक्तटं
भो शम्भो भगवन् महेश करुणादृष्ट्यावलोकयादरात् ।
सन्तिष्ठ क्षणकं महोक्षवरगस्त्वत्तेजसाप्यायिता-
श्चामी नारकिणो मदीयवचसा त्वं दीनबन्धुः किल ॥ ६७ ॥

यमभटपटलीकृतोग्रगर्व त्रिनिहतनारकिणं कशोग्रघातैः ।
नरकमतिसुघोरमद्य शम्भो न हि पश्येम भवत्कृपाकटाक्षैः ॥ ६८ ॥

गणेशवदनच्युतप्रबलशम्भुनाम्ना तदा शिवाद्य हर पाहि नः प्रमथनाथ शम्भो शिव ।
तदैव यमयातनाविरहितास्तदा नारका जगर्जुरखिलास्तदा विविधपानकैस्ते च्युताः ॥ ६९ ॥

तान् गणान् स तदा प्राह यमः क्रोधवशं गतः ।
दन्तान् कटकटाशब्दैर्विधून्य नयने तदा ॥ ७० ॥

यमः —

सर्वाणि पापान्यतिदुःखदानि गणा सदा दुःखतराणि शम्भोः ।
द्रोहे तथा तान् समुदीक्ष्य कोपो महानभून्मे शृणुत प्रकृष्टम् ॥ ७१ ॥

कुकल्पनानल्पविकल्पजालैर्महेशनिन्दां तनुते नराधमः ।
अधोमुखश्चोर्ध्वपदोऽवलम्बने विष्ठाह्रदे तत्क्रिमिभुक् शतं समाः ॥ ७२ ॥

कनिष्ठं पशूनां वदन्त्येव वेदाः खरोष्ट्रादितिर्यग्गणेभ्योऽपि सोऽप्यधः ।
शुनीगर्भसंभूतमत्यन्तगर्ह्यं महेशार्चनावर्जितं जन्म यस्य ॥ ७३ ॥

शिवेशानपूजानिवेद्यान्नभोजी भुनक्त्येव कष्टं मलानां स राशिम् ।
तदस्याममन्त्रैर्वदत्येव वेदस्त्रिकालः समुत्पाटयत्याशु तस्योर्ध्वपुण्ड्रम् ॥ ७४ ॥

भुसुण्ठीनिपातैः कशाघातैः सुरुद्राक्षहीनाङ्गसङ्गाङ्गसङ्गम् ।
सुधूमायिते तप्तशैलीकटाहे समुत्क्षिप्य भस्मीकरोत्येव कालः ॥ ७५ ॥

गणा रुद्रपञ्चाक्षरावृत्तिहीनान महादेवलिङ्गार्चकान् विष्णुलिङ्गैः ।
सुचक्राङ्कितानूर्ध्वपुण्ड्रांस्तथान्यान् स्वदंष्ट्रोरुधाराशिभिश्चर्वयामि ॥ ७६ ॥

प्रदोषार्चनावर्जितं सोमवारे दिवा भुक्तवन्तं महालोहघातैः ।
तथा भूतकालाष्टमीषु ... न चार्चन्ति लिङ्गं सदा कालदण्ड्याः ॥ ७७ ॥

महादेवनिन्दाकरस्योर्ध्वजिह्वां समुत्पाट्य कालः स तत्कालमध्यात् ।
ज्वलद्घोरमन्दंष्ट्रजालैस्तदङ्गं निकृन्त्याममा क्षारजेनाशु सिञ्चेत् ॥ ७८ ॥

महादेवलिङ्गार्चने यस्तु विघ्नं करोति हि तद्दंशाहुताशनोऽहम् (?) ।
इत्थं स कालः सततं रुषान्वितः शिवद्रुहां नास्ति विनिष्क्रियेति ॥ ७९ ॥

शिवाराम विच्छेदने यस्य हस्तौ कुठारोद्यतौ तस्य हस्तौ कुठारैः ।
तथा देवदेवालयस्यापि कालः छिनत्त्येकमङ्गं तिलानां क्रमेण ॥ ८० ॥

इत्थं कालवचः श्रुत्वा गणा ऊचुः परस्परम् ।

गणाः —

नानासंसारविद्याःप्रतिहतमनयः क्षीणपुण्यैकक्लेशा
नीचाः काये स्वकीये शमनभवनगाः क्लेशवृन्दं भजन्ति ।
तस्माद्विच्युतकर्मशेषजनुभिस्तिर्यक्त्वमासाद्य ते
नानादुःखशतैर्महेश कुधियस्त्वां नाश्रयन्ते जनाः ॥ ८१ ॥

श्रुत्वा कार्तान्तवार्तां विविधगतिवशात् किङ्करैर्याम्यदण्डैः
खाण्ड्यन्ते यत्र जीवाः प्रतिनरकशतं वासराणां बहूनि ।
भिन्धि छिन्धीति वादैः पटुतरकशया ताड्यतेऽयं जनौघ-
स्त्वत्पूजास्तवनप्रणामरहितो मोमुह्यतेऽयं विभो ॥ ८२ ॥

मार्गं त्वया मार्गदलैर्महेशलिङ्गार्चनान्मार्गयते विमुक्त्यै ।
मार्गे त्वगङ्गासितभस्मफालो रुद्राक्षमालः स तु पुण्यशीलः ॥ ८३ ॥

सूतः —

इत्थं यमेन कृतसत्कृतय एव धीरा वीरा महेश्वरगणेश्वरराश्च विप्रम् ।
आरोप्य हंसवरयानमनोहरेण संपूजिताः प्रमथनाथपदं ययुस्ते ॥ ८४ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे पुष्करमाहात्म्ये नारकिणां यातनानुभववर्णनं नाम
अष्टत्रिंशोऽध्यायः ॥

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

सूतः –

आवन्त्येनाथ विप्रेण केचित् पुण्यलवान्विताः । जन्ममध्ये सकृद्वापि ये पञ्चाक्षरतत्पराः ॥ १ ॥
कदाचिद्भस्मनिटिला दृगद्ये शिवदर्शिनः । प्रदोषे सोमवारेषु शिवरात्रिषु चापि ये ॥ २ ॥
शैवालापपरा ये वै ये च तत्सङ्गिसङ्गिनः । ययुस्तेऽपि विमानेन भास्वरेण शिवान्तिकम् ॥
ते गणाश्च महेशानं तांस्तदादर्शयंस्तदा । विभ्राजमानवपुषः प्रणेमुर्दण्डवत् क्षितौ ॥ ४ ॥
साञ्जलि प्रणताः सर्वे जय देवेति वादिनः । तदोचुस्ते तदा विप्रा गणास्तेऽपि महेश्वरम् ॥

गणाः —

त्वं सच्चिदानन्दघनोऽसि सेतुविधारणो भूतपतिस्तथा वयम् ।
आनन्दलेशेन चिदामलेन सत्वेन युक्ता धुतकिल्बिषाश्च ॥ ६ ॥

जनिता पवनानलाब्जबन्धोर्जनिता भूमिदिवोर्भवेश शम्भो ।
जगतो जनिता महेश्वरस्त्वं जनिता वृत्रहणो सुरान्तकस्य ॥ ७ ॥

वर्षासु मेघगणगर्जनदुर्दिनेषु नीलाभ्रमध्यबहुगर्जितविद्युदुत्थः ।
मधुरुच्चगतभानुहस्तमध्यः सुकृपातर्पणवर्षकालजातः ॥ ८ ॥

वर्ष्योऽसि मेघ्योऽसि च वैद्युतोऽसि अतप्यवर्योऽसि महेश्वरस्त्वम् ।
त्वं रुद्रमन्त्रैः प्रतिपादितोऽसि दीनानिमान् पाहि महेश दयया ॥ ९ ॥

त्वद्दर्शनान्महादेव प्रदोषे शैवपूजितम् । लिङ्गं मनोहरं दृष्टं बिल्वपत्रादिपूजितम् ॥ १० ॥
त्वद्दर्शनात् पापमुक्तो मुक्तोऽयं त्वत्कृपाबलात् । त्वद्दर्शनमघौघानां नाशकं श्रीमहेश्वर ॥ ११ ॥

त्वन्नामस्तुतिमात्रेण दग्धपातकपर्वताः । भविष्यन्ति महादेव नानापापयुता नराः ॥ १२ ॥
तव पादाम्बुजद्वन्द्वध्याननिर्धूतकल्मषाः । तव लिङ्गार्चनात् सर्वे पुनन्ति भुवनं जनाः ॥ १३ ॥
एतान् नारकिणो देव आनन्त्येन समागतान् । पश्य पश्याधुना शम्भो किञ्चित्पुण्यलवान्वितान् ॥
प्रणम्य देवमीशानमानन्त्येनाथ नारकाः । प्राह मुहुर्मुखोन्मुक्तकूर्चा इव विराजिताः ॥

नारकाः --

उरुचिरकृतपापतापभङ्गं कुरु शिव शङ्कर नः प्रसीद शम्भो ।
सुरवरतटिनीजटोरुराजस्फुटगरकन्धर पाहि दीनबन्धो ॥ १६ ॥

तरङ्गमौलिं शशिलिङ्गमौलिं वन्दारुवृन्दार्चितपुष्पमौलिम् ।
सुबिल्वगन्धोत्तमलिप्तमौलिं भजामि शम्भुं सुरवर्गमौलिम् ॥ १७ ॥

शम्भो जगत् सृष्टमिदं विशिष्टं शिष्टस्य निष्टस्य तवाङ्घ्रिपद्मे ।
कष्टानि संहर्तुमहो त्वमीष्टे प्रकृष्टलिङ्गे परिगृह्य पूजाम् ॥ १८ ॥

काले तिथौ कष्टहरे महेश भक्तैः कृतां नीरजलैः फलैर्वा ।
प्रदोषवेलास्वथ पापगर्हानासु शंभो प्रकटं प्रसीद ॥ १९ ॥

इति नारकिणां वाक्यात् तुष्टः कष्टहरः शिवः । प्राह तान् गणपश्रेष्ठांस्तांश्च नारकिणस्तदा ॥

शिवः --

मल्लिङ्गार्चनभक्तानां प्रदोषार्चनरागिणाम् । शिवरात्रिरतानां च सोमवारव्रतात्मनाम् ॥ २१ ॥
कालाष्टमीचतुर्दश्यां निशि शङ्करपूजनात् । न यमं यमलोकं वा ते पश्यन्ति गणाः क्वचित् ।
न पापभयलेशोऽस्ति तेषु नैव गणोत्तमाः ॥ २२ ॥
बाणलिङ्गं यस्य गृहे सदा बिल्वदलार्चितम् । न यमं यमलोकं वा स पश्यति गणाः क्वचित् ॥
यो भस्मोद्धूलिततनुस्त्रिपुण्ड्रावलिभासुरः । न यमं यमलोकं वा स पश्यति गणाः क्वचित् ॥
पञ्चाक्षरपरो यस्तु श्रीरुद्रजपतत्परः । न यमं यमलोकं वा स पश्यति गणाः क्वचित् ॥ २५ ॥
व्रतिनः सोमवारेषु प्रदोषेषु महेश्वरम् ।
समभ्यर्च्य बिल्वदलैर्ये पश्यन्ति च पूजितम् । न यमं यमलोकं वा ते पश्यन्ति गणाः क्वचित् ॥
शिवलिङ्गं गृहे वापि ये वै देवालयेऽपि वा । न यमं यमलोकं वा ते पश्यन्ति गणाः क्वचित् ॥
बिल्वपत्रार्चनपराः बिल्वार्चनरता नराः । न यमं ... क्वचित् ॥ २८ ॥

शिवाश्रमकरा ये च तटाकं कूपमेव च । ये कुर्वन्ति नरा भक्त्या धूपदीपप्रदा नराः ॥
न यमं यम ... कचित् ॥ २९ ॥
शिवगोपुरनिर्माणं प्राकारं मण्टपं तथा । ये कुर्युरिष्टकासंघैः पाषाणैः सुधयापि च ।
न यमं यमदूतं वा ... कचित् ॥ ३० ॥
शिवलिङ्गार्चनपराः शिवनामपरास्तथा । न यमं ... कचित् ॥ ३१ ॥
शिवतीर्थकृतस्नानाः शिवक्षेत्रनिवासिनः । न यमं ... कचित् ॥ ३२ ॥
शिवभक्तार्चनपरा भोजनाच्छादनादिभिः । न यमं ... कचित् ॥ ३३ ॥
दीपमालादिकर्तारः पुण्ये सायं विशेषतः । घृतैस्तैलैः सदा भक्त्या ते नरा धूतकिल्बिषाः ॥
न यमं यम ... कचित् ॥ ३४ ॥
शिवाभिषेकपानीयं ये पिबन्ति सदा नराः । न यमं यम ... कचित् ॥ ३५ ॥
ये बिल्ववनकर्तारस्तत्पत्रैः पूजयन्ति माम् । न यमं यम ... कचित ॥ ३६ ॥
बिल्वमूलेषु लिङ्गार्चां ये कुर्वन्ति सदा मुदा । न यमं ... कचित् ॥ ३७ ॥
शिवोत्सवपरा ये च ये च तस्योपकारकाः । न यमं ... कचित् ॥ ३८ ॥
गोघण्टादिप्रदातारः आभिषेचनिकान्यपि । न यमं ... कचित् ॥ ३९ ॥
शिवनैवेद्यपुष्टाङ्गा ये रुद्राक्षधराः सदा । न यमं ... कचित् ॥ ४० ॥
किमद्य बहुनोक्तेन भक्तिर्मम गरीयसी । भावग्राह्योऽहमीशानो भक्तिर्भवति भाग्यतः ॥ ४१ ॥
भक्तस्य सर्वपापानि नाशयामि गणेश्वराः । एततुष्टिकरं पुण्यं गणा मम न संशयः ॥ ४२ ॥
ममाप्रीतिकरं चापि वक्ष्यामि भवतां गणाः । उक्तानां च निरासेन अनुक्तानां च विस्तरात् ॥
ऊर्ध्वपुण्ड्राङ्कनं चैव मृदा फालगलादिषु । ममाप्रीतिकरं पापकारणं तद् गणोत्तमाः ॥ ४४ ॥
त्रिशूलवज्रचक्रादिधारणं स्वकलेवरे । ममाप्रीति ... गणोत्तमाः ॥ ४५ ॥
सर्वश्रुतिश्रुतपुण्यभस्मनो वर्जनं तथा । ममाप्रीति ... गणोत्तमाः ॥ ४६ ॥
त्रिपुण्ड्रवर्जनं नित्यं तथा भस्मावगुण्ठनं (?) । ममाप्रीति ... गणोत्तमाः ॥ ४७ ॥
लिङ्गार्चनं बिल्वपत्रैः ये न कुर्वन्ति मोहिताः । [1]ममाप्रीतिकरं पापकारणं तद् गणोत्तमाः ॥
रुद्राध्यायादिरहिता ये सदा ते न मे प्रियाः । ममाप्रीति ... गणोत्तमाः ॥ ४९ ॥

---

१ समनन्तरश्लोकेषु यत्तदोः सामानाधिकरण्यं कथञ्चिन्नेयम् ।

पञ्चाक्षरविहीना ये अन्यमन्त्रजपादराः । ममाप्रीति ... गणोत्तमाः ॥ ५० ॥

अन्यपुण्ड्राणि धृत्वैव रुद्रपञ्चाक्षरादराः । ममाप्रीति ... गणोत्तमाः ॥ ५१ ॥

सालग्रामादिसाम्येन शिवलिङ्गार्चका नराः । ममाप्रीति ... गणोत्तमाः ॥ ५२ ॥

महेशभुक्तशेषं ये न भुञ्जन्ते नराधमाः । ममाप्रीति ... गणोत्तमाः ॥ ५३ ॥

मन्निन्दानिरता ये वै मन्नामस्मरणोज्झिताः । ममाप्रीति ... गणोत्तमाः ॥ ५४ ॥

ब्रह्मविष्णुसुराणां च समं मद्दर्शनं तथा । ममाप्रीति ... गणोत्तमाः ॥ ५५ ॥

मन्नाम अन्यनाम्नैव समं पश्यन्ति ये नराः । ममाप्रीति ... गणोत्तमाः ॥ ५६ ॥

एकपीठे च मल्लिङ्ग अन्यदेवादिपूजनम् । ममाप्रीति ... गणोत्तमाः ॥ ५७ ॥

मम भक्तेषु विद्वेष अन्यदेवार्चनं मुदा । ममाप्रीति ... गणोत्तमाः ॥ ५८ ॥

रुद्राक्षधारणं हित्वा काष्ठपाषाणधारणम् । ममाप्रीति ... गणोत्तमाः ॥ ५९ ॥

मत्क्षेत्रविमुखा ये वै अन्यक्षेत्रपरा मुदा । ममाप्रीतिकरं ... गणोत्तमाः ॥ ६० ॥

कालाष्टमीचतुर्दश्यां प्रदोषे सोमवारके । मुदा दिवा भोजिनो ये मम लिङ्गार्चनोज्झिताः ।
ममाप्रीति ... गणोत्तमाः ॥ ६१ ॥

तेषां हि नरकावासो गणाः प्रियतरो मम । किञ्च मत्पुण्यलेशेन तरन्ति च सदा नराः ॥ ६२ ॥
नरकार्णवतीर्णाश्च भविष्यन्ति गणोत्तमाः ॥ ६३ ॥

सूतः —

इत्थं शम्भोर्वचः श्रुत्वा गणास्ते चैव नारकाः । प्रणम्य ददृशुर्दिव्यं कैलासं शङ्करालयम् ॥
तत्र ते गणपा जाता महेशार्चनतत्पराः । तत्र लिङ्गानि पुण्यानि बिल्वमूलस्थितानि हि ॥
तत्र स्नात्वा त्रिपुण्ड्राङ्का रुद्राक्षकृतभूषणाः । तत्पत्रैः पूजयामासुरीशानं देवनायकम् ॥ ६६ ॥
तत्र ते गणपा जाता महेशानुचरास्तदा । कपर्दभारविलसच्चन्द्ररेखाविराजिताः ॥ ६७ ॥
त्रिपुण्ड्रनिटिलाः सर्वे स्वर्णवेत्रलसत्कराः । दृष्ट्वा कैलासरचनां विस्मितास्तेऽभवंस्तदा ॥ ६८ ॥
नानामुनिशतोपेतं नागगन्धर्वशोभितम् । यक्षकिंपुरुषैश्चैव अप्सरोभिश्च शोभितम् ॥ ६९ ॥
ब्रह्मविष्ण्वादिभिर्देवैर्दिक्पालैश्च समावृतम् । सनन्दनाद्यैर्मुनिभिर्नन्दिभृङ्गिगणेश्वरैः ॥ ७० ॥
कुमारगणपाद्यैश्च शांभवैरुपशोभितम् । तत्र वैखानसाः सिद्धाः वालखिल्या मरीचिपाः ॥ ७१ ॥
तपसा देवमीशानं ये प्राप्ता मुनयः सदा । समाधियमदानाद्यैः पूजया परमेश्वरम् ॥ ७२ ॥

ये तोषयन्ति नियता नानाभक्तिसमन्विताः । सर्वथा शरणं याता मनोवाक्कायकर्मभिः ॥ ७३ ॥
तेषां तत्परमं स्थानं यद्देवैरपि दुर्लभम् । यत्र गत्वा न शोचन्ति यत्र पातभयं न हि ॥ ७४ ॥
नीलकण्ठं विरूपाक्षं गङ्गाधरमुमासखम् । राजचन्द्रकलामौलिं वन्द्यं वेदान्तसंस्तुतम् ॥ ७५ ॥
कर्पूरधवलं देवं वन्दाभयशोभितम् । काकोदरमहाहारं त्रिपुण्ड्रविलसन्मुखम् ॥ ७६ ॥
सेवितं परया शक्त्या वामाङ्कासनसंस्थया । निरीक्षन्त्या महादेवसुन्दराननपङ्कजम् ॥ ७७ ॥
स्वनेत्रभ्रमरैदंव्या सर्वाभरणपूर्णया । नारदादिमुनिश्रेष्ठैर्देवगन्धर्वसत्तमैः ॥ ७८ ॥
संस्तुतं वल्लकीहस्तैः गानधारारसैः शिवम् । गणेन्द्रैर्विविधैर्देवं सेवितं परया मुदा ॥ ७९ ॥
रत्नसिंहासनासीनं नानावाद्यकरैर्गणैः । मृदङ्गकाहलानेकशङ्खदुन्दुभिनिस्वनैः ॥ ८० ॥
स्तुवद्भिर्देवसंघैश्च जयशब्दैश्च पुष्कलैः । पुरः स्थितैर्गणेन्द्रैश्च नन्दिना स्वर्णवेत्रिणा ॥ ८१ ॥
छत्रचामरहस्तैश्च महाकालादिभिर्गणैः । तण्डुभृङ्गिप्रभृतिभिर्वाणाद्यैः परिसेवितम् ॥ ८२ ॥
व्यजनैश्च पताकैश्च वृषभाङ्कमनोहरैः । महाहीरमहासौधे नानामणिगणान्विते ॥ ८३ ॥
तत्कान्तिधूतचन्द्रार्कप्रभाभिः सुमनोहरे । ध्यायन्तमग्रदेवेशं[1] ककुदा परिशोभितम् ॥ ८४ ॥
चारुशृङ्गान्तरालोलचामरद्वयशोभितम् । स्तब्धेक्षणाभ्यां कर्णाभ्यां पश्यन्तं परमेश्वरम् ॥ ८५ ॥
संस्थितं धर्मधौरेयं नानाघण्टाविराजितम् । कुमारगणपाभ्यां च सेवितं सुमनोहरम् ॥ ८६ ॥
नानाकुसुमगन्धाढ्यहारशोभितकन्धरम् । प्रसन्नवदनाम्भोजं ते देवं ददृशुः शिवे ॥ ८७ ॥

कैलासे सुहिरण्यपञ्जरगताः पुंस्कोकिलाः शारिकाः
　रक्ताशोकहरिन्मणिप्रतिनिभाः सत्पुण्डरीकप्रभाः ।
दृष्ट्वा लिङ्गमुमापतिप्रियतमं मां पाहि शम्भो शिवे-
　त्याक्रोशन्ति शुकाः शिवाग्रगतयो नृत्यन्ति ते बर्हिणः ॥ ८८ ॥

हंसाः सारसचक्रवाकसहिताः क्षीरोदनीरे मुदा चञ्चूभिः पयसां कणैरतिसितैर्मुक्तावलीभिः सह ।
रेवालिङ्गवरं प्रदोषसमये तद्बिल्वमूलस्थितं संपूज्य प्रथिमान(?)पक्षपवनैः संवीजयन्त्यादरात् ॥

गन्धर्वकिंनरगणा ललनाभिरीशं नाट्यैर्मृदङ्गमुखनिःसृततालशब्दैः ।
शंखैश्च काहलरवैर्मृदुवेणुवीणाढक्कादिदुन्दुभिरवैः परिघोषयन्ति ॥ ९० ॥

---

१ अग्रेदेवेशमिति समस्तं पदं ।

साङ्गाः स्वककायकण्डुविवशा बिल्वस्य संघर्षणैः मत्तेभेन्द्रसुपुष्करोद्भवजलासारैः सुशीतैरपि।
स्वैः पुच्छैश्चमरीगणैः कृतमहालिङ्गस्य संपूजनैः तत्पाण्डुच्छदसेकवीजनमिषात् सन्तोषयन्तीश्वरम्॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे ... नाम एकोनचत्वारिंशोऽध्यायः ॥

## ॥ चत्वारिंशोऽध्यायः ॥

देवी —

श्रुतं सुदर्शनाख्यानं त्वत्तो विस्मापनं मम । प्रदोषे पापिना तेन दृष्टश्चान्यार्चितः शिवः ॥ १ ॥
शेषेण नामसाहस्रैस्त्वं स्तुतः कथमीश्वर । त्वन्नाम्नां श्रवणेच्छा मे भूयसी भवति प्रभो ॥ २ ॥

सूतः —

तस्मिन् कैलासशिखरे सुखासीनं महेश्वरम् । प्रणम्य प्रार्थयामास सा देवी जगदंबिका ॥ ३ ॥
तदा देव्या महादेवः प्रार्थितः सर्वकामदः । भवो भवानीमाहेत्थं सर्वपापप्रणाशकम् ॥ ४ ॥
फणीशो मुखसाहस्रैर्यानि नामानि चोक्तवान् । तानि वः संप्रवक्ष्यामि यथा मम गुरोः श्रुतम् ॥

ईश्वरः —

ऋषिः छन्दो दैवतं च तान्यहं क्रमशोऽम्बिके । सहस्रनाम्नां पुण्यं मे फणीन्द्रः कृतवानुमे ॥ ६ ॥
ऋषिस्तस्य हि शेषोऽयं छन्दोऽनुष्टुप् प्रकीर्तितम् । देवतास्वाहमीशानि सर्वत्र विनियोजनम् ॥
ध्यानं ते कथयाम्यद्य शृणु त्वमगकन्यके ।
कैलासे सुहिरण्यविष्टरवरे देव्या समालिङ्गितं नन्द्याद्यैर्गणपैः सदा परिवृतं वन्दे शिवं सुन्दरम् ।
भक्ताघौघनिकृन्तनैकपरशुं बिभ्राणमिन्दुप्रभं स्कन्दाद्यैर्गजवक्त्र(?) सेवितपदं ध्यायामि सांबं सदा॥
एवं साम्बिके ध्यात्वा नामानि प्रजपेत्ततः । हृत्पद्मसद्मसंस्थं मां सर्वाभीष्टार्थसिद्धये ॥ ९ ॥
पुण्यकालेषु सर्वेषु सोमवारे विशेषतः । बिल्वपत्रैः पङ्कजैश्च पुण्यनामानि शङ्करि ॥ १० ॥
पूजयेन्नामसाहस्रैः सर्वार्थप्राप्तये शिवे । यो यं कामयते कामं तं तमाप्नोति शङ्करि ॥ ११ ॥
धनार्थी लभते वित्तं कन्यार्थी कन्यकां तथा । राज्यार्थी राज्यमाप्नोति मोक्षार्थी मोक्षमाप्नुयात्॥
शृणु देवि परं पुण्यं मातृकानामनुत्तमम् । सहस्रं प्रजपेन्नित्यं धर्मकामार्थमोक्षभाक् ॥ १३ ॥

ईश्वरः —

ओंकारनिलयात्मस्थः ओंकारार्थैकवाचकः । ओंकाररेखाकृतिरोमितिशब्दकृतस्तुतिः ॥ १४ ॥
ओंकारकुण्डनिलयलिङ्गपूजनपापहृत् । नमिताशेषदेवादिर्नदीपुलिनसंस्थितः ॥ १५ ॥
नन्दिवाद्यप्रियो नित्यो नामपारायणप्रियः । महेन्द्रनिलयो मानी मानसान्तरपापभित् ॥ १६ ॥
मयस्करो महायोगी मायाचक्रप्रवर्तकः । शिवः शिवतरः शीतः शीतांशुकृतभूषणः ॥ १७ ॥
धनुःशरकरो ध्याता धर्माधर्मपरायणः । आत्मा आतार्य आलाद्य अनङ्गशरखण्डनः ॥ १८ ॥
ईशान ईड्य ईश्वरश्च इभमस्तकसंस्तुतः । उमासंश्लिष्टवामाङ्ग उशीनरनृपार्चितः । १९ ॥
उदुम्बरफलप्रीत उमादिसुरपूजितः । ऋजीषीकृतभूचक्रो रिपुप्रमथनोर्जितः ॥ २० ॥
लिङ्गार्चकजनप्रीतो लिङ्गी लिङ्गसमप्रियः । लिपिप्रियो बिन्दुहीनो लीलाकृतजगत्त्रयः । २१ ॥
ऐन्द्रीदिक्पतिसंयुक्त ऐश्वर्यादिफलप्रदः । औत्तानपादपूज्याङ्घ्रिरौमादिसुरपूजितः । २२ ॥
कल्याणाचलकोदण्डः कामितार्थफलप्रदः । कस्तूरीतिलकप्रीतः कर्पूराभकलेवरः ॥ २३ ॥
कल्पमसुनप्रीतः कल्पादिपरिवर्जितः । कल्पितानेकभूतादिः कलिकल्मषनाशनः ॥ २४ ॥
कमलामलमन्त्रः कमलापतिपूजितः । खगोल्कादित्यवरदः खञ्जरीटवरप्रदः ॥ २५ ॥
खर्जूरवनमध्यस्थः खण्डिताखण्डलीकरः । खगः खङ्गहरः खण्डः खगगः खाकृतिः खसः ॥
खण्डपर्शुः खण्डघनः खण्डितारातिमण्डलः । गन्धर्वगणसुप्रीतो गन्धधृक् गर्वनाशकः ॥ २७ ॥
गङ्गाधरो गोगणेशो गणेश्वरपुत्रकः । गतिदो गदहा गन्धी गन्धमाल्यवरार्चितः ॥ २८ ॥
गगनस्थो गणपतिर्गगनाभोगभूषणः । घण्टाकर्णप्रियो घण्टी घटजस्तुतिसुप्रियः ॥ २९ ॥
घोटकप्रियपुत्रश्च घर्मकालो घनाकृतिः । घनवाहो घृताध्यक्षो घनघोषो घटेश्वरः ॥ ३० ॥
घटानादकरप्रीतो घटीभूतमहागिरिः । चन्द्रचूडश्चन्द्रकरश्चन्दनार्द्रश्चतुष्पथः ॥ ३१ ॥
चमसोद्भेदमध्यस्थश्चण्डकोपश्चतुर्मुखः । चक्षुःश्रोत्रमहाहारश्चण्डिकेशवरप्रदः ॥ ३२ ॥
चेतोजन्महरश्चण्डश्चातुर्होत्रप्रियश्चरः । चतुर्मुखमुखस्तुत्यश्चतुर्वेदश्चराचरः ॥ ३३ ॥
चण्डभानुकरान्तःस्थश्चतुर्मूर्तिवपुःस्थितः । छादितानेकलोकादिः छन्दसां गणमध्यगः ॥ ३४ ॥
छत्रचामरशोभाढ्यः छन्दोगगतिदायकः । जङ्गमाजङ्गमाकारो जगन्नाथो जगद्गतः ॥ ३५ ॥
जह्नुकन्याजटो जप्यो जेता जत्रुर्जनार्तिहा । जम्मारातिर्जनप्रीतो जनको जनिकोविदः ॥ ३६ ॥
जनार्दनार्दनो जामिजात्यादिपरिवर्जितः । झणज्झणाङ्घ्रिझारावो झङ्कारोज्झितदुष्क्रियः ॥ ३७ ॥
टङ्कप्रियष्टंकृतिकष्टंकभेदी टकारकः । टादिवर्णप्रियष्ठान्तो ढक्कानादप्रियो रसः ॥ ३८ ॥

डामरीतन्त्रमध्यस्थो डमरुध्वनिशोभितः । ढक्काध्वनिकृतानल्पबधिरीकृतदिङ्मुखः ॥ ३९ ॥
णकारो णणुकोत्थादिर्णान्तकृण्णतिमोचकः । तस्करस्ताम्रहस्तार्क्ष्यस्तामसादिगुणोज्झितः ॥ ४० ॥
तरुमूलप्रियस्तातस्तमसां नाशकारकः । थानासुरहरः स्थाता स्थाणुः स्थानप्रियः स्थिरः ॥ ४१ ॥
दाता दानपतिर्दान्तो दन्दशूकविभूषितः । दर्शनीयो दीनदयो दण्डिताशातिमण्डलः॥ ४२ ॥
दक्षयज्ञहरो देवो दानवारिर्दमोदयः । दत्तात्रेयप्रियो दण्डी दाडिमीकुसुमप्रियः ॥ ४३ ॥
धाता धनाधिपसखो धनधान्यप्रदो धनम् धामप्रियोऽन्धमर्दी नाथो धर्मबाहो धनुर्धरः ॥
नमस्कारप्रियो नाथो नमिताशेषदुःखहन् । नन्दिप्रियो नर्मसखो नर्मदातीरसंस्थितः ॥ ४५ ॥
नन्दनो नमक्षामीशो नानारूपो नदीगनः । नामप्रीतो नामरूपगुणकर्मविवर्जितः ॥ ४६ ॥
पत्नीनां च पतिः पार्थः परमात्मा परात्परः । पङ्कजासनपूज्याङ्घ्रिः पद्मनाभवरप्रदः ॥ ४७ ॥
पन्नगाधिपसद्धारः पशूनां पतिपावकः । पापहा पण्डितः पान्थो पादपोन्मथनः परः ॥ ४८ ॥
फणीफणालसन्मौलिः फणिकङ्कणसत्करः । फणिता (?) नेकवेदोक्तिः फणिमाणिक्यभूषितः ॥
बन्धमोचनकृद्बन्धुर्बन्धुगलकशोभितः । बली बलवतां मुख्यो बलिपुत्रवरप्रदः ॥ ५० ॥
बाणासुरेन्द्रपूज्याङ्घ्रिर्बाणलिङ्गो बहुप्रदः । बन्दीकृतागमो बालपालको बहुशोभितः ॥ ५१ ॥
भवादिर्भवहा भव्यो भर्त्रो भावपरायणः । [1] भवहृद्भवदो भूतो भण्डासुरवरप्रदः ॥ ५२ ॥
भगाक्षिमथनो भर्गो भवानीशो भयङ्करः । भङ्कारो भावुकदो भस्मांशक्तनुर्भटः ॥ ५३ ॥
मयस्करो महादेवो मायावी मानसान्तरः । मायातीतो मन्मथारिर्मधुपोऽथ मनोन्मनः ॥ ५४ ॥
मध्यस्थो मधुपांसात्मा मनोवाचामगोचरः । मण्डितो मण्डनाकारो मतिदो मानपालकः ॥
मनस्वी मनुरूपश्च मन्त्रमूर्तिर्महाहनुः । यशस्करो यन्त्ररूपो यमिमानसपावनः ॥ ५६ ॥
यमान्तकरणो यामी यजमानो यदुर्यमी । रमानाथार्चितपदो रम्यो रतिविशारदः ॥ ५७ ॥
रंभाप्रीतो रसो रात्रिचरो रावणपूजितः । रक्तपादो रन्तिदेवो रविमण्डलमध्यगः ॥ ५८ ॥
रथन्तरस्तुतो रक्तपानो रथपती रवः । रथात्मको लम्बतनुर्लाङ्गली लोलगण्डकः ॥ ५९ ॥
ललामसोमलूनादिर्ललितापूजितो लवः । वामनो वायुरूपश्च वराहमथनो वटुः ॥ ६० ॥
वाक्यजातो वरो वार्यो वरुणेड्यो वराश्रयः । वपुर्धरो वर्षवरो वरीयान् वरदो वरः ॥ ६१ ॥
वसुप्रदो वसुपतिर्वन्दारुजनपालकः । शान्तः शमपरः शास्ता शमनान्तकरः शठः ॥ ६२ ॥

१ भयहृद्भयदो C

शङ्खहस्तः शत्रुहन्ता शमिताखिलदुष्कृतः । शरहस्तः शतावर्तः शतक्रतुवरप्रदः ॥ ६३ ॥
शम्भुः शम्याकपुष्पार्च्यः शङ्करः शतरुद्रगः । शम्याकरः शान्तमनाः शान्तः शशिकलाधरः ॥
षडाननगुरुः षण्डः षट्कर्मनिरतः षगुः । षड्जादिरसिकः षष्ठः षष्ठीप्रीतः षडङ्गवान् ॥ ६५ ॥
षडूर्मिरहितः षष्ठ्यः [1]षिड्गः षाड्गुण्यदायकः । सत्यप्रियः सत्यधामा संसाररहितः समः ॥
सखा सन्धानकुशलः सर्वसम्पत्प्रदायकः । सगरः सागरान्तःस्थः सत्राशः सरणः सहः । ६७ ॥
सांवः सनातनः साधुः सारासारविशारदः । सामगानप्रियः सारः सरस्वत्या सुपूजितः ॥ ६८ ॥
हवाराविर्हंसगतिर्हाहाहूहूस्तुतिप्रियः । हरिकेशो हरिद्राङ्गो हरिन्मणिसरोरुहः ॥ ६९ ॥
हरिपूज्यो हरो हार्यो हरिणाङ्कशिखण्डकः । हाहाकारादिरहितो हनुनासो हहुंकृतः ॥
लालाननो लतासोमो लक्ष्मीकान्तवरप्रदः । लम्बोदरगुरुर्लभ्यो लवलीशो लुलायगः ॥ ७१ ॥
क्षपद्वीरः क्षमायुक्तः क्षयादिरहितः क्षमी । क्षत्रियान्तकरः क्षान्तः क्षात्रधर्मप्रवर्तकः ॥ ७२ ॥
क्षयिष्णुवर्धनः क्षान्तः क्षपानाथकलाधरः । क्षपादिपूजनप्रीतः क्षपणान्तः क्षराक्षरः ॥ ७३ ॥
रुद्रो मन्युः सुधन्वा च बाहुमान् परमेश्वरः । स्त्रिपुः स्त्रिष्टकृदीशानः शरव्याधारको युवा ॥
अघोरस्तनुमान् देवो गिरीशः पाकशासनः । गिरित्रः पुरुषः प्राणः पञ्चप्राणप्रवर्तकः ॥ ७५ ॥
अप्पवोचो महादेव अधिवक्ता महेश्वरः । ईशानः प्रथमो देवो भिषजां पतिरीश्वरः ॥ ७६ ॥
ताम्रोऽरुणो विश्वनाथो बभ्रुश्चैव सुमङ्गलः । नीलग्रीवः शिवो हृष्टो देवदेवो विलोहितः ॥ ७७ ॥
गोपदृश्यो विश्वकर्ता उदहार्यजनेक्षितः । विश्वदृष्टः सहस्राक्षो मीढुष्टो भगवान् हरः ॥ ७८ ॥
शतेषुधिः कपर्दी च सोमो मीढुष्टमो भवः । अनाततश्चातिधृष्णुः सत्वानां रक्षकः प्रभुः ॥ ७९ ॥
त्रिश्वेश्वरो महादेवस्त्र्यंबकस्त्रिपुरान्तकः । त्रिकाग्निकालः कालाग्निरुद्रो नीलोऽधिपोऽनिलः ॥
सर्वेश्वरः सदा शम्भुः श्रीमान् मृत्युञ्जयः शिवः । स्वर्णबाहुः [2]सैन्यपालो दिशाधीशो वनस्पतिः ॥
हरिकेशः पशुपतिरुग्रः सस्पिञ्जरोऽन्तकः । त्विषीमान् मार्गपो बभ्रुर्विव्याधी चान्नपालकः ॥
पुष्टो भवाधिपो लोकनाथो रुद्राततायिकः । क्षेत्रज्ञः सूतपोऽहन्त्यो वनपो रोहितः स्थपः ॥ ८३ ॥
वृक्षेशो मन्त्रजो वाण्यो भुवन्त्यो वारिवस्कृतः । ओषधीशो महाघोषः क्रन्दनः पत्तिनायकः ॥
कृत्स्नवीती धावमानः सत्वनां पतिरव्ययः । सहमानोऽथ निर्व्याधिरव्याधिः ककुभो नटः ॥
निषङ्गी स्तेनपः कक्ष्यो निचेरुः परिचारकः । आरण्यपः सृकावी च जिघांसुर्मुष्णपोऽसिमान् ॥

---

[1] षिड्भ्यः C [2] स्वर्णपालः C

नक्तञ्चरः प्रकृन्तश्च उष्णीषी गिरिसञ्चरः । कुलुञ्च इषुमान् धन्वी आतन्वान् प्रतिधानवान् ॥
आयच्छो विसृजाऽप्यात्मा वेधनो(?)आसनः परः । शयानः स्वापकृत् जाग्रत् स्थितो धावनकारकः॥
सभापतिस्तुरङ्गेश उगणस्तृंहतिर्गुरुः । विश्वो व्रातो गणो विश्वरूपो वैरूप्यकारकः ॥ ८९ ॥
महानणीयान् रथपः सेनानीः क्षत्रसंग्रहः । तक्षा च रथकारश्च कुलालः कर्मकारकः ॥ ९० ॥
पुञ्जिष्ठश्च निषादश्च इषुकृद्धन्वकारकः । मृगयुः श्वानपो(?) देवो भवो रुद्रोऽथ शर्वकः ॥ ९१ ॥
पशुपो नीलकण्ठश्च शितिकण्ठः कपर्दभृत् । व्युप्तकेशः सहस्राक्षः शतधन्वा गिरीश्वरः ॥९२॥
शिपिविष्टोऽथ मीढुष्ट इषुमान् ह्रस्ववामनः । बहुवर्षवया वृद्धः संवृद्ध्वा प्रथमोऽग्रियः ॥ ९३ ॥
आशुश्चैवाजिरः शीघ्रयः शीभ्य ऊर्म्योऽथ वस्वनः । स्रोतो द्वीप्यस्तथा ज्येष्ठः कनिष्ठः पूर्वजोऽपरः॥
मध्यश्चाथापगल्भश्च ... आशुषेणश्चाशुरथः शूरो वै भिन्दिवर्मधृक् ॥ ९५ ॥
वरूथी बिल्मी कवची श्रुतसेनोऽथ दुन्दुभिः । धृष्णुश्च प्रहितो दूतो निषङ्गी तीक्ष्णसायकः ॥
आयुधी स्वायुधी देव उपवीती सुधन्वधृक् । स्रुत्यः पथ्यस्तथा काट्यो नीप्यः सूद्यः सरोद्भवः ॥
नाद्यवैशन्तकूप्याश्चावट्यो वर्ष्यो मेघ्योऽथ वैद्युतः। ईध्रय आतप्य वातोत्थो रश्मिजो वास्तवोऽस्तुपः॥
सोमो रुद्रस्तथा ताम्र अरुणः शङ्ग ईश्वरः । उग्रो भीमस्तथैवाग्रेवधो दूरेवधस्तथा ॥ ९९ ॥
हन्ता हनीयान् वृक्षश्च हरिकेशः प्रतर्दनः । तारः शम्भुर्मयोभूश्च शङ्करश्च मयस्करः ॥ १०० ॥
शिवः शिवतरस्तीर्थ्यः कूल्यः पार्यो वार्यः प्रतारणः । उत्तारणस्तथालाद्य आतार्यः शष्प्यफेनजः॥
सिकत्यश्च प्रवाह्यश्च इरिण्यः प्रपथः किंशिलः । क्षयणः कुलगो गोष्ठ्यः पुलस्त्यो गृह्य एव च ॥
तल्प्यो गेह्यस्तथा काट्यो गह्वरेष्ठो ह्रदोद्भवः । निवेष्ट्यः पांसुमध्यस्थो रजस्यो हरितस्थितः ॥
शुष्क्यो लोप्यस्तथालप्य ऊर्व्यः सूर्म्यश्च पर्णजः । पर्णशद्योऽपगुरकः अभिघ्नोत्खिद्यकोविदः ॥
अत्रः(?) किरिक ईशानो देवादिहृदयान्तरः । विक्षीणको विचिन्वत्क्यः आनिर्ह आमिवत्कक॥
द्रापिरन्धस्पतिर्दाता दरिद्रन्नीललोहितः । तवस्वांश्च कपर्दीशः क्षयद्वीरोऽथ गोहनः ॥ १०६ ॥
पुरुषन्तो गर्तगतो युवा मृगवरोग्रकः । मृडश्च जरिता रुद्रो मीढ्यो देवपतिर्हरिः ॥ १०७ ॥
मीढुष्टमः शिवतमो भगवानर्णवान्तरः । शिखी च कृत्तिवासाश्च पिनाकी वृषभस्थितः ॥ १०८ ॥
अग्नीषुश्च वर्षेषुर्वातेषुश्च ... । पृथिवीस्थो दिविष्ठश्च अन्तरिक्षस्थितो हरः ॥ १०९ ॥
अप्सु स्थितो विश्वनेता पथिस्थो वृक्षमूलगः । भूताधिपः प्रमथप ... ॥ ११० ॥
भवपलः सहस्राक्षः सहस्रनयनश्रवाः । ऋग्गणात्मा यजुर्मध्यः साममध्यो गणाधिपः ॥१११॥

उर्ध्वशीर्षः परमः शिखास्तुत्योऽम्बुयकः । मैत्रायणो मित्रगतिस्तण्डुप्रीतो रिटिप्रियः ॥ ११२ ॥
उमाधवो विश्वभर्ता विश्वहर्ता सनातनः । सोमो रुद्रो मेघपतिर्वंकुर्वै मरुतां पिता ॥ ११३ ॥
... अरुणो अध्वरेश्वरः । जलाषभेषजो भूरिदाता सुजनिमा सुरः ॥ ११४ ॥
सम्राट् पुरांभिद् दुःखस्थः सत्वनिः पावनः क्रतुः । हिरण्यरेता दुर्धर्षो विश्वाधिक उरुक्रमः ॥
गुह्यागोऽमितगुणो महाभूतस्त्रिविक्रमः । अमृतो अजरोऽजय्यो रुद्रोऽग्निः पुरुषो विराट् ॥ ११६॥
तुषाराट्पूजितपदो महाहर्षो रसात्मकः । महर्षिबुद्धिदो गोप्ता गुप्तमन्त्रो गतिप्रदः ॥ ११७ ॥
गन्धर्वगानप्रीतात्मा गीतप्रीतोरुशासनः । विद्वेषणहरो हार्यो हर्षक्रोधविवर्जितः ॥ ११८ ॥
भक्तप्रियो भक्तिवश्यो भयहृद्भूतसङ्घभित् । भुवनेशो भूधरात्मा विश्ववन्द्यो विशोषकः ॥ ११९ ॥
ज्वरनाशो रोगनाशो मुञ्जिकेशो वरप्रदः । पुण्डरीकमहाहारः पुण्डरीकत्वगम्बरः ॥ १२० ॥
आखण्डलमुखस्तुत्यः कुण्डली कुण्डलप्रियः । चण्डांशुमण्डलान्तस्थः शशिखण्डशिखण्डकः ॥
चण्डताण्डवसन्नद्धश्चण्डकोपोऽखिलाण्डगः । चण्डिकापूजितपदो मण्डनाकल्पकाण्डजः ॥
रणशौण्डो महादण्डस्तुहुण्डवरदायकः । कपालमालाभरणस्तारणः शोकहारणः ॥ १२३ ॥
विधारणः शूलकरो धर्षणः शत्रुमारणः । गङ्गाधरो गरधरस्त्रिपुण्ड्रावलिभासुरः ॥ १२४ ॥
शम्बरारिहरो दक्षहरोऽन्धकहरो हरः । विश्वजिद्गोजिदीशानो अश्वजिद्धनजित् तथा ॥ १२५ ॥
उर्वराजिदुद्वजिच्च सर्वजित् सर्वहारकः । मन्दारनिलयो नन्दः कुन्दमालाधरोऽम्बुदः ॥ १२६ ॥
नन्दिप्रीतो मन्दहासः सुरबृन्दनिषेवितः । मुचुकुन्दार्चितपदो द्वन्द्वहीनेन्दिरार्चितः ॥ १२७ ॥
विश्वाधारो विश्वनेता वीतिहोत्रो विनीतकः । शङ्करः शाश्वतः शास्ता सहमानः सहस्रदः ॥
भीमो महेश्वरो नित्य अंबरान्तरनर्तनः । उग्रो भवहरो घोरो धीरोदात्तो विराजितः ॥ १२९ ॥
वञ्चको नियतो विष्णुः परिवञ्चक ईश्वरः । उमावरप्रदो मुण्डी जटिलः शुचिलक्षणः ॥ १३० ॥
चर्माम्बरः कान्तिकरः कङ्कालवरवेषधृक् । मेखली अजिनी दण्डी कपाली मेखलाधरः ॥ १३१ ॥
सद्योजातः कालिपतिर्वरेण्यो वरदो मुनिः । वसाप्रियो वामदेवस्तत्पूर्वो वटमूलगः ॥ १३२ ॥
उलूकरोमा घोरात्मा लास्यप्रीतो लघुः स्थिरः । अणोरणीयानीशानः सुन्दरभ्रूः सुताण्डवः ॥
किरीटमालाभरणो राजराजलसद्गतिः । हरिकेशो मुञ्जिकेशो व्योमकेशो यशोधरः ॥ १३४ ॥
पातालवसनो भर्ता शिपिविष्टः कृपाकरः । हिरण्यवर्णो दिव्यात्मा वृषधर्मा विरोचनः ॥ १३५ ॥
दैत्येन्द्रवरदो वैद्यः सुरवन्द्योऽघनाशकः । आनन्देशः कुशावर्तो नन्द्यावर्तो मधुप्रियः ॥ १३६ ॥

प्रसन्नात्मा विरूपाक्षो वनानां पतिरव्ययः । मस्तकादो वेदवेद्यः सर्वो ब्रह्मौदनप्रियः ॥ १३७ ॥
पिशङ्गितजटाजूटस्तडिल्लोकविलोचनः । गृहाधारो ग्रामपालो नरसिंहविनाशकः ॥ १३८ ॥
मत्स्यहा कूर्मपृष्ठास्थिधरो भूदारदारकः । विधीन्द्रपूजितपदः पारदो वारिधिस्थितः ॥ १३९ ॥
महोदयो महादेवो महावीजो महाङ्गधृक् । उलूकनागाभरणो विधिकन्धरपातनः ॥ १४० ॥
आकाशकोशो हार्दात्मा मायावी प्रकृतेः परः । शुक्लस्त्रिशुक्लस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित् ॥ १४१ ॥
ललनाजनपूज्यांघ्रिर्लिङ्गावासोऽनिलाशनः । विश्वतश्चक्षुरीशानो विश्वतोबाहुरीश्वरः । १४२ ॥
सर्वात्मा भावनागम्यः स्वतन्त्रः परमेश्वरः । विश्वभक्षो विद्रुमाक्षः सर्वदेवशिरोमणि ॥ १४३ ॥
ब्रह्म सत्यं तथानन्दो ज्ञानानन्दमहाफलः ।

ईश्वरः —

अष्टोत्तरं महादेवि शेषाशेषमुखोद्गतम् । इत्येतन्नामसाहस्रं रहस्यं कथितं मया ॥ १४४ ॥
पवित्रमिदमायुष्यं पठतां शृण्वतां सदा । यस्त्वेतन्नामसाहस्रैः बिल्वैः पङ्कजकुड्मलैः ॥ १४५ ॥
पूजयेत् सर्वकालेषु शिवरात्रौ महेश्वरि । तस्य मुक्तिं ददामीशे सत्यं सत्यं न संशयः ॥ १४६ ॥
मम प्रियकरं ह्येतत् फणिना फणितं शुभम् । पठेन् सर्वान् लभेतैव कामनायुष्यमेव च ॥ १४७ ॥
नामसाहस्रपाठी स यमलोकं न पश्यति । कल्याणीं च लभेद्गौरि गतिं नाम्नां च वैभवात् ॥
नाख्येयं गोप्यमेतद्धि नाभक्ताय कदाचन । न प्रकाश्यमिदं देवि मातृकारुद्रसंहितम् ॥ १४९
भक्तेषु लभते नित्यं भक्तिं मत्पादयोर्दृढाम् । दत्वाऽभक्तेषु पापात्मा रौरवं नरकं व्रजेत् ॥ १५० ॥

सूतः —

इति शिववचनं निशम्य गौरी प्रणयाच्च प्रणता शिवाङ्घ्रियुग्मे ।
सुरवरतरुसुन्दरोरुपुष्पैरभिपूज्य प्रमथाधिपं तुतोष ॥ १५१ ॥
तुष्टाव कष्टहरमिष्टदमष्टदेहं नष्टाघसंघदुरदृष्टहरं प्रकृष्टम् ।
उत्कृष्टवाक्यसुरवृन्दगणेष्टदानलोलं विनष्टतमसं शिपिविष्टमीशम् ॥ १५२ ॥

श्रीपार्वती —

चण्डांशुशीतांशुहुताशनेत्रं चक्षुःश्रवापारविलोलहारम् ।
चर्माम्बरं चन्द्रकलावतंसं चराचरस्थं चतुराननेड्यम् ॥ १५३ ॥
विश्वाधिकं विश्वविधानदक्षं विश्वेश्वरं विश्रुतनामसारम् ।
विनायकेड्यं विधिविष्णुपूज्यं विभुं विरूपाक्षमजं भजेऽहम् ॥ १५४ ॥

मधुमथनाक्षिवराब्जपूज्यपादं मनसिजतनुनाशनोत्थदीप्तमन्युम् ।
मम मानसपद्मसद्मसंस्थं मतिदाने निपुणं भजामि शम्भुम् ॥ १५५ ॥

हरिं हरन्तमनुयन्ति देवा नखैस्तथा पक्षवातैः सुघोणैः ।
नृसिंहमुग्रं शरभाकृतिं शिवं मत्तं तदा दानवरक्तपानात् ॥ १५६ ॥

नखरमुखरघातैस्तीक्ष्णया दंष्ट्रयापि ज्वरपरिकरदेहे नाशतापैः सुदीप्ते ।
दितिजकदनभक्तं संहरन्तं जगच्च हरिमसुरकुलघ्नं देवतुष्ट्यै महेशः ।
परशुवरनिखातैः क्रोडमुन्क्रोष्टुमीष्टे ॥ १५७ ॥

रौद्रनामभिरीशानं स्तुत्वाऽथ जगदंबिका । प्रेमाश्रुपुलका देवं सा गाढं परिषस्वजे ॥ १५८ ॥

शौनकः —

कानि रौद्राणि नामानि त्वं नो वद विशेषतः । न तृप्तिरीशचरितं शृण्वतां नः प्रसीद भो ॥

सूतः —

तान्यहं वो वदाम्यद्य शृणुध्वं शौनकादयः । पवित्राणि विचित्राणि देव्या प्रोक्तानि सत्तमाः ॥

देवी —

दिशांपतिः पशुपतिः पथीनां पतिरीश्वरः । अन्नानां च पतिः शंभुः पुष्टानां च पतिः शिवः ॥
जगतां च पतिः सोमः क्षेत्राणां च पतिर्हरः । वनानां पतिरीशानो वृक्षाणां च पतिर्भवः ॥
आव्याधिनीनां च पतिः स्नायूनां च पतिर्गुरुः । पत्तीनां च पतिस्ताम्रः सत्वनां च पतिर्भवः ॥
आरण्यानां पतिः शम्भुर्मुष्णतां पतिरुष्णगुः । प्रकृतीनां पतिश्चेन्द्रः कुलुञ्चानां पतिः समः ॥
रुद्रो गृत्सपतिर्व्रात्यो भगीरथपतिः शुभः । अन्धसांपतिरीशानः सभायाः पतिरीश्वरः ॥ १६५ ॥
सेनापतिश्च श्वपतिः सर्वाधिपतये नमः ।

प्रणता विनता तवाङ्घ्रियुग्मे भगवन् परिपाहि मां विभो त्वम् ।
तव कारुण्यकटाक्षलेशलेशैर्मुदिता शङ्कर भर्ग देवदेव ॥ १६६ ॥

सूतः —

इति गिरिवरजाऽऽकृष्टवाक्यं स्तुतिरूपं विबुधाधिपो महेशः ।
अभिवीक्ष्य तदा मुदा भवानीमिदमाह स्मरगर्वनाशकः ॥ १६७ ॥

शिवः —

इदं गनतये सहस्रनाम्नां परमरहस्यमहो महाघशोषम् ।
प्रबलतरवैरश्च पातकौघैर्यदि पठते हि द्विजः स मुक्तिभाक् ॥ १६८ ॥

शैवं मेऽद्य रहस्यमद्भुततरं सद् द्वादशांशान्वितम् ।
श्रुत्वोदारगिरा दरोरुकथया संपूरितं धारितम् ।
पापानां प्रलयाय तद्भवति वै सत्यं वदाम्यद्रिजे ॥ १६९ ॥

श्रुतिगिरिकरिकुम्भगुंभरते त्वयि गिरिजे परया रमार्द्रदृष्टया ।
निहितोऽजिह्मधियां मुदेऽयमेव ... मम भक्तजनार्पणं मुदे ॥ १७० ॥

ईश्वरः —

एतत्ते पञ्चमांशस्य विस्तरः कथितो मया । रहस्यार्थस्य देवेशि किं भूयः श्रोतुमिच्छसि ॥
इत्थं शिववचः श्रुत्वा प्रणम्याथ महेश्वरी । समालिङ्ग्य महादेवं सहर्षं गिरिजा तदा ॥ १७२ ॥
प्राह प्रेमाश्रुपुलका श्रुत्वा शिवकथासुधाम् ।

देवी —

अहो धन्यास्मि देवेश त्वत्कथाम्भोधिवीचिभिः । श्रोत्रे पवित्रतां याते माहात्म्यं वेद कस्तव ॥
मामृते देवदेवेश न भेदोऽस्त्यावयोः शिव ॥ १७४ ॥

भव भव भगवन् भवाब्धिपार सागरखण्डनमण्डनोरुगण्ड ।
स्फुरदुरुमुकुटोत्तमाङ्गगङ्गा ... दिव्यदेह ॥ १७५ ॥

अव भव भवहन् प्रकर्षपापाज्जनमज्ञं जडदुःखभोगसक्तम् ।
तव सुखकथया जगत् पवित्रं भव भवतात् भवतापहन् मुदे मे ॥ १७६ ॥

सूतः —

इति देव्या स्तुतो देवो महेशः करुणानिधिः । तद्वत् कथानिधिः प्रोक्तः शिवरत्नमहाखनिः ॥
भवतां दर्शनेनाद्य शिवभक्तिकथारसैः । पावितोऽस्मि मुनिश्रेष्ठाः किं भूयः श्रोतुमिच्छथ ॥
इति तद्वदनाम्भोजसुधानिष्यन्दिनीं गिरम् । श्रुत्वा प्रकटरोमाञ्चः शौनकः प्राह सादरम् ॥

शौनकः —

अहो महादेवकथासुधाम्बुभिः संप्लावितोऽस्म्यद्य भवाग्नितप्तः ।
धन्योऽस्मि त्वद्वाक्यसुजातहर्षो द्विजैः सुजातैरपि जातहर्षः ॥ १८० ॥

सूतः —

श्रीमत्कैलासवर्ये भुवनजनकतः संश्रुता पुण्यदात्री
शम्भोर्दिव्यकथासुधाब्धिलहरी पापापनोदक्षमा ।
देव्यास्तच्छ्रुतवान् गुरुर्मम मुनिः स्कन्दाच्च तल्लब्धवान्
सेयं शङ्करकिङ्करेषु विहिता विश्वैकमोक्षप्रदा ॥ १८१ ॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे ... ... नाम चत्वारिंशोऽध्यायः ॥

॥ श्रीः ॥

# ॥ श्रीशिवरहस्यम् ॥

## शङ्कराख्यः षष्ठोऽंशः ॥

### ॥ प्रथमोऽध्यायः ॥

हेमाद्रिं किल मातुलुङ्गफलमित्यादाय मोदाधिको
मौढ्यान्नाकनिवासिनां भयपरैर्वाक्यैरिव प्रार्थितः ।
नीलीशम्बरनीलमम्बरतलं जम्बूफलं भावयन्
तं मुञ्चन् गिरिमम्बरं परिमृशन् लम्बोदरः पातु माम् ॥ १ ॥

वामं यस्य वपुः समस्तजगतां माता पिता चेतरत्
यत्पादाम्बुजनूपुरोद्भवरवः शब्दार्थवाक्यास्पदम् ।
यन्नेत्रत्रितयं समस्तजगतामालोकहेतुः सदा
पायाद्दैवतसार्वभौमगिरिजालङ्कारमूर्तिः शिवः ॥ २ ॥

सूतः —

जैगीषव्यः पुनर्नत्वा षण्मुखं शिवसंभवम् । पप्रच्छ हृष्टस्तं तत्र मुनिभिर्गणपुङ्गवैः ॥ ३ ॥

जैगीषव्यः —

करुणाकर सर्वज्ञ शरणागतपालक । अरुणाधिपनेत्राब्जचरणस्मरणोन्मुख ॥ ४ ॥

करुणावरुणाम्भोधे तरणिद्युतिभास्कर । दिव्यद्वादशलिङ्गानां महिमा संश्रुतो मया ॥ ५ ॥

त्वत्तोऽन्यत् श्रोतुमिच्छामि शिवाख्यानमनुत्तमम् । त्वद्वाक्यकञ्जपीयूषधाराभिः पावयाशु माम्॥

सूतः —

इति तस्य गिरा तुष्टः षण्मुखः प्राह तं मुनिम् ॥ ७ ॥

श्रीषण्मुखः —

शृणु त्वमगजाकान्तेनोक्तं ज्ञानमहार्णवम् । ऋभवे यन्मुख प्राह कैलासे शङ्करः स्वयम् ॥ ८ ॥

ब्रह्मसूनुः पुरा विप्रो गत्वा नत्वा महेश्वरम् । ऋभुर्विभुं तदा शंभुं तुष्टाव प्रणतो मुदा ॥ ९ ॥

ऋभुः —

दिवामणिनिशापतिस्फुटकृशीटयोनिस्फुरल्ललाटभसितोल्लसद्वरत्रिपुण्ड्रभागोज्ज्वलम् ।
भजामि भुजगाङ्गदं विधृतसामिसोमप्रभाविराजितकपर्दकं करटिकृत्तिभूष्यत्कटिम् ॥ १० ॥

फालाक्षाध्वरदक्षशिक्षकबलक्षोक्षेशवाहोत्तम-
त्र्यक्षाक्षय्यफलप्रदावभसितालङ्काररुद्राक्षधृक् ।
चक्षुःश्रोत्रवराङ्गहारसुमहावक्षःस्थलाध्यक्ष मां
भक्ष्यीभूतगजप्रभक्ष भगवन् भिक्ष्वर्च्यपादाम्बुज ॥ ११ ॥

गङ्गाचन्द्रकलाललाम भगवन् भूभृत्कुमारीसख
स्वामिंस्ते पदपद्मभावमतुलं कष्टापहं देहि मे ।
तुष्टोऽहं शिपिविष्टहृष्टमनसा भ्रष्टाञ्च मन्ये हरे-
ब्रह्मेन्द्रानमरान् त्रिविष्टपगतान् निष्ठा हि मे तादृशी ॥ १२ ॥

नृत्ताडंबरसज्जटापटलिकाभ्राम्यन्महोडुच्छटा
त्रुट्यत्सोमकलाललामकलिकाशम्याकमौलीनवम् ।
उग्रानुग्रभवोग्रदुर्गजगदुद्धाराग्रपादाम्बुजं
रक्षोवक्षकुठारभूतमुमया वीक्षे सुकामप्रदम् ॥ १३ ॥

फालं मे भसितत्रिपुण्ड्ररचितं त्वत्पादपद्मानतं
पाहीशान दयानिधान भगवन् फालानलाक्ष प्रभो ।
कण्ठो मे शितिकण्ठनाम भवतो रुद्राक्षस्रक् पाहि मां
कर्णौ मे भुजगाधिपोरुमहाकर्ण प्रभो पाहि माम् ॥ १४ ॥

नित्यं शङ्करनामबोधितकथासारादरं शङ्करं
वाचं रुद्रजपादरां सुमहतीं पञ्चाक्षरीमिन्दुधृक् ।
बाहू मे शशिभूषणोत्तममहालिङ्गार्चनायोचितौ
पाहि प्रेमरसार्द्रयाद्य सुदृशा शम्भो हिरण्यप्रभ ॥ १५ ॥

भास्वद्राहुचतुष्टयोज्ज्वल सदा नेत्रे त्रिनेत्र प्रभो
त्वल्लिङ्गोत्तमदर्शनेन सुतरां तृप्तैः सदा पाहि मे ।

पादौ मे हरिनेत्रपूजितपदद्वन्द्वाव नित्यं प्रभो
त्वल्लिङ्गालयप्रक्रमप्रणतिभिर्मान्यौ च धन्यौ विभो ॥ १६ ॥

धन्यस्त्वल्लिङ्गमङ्गेष्वनुदिनगलितानङ्गसङ्गान्तरङ्गः
पुंसामर्थैकशक्त्या यमनियमवरैर्विश्ववन्द्य प्रभो यः ।
दत्त्वा बिल्वदलं सदम्बुजवरं किञ्चिज्जलं वा मुहुः
प्राप्नोतीश्वरपादपङ्कजमुमानाथाद्य मुक्तिप्रदम् ॥ १७ ॥

उमारमण शङ्कर त्रिदशवन्द्य वेदेड्य हर
त्वदीयपरभावतो मम सदैव निर्वाणकृत् ।
भवार्णवनिवासिनां किमु भवत्पदाम्भोरुह-
प्रभावभजनादरं भवति मानसं मुक्तिदम् ॥ १८ ॥

संसारार्गलपादबद्धजनतासंमोचनं भर्ग ते
पादद्वन्द्वमुमासनाथ भजतां संसारसंभर्जकम् ।
त्वन्नामोत्थमगर्जनादघकुलं सन्तर्जितं वै भवेद्
दुःखानां परिमार्जकं तव कृपावीक्षावतां जायते ॥ १९ ॥

विधिमुण्डकरोत्तमोरुमेरुकोदण्डखण्डितपुराण्डजवाहबाण ।
पाहि क्षमारथविकर्षसुवेदवाजिहेषान्तहर्षितपदाम्बुज विश्वनाथ ॥ २० ॥

विभूतीनामन्तो न हि खलु भवानीरमण ते
भवे भारं कश्चित् त्वयि भवह भाग्येन लभते ।
अभावं चाज्ञानं भवति जननाद्यैश्च रहितः
उमाकान्त स्वान्ते भवदभयपादं कलयतः ॥ २१ ॥

वरं शम्भो भावैर्भजनभावेन नितरां
भवाम्भोधिर्नित्यं भवति विततः पांसुबहुलः ।
विमुक्तिं भुक्तिं च श्रुतिकथितमस्माश्ववरधृक्
भवे भर्तुः सर्वो भवति च सदानन्दमधुरः ॥ २२ ॥

सोमसामजमुक्तकृत्तिमौलिधृक् सामसीमशिरसि स्तुतपाद ।
सामिकायगिरिजेश्वर शम्भो पाहि मामखिलदुःखसमूहात् ॥ २३ ॥

सारङ्गी सिंहशावं स्पृशति सुतधिया नन्दिनी व्याघ्रपोतं
मार्जारी हंसबालं प्रणयपरवशा केकिकान्ता भुजङ्गम् ।
वैराण्याजन्मजातान्यपि गलितमदा जन्तवोऽन्ये त्यजन्ति
भक्तास्त्वत्पादपद्मे किमु भजनवतः सर्वसिद्धिं लभन्ते ॥ २७ ॥

स्कन्दः –

इत्थं ऋभुस्तुतिमुमावरजानिरीशः श्रुत्वा तमाह गणनाथवरो महेशः ।
ज्ञानं भवामयविनाशकरं तदेव तस्मै तदेव कथये शृणु पाशमुक्त्यै ॥ २८ ॥

इति श्रीशिवरहस्ये शंकराख्ये षष्ठांशे ऋभुस्तुतिर्नाम प्रथमोऽध्यायः ॥

---

## ॥ द्वितीयोऽध्यायः ॥

ईश्वरः –

शृणु पद्मजसंभूत मत्तः सूत्रविधिक्रमम् । ज्ञानोत्पादकहेतूनि श्रुतिसाराणि तत्त्वतः ॥ १ ॥

व्यासा मन्वन्तरेषु प्रतियुगजनिताः शांभवज्ञानसिद्ध्यै
भस्माऽभ्यक्तसमस्तगात्रनिवहा रुद्राक्षमालाधराः ।
कैलासं समवाप्य शङ्करपदध्यानेन सूत्राण्युमा-
कान्तात् प्राप्य वितन्वते स्वकधिया प्रामाण्यवादानहो ॥ २ ॥

जिज्ञास्यं ब्रह्म एवेत्यथपदविदितैः साधनप्राप्त्युपायै-
र्योगैर्योगाद्युपायैर्यमनियममहासांख्यवेदान्तवाक्यैः ।
श्रोतव्यो भगवान् न रूपगुणतो मन्तव्य इत्याह हि
वेदोऽथोधदवाक्यहेतुकरणैर्ध्येयः स साक्षात्कृतैः ॥ ३ ॥

[1] जन्माद्यस्य यतोऽस्य विश्वजगतो मिथ्यैव तत्कारणं
ब्रह्म ब्रह्मात्मनैव प्रकृतिपरमदो वर्तमानं विवर्तेत् ।
श्रुत्या युक्त्या यतो वा इतिपदघटितो बोधतो वक्ति शंभुं
नाणुः कालविपाककर्मजनितेत्याचोदना वै मृषा ॥ ४ ॥

---

१ इतः परं सूत्रोपदेशरूपेऽध्यायेस्मिन् श्लोका दुर्बोधान्वयाः व्यत्यस्तवृत्ता न्यूनाधिकपादाश्च प्राचुर्येण वर्तन्ते ।

योनिः शास्त्रस्य वेदस्तदुभयमननादूब्रह्मणः प्रत्यभिज्ञा
निश्वासाद्वेदजालं शिववरवदनाद्वेधसा प्राप्तमेतत् ।
तस्मात् तर्कवितर्ककर्कशधिया नातिक्रमेत् तां धियं
स्वाम्नायक्रियया तदप्रकरणे योनिर्महेशो ध्रुवम् । ५ ॥

तत्त्वस्यापि समन्वयात् श्रुतिगिरां विश्वेश्वरे चोदना
सा चानिर्वचनीयतामुपगता वाचो निवृत्ता इति ।
आत्मैवैष इतीव वाक्यसुवृतिर्वृत्तिं विधत्ते धिया
वेदान्तादिषु एक एव भगवानुक्तो महेशो ध्रुवम् ॥ ६ ॥

नासद्वा वीक्षते यज्जडमिति करणैर्गन्धरूपादिहीनं
शब्दस्पर्शादिहीनं जगदनुगतमपि तद्ब्रह्म किंरूपमीष्टे ।
गौणं चेदपि शब्दतो जगदिदं यन्नामरूपात्मकं
तन्नात्राविशदीश्वरोऽर्थवचसा मोक्षस्य निष्ठाक्रमः ॥ ७ ॥

हेयत्वावचनाच्च तच्छ्रुतिगिरां स्थूलं प्रदष्टं भवे-
द्रूपं नारूपतोऽपि प्रकरणवचनं वा विकारः किलेदम् ।
स्वाध्यायादपि तद्वदापि परमानन्दो यदीत्थं परः
सामान्याच्च गतेरथाप्यनुभवे विद्योतते शङ्करः ॥ ८ ॥

श्रुतत्वाद्वेदान्तप्रतिपदवचः कारणमुमासनाथो नाथानां स च किल न कश्चिज्जनिभवः ।
स एवानन्दात्मा श्रुतिकथितकोशादिरहितो विकारप्राचुर्यान्न हि भवति कार्यं च कारणम् ९ ।

तद्धेतुव्यपदेशतोऽपि शिव एवेति चानन्दकृत् (?)
मन्त्रैर्वर्णकृतक्रमेण भगवान् सत्याद्यनन्तोच्यते ।
नैरन्तर्यानुपपत्तितोऽपि सुखिता चानन्दभेदोऽर्थतः
कामाद्यानुभावतो हृदि भिदा जायेद्भयं संसृतेः ॥ १० ॥

पुच्छं ब्रह्म प्रतिष्ठितेति वचनाच्छैवी महेशोऽव्ययः ।
आकाशान्तरतोऽपि भौतिकहृदाकाशात्मता वाक्यतो
ब्रह्मैव प्रतिभाति भेदकलने चाकल्पना[1]कल्पतः ॥ ११ ॥

---

१ नल्पतः C त्रिपादयं श्लोकः ।

सुषुप्त्युत्क्रान्त्योर्वा नहि खलु न भेदः परशिवे अतोत्थानं (!) द्वैते न भवति परे वै विलयने ।
तदहं यत्सूक्ष्मं जगदिदमनाकारमरसं न गन्धां न स्पर्शं भवति परमेशे विलसितम् ॥ १२ ॥
अधीनं चार्थं तद्भवति पुनरेवेक्षणपरं स्वतन्त्रेच्छा शंभोर्न खलु करणं कार्यमपि न ॥ १३ ॥
त्रैपत्यावचनाच्च शंकर परानन्दे प्रमोदास्पदे प्रज्ञानं नहि कारणं प्रकृतिकं प्रश्नत्रयस्यार्थवत् ।
न विज्ञेयं देहप्रविलयशनोत्थानगणना स मृत्योर्मृत्युस्तद्भवति किल भेदेन जगतः ॥ १४ ॥
महद्वच्चाणीयो भवति च समो लोकसुदृशा तथा ज्योतिस्त्वेकं प्रकरणपरं कल्पितवतः ।
न संख्याभेदेन त्रिभुवनविभवादतिकरं स्वभावोऽयं श्वश्वन्मुखरयति मोदाय जगताम् ॥ १५ ॥

प्राणादुद्गतपञ्चसंख्यजनिता तद्वत्त्रिवच्च श्रुतं
तच्छीलं मनसो न सिद्धपरमानन्दैकजन्यं महः ।
ज्योतिष्काशणदर्शिते च करणे सत्ता सदित्यन्वहं
चाकर्षा भवति प्रकर्षजनिते त्वचीति वाक्योत्तरम् ॥ १६ ॥

जाग्रत्त्वावचनेन जीवजगतोर्भेदः कथं कथ्यते
लिङ्गं प्राणगतं न चेश्वरपरं ज्योतिः किलैक्यप्रदम् ।
अन्वार्थत्वविवेकतोऽर्थगतिकं चाकल्पयद्वाक्यतः
प्रज्ञामित्यपरः क्रमस्थितिरसावन्यो वदन्तं मृषा ॥ १७ ॥

प्रकृत्यैवं सिद्धं भवति परमानन्दविधुरं अभिध्योपादेशाद् भवति उभयाम्नायवचनैः ।
भवत्यात्मा कर्ता कृतिविरहितो योनिरपि च प्रतिष्ठा निष्ठा च त्रिभुवनगुरुः प्रेमसदनः ॥ १८ ॥
अभिध्योपादेशात् स बहु भवदीक्षादिवशतः समासा(भा)चोभाभ्यां प्रकृतिजसमाम्नायवचनात् ।
अतो ह्यात्मा शुद्धः प्रकृतिपरिणामेन जगतां मृदीव व्यापारो भवति परिणामेषु च शिवः ॥ १९ ॥
आनन्दाभ्यासयोगाद्विकृतजगदानन्दजगतो अतो हेतोर्धर्मो न भवति शिवः कारणपरः ।
हिरण्यात्माऽऽदित्येऽक्षिणि उदेतीह भगवान् नतेश्वाधाराणां श्रवणवचनैर्गोपितधियः ॥ २० ॥

भेदादिव्यपदेशतोऽस्ति भगवानन्यो भवेत् किं ततः
आकाशादिशरीरलिङ्गनियमाद्व्याप्यं हि सर्वं ततः ।
तज्ज्योतिः परमं महेश्वरमुमाकान्ताख्यशान्तं महो
वेदान्तेषु नितान्तवाक्यकलने छन्दोऽभिधानादपि ॥ २१ ॥

भूतादिव्यपदेशतोऽपि भगवत्यस्मिन् महेशे ध्रुवं
यस्माद्भूतवराणि जायत इति श्रुत्याऽस्य लेशांशतः ।

विश्वं विश्वपतेरभूत तदुभयं प्रामाण्यतो दर्शनात्
प्राणस्यानुगमात् स एव भगवान् नान्यः यथा विद्यते ।। २२ ।।

न वक्तुश्चात्मा वै स खलु शिवभूपादिविहितस्तथैवायुर्देहे अग्निवहवत् चक्रगपहो ।
अदृश्यो ह्यात्मा वै स हि सुदृशतः(!) शास्त्रनिवहैः शिवो देवो वामो मुनिरपि च सार्वात्म्यमभजत् ।।

प्रसिद्धिः सर्वत्र श्रुतिषु विविवाक्यैर्भगवतो महाभूतैर्जातं जगदिति च तज्जादिवचनैः ।
अतोऽणीयान् ज्यायानपि द्विविधभेदव्यपगता विवक्षा नोऽस्तीति प्रथयति गुणैरेव हि शिवः ।।

संभोगप्राप्तिरेव प्रकटजगतः कारणतया सदा व्योमैवेत्थं भवति हृदये सर्वजगताम् ।
अतोऽत्ता वै शर्वश्चरमचरभूतं जगदिदं महामृत्युर्दशो भवति शिव(१)प्रसाद इति च ।। २५ ।।

प्रकरणवचनेन वेदजाते भगवति भवनाशने महेशे ।
प्रविशति शिव एव भोगमोक्तृनियमनदर्शनतो हि वाक्यजातम् ।। २६ ।।

विशेषणैः शङ्करमेव नित्यं द्विधा वदत्येवमुपाधियोगात् ।
अतोऽन्तरा वाक्यपदैः समर्थितः स्थानादियोगैर्भगवानुमापतिः । २७ ।।

सुखाभिधानात् सुखमेव शंभुः कं ब्रह्म खं ब्रह्म इति श्रुतीरितः ।
श्रुतोपवाक्योपनिषत्प्रचोदितः गतिं प्रपद्येत बुधोऽपि विद्यया ।। २८ ।।

अनवस्थितितोऽपि नेतरो भगवानेव स चक्षुषि प्रबुध्येत् ।
भयभीताः खलु यस्य सोमसूर्यानलवाय्वंबुजर्संभवा भ्रमन्ति ।। २९ ।।

अन्तर्यामितयैव लोकमखिलं जानात्युमायाः पतिः
भूतेष्वन्तरगोऽपि भूतनिवहा नो जानते शङ्करम् ।। ३० ।।

न तत्स्मृत्या धर्मैरभिलषणतो भेदविधुरं न शारीरं भेदे भवति अगजानायकवरे ।
अदृश्यत्वाद्धर्मैर्न खलु भगवानन्यदिति च १ परादादित्यं चामतिरपि च भेदप्रकलने ।। ३१ ।।

भेदादेश्च विशेषणं परशिवे रूपं न नाम प्रभा ।
भावो वा भवति प्रभाविरहितं ब्रह्मात्मना चाह तत् । ३२ ।।

स्मृतं मानं शंभौ भगवति च तत्साधनतयाप्यतो दैवं भूतं न भवति च साक्षात् परशिवे ।
अभिव्यक्तौ चान्यः स्मृतिमपि तथाऽन्योऽपि मनुते तथा संपत्तिर्वै भुवि भवति किं शंभुकलने ।।

यं मुक्तिव्यपदेशतः श्रुतिशिखाशाखाशतैः कल्पते
भिद्यद्ग्रन्थिरपि प्रकीर्णवचनात् साक्ष्येव बाह्यान्तरा ।

१ प्रवादादित्यं व्यामतिरपि च C

शब्दो ब्रह्मतथैव न प्रभवते प्राणप्रभेदेन च
तथाप्युत्क्रमणस्थितिश्च विलये मुक्तेऽप्यसौ ब्रह्मरः ॥ ३४ ॥

तं भूमा संप्रसादाच्छिवमजरमात्मानमधुना मृणोतीक्षेद्वापि क्षणमपि तथान्यं न मनुते ।
तथा धर्मापत्तिर्भवति परमाकाशजनितं प्रशस्तं व्यावृत्तं दहरमपि हृध्यायपदिशत् ॥ ३५ ॥

अलिङ्गं लिङ्गस्थं वदति विधिवाक्यैः श्रुतिरियं
धृतेराकाशाख्यं महिमनि प्रसिद्धेर्विमृशता ।
अतो मर्शाम्नायं भवति भवभावात्मकतया
शिवाविर्भावो वा भवति च निरूपे गतधियाम् ॥ ३६ ॥

परामर्शे चान्यमनुवति दहरं किं श्रुतिवचो निरुक्तं चाल्पं यत् त्वनुकृति तदीयेऽह्नि महसा ।
विभातीदं शश्वत् प्रमतिवरशब्दैः श्रुतिभवैः ॥

यो व्यापकोऽपि भगवान् पुरुषोऽन्तरात्मा । वालाग्रमात्रहृदये किमु सन्निविष्टः ॥ ३८ ॥

प्रत्यक्षानुभवप्रमाणपरमं वाक्यं किलैकार्थदं
मानेनापि च संभवाभ्रमपरो वर्णं तथैवाह हि ।
शब्दं चापि तथैव नित्यमपि तत् साम्यानुपत्तिक्रिया
मध्वादिष्वनधीकृतोऽपि पुरुषो [1]ज्योतिष्यभावो भवेत् ॥ ३९ ॥

भावं चापि शुगस्य तच्छ्रवणतो जात्यन्तरासंभवात्
संस्काराधिकृतोऽपि शङ्करपदं [2]ये वक्तुकामा मनाक् ।
ज्योतिर्दर्शनतः प्रसादपरमादस्माच्छरीरात् परं
ज्योतिश्चाभिनिविश्य व्योम परमानन्दं परं विन्दति ॥ ४० ॥

स्मृतीनां वादोऽत्र श्रुतिविभवदोषान्यवचमा स एवात्मा दोषैर्निगतमतिकायः परशिवः ।
स विश्वं विश्वात्मा भवति स हि विश्वाधिकतया समस्तेषु प्रोतो भवति स हि कार्येषु करणम् ॥

प्रधानानां तेषां भवति इतरेषामनुपमो-
प्यलब्धोऽप्यात्मायं श्रुतिशिरसि चोक्तोऽणुरहितः ।
स दृश्योऽचिन्त्यात्मा भवति वरकार्येषु करणं
असद्वा सद्वा सोऽप्यसदिति न दृष्टान्तवशगम् । ४२ ॥

---

१ ज्योतिष्टूभावो C २ "यो वक्तुकामो" इति स्याद्वा ।

असङ्गो लक्षण्यः स भवति हि पक्षस्त्वपि मुधा अमीमानोद्देशादनुगतिरथाक्षादिरहितः ।
स्वपक्षादौ दोषाश्रुतिरपि न ईष्टे परमतं त्वनिर्मोक्षो भूयादनुमितिकुतर्कैर्न हि भवेत् ॥ ४३ ॥

मोक्त्रापत्तेरपि विषयतो लोकवेदार्थवादो
नैनं शास्ति प्रभुमतिपरं [1]वाचि वारंभणेभ्यः ।
भोक्ता भोगविलक्षणो हि भगवान भावोऽपि लब्धो भवेत्
सत्त्वाच्चापि परस्य कार्यविवशं मद्वाक्यवाक्यान्वयात् ॥ ४४ ॥

युक्तेः शब्दान्तराच्चासदिति नहि कार्यं च करणं प्रमाणैर्युक्त्या वा न भवति विशेषेण मनसा ।
परः प्राणोद्देशाद्धितकरणदोषाभिन्नधिया तथाऽसाद्या दिव्या .... द्योतन्ति देवा दिवि(?)॥
प्रसक्तिर्वा कृत्स्ना श्रुतिवरबलादात्मनि चिरं स्वपक्षे दोषाणां प्रभवति च सर्वादिसुदृशा ।
विकाराणां भेदो न भवति वियोज्यो गुणधियां अतो लोके लीलापरविषमनैर्घृण्यविधुरम् ॥ ४६ ॥

[2]स कर्मारंभाद्वा उपलभति यद्यतिच परं
सर्वैर्धर्मैपदैर्युक्तवचनापत्तेः प्रवृत्तेर्भवेत ।
भूतानां गतिशोपयुज्यपयसि क्षारं यथा नोपयुक्
अवस्थानं नैव प्रभवति तृणेषूद्यतमते-
स्तथाभावात् पुंसि प्रकटयति कार्यं च करणम् ॥ ४७ ॥

[3]अङ्गित्वानुपपत्तितोऽप्यनुमितो(?) शक्तिञ्चहीनं जगत् प्रतिषिद्धे सिद्धे प्रसभमिति मौनं हि शरणम्।
महद्दीर्घं ह्रस्वं उभयमपि कर्मैव करणे तथा साम्ये स्थित्या प्रभवति स्वभावाच्च नियतम् ॥ ४८ ॥

न स्थानतोऽपि श्रुतिलिङ्गसमन्वयेन प्रकाशवैयर्थ्यमतो हि माया ।
[4]सूर्योपमा प्रभवतित्वतथाउदत्वा-(?)तद्दर्शनाच्च नियतं प्रतिबिम्बरूपम् ॥ ४९ ॥

तदव्यक्तं न ततो लिङ्गमेतत् तथोभयव्यपदेशाच्च तेजः ।
प्रतिषेधाच्च परमः सेतुरीशः सामान्यतः स्थानविशेषबुद्ध्या ॥ ५० ॥

विशेषतश्चोपपत्तेस्तथान्यदतः फलं चोपपद्येत यस्मात् ।
महेश्वराच्छ्रुतिभिश्चोदितं यत् धर्मं परे चेश्वरं चेति चान्ये ।
न कर्मवच्चेश्वरे भेदधीर्नः । ५१ ॥

---

१ वा विचारंभणेभ्यः C २ अयं श्लोकः पंचपादो भिन्नवृत्तश्च ।
३ श्लोकस्यापमर्धं C कोशे नोपलभ्यते । ४ सूर्योपमा प्रभति चत्वतथाम्बुदत्वा ।

भेदाश्च चेति परतः परमार्थदृष्ट्या स्वाध्यायभेदादुपसंहारभेदः ।
अथान्यथात्वं वचसोऽसौ वरीयान् संज्ञातश्चेद्यः सिद्ध्रेव प्रमाणम् ॥ ५२ ॥

सर्वत्राभेदाद्नयोस्तथान्यत् प्राधान्यमानन्दमयः शिरस्त्वं ।
तथेतरे त्वर्थसामान्ययोगात् प्रयोजनाभावतयाऽप्ययाय ते ॥ ५३ ॥

शब्दाद्यथा ह्यात्मगृहीतिरुत्तरात् तथान्वयादितराख्यानपूर्वम् ।
अशब्दत्वादेवमेतत् समानमेवं च संविद्वचनाविशेषात् ॥ ५४ ॥

तद्दर्शनात् संभृतं चैवमेषोऽनाम्नायाद्वेधभेदात् परेति ।
गतेरर्थादुपपन्नार्थलोके शब्दानुमानैः सगुणोऽव्ययात्मा ॥ ५५ ॥

यथाविकारं स्थितिरेव चान्तरा ( तथात्मनः ) तत्रैव भेदाद्विशिषन्हीतरवत् ।
अन्यत्तथा सत्यकृत्या तथैके कामादिरत्रायतनेषु चादरात् ॥ ५६ ॥

उपस्थिते तद्वचनात् तथाग्नेः संलोप एवाग्निभवः प्रदाने ।
अतोऽन्यचिन्तार्थभेदलिङ्गं बलीयः क्रिया परं चासमानाच दृष्टेः ॥ ५७ ॥

श्रुतेर्बलादनुबन्धेमखे वै भावापत्तिश्चात्मनश्चैक एव ।
तद्भावभावादुपलब्धिरीशे सद्भावभावादनुभावतश्च ॥ ५८ ॥

अङ्गावबद्धा हि तथैव मन्त्रतो भूम्नः क्रतोर्ज्ञायते दर्शनेन ॥ ५९ ॥

रूपादेश्च विपर्ययेण तु दृशा दोषोभयत्राप्ययं अग्राह्यः सकलानपेक्ष्यकरणं प्राधान्यवादेनः हि ।
तत्प्राप्तिः समुदायकेऽपि इतरे प्रत्यायिकेनापि यत् विद्याऽविद्या असति बलतो धुर्यमार्याभिध्वंसी॥
दोषोभयोरपि तदा स्वगमोऽभ्युपेया । स्मृत्या सतो दृशि उदासीनवद्व्रजेत ॥ ६१ ॥

नाभावादुपलब्धितोऽपि भगवद्वैधर्म्यस्वन्यादिवत्
भावेनाप्युपलब्धिरीशितुरहो सा वै क्षणं कल्प्यते ।
सर्वार्थानुपपत्तितोऽपि भगवत्येकाद्वितीये पुनः
कार्त्स्न्येनात्मनि नो विकारकलनं नित्यं परैर्धर्मतः ॥ ६२ ॥

संबन्धानुपपत्तितोऽपि समधिष्ठानोपपत्तेरपि
तद्वित्राकरणं च भोगविधुरं त्वं तत्त्वसर्वज्ञता ।
उत्पत्तेरपि कर्तुरेव कारणतया विज्ञानभावो यदि
.... (नि)षेधप्रतिपत्तितोऽपि महतश्चाकाशतः प्राणतः ॥ ६३ ॥

अस्तित्वं तदपीति गौणपरता वाक्येषु भिन्ना क्रिया
कार्यद्रव्यसमन्वयायकरणं शब्दाच्च ब्रह्मैव तत् ।
शब्देभ्योऽप्यमतं श्रुतं भवति तद् ज्ञानं परं शांभवं
यावल्लोकविभागकल्पनवशात् भूतक्रमात् सर्जति ॥ ६४ ॥

तस्यासंभवतो भवेज्जगदिदं तेजःप्रसूतं श्रुतिः
चापः क्ष्मा मरुदेव खात्मकथयन्तल्लिङ्गसंज्ञानतः ॥ ६५ ॥

विपर्ययेण क्रमतोऽन्तरा हि विज्ञानमानक्रमतो विशेषात् ।
न चात्मनः कारणताविपर्यश्चराचरव्यापकतो हि भावैः ॥ ६६ ॥

नात्मा श्रुतो नित्यताशक्तियोगाज्ज्ञानेव भासत्यविकल्पको हि ।
[1]संज्ञान एवात्र गतागतानां स्वात्मानं चाचरणेनाणुरेव ॥ ६७ ॥

स्वशब्दोन्मानाभ्यां सुखयति सदानन्दनतनुं विरोधश्चान्द्रोपद्रव इव सदात्मा निखिलगः ।
गुणादालोकेषु व्यतिकरवतो गन्धवहतः परो दृष्टो ह्यात्मा व्यपदिशति प्रज्ञानुभवतः ॥

यावच्चात्मा नैव दृश्येत दोषैः पुंस्त्वादिवच्चसतो व्यक्तियोगात् ।
मनोऽन्यत्रायदि कार्येषु गौणं विमुखः कर्ता शाश्वतो विहरति उपादानवशतः ॥ ६९ ॥

अस्यात्मव्यपदेशतः श्रुतिरियं कर्तृत्ववादं वदत् उपालब्धुं शक्ते[2] विपरति समाध्या क्षुभितया ।
परात्त्तु श्रुत्याप्यनुकृति[3]सुरत्वक्षुभितया परो मन्त्रो वर्णैभंगत्रजि अनुज्ञापरिहरौ
तनोः संबन्धेन प्रविशति परं ज्योतिकलने ॥ ७० ॥

आसन्नतेव्यतिकरं पररूपभेदे आभास एव सुदृशा नियतो नियम्यात् ।
आकाशवत् सर्वगतोऽव्ययात्मा आसन्धिभेदात् प्रतिदेशभावात् ॥ ७१ ॥

तथा प्राणो गौणः प्रकृतिविधिपूर्वार्थकलनादघस्तोये मुख्यः प्रथितगतिशेषेण कथितः ।
हस्तादयस्त्वणवः प्राणवायोः चक्षुस्तथा करणत्वाच्च दोषः ॥ ७२ ॥

यः पञ्चवृत्तिर्मनवच्च दृश्यते तथाणुतो ज्योतिरमुष्य खानि ।
भेदश्रुतेर्लक्षणविप्रयोगादात्मादिभेदे तु विशेषवादः ॥ ७३ ॥

आत्मैकत्वात् प्राणगतेश्च वह्नेः ते जागतीवाश्रुततराम चेष्टा ।

---

१ सन्तान एवात्र C  २ विपर्यय समाध्या C  ३ सुयत्न C

भोक्तुर्न चात्मन्यविदीकृता ये ते धूममार्गेण किल प्रयान्ति ॥ ७४ ॥

चरणादिति चान्यकल्पनां स्मरन्ति सन्नैव गतिप्ररोहात् ।
व्यापारवैधुर्यसमूहविद्या ते कर्मणैवेह तृतीयलब्धाम् ॥ ७५ ॥

तद्दर्शनं तद्वदतोऽप्यविद्या सब्योपपत्तेरुत दौविशेषात् ।
चिरन्तपः शुद्धिरतो विशेषात् ते स्थावरे चाविशेषार्थवादः ॥ ७६ ॥

सन्ध्यांशसृष्ट्या किल निर्ममे जगत् पुत्रेषु मायामयतोऽव्ययात्मा ।
कृत्स्नं मायामयं तज्जगदिदमसतो नामरूपं तु जातं ।
जाग्रत्स्वप्नसुषुप्तितोऽपि परमानन्दं तिरोधानकृत् ॥ ७७ ॥

देहायोगाद् ह्रसते वर्धते यः तत्रैवान्यत् पश्यते सोऽथ बोधात् ।
स शोशुचानस्मृतिशब्दबोधः ॥ ७८ ॥

नानाशब्दादिभेदात् फलविविधमहाकर्मवैचित्र्ययोगात्
ईष्टे तां गुणधारणां श्रुतिहितां तद्दर्शनोद्बोधतः ।
तद्दर्शनात् सिद्धित एव सिद्ध्यते आचारयोगाद्धततच्छ्रुतेश्च ॥ ७९ ॥

वाचा समारंभणतो नियामतः तस्याधिकाप्रात्वकस्योपदेशात् ।
तुल्यं दृशा सर्वतः स्याद्विभागः अध्यापपात्राणविशेषतस्तु ते ॥ ८० ॥

कामोपमर्देन तदूर्ध्वरेतसा विमर्शतो याति स्वतत्त्वतोऽन्यः ।
अनुष्ठेयं चान्यत् श्रुतिशिरसि निष्ठाश्रमवशात् ।
विधिस्तुत्या भावं प्रवदति यथाग्नेराधानमनुवदति ज्ञानाङ्गमपि च ॥ ८१ ॥

प्राणात्यये वापि समं तथान्नं अबाधतः स्मृतितः कामकारे ।
विहिताश्रमकर्मतः सहैव कार्यात् तयोभयोर्लिङ्गमङ्गं च दर्शयेत् ॥ ८२ ॥

[1]तथान्तरा चापि स्मृतेर्विशेषतः उपायोऽपि लिङ्गाभयभावनाधिका ।
सैवाधिकारादर्शनात् तदुक्तं आचारतः स्वामिन ईन्यवृत्त्या ॥ ८३ ॥

स्मृते ऋत्विक्सहकार्यं च कृत्स्नम् ।
तन्मौनवाचा वचनेन कुर्वन् तदैहिकं तदवस्थाधृतेश्च ॥ ८४ ॥

---

१ कामोपमर्दन तदूर्ध्वरेतसः C

आवृत्याप्यसकृत्तथोपदिशति ह्यात्मन्नुपागच्छति
ग्राह्यं याति च शाश्वतो(?) प्रतीककलनात् सा ब्रह्मदृष्टिः प्रभोः ।
आदित्यादिकृतीषु तथा सतीरपि कर्माङ्गताध्यानतः
तस्माच्चास्थिरतां स्मरन्ति च पुनर्यत्रैव तत्र श्रुता ॥ ८५ ॥

आप्रायणात् तत्र दृष्टं हि यत्र तत्रागमात् पूर्वयोऽश्लेषनाशौ ।
तथेतरस्यापि पतेदसंसृतौ अनारब्धाग्निहोत्रादिकार्ये ॥ ८६ ॥

अतोऽन्येषामुभयोर्यत्र योगात् विद्याभोगेन वाङ्मनसी दर्शनाच्च ।
सर्वाण्यनुमनसा प्राण एव सोऽध्यक्षेत उपदर्शेन कच्चित् ॥ ८७ ॥

समानवृत्त्या क्रमते चासु वृत्त्या संसारतो व्यपदेशोपपत्तेः ।
सूक्ष्मप्रमाणोपमर्दोपलब्धस्थितिश्च तथोपपत्तेरेष ऊष्मा रसिके ॥ ८८ ॥

अत्र स्मर्यनानुपरताविधिवाक्यसिद्धेर्वैयासकिर्मुनिरेषोऽन्ययास्मा ।
अविभागो वचनाद्धार्दे एव रश्म्यनुसारी निशितो दक्षिणायने ।
योगिनः प्रतिसृतैं(तौ)स्तथार्चिरात् वायुमद्धटितो वरुणेन ॥ ८९ ॥

आतिवाहिकविधेस्तदलिङ्गात् तद्वदत्र उभयोरपि सिद्धिः ।
तद्वैतेन गतिरप्युपावृतो विशेषसामीप्यसकार्यहेतौ ॥ ९० ॥

स्मृतिस्तथाऽन्योऽपि च दर्शनेन काये तथा प्रतिपत्तिप्रतीकः ।
विशेषदृष्ट्या संपदाविर्भवेन स्वेनांशत्वान्मुक्तिविज्ञानतो हि ॥ ९१ ॥

आत्मप्रकाशादविभागेन दृष्टः तद्ब्रह्मणोऽन्यद्द्युतितन्मात्रतोऽन्यः ।
उपन्यासादन्यसंकल्पभूत्या रथत्रान्योऽप्युथाह (?) ॥ ९२ ॥

भावमन्यो उभयं न स्वभावा भावे [1]संपत्तिरेवं जगत् स्यात् ।
प्रत्यक्षेणोपदेशात् (श)स्थितिरपि जगतो व्यक्तिभावादुपासा
[2]भेदाभासस्थितिरविकारावर्तिरिति च ॥ ९३ ॥

तथा दृष्टेर्द्रष्टुर्विपरीतदृष्टेः श्रुतिवशात् तथा बुद्धेर्बोद्धा भवति अनुमानेन हि बुधः ।
भोगे सामान्यलिङ्गात् शिवभजनभवे मान्यमनसा अनावृत्तिः शब्दो भवति विधिवाक्येन नियतम् ॥

---

१ भावे स्वाप्यसंपत्तिरेवं C  २ स्थितिरविनूश्वरावर्ति C

तथोक्तः सूत्राणां विधिरपि च सामान्यमुभयप्रकृष्टश्रुत्यैव प्रभवति महानन्दसदने ॥ ९५ ॥

स्कन्दः —

त्रिनेत्रवक्त्रसुचरित्ररूपं मन्त्रार्थवादाम्बुजमित्ररूपाः ।
प्रहृष्टरूपा मुनयो वितेनिरे मतानुसारीण्यथ वृत्तितानि ॥ ९६ ॥

न तानि बुद्धयुद्भववोधदानि विश्वेशपादाम्बुजभक्तिदानि ॥ ९७ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे शिवेन ऋभुं प्रति सूत्रोपदेशो नाम द्वितीयोऽध्यायः ॥

## ॥ तृतीयोऽध्यायः ॥

सूतः —

ततो महेशात् संश्रुत्य सूत्राणि ऋभुरेव हि । कैलासेशं महादेवं तुष्टाव विनयाञ्जलिः ॥ १ ॥

लब्धज्ञानो महादेवान्मुनिस्थ्योऽकथयच्च तत् । तत् स्तुतिं च शृणुष्वेति जगाद गिरिजासुतः ॥ २ ॥

जैगीषव्यं महात्मानं जितषड्वर्गमुत्तमम् ।

स्कन्दः —

संस्तुत्य सांबमीशानमृभुर्ज्ञानमविन्दत । शांभवः स महायोगी तुष्टावाष्टतनुं हरम् ॥ ३ ॥

ऋभुः —

गन्धद्विपवरवृन्दस्त्रचिरुचिबन्धोद्यतपट गन्धप्रमुख मदान्धव्रजदलि हरिमुखनखरोद्यत्
स्कन्धोद्यन्मुख बन्धक्षुरनिभ निर्यद्रमदसृमिन्द्रनगवर विन्ध्यप्रभशिव मेध्यप्रमुवर ।
मेध्योत्तमशिव मेधाखिलजगदुद्यद्भवगत वेद्यागमशिव गद्यस्तुतपद पद्यप्रकटहृ-
दुद्यद्भवगद वेद्योत्तम पाहि शंभो ॥ ४ ॥

चण्डद्विपकर काण्डप्रभभुज दण्डोद्यनग खण्डत्रिपुर महाण्डस्फुटदुडुपशिखण्ड ।
द्युतिवर गण्डद्वय कोदण्डान्तक दण्डितपाद पाहि शंभो ॥ ५ ॥

किञ्चिज्जललव सिञ्चद्द्विजकुल मुञ्चद्वृजिन कुलुंचद्द्विजपति चञ्चच्छविजट कुञ्चत्पदनख
मुञ्चन्नतवर करुणा पाहि शंभो ॥ ६ ॥

देव शङ्कर हरमहेश्वर पापतस्कर अमरमयस्कर शिवदशंकर पुरमहेश्वर भवहरेश्वर पाहि शंभो ॥

अङ्गजभङ्ग तुरङ्गरथाङ्ग जलधिनिषङ्ग धृतभुजङ्गाङ्ग दृशि सुपतङ्ग करसुकुरङ्ग जटधृतगङ्ग यमिहृदि-सङ्ग भजशिवलिङ्ग भवभयभङ्ग ॥ ८ ॥

शबरकरशर दम्बरवरचर डंबरघोषण दुंबरफलजन निकुरुंबभरहर विविततहृदिचिर लंबितपदयुग लंबोदरजनकान्तकहर शिव विन्दुवरासन बिन्दुगहन शरदिन्दुवदनवर कुन्दधवल गणवृन्द-विनत भवभयहर परवर करुणाकर:फणिवरभूषण स्मर हर गरधर परिपाहि ॥ ९ ॥

शासभवृषभेभ शरभाननगणगुणनन्दितत्रिगुणपथातिग शरवणभवनुत तरणिस्थित वरुणालय कृतपारण मुनिशरणायित पदपद्मारुण पिङ्गजटाधर कुरु करुणां शङ्कर शं कुरु मे ॥ १० ॥

जम्भप्रहरण कुम्भोद्भवनुत कुम्भप्रमथ निशुम्भधृतिहर भिन्दद्रणगण डिम्भायितसुर तारकहरसुत कुंभ्युद्यतपद विन्ध्यस्थितदितिमान्द्यप्रहर मदान्धद्विपवर कृत्तिप्रवर सुधान्धोनुतपद बुद्ध्यागमशिव मेध्यातिथिवरद ममावन्ध्यं कुरु दिवसं तव पूजनतः परिपाहि शंभो ॥ ११ ॥

कुन्दसदृश मकरन्दनिभसुरवृन्दविनुत कुरुविन्दमणिगण धृन्दनिभाङ्घ्रिजमन्दर वसदिन्दुमकुट शरदंबुजकृश गरनिन्दनगल सुन्दरगिरितनयाकृति देहवशाङ्कविन्दकलित शिवलिङ्गगहन सुत-सिन्दुरवग्मुख बन्धुरवरसिन्धुनदीतट लिङ्गनिवहवरदिग्वस पाहि शंभो ॥ १२ ॥

[1] पन्नगाभरण मारमारण विभूतिभूषण शैलजारमण ।
आपदुद्धरण यामिनीरमणशेखर सुखद पाहि शंभो ॥ १३ ॥

दक्षाध्वरवरशिक्ष प्रभुवर त्र्यक्ष प्रवलमहोक्षस्थित सितवक्षस्स्थलकुलचक्षुःश्रवस वराक्षसत्र हर ।
वीक्षानिहताधोक्षजारमज वरकक्षाश्रय पुरपक्षविदारण लीक्षायितसुर भिक्षाशन
हर पद्माक्षार्चनतुष्ट भगाक्षिहराव्यय शङ्कर मोक्षप्रद परिपाहि महेश्वर ॥ १४ ॥

अक्षयफलद शुभाक्ष हराक्षततक्षककर गरभक्ष परिस्फुरदक्ष क्षितिरथ सुरपक्षाव्यय ।
पुरहर भव हर हरिशर शिव शिव शङ्कर कुरु कुरु करुणां शशिमौले ॥ १५ ॥

भजाम्यगसुताधवं पशुपतिं महोक्षध्वजं वलक्षभसितोज्ज्वलं प्रकटदक्षदाहाक्षिकम् ।
भगाक्षिहरणं शिवं प्रमथितोरुदक्षाध्वरं प्रपक्षसुरतामुनिप्रमथशिक्षिताधोक्षजम् (?) ॥ १६ ॥

श्रीनाथाब्जिसराजराजितपदांभोजैकपूजोत्सवैर्नित्यं मानसमेतदस्तु भगवन् सद्राजमौले हर ।
भूपाभूतभुजङ्गसङ्गत महाभस्माङ्गनेत्रोज्ज्वलज्ज्वालादग्धमनङ्गपतङ्ग दगुमाकान्ताव गङ्गाधर ॥

---

१ इदं C कोशे नास्ति ।

स्वात्मानन्दपरायणांबुजभवस्तुत्याऽधुना पाहि मां
... ... ... ... ... ... ... ... ... ।
[1] गिरिजामुखसख षण्मुख पञ्चमुखोघवदुर्मुखमुख-
हर आखुवहोन्मुख लेखगणोन्मुख शङ्कर खगगमगरिपूज्य ॥ १८ ॥

कोटिजन्मविप्रकर्मशुद्धचित्तवर्त्मनां श्रौतसिद्धशुद्धभस्मदग्धसर्ववर्ष्मणाम् ।
रुद्रसूक्तमेध्यसूक्तिदग्धसर्वपाप्मनां रुद्रभुक्ति उक्तिभक्तिमुक्तिमुक्तिदायिकाम् ।
पुरहर इष्टतुष्टिमुक्तिलाभवाम(ना) भक्तिमाप्रकैलासमीश आशु लभ्यते ॥ १९ ॥

स्कन्दः —

तत्स्तुत्या तोषितः शंभुस्तत्राह शम्भुमीश्वरः । प्रपन्नः करुणाम्भोधिरम्भोजसुतमोदनः ॥ २० ॥

ईश्वरः —

वेदान्तपाठपठनेन हठादियोगैः श्रीनीलकण्ठपदभक्तिविकुण्ठभावाः ।
ये कर्मठा यतिवरा हरिसौरिगेहे सालावृकैर्वरकठोरकुठारघातैः ॥ २१ ॥

भिक्षोचमाङ्गहृदयाश्च मुसुण्डिभिस्ते भिक्षाशना जरठरासभवद्भ्रमन्ति ॥ २२ ॥

विद्युच्चञ्चलजीवितेऽपि न मनागुत्पद्यते शांभवी भक्तिर्भीमपदाम्बुजोत्थमपदे भस्मत्रिपुण्ड्रेऽपि च ।
रुद्राक्षामलरुद्रसूक्तिजपने निष्ठा कनिष्ठात्मनां विष्ठाविष्टकुनिष्ठकष्टकुधियां दुष्टात्मनां सर्वदा ॥ २३ ॥

भ्रष्टानां दुरदृष्टतो जनिजरानाशेन नष्टात्मनां ज्येष्ठश्रीशिपिविष्टचारुचरणांभोजार्चनानादरः ।
तेनानिष्टपरंपरासमुदयैरष्टाकृतेर्न स्मृतिः विष्ठापूरितदुर्मुखेषु नरके भ्रष्टे चिरं संस्थितिः ॥ २४ ॥

अज्ञायचे(?)ष्वभिज्ञाः सुरवरनिकरं स्तोत्रमन्त्रादितुष्टं
सत्राशं मन्त्रमालैर्विधिविहितधिया सामभागैर्यजन्ति ।
श्राद्धे श्रद्धाभरणहरणभ्रान्तरूपान् पितॄंस्ते
तच्छ्रद्धासमुदितमनः स्वान्तरा शम्भुमीशम् ॥

नाभ्यर्चन्ति प्रणतशरणं मोक्षदं मां महेशम् ॥ २५ ॥

नार्याः सर्वसमर्चनेन सततं दूर्वादलैः कोमलैः बिल्वाश्वत्थदलैश्च शङ्करमहाभागं हरन्तः सदा ।
पर्वस्वप्यविशेषितेन मनसा गर्वं विहायादरात् दुर्गाण्याशु तरन्ति शङ्करकृपापीयूषधारारसैः ॥

---

१ इतः परं पूर्वपठितगद्यभागानुकारी पाठो दृश्यते-न संगच्छत इव ।

श्रीचन्द्रचूडचरणांबुजपूजनेन कालं नयन्ति पशुपाशविमुक्तिहेतोः ।
भावाः परं भसितफाललसत्त्रिपुण्ट्ररुद्राक्षकङ्कणलसत्करदण्डयुग्माः ॥ २७ ॥

पंचाक्षरप्रणवसूक्तधिया वदन्ति नामानि शांभवमनोहरदानि शंभो ।
मुक्तिप्रदानि सततं शिवभक्तवर्याः ये बिल्वमूलशिवलिङ्गसमर्चनेन ॥ २८ ॥

कालं नयेद्विमलकोमलबिल्वपत्रैः नो तस्य कालजभयं भवतापपापम् ।
सन्तापभूपजनितं भजतां महेशम् ॥ २९ ॥

शश्वद्विश्वेशपादौ यमशमनियमैर्भूतिरुद्राक्षगात्रो
विश्वस्तो भुजङ्गाङ्गदवरगिरिजानायके लब्धभक्तिः ।
मुग्धोऽप्यध्यात्मविद् यो भवति भवहरस्यार्चया प्राप्तकामः ॥ ३० ॥

शब्दैरब्दशतेऽपि नैव स लभेत ज्ञानं न तर्कभ्रमैः
मीमांसा[1]द्वयतस्तथाद्वयपदं किं सांख्यसंख्या वद(?) ।
योगायासपरंपरादिविहितैर्वेदान्तकान्तारके
भ्राम्यन् भक्तिविवर्जितेन मनसा शंभोः पदे मुक्तये ॥ ३१ ॥

किं गंगया वा मकरे प्रयागस्नानेन वा योगमखक्रियाद्यैः ।
यत्रार्चितं लिङ्गवरं शिवस्य तत्रैव सर्वार्थपरंपरा स्यात् ॥ ३२ ॥

श्रीशैलो हिमभृद्वरोऽरुणगिरिर्वृद्धाद्रिगोपर्वतौ श्रीमद्धेमसभाविहार(भगवन्)नृत्तं त्रिनेत्रो गिरिः ।
कैलासोत्तरदक्षिणौ च भगवान् यत्रार्चने शङ्करो लिङ्गे सन्निहितो वसत्यनुदिनं शाङ्गस्य हृत्पङ्कजे ॥

तत्राविमुक्तं शशिचूडवासमोङ्कारकालञ्जररुद्रकोटिम् ।
गङ्गाम्बुधेः सङ्गममम्बिकापतिप्रियं तु गोकर्णकसह्यजातटम् ॥ ३४ ॥

यत्राभ्यर्णगतं महेशकरुणापूर्णं तु तूर्णं हृदा
लिङ्गं पूजितमप्यपास्तदुरितं तीर्थानि गङ्गादयः ।
पुण्याश्चाश्रमसंघका गिरिवरक्षेत्राणि शंभोः पदं
भक्तियुक्तभजनेन महेशे शक्तिवज्जगदिदं परिभाति ॥ ३५ ॥

कर्मन्दिवृन्दा अपि वेदमौलिसिद्धान्तवाक्यकलनेऽपि भवन्ति मन्दाः ।
कामादिबद्धहृदयाः सितभस्मपुण्ट्ररुद्राक्षशङ्करसमर्चनतो विहीनाः ॥ ३६ ॥

---

१ द्वयतो C

हीना भवन्ति बहुधाप्यबुधा भवन्ति मत्प्रेमवासभवनेषु विहीनवासाः ॥ ३७ ॥

अष्टम्यामष्टमूर्तिर्निशि शशिदिवसे सोमचूडं तु मुक्त्यै
भूतायां भूतनाथं धृतमसिततनुर्वीतदोषे प्रदोषे ।
गन्धैः पञ्चामृताद्यैः फलवरजरसैर्बिल्वपत्रैश्च लिङ्गे
तुङ्गे श्वाङ्गेऽप्यसङ्गो भजति यतहृदा नक्तभुक्त्यैकभक्तः ॥ ३८ ॥

ज्ञानानुत्पत्तये तद्धरिविधिसमताबुद्धिरीशानमूर्तौ
भस्माक्षाधृतिरीशलिङ्गभजनाशून्यं तु दुर्मानसम् ।
शंभोस्तीर्थमहत्सुतीर्थवरके निन्दा वरे शाङ्करे
(द्रोहस्तदर्थेषु च) श्रीमद्रुद्रजपाद्यकरणात् ज्ञानं न चोत्पद्यते ॥ ३९ ॥

ईशोत्कर्षधियैकलिङ्गनियमादभ्यर्चनं भस्मधृक्
रुद्राक्षामलसारमन्त्रसुमहापञ्चाक्षरे जापिनाम् ।
ईशस्थाननिवासशांभवकथा भक्तिश्च संकीर्तनं
भक्तस्यार्चनतो भवेत सुमहाज्ञानं परं मुक्तिदम् ॥ ४० ॥

आद्यन्तयोर्यः प्रणवेन युक्तं श्रीरुद्रमन्त्रं प्रजपेदघघ्नम् ।
तस्यांघ्रिरेणुं शिरसा वहन्ति ब्रह्मादयः स्वाघनिवृत्तिकामाः ॥ ४१ ॥

अपूर्वाथर्वोक्तश्रुतिशिरसि विज्ञानमनघं महाखर्वाज्ञानप्रशमनकरं यो विरचयेत् ।
मुने हृत्पर्वाणां विशसनकरं सप्तमनुभिर्त्रैवं शीर्षण्यं यो विरचयति तस्येदमुदितम् ॥ ४२ ॥

गुरौ यस्य प्रेम श्रुतिशिरसि सूत्रार्थपदगं
मयि श्रद्धा वृद्धा भवति किल तस्यैव सुलभः ।
अनन्यो मार्गोऽयं अकथितमिदं त्वय्यपि मुदा
यदा गोप्यो मुग्धे सुविहितमुनिष्वेव दिश वै ॥ ४३ ॥

स्कन्दः —

इति स्तुत्वा शंभोः प्रमुदितमनास्त्वेष स ऋभुः मुनिर्नत्वा देवं नगमगनदीशस्य निलयम् ।
यतो गङ्गा तुङ्गा प्रपतति हिमाद्रेः शिखरतो मुनीन्द्रेभ्याहेदं तदपि शृणु विमोचम हृदा ॥ ४४ ॥

ऋभुः —

पतन्त्वशनयो मुहुर्गिरिवरैः समुद्रोर्वरा भवत्वधरसंप्लुवा ग्रहगणाः सुरा यान्त्वधः ।
भवजनिम पूजनान्मम मनो न यात्यन्यतः शपामि प्रपदे प्रभोस्तव सरोरुहाभे हर ॥ ४५ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे शिवऋभुसंवादो नाम तृतीयोऽध्यायः ॥

## ॥ चतुर्थोऽध्यायः ॥

स्कन्दः —

हिमाद्रिशिखरे तत्र केदारे संस्थितं ऋभुम् । केदारेशं पूजयन्तं शांभवं मुनिसत्तमम् ।
भस्मरुद्राक्षसंपन्नं निःस्पृहं मुनयोऽब्रुवन् ॥ १ ॥

मुनयः —

पद्मोद्भवसुतश्रेष्ठ त्वया कैलासपर्वते । आराध्य देवमीशानं तस्मात् सूत्रश्रुतीरितम् ॥ २ ॥
ज्ञानं लब्धं मुनिश्रेष्ठ त्वं नो ब्रूहि विमुक्तये । येन संसारवाराशेः समुत्तीर्णा भवामहे ॥ ३ ॥

सूतः —

ऋभुर्मुनीनां वचसा तुष्टः शिष्टान् समीक्ष्य तान् । अष्टमूर्तिपदध्याननिष्ठांस्तानभ्युवाच ह ॥ ४ ॥

ऋभुः —

नागोप्यं भवतामस्ति शांभवेषु महात्मसु । त्रिनेत्रप्रेमसदनान् युष्मान् प्रेक्ष्य वदामि तत् ॥ ५ ॥
शाङ्करं सूत्रविज्ञानं श्रुतिशीर्षमहोदयम् । शृणुध्वं ब्रह्मविच्छ्रेष्ठाः शिवज्ञानमहोदयम् ॥ ६ ॥
येन तीर्णाः स्म संसाराद् शिवभक्त्या जितेन्द्रियाः । नमस्कृत्वा महादेवं वक्ष्ये विज्ञानमैश्वरम्॥

ऋभुः —

विश्वस्य कारणमुमापतिरेव देवो विद्योतको जडजगत्प्रमदैकहेतुः ।
न तस्य कार्यं करणं महेशितुः स एव तत्कारणमीश्वरो हरः ॥ ८ ॥

[1] सूतः सायकसंभवः समुदिताः सूताननेभ्यो हयाः
नेत्रे ते रथिनो रथाङ्गयुगली युग्यान्तमूर्ध्यो रथी ।
मौर्वीमूर्ध्नि रथः स्थितो रथवहश्चापं शरव्यं पुरः
योद्धुं केशचराः स एव निखिलस्थाणोरणुः पातु वः ॥ ९ ॥

निदाघमथ संबोध्य ततो ऋभुरुवाच ह । अध्यात्मनिर्णयं वक्ष्ये नास्ति कालत्रयेष्वपि ॥
शिवोपदिष्टं संक्षिप्य गुह्यात् गुह्यतरं सदा । अनात्मेति [2] प्रसङ्गात्मा अनात्मेति मनोऽपि वा ॥
अनात्मेति जगद्वापि नास्त्यनात्मेति निश्चिनु ।
सर्वसंकल्पशून्यत्वात् सर्वाकारविवर्जनात् । केवलं ब्रह्ममात्रत्वात् नास्त्यनात्मेति निश्चिनु ॥१२॥
चित्ताभावे चिन्तनीयो देहाभावे जरा च न । केवलं ब्रह्ममात्रत्वात् नास्त्यनात्मेति निश्चिनु ॥
पादाभावाद्गतिर्नास्ति हस्ताभावात् क्रिया च न । केवलं ब्रह्ममात्रत्वात् नास्त्यनात्मेति निश्चिनु॥
ब्रह्माभावाज्जगन्नास्ति तदभावे हरिर्न च । केवलं ब्रह्ममात्रत्वात् नास्त्यनात्मेति निश्चिनु ॥१५॥
मृत्युर्नास्ति जराभावे लोकवेददुराधिकम् (?) । केवलं ... ... ... निश्चिनु ॥१६॥
धर्मो नास्ति शुचिर्नास्ति सत्यं नास्ति भयं न च । केवलं ... ... ... निश्चिनु ॥१७॥
अक्षरोच्चारणं नास्ति [3] अक्षरत्यजडं मम । केवलं .... ... ... ... निश्चिनु ॥१८॥
गुरुरित्यपि नास्त्येव शिष्यो नास्तीति तत्त्वतः । केवलं ... ... ... निश्चिनु ॥१९॥
एकाभावान्न द्वितीयं न द्वितीयान्न चैकता । सत्यत्वमस्ति चेत् किंचिदसत्यत्वं च संभवेत् ॥२०॥
असत्यत्वं यदि भवेत् सत्यत्वं च घटिष्यति । शुभं यदशुभं विद्धि अशुभं शुभमस्ति चेत् ॥२१॥
भयं यदभयं विद्धि अभयाद्भयमापतेत् । केवलं ब्रह्ममात्रत्वात् नास्त्यनात्मेति निश्चिनु ॥ २२ ॥
बद्धत्वमस्ति चेन्मोक्षो बन्धाभावे न मोक्षता । मरणं यदि चेज्जन्म जन्माभावे मृतिर्न च ॥
त्वमित्यपि भवेच्चाहं त्वं नो चेदहमेव न । इदं यदि तदेवापि तदभावे इदं न च ॥ २४ ॥

---

१ मौर्वीमूर्ध्नि रथः शरासनशिरःसञ्चारि चक्रद्वयं चक्रान्तर्निहितः शरस्तदुदरे सूतस्तदास्ये हयाः । तेषामेव शिरस्सु यस्य वसतिः देवस्य गूढं स्मृतो देवश्छिन्नपरिच्छदः स भगवान् कुर्यात् सदा मङ्गलम् ।

२ प्रसङ्गाच C ३ अक्षरं न च मण्डलम् ।

अस्ति चेदिति तन्नास्ति नास्ति चेदस्ति किंच न ।
कार्यं चेत् कारणं किञ्चित् कार्याभावे न कारणम् ॥ २५ ॥

द्वैतं यदि तदाऽद्वैतं द्वैताभावेऽद्वयं च न । दृश्यं यदि दृगप्यस्ति दृश्याभावे दृगेव न ॥ २६ ॥

अन्तर्यदि बहिः सत्यमन्ताभावे बहिर्न च । पूर्णत्वमस्ति चेत् किंचिदपूर्णत्वं प्रसज्यते ॥ २७ ॥

किञ्चिदस्तीति चेच्चित्ते सर्वं भवति शीघ्रतः । यत्किञ्चित् किमपि क्वापि नास्ति चेन्न प्रसज्यति ॥

तस्मादेतत् क्वचिन्नास्ति त्वं नाहं वा इमे इदम् । केवलं ब्रह्ममात्रत्वात् नास्त्यनात्मेति निश्चिनु

नास्ति दृष्टान्तकं लोके नास्ति दार्ष्टान्तिकं क्वचित् । केवलं ... ... ... निश्चिनु ॥ ३० ॥

परं ब्रह्माहमस्मीति स्मरणस्य मनो नहि । ब्रह्ममात्रं जगदिदं ब्रह्ममात्रत्वमप्यथ हि ॥ ३१ ॥

चिन्मात्रं केवलं चाहं नास्त्यनात्मेति निश्चिनु ।
इत्यात्मनिर्णयं (१)प्रोक्तं(१) भवते सर्वसङ्ग्रहम् (१) ॥ ३२ ॥

सकृच्छ्रवणमात्रेण ब्रह्मैव भवति स्वयम् ॥ ३३ ॥

ऋभुः —

निदाघ को भवान् को नु वद मे वदतां वर । यच्छ्रुत्वा तत्क्षणान्मुच्येन्महासंसारसंकटात् ॥

अहमेव परं ब्रह्म अहमेव परं सुखम् । अहमेवाहमेवाहमहं ब्रह्मास्मि केवलम् ॥ ३५ ॥

अहं चैतन्यमेवास्मि दिव्यज्ञानात्मको ह्यहम् । सर्वाक्षरविहीनोऽस्मि अहं ब्रह्मास्मि केवलम् ॥

अहमर्थविहीनोऽस्मि इदमर्थविवर्जितः । सर्वानर्थविमुक्तोऽस्मि अहं ब्रह्मास्मि केवलम् ॥ ३७ ॥

नित्यशुद्धोऽस्मि बुद्धोऽस्मि नित्योऽस्म्यत्यन्तनिर्मलः ।
नित्यानन्दस्वरूपोऽस्मि अहं ब्रह्मास्मि केवलम् ॥ ३८ ॥

नित्यपूर्णस्वरूपोऽस्मि सच्चिदानन्दमस्म्यहम् । केवलाद्वैतरूपोऽहमहं ब्रह्मास्मि केवलम् ॥ ३९ ॥

अनिर्देश्यस्वरूपोऽस्मि आदिहीनोऽस्म्यनन्तकः । अप्राकृतस्वरूपोऽस्मि अहं ब्रह्मास्मि केवलम् ॥

स्वस्वसंकल्पहीनोऽहं सर्वाविद्याविवर्जितः । सर्वमस्मि तदेवास्मि अहं ब्रह्मास्मि केवलम् ॥ ४१ ॥

सर्वनामादिहीनोहं सर्वरूपविवर्जितः । सर्वसङ्गविहीनोऽस्मि अहं ब्रह्मास्मि केवलम् ॥ ४२ ॥

सर्ववाचां विधिश्चास्मि सर्ववेदावधिः परः । सर्वकालावधिश्चास्मि अहं ब्रह्मास्मि केवलम् ॥४३॥

सर्वरूपावधिश्चाहं सर्वनामावधिः सुखम् । सर्वकल्पावधिश्चास्मि अहं ब्रह्मास्मि केवलम् ॥ ४४ ॥

अहमेव सुखं नान्यदहमेव चिदव्ययः । अहमेवास्मि सर्वत्र अहं ब्रह्मास्मि केवलम् ॥ ४५ ॥

केवलं ब्रह्ममात्रात्मा केवलं शुद्धचिद्घनः । केवलाखण्डसारोऽस्मि अहं ब्रह्मास्मि केवलम् ॥ ४६ ॥

केवलं ज्ञानरूपोऽस्मि केवलाकाररूपवान् । केवलात्यन्तसारोऽस्मि अहं ब्रह्मास्मि केवलम् ॥ ४७ ॥

[1] सत्स्वरूपोऽस्मि कैवल्यस्वरूपोऽस्म्यहमेव हि । अर्थानर्थविहीनोऽस्मि अहं ब्रह्मास्मि केवलम् ॥

अप्रमेयस्वरूपोऽस्मि अप्रतर्क्यस्वरूपवान् । अग्रगृह्यस्वरूपोऽस्मि अहं ब्रह्मास्मि केवलम् ॥ ४९ ॥

[2] असमस्यूतरूपोऽस्मि अनुतापविवर्जितः । अनुस्यूतप्रकाशोऽस्मि अहं ब्रह्मास्मि केवलम् ॥ ५० ॥

सर्वकर्मविहीनोऽहं सर्वभेदविवर्जितः । सर्वसन्देहहीनोऽस्मि [3] [अहं ब्रह्मास्मि केवलम् ॥ ५१ ॥

अहंभावविहीनोऽस्मि विहीनोऽस्मीति नो न च । सर्वदा ब्रह्मरूपोऽस्मि अहं ब्रह्मास्मि केवलम् ॥

ब्रह्म ब्रह्मादिहीनोऽस्मि] केशवत्वादि न क्वचित् । शङ्करादिविहीनोऽस्मि अहं ब्रह्मास्मि केवलम् ॥

तूष्णीमेवावभासोऽस्मि अहं ब्रह्मास्मि केवलम् । किञ्चिन्नास्ति परो नास्ति किंचिदस्मि परोऽस्मि वा।

न शरीरप्रकाशोऽस्मि जगद्भासकरो न च । चिद्घनोऽस्मि चिदंशोऽस्मि सत्स्वरूपोऽस्मि सर्वदा ॥

मुदा मुदितरूपोऽस्मि अहं ब्रह्मास्मि केवलम् । न बालोऽस्मि न वृद्धोऽस्मि न युवाऽस्मि परात् परः॥

न च नानास्वरूपोऽस्मि अहं ब्रह्मास्मि केवलम् । इमं स्वानुभवं प्रोक्तं सर्वोपनिषदां परं रसम् ॥

यो वा को वा शृणोतीदं ब्रह्मैव भवति स्वयम् ॥ ५८ ॥

न स्थूलोऽप्यणुर्न तेजमरुतामाकाशनीरक्ष्मा भूतान्तर्गतकोशकाशहृदयाधाकाशमात्राक्रमैः ।

उद्ग्रन्थश्रुतिशास्त्रसूत्रकरणैः किञ्चिज्ज्ञसर्वज्ञता बुद्ध्या मोहितमायया श्रुतिशतैर्भो जानते शङ्करम् ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादो नाम चतुर्थोऽध्यायः ॥

---

१ इदमर्धं C कोशे नास्ति । २ 'अननुस्यूत' इति भाति । ३ कोष्ठान्तर्गतः पाठः C कोशे नास्ति

## ॥ पञ्चमोऽध्यायः ॥

निदाघः —

एवं स्थिते क्रमो को वै ब्रह्मभावाय कल्पते । तन्मे वद विशेषेण ज्ञानं शङ्करवाक्यजम् । १॥

ऋभुः —

त्वमेव ब्रह्म एवासि त्वमेव परमो गुरुः । त्वमेवाकाशरूपोऽसि त्वं ब्रह्मासि न संशयः ।। २॥

त्वमेव सर्वभावोऽसि त्वमेवार्थस्त्वमव्ययः । त्वं सर्वहीनस्त्वं साक्षी साक्षिहीनोऽसि सर्वदा ॥

कालस्त्वं सर्वहीनस्त्वं साक्षिहीनोऽसि सर्वदा । कालहीनोऽसि कालोऽसि सदा ब्रह्मासि चिद्घनः॥

सर्वतत्त्वस्वरूपोऽसि त्वं ब्रह्मासि न संशयः ॥ ४ ॥

सत्योऽसि सिद्धोऽसि सनातनोऽसि मुक्तोऽसि मोक्षोऽसि सदाऽमृतोऽसि ।
देवोऽसि शान्तोऽसि निरामयोऽसि ब्रह्मासि पूर्णोऽसि परावरोऽसि । ५ ॥

समोऽसि सच्चासि सनातनोऽसि सत्यादिवाक्यैः प्रतिपादितोऽसि ।
सर्वाङ्गहीनोऽसि सदास्थितोऽसि ब्रह्मासि पूर्णोऽसि परापरोऽसि । ६ ॥

सर्वप्रपञ्चभ्रमवर्जितोऽसि सर्वेषु भूतेषु सदोदितोऽसि ।
सर्वत्र संकल्पविवर्जितोऽसि ब्रह्मासि पूर्णोऽसि परावरोऽसि ॥ ७ ॥

सर्वत्र सन्तोषसुखासनोऽसि सर्वत्र विद्वेषविवर्जितोऽसि ।
सर्वत्र कार्यादिविवर्जितोऽसि ब्रह्मासि पूर्णोऽसि परावरोऽसि ॥ ८ ॥

चिदाकारस्वरूपोऽसि चिन्मात्रोऽसि निरङ्कुशः । आत्मन्येवावस्थितोऽसि त्वं ब्रह्मासि न संशयः॥

आनन्दोऽसि परोऽसि त्वं सर्वशून्योऽसि निर्गुणः । एक एवाद्वितीयोऽसि त्वं ब्रह्मासि न संशयः॥

चिद्घनानन्दरूपोऽसि चिदानन्दोऽसि सर्वदा । परिपूर्णस्वरूपोऽसि त्वं ब्रह्मासि न संशयः ॥११॥

तदसि त्वमसि ज्ञोऽसि सोऽसि जानासि वीक्ष्यसि ।
चिदसि ब्रह्मभूतोऽसि त्वं ब्रह्मासि न संशयः । १२ ॥

अमृतोऽसि विभुश्चासि देवोऽसि त्वं महानसि । चञ्चलोद्धकलङ्कोऽसि त्वं ब्रह्मासि न संशयः ॥

सर्वोऽसि सर्वहीनोऽसि शान्तोऽसि परमो ह्यसि । कारणं त्वं प्रशान्तोऽसि त्वं ब्रह्मासि न संशयः ॥
सत्तामात्रस्वरूपोऽसि सत्तासामान्यको ह्यसि । नित्यशुद्धस्वरूपोऽसि त्वं ब्रह्मासि न संशयः ॥
ईषण्मात्रविहीनोऽसि अणुमात्रविवर्जितः । अस्तित्ववर्जितोऽसि त्वं नास्तित्वादिविवर्जितः ॥
योऽसि सोऽसि महान्तोऽसि त्वं ब्रह्मासि न संशयः ॥ १७ ॥
लक्ष्यलक्षणहीनोऽसि चिन्मात्रोऽसि निरामयः । अखण्डैकरसो नित्यं त्वं ब्रह्मासि न संशयः ॥
सर्वाधारस्वरूपोऽसि सर्वतेज स्वरूपकः । सर्वार्थभेदहीनोऽसि त्वं ब्रह्मासि न संशयः ॥ १९ ॥
सर्वत्र भेदशून्योऽसि विप्लुत्यादिविवर्जितः । शिवोऽसि भेदहीनोऽसि त्वं ब्रह्मासि न संशयः ॥
प्रज्ञानवाक्यहीनोऽसि स्वस्वरूपं प्रपश्यसि । स्वस्वरूपस्थितोऽसि त्वं त्वं ब्रह्मासि न संशयः ॥
स्वस्वरूपावशेषोऽसि स्वस्वरूपो मतो ह्यसि । स्वानन्दसिन्धुमग्नोऽसि त्वं ब्रह्मासि न संशयः ॥
स्वात्मराज्ये त्वमेवासि [1]स्वयमात्मानमो ह्यसि । स्वयं पूर्णस्वरूपोऽसि त्वं ब्रह्मासि न संशयः ॥

स्वस्मिन् सुखे स्वय चासि स्वस्मात् किञ्चिन्न पश्यसि ।
स्वात्मन्याकाशवद्भासि त्वं ब्रह्मासि न संशयः ॥ २४ ॥

[2]स्वस्वरूपान्न चलसि स्वस्वरूपान्न पश्यसि । स्वस्वरूपामृतोऽसि त्वं त्वं ब्रह्मासि न संशयः ॥
स्वस्वरूपेण भासि त्वं स्वस्वरूपेण जृम्भसि । स्वस्वरूपादनन्योऽसि त्वं ब्रह्मासि न संशयः ॥
स्वयं स्वयं सदाऽसि त्वं स्वयं सर्वत्र पश्यसि । स्वस्मिन् स्वयं स्वयं भुङ्क्षे त्वं ब्रह्मासि न संशयः ॥

सूतः —

तदा निदाघवचसा तुष्टो ऋभुरुवाच तम् । शिवप्रेमरसे पात्रं तं वीक्ष्याब्जजनन्दनः ॥ २८ ॥

ऋभुः —

कैलासे शङ्करः पूर्वं कदाचिदुपदिष्टवान् । तदेव ते प्रवक्ष्यामि सावधानमनाः शृणु ॥ २९ ॥
अयं प्रपञ्चो नास्त्येव नोत्पन्नो न स्वतः क्वचित् । चित्रप्रपञ्च इत्याहुर्नास्ति नास्त्येव सर्वदा ॥
न प्रपञ्चो न चित्तादि नाहंकारो न जीवकः । केवलं ब्रह्ममात्रत्वात् नास्ति नास्त्येव सर्वदा ॥

---

१ स्वयमात्मतमो C २ इदं श्लोकद्वयं C कोशे नास्ति ।

मायाकार्यादिकं नास्ति मायाकार्यमयं नहि। केवलं ब्रह्ममात्रत्वात् नास्ति नास्त्येव सर्वदा ॥

कर्ता नास्ति क्रिया नास्ति करणं नास्ति पुत्रक। केवलं ...... सर्वदा ॥ ३३ ॥

एकं नास्ति द्वयं नास्ति मन्त्रतन्त्रादिकं च न। केवलं ... ... सर्वदा ॥ ३४ ॥

श्रवणं मननं नास्ति निदिध्यासनविभ्रमः। केवलं ... ... सर्वदा ॥ ३५ ॥

समाधिद्विविधं नास्ति मातृमानादि नास्ति हि। केवलं ... ... सर्वदा ॥ ३६ ॥

अज्ञानं चापि नास्त्येव अविवेककथा न च। केवलं ... ... सर्वदा ॥ ३७ ॥

अनुबन्धचतुष्कं च संबन्धत्रयमेव न। केवलं ... ... सर्वदा ॥ ३८ ॥

भूतं भविष्यच्च क्वापि वर्तमानं न वै क्वचित्। केवलं ... .... सर्वदा ॥ ३९ ॥

गङ्गा गया तथा सेतुव्रतं वा नान्यदस्ति हि। केवलं ... ... सर्वदा ॥ ४० ॥

न भूमिर्न जलं वह्निर्न वायुर्न च खं क्वचित्। केवलं ... ... सर्वदा ॥ ४१ ॥

नैव देवा न दिक्पाला न पिता न गुरुः क्वचित्। केवलं ... ... सर्वदा ॥ ४२ ॥

न दूरं नान्तिकं नान्तं न मध्यं न क्वचित् [1]स्थितिः। नाद्वैतद्वैतसत्यत्वमसत्यं वा इदं न च ॥

न मोक्षोऽस्ति न बन्धोऽस्ति न वार्तावसरोऽस्ति हि। क्वचिद्वा किञ्चिदेवं वा सदसद्वा सुखानि च ॥

द्वन्द्वं वा तीर्थधर्मादि आत्मानात्मेति न क्वचित्। न वृद्धिर्नोदयो मृत्युर्न गमागमविभ्रमः ॥

इह नास्ति परं नास्ति न गुरुर्न च शिष्यकः। सदसन्नास्ति भूर्नास्ति कार्यं नास्ति कृतं च न ॥

जातिर्नास्ति गतिर्नास्ति वर्णो नास्ति न लौकिकम्।
शमादिषट्कं नास्त्येव नियमो वा यमोऽपि वा ॥ ४७ ॥

सर्वं मिथ्येति नास्त्येव ब्रह्म इत्येव नास्ति हि। चिदित्येव हि नास्त्येव चिदहं भाषणं नहि ॥

अहमित्येव नास्त्येव नित्योऽस्मीति च न क्वचित्।
केवलं ब्रह्ममात्रत्वात् नास्ति नास्त्येव सर्वथा ॥ ४९ ॥

---

१ इतः परं समनन्तरेष्वर्धेषु च सर्वत्र "केवलं ब्रह्ममात्रत्वात् नास्ति नास्त्येव सर्वदा" इति श्लोकपूरकार्धं C कोशे मुद्रितम्।

वाचा यदुच्यते किञ्चिन्मनसा मनुते च यत् । बुद्ध्या निश्चीयते यच्च चित्तेन ज्ञायते हि यत् ॥
योगेन युज्यते यच्च इन्द्रियाद्यैश्च यत् कृतम् । जाग्रत्स्वप्नसुषुप्तिं च स्वप्नं वा न तुरीयकम् ॥

सर्वं नास्तीति विज्ञेयं यदुपाधिविनिश्चितम् ।
स्नानाच्छुद्धिर्न हि क्वापि ध्यानात् शुद्धिर्नहि क्वचित् ॥ ५२ ॥

गुणत्रयं नास्ति किञ्चिद्गुणत्रयमथापि वा । एकद्वित्वपदं नास्ति न बहुभ्रमविभ्रमः ॥ ५३ ॥
भ्रान्त्यभ्रान्ति च नास्त्येव किञ्चिन्नास्तीति निश्चिनु । केवलं ब्रह्ममात्रत्वात् न किञ्चिदवशिष्यते ॥
इदं शृणोति यः सम्यक् स ब्रह्म भवति स्वयम् ॥ ५५ ॥

ईश्वरः —

वाराश्यम्बुनि बुद्बुदा इव घनानन्दाम्बुधावप्युमा-
कान्तेऽनन्तजगद्गतं सुरनरं जातं च तिर्यङ् मुहुः ।
भूतं चापि भविष्यति प्रतिभवं मायामयं चोर्मिजं
सम्यङ् मामनुपश्यतामनुभवैर्नास्त्येव तेषां भवः ॥ ५६ ॥

हरं विज्ञातारं निखिलतनुकार्येषु करणं न जानन्ते मोहाद्यमितकरुणा अप्यतितराम् ।
उमानाथाकारं हृदयदहरान्तर्गतनरःपयोजाते भास्वद्भवघ्नजगन्नाशाण्डजवरम् ॥ ५७ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे शिवेन कुमारोपदेशवर्णनं नाम पञ्चमोऽध्यायः ॥

## ॥ षष्ठोऽध्यायः ॥

ईश्वरः —

ब्रह्माणि मिथ्या भुवनानि मिथ्या भीत्यादि मिथ्या भवनानि मिथ्या ।
भयं च मिथ्या भरणादि मिथ्या भुक्तं च मिथ्या बहुबन्धमिथ्या ॥ १ ॥
वेदाश्च मिथ्या वचनानि मिथ्या वाक्यानि मिथ्या विविधानि मिथ्या ।
[1]वित्तानि मिथ्या वियदादि मिथ्या विधुश्च मिथ्या विषयादि मिथ्या ॥ २ ॥

१ विज्ञानमिथ्या C

गुरुश्च मिथ्या गुणदोषमिथ्या गुह्यं च मिथ्या गणना च मिथ्या ।
गतिश्च मिथ्या गमनं च मिथ्या ([1]सर्वं च मिथ्या) गदितं च मिथ्या ॥ ३ ॥

वेदशास्त्रपुराणं च कार्यं कारणमीश्वरः । लोको भूतं जनं चैव सर्वं मिथ्या न संशयः ॥ ४ ॥

बन्धो मोक्षः सुखं दुःखं ध्यानं चित्तं सुरासुराः । गौणं मुख्यं परं चान्यत् सर्वं मिथ्या न संशयः ॥

वाचा वदति यत्किञ्चित् सर्वं मिथ्या न संशयः ।
सङ्कल्पात् कल्प्यते यद्यत् मनसा चिन्त्यते च यत् ॥ ६ ॥

बुद्ध्या निश्चीयते किञ्चित् चित्तेन नीयते क्वचित् । प्रपञ्चे पश्यते यद्यत् सर्वं मिथ्येति निश्चयः ॥

श्रोत्रेण श्रूयते यद्यन्नेत्रेण च निरीक्ष्यते । नेत्रं श्रोत्रं गात्रमेव सर्वं मिथ्या न संशयः ॥ ८ ॥

इदमित्येव निर्दिष्टमिदमित्येव कल्पितम् । यद्यद्वस्तु परिज्ञातं सर्वं मिथ्या न संशयः ॥ ९ ॥

कोऽहं किन्तदिदं सोऽहं अन्यो वाचयते नहि । यद्यत् संभाव्यते लोके सर्वं मिथ्येति निश्चयः ।
सर्वाभ्यासं सर्वगोप्यं सर्वकारणविभ्रमः । सर्वभूतेति वार्ता च मिथ्येति च विनिश्चयः ॥ ११ ॥

सर्वभेदप्रभेदा वा सर्वसंकल्पविभ्रमः । सर्वदोषप्रभेदश्च सर्वं मिथ्या न संशयः ॥ १२ ॥

रक्षको विष्णुरित्यादि ब्रह्मसृष्टेस्तु कारणम् । संहारे शिव इत्येवं सर्वं मिथ्या न संशयः ॥ १३ ॥

स्नानं जपस्तपो होमः स्वाध्यायो देवपूजनम् । मन्त्रो गोत्रं च सत्सङ्गः सर्वं मिथ्या न संशयः ॥

सर्वं मिथ्या जगन्मिथ्या भूतं भव्यं भवत् तथा । नास्ति नास्ति विभावेन सर्वं मिथ्या न संशयः ॥

चित्तभेदा जगद्भेदः अविद्यायाश्च संभवः । अनेककोटिब्रह्माण्डाः सर्वं ब्रह्मेति निश्चिनु ॥ १६ ॥

लोकत्रयेषु सद्भावो गुणदोषादिजृंभणम् । सर्वदृश्यिकवार्तोक्तिः सर्वं ब्रह्मेति निश्चिनु ॥ १७ ॥

उत्कृष्टं च निकृष्टं च उत्तमं मध्यमं च तत् । ओंकारं चाप्यकारं च सर्वं ब्रह्मेति निश्चिनु ॥

यद्यज्जगति दृश्येत यद्यज्जगति वीक्ष्यते । यद्यज्जगति वर्तेत सर्वं ब्रह्मेति निश्चिनु ॥ १९ ॥

[2]येन केनाक्षरेणोक्तं येन केनापि सङ्गतम् । येन केनापि नीतं तत् सर्वं ब्रह्मेति निश्चिनु ॥

येन केनापि गदितं येन केनापि मोदितम् । येन केनापि च च प्रोक्तं (?) सर्वं ब्रह्मेति निश्चिनु ॥

येन केनापि यद्दत्तं येन केनापि यत् कृतम् । यत्र कुत्र जलस्नानं सर्वं ब्रह्मेति निश्चिनु ॥ २२ ॥

---

१ C कोशे एवं दृश्यते । २ इदमर्धं C कोशे नोपलभ्यते ।

यत्र यत्र शुभं कर्म यत्र यत्र च दुष्कृतम् । यद्यत् करोषि सत्येन सर्वं मिथ्येति निश्चिनु ॥ २३ ॥
इदं सर्वमहं सर्वं सर्वं ब्रह्मेति निश्चिनु । यत् किञ्चित् प्रतिभातं च सर्वं मिथ्येति निश्चिनु ॥ २४ ॥

ऋभुः —

पुनर्वक्ष्ये रहस्यानां रहस्यं परमाद्भुतम् । शङ्करेण कुमाराय प्रोक्तं कैलासपर्वते ॥ २५ ॥
तन्मात्रं सर्वचिन्मात्रमखण्डैकरसं सदा । एकवर्जितचिन्मात्रं सर्वं चिन्मयमेव हि ॥ २६ ॥
इदं च सर्वं चिन्मात्रं सर्वं चिन्मयमेव हि । आत्माभासं च चिन्मात्रं [1]सर्वं चिन्मयमेव हि ॥
सर्वलोकं च चिन्मात्रं सर्वं चिन्मयमेव हि । त्वत्ता मत्ता च चिन्मात्रं चिन्मात्रान्नास्ति किञ्चन ॥
आकाशो भूर्जलं वायुरग्निर्ब्रह्मा हरिः शिवः । यत्किञ्चिदन्यत् किञ्चिच्च सर्वं चिन्मयमेव हि ॥
अखण्डैकरसं सर्वं यद्यच्चिन्मात्रमेव हि । भूतं भव्यं च चिन्मात्रं सर्वं चिन्मयमेव हि ॥ ३० ॥
द्रव्यं कालश्च चिन्मात्रं ज्ञानं चिन्मयमेव च । ज्ञेयं ज्ञानं च चिन्मात्रं सर्वं चिन्मयमेव हि ॥
संभाषणं च चिन्मात्रं वाक् च चिन्मात्रमेव हि । असच्च सच्च चिन्मात्रं सर्वं चिन्मयमेव हि ॥
आदिरन्तं(?)च चिन्मात्रं अस्ति चेच्चिन्मयं सदा । ब्रह्मा यद्यपि चिन्मात्रं विष्णुश्चिन्मात्रमेव हि ॥
रुद्रोऽपि देवाश्चिन्मात्रं नरतिर्यक्सुरासुरम् । गुरुशिष्यादि सन्मात्रं ज्ञानं चिन्मात्रमेव हि ॥
दृग्दृश्यं चापि चिन्मात्रं ज्ञाता ज्ञेयं ध्रुवाध्रुवम् । सर्वाश्चर्यं च चिन्मात्रं देहं चिन्मात्रमेव हि ॥
लिङ्गं चापि च चिन्मात्रं कारणं कार्यमेव च । मूर्तामूर्तं च चिन्मात्रं पापपुण्यमथापि च ॥ ३६ ॥
द्वैताद्वैतं च चिन्मात्रं वेदवेदान्तमेव(?) च । दिशोऽपि विदिशश्चैव चिन्मात्रं तस्य पालकाः ॥
चिन्मात्रं व्यवहारादि भूतं भव्यं भवत् तथा । चिन्मात्रं नामरूपं च भूतानि भुवनानि च ॥
चिन्मात्रं प्राण एवेह चिन्मात्रं सर्वमिन्द्रियम् । चिन्मात्रं पञ्चकोशादि चिन्मात्रानन्दमुच्यते ॥

नित्यानित्यं च चिन्मात्रं सर्वं चिन्मात्रमेव हि ।
चिन्मात्रं नास्ति नित्यं च चिन्मात्रं नास्ति सत्यकम् ॥ ४० ॥

चिन्मात्रमपि वैराग्यं चिन्मात्रकमिदं किल । आधारादि हि चिन्मात्रं आधेयं च मुनीश्वर ॥
यच्च यावच्च चिन्मात्रं यच्च यावच्च दृश्यते । यच्च यावच्च दूरस्थं सर्वं चिन्मात्रमेव हि ॥ ४२ ॥

---

१ चिन्मात्रान्नास्ति किञ्चन C

यच्च यावच्च भूतानि यच्च यावच्च वक्ष्यते । यच्च यावच्च वेदोक्तं सर्वं चिन्मात्रमेव हि ॥ ४३ ॥

चिन्मात्रं नास्ति बन्धं च चिन्मात्रं नास्ति मोक्षकम् ।
चिन्मात्रमेव सन्मात्रं सत्यं सत्यं शिवं स्पृशे ॥ ४४ ॥

सर्वं वेदत्रयप्रोक्तं सर्वं चिन्मात्रमेव हि । शिवप्रोक्तं कुमाराय तदेतत् कथितं त्वयि ।

यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् । ४५ ॥

सूतः —

ईशावास्यादिमन्त्रैर्वरगगनतनोः क्षेत्रवासार्थवादैः
तल्लिङ्गागारमध्यस्थितसुमहदीशान (?) लिङ्गेषु पूजा ।
अङ्गेद्ये चाभिषेको ... ... ... दिग्वाससे वासदानं
नो गन्धघ्राणहीने रूपदृश्यादिहीने गन्धपुष्पार्पणानि (?) । ४६ ॥

स्वाभासे दीपदानं ... ... सर्वभक्षे महेशे
नैवेद्यं नित्यतृप्ते सकलभुवनगे प्रक्रमो वा नमस्या ।
कुर्या केनापि भावैर्मम निगमशिरोभाव एव प्रमाणम् । ४७ ॥

अविच्छिन्नैश्छिन्नैः परिकरवरैः पूजनधिया
भजन्त्यज्ञास्तद्ज्ञाः विधिविहितबुद्ध्यागतधियः ।
तथापीशं भावैर्भजति भजतामात्मपदवीं
ददातीशो विश्वं भ्रमयति गतज्ञांश्च कुरुते ॥ ४८ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे प्रपञ्चस्य सच्चिन्मयत्वकथनं नाम षष्ठोऽध्यायः ॥

## ॥ सप्तमोऽध्यायः ॥

ऋभुः —

अखण्डैकरसं प्रवक्ष्यामि सर्वलोकेषु दुर्लभम् । वेदशास्त्रमहासारं दुर्लभं दुर्लभं सदा ॥ १ ॥

अखण्डैकरसो मन्त्रमखण्डैकरसं फलम् । अखण्डैकरसो जीव अखण्डैकरसा क्रिया ॥ २ ॥

अखण्डैकरसा भूमिरखण्डैकरसं जलम् । अखण्डैकरसो गन्ध अखण्डैकरसं वियत् ॥ ३ ॥

अखण्डैकरसं शास्त्रं अखण्डैकरसं श्रुतिः । अखण्डैकरसं ब्रह्म अखण्डैकरसं व्रतम् ॥ ४ ॥

अखण्डैकरसो विष्णुरखण्डैकरसः शिवः । अखण्डैकरसो ब्रह्मा अखण्डैकरसाः सुराः ॥ ५ ॥

अखण्डैकरसं सर्वमखण्डैकरसः स्वयम् । अखण्डैकरस(श्चा)त्मा अखण्डैकरसो गुरुः ॥ ६ ॥

अखण्डैकरसं वाच्यमखण्डैकरसं महः । अखण्डैकरसं देह अखण्डैकरसं मनः ॥ ७ ॥

अखण्डैकरसं चित्तं अखण्डैकरसं सुखम् । अखण्डैकरसा विद्या अखण्डैकरसोऽव्ययः ॥ ८ ॥

अखण्डैकरसं नित्यमखण्डैकरसः परः । अखण्डैकरसात् किञ्चिदखण्डैकरसादहम् ॥ ९ ॥

अखण्डैकरसं नास्ति अखण्डैकरसं नहि । अखण्डैकरसादन्यत् अखण्डैकरसात् परः ॥ १० ॥

अखण्डैकरसात् स्थूलं अखण्डैकरसं जनः । अखण्डैकरसं सूक्ष्ममखण्डैकरसं द्वयम् ॥ ११ ॥

अखण्डैकरसं नास्ति अखण्डैकरसं बलम् । अखण्डैकरसाद्विष्णुरखण्डैकरसादणुः ॥ १२ ॥

अखण्डैकरसं नास्ति अखण्डैकरसाद्भवान् । अखण्डैकरसो ह्येव अखण्डैकरसादि(त)म् ? ॥ १३ ॥

अखण्डितरसाद् ज्ञानं अखण्डितरसाद् स्थितम् । अखण्डैकरसा लीना (ला) अखण्डैकरसं पिता ॥

अखण्डैकरसा भक्ता अखण्डैकरसः पतिः । अखण्डैकरसा माता अखण्डैकरसो विराट् ॥ १५ ॥

अखण्डैकरसं गात्रं अखण्डैकरसं शिरः । अखण्डैकरसं घ्राणं अखण्डैकरसं बहिः ॥ १६ ॥

अखण्डैकरसं पूर्णमखण्डैकरसामृतम् । अखण्डैकरसं श्रोत्रमखण्डैकरसं गृहम् ॥ १७ ॥

अखण्डैकरसं गोप्यमखण्डैकरसः शिवः । अखण्डैकरसं नाम अखण्डैकरसो रविः ॥ १८ ॥

अखण्डैकरसः सोमः अखण्डैकरसो गुरुः । अखण्डैकरसः साक्षी अखण्डैकरसः सुहृत् ॥ १९ ॥

अखण्डैकरसो बन्धुरखण्डैकरसोऽस्म्यहम् । अखण्डैकरसो राजा अखण्डैकरसं पुरम् ॥ २० ॥

अखण्डैकरसैश्वर्यं अखण्डैकरसं प्रभुः । अखण्डैकरसो मन्त्र अखण्डैकरसो जपः ॥ २१ ॥

अखण्डैकरसं ध्यानमखण्डैकरसं पदम् । अखण्डैकरसं ग्राह्यमखण्डैकरसं महान् ॥ २२ ॥

अखण्डैकरसं ज्योतिरखण्डैकरसं परम् । अखण्डैकरसं भोज्यमखण्डैकरसं हविः ॥ २३ ॥

अखण्डैकरसो होमः अखण्डैकरसो जयः । अखण्डैकरसः स्वर्गः अखण्डैकरसः स्वयम् ॥ २४ ॥

अखण्डैकरसाकारादन्यन्नास्ति न हि क्वचित् । शृणु भूयो महाश्चर्यं नित्यानुभवसंपदम् ॥ २५ ॥

दुर्लभं दुर्लभं लोके सर्वलोकेषु दुर्लभम् । अहमस्मि परं चास्मि प्रभास्मि प्रभवोऽस्म्यहम् ॥ २६ ॥

सर्वरूपगुरुश्चास्मि सर्वरूपोऽस्मि सोऽस्म्यहम् । अहमेवास्मि शुद्धोऽस्मि रुद्रोऽस्मि परमोऽस्म्यहम् ॥

अहमस्मि सदा ज्ञोऽस्मि सत्योऽस्मि विमलोऽस्म्यहम् ।
विज्ञानोऽस्मि विशेषोऽस्मि साम्योऽस्मि सकलोऽस्म्यहम् ॥ २८ ॥

शुद्धोऽस्मि शोकहीनोऽस्मि चैतन्योऽस्मि समोऽस्म्यहम् ।
मानावमानहीनोऽस्मि निर्गुणोऽस्मि शिवोऽस्म्यहम् ॥ २९ ॥

द्वैताद्वैतविहीनोऽस्मि द्वन्द्वहीनोऽस्मि सोऽस्म्यहम् ।
भावाभावविहीनोऽस्मि भाषाहीनोऽस्मि सोऽस्म्यहम् । ३० ॥

शून्याशून्यप्रभावोऽस्मि शोभनोऽस्मि [1] मनोऽस्म्यहम् ।
तुल्यातुल्यविहीनोऽस्मि तुच्छभावोऽस्मि नास्म्यहम् ॥ ३१ ॥

सदा सर्वविहीनोऽस्मि सात्विकोऽस्मि सदास्म्यहम् ।
एकसंख्याविहीनोऽस्मि द्विसंख्या नास्ति नास्म्यहम् ॥ ३२ ॥

सदसद्भेदहीनोऽस्मि संकल्परहितोऽस्म्यहम् । नानात्मभेदहीनोऽस्मि यत् किञ्चिन्नास्ति सोऽस्म्यहम् ॥

नाहमस्मि न चान्योऽस्मि देहादिरहितोऽस्म्यहम् ।
आश्रयाश्रयहीनोऽस्मि आधाररहितोऽस्म्यहम् ॥ ३४ ॥

बन्धमोक्षादिहीनोऽस्मि शुद्धब्रह्मादि सोऽस्म्यहम् ।
चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परोऽस्म्यहम् । ३५ ॥

सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ।
आकारादिस्वरूपोऽस्मि उकारोऽस्मि मुदोऽस्म्यहम् ॥ ३६ ॥

ध्यानाध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ।
पूर्णात् पूर्णोऽस्मि पूर्णोऽस्मि सर्वपूर्णोऽस्मि सोऽस्म्यहम् । ३७ ॥

सर्वातीतस्वरूपोऽस्मि परं ब्रह्मास्मि सोऽस्म्यहम् ।
लक्ष्यलक्षणहीनोऽस्मि लयहीनोऽस्मि सोऽस्म्यहम् ॥ ३८ ॥

---

१ महोऽस्म्यहम् C

मातृमानविहीनोऽस्मि मेयहीनोऽस्मि सोऽस्म्यहम् ।
अगव सर्वं च द्रष्टास्मि नेत्रादिरहितोऽस्म्यहम् ॥ ३९ ॥

प्रवृद्धोऽस्मि प्रबुद्धोऽस्मि प्रसन्नोऽस्मि परोऽस्म्यहम् ।
सर्वेन्द्रियविहीनोऽस्मि सर्वकर्महितोऽस्म्यहम् ॥ ४० ॥

सर्ववेदान्ततृप्तोऽस्मि सर्वदा सुलभोऽस्म्यहम् । मुदा मुदितशून्योऽस्मि सर्वमौनफलोऽस्म्यहम् ॥

नित्यचिन्मात्ररूपोऽस्मि सदा चिन्मयोऽस्म्यहम् ।
यत्किञ्चिदपि हीनोऽस्मि स्वल्पमप्यति नाह्यहम् ॥ ४२ ॥

हृदयग्रन्थिहीनोऽस्मि हृदयाद्व्यापकोऽस्म्यहम् । षड्विकारविहीनोऽस्मि षट्कोशरहितोऽस्म्यहम् ॥

अरिषड्वर्गमुक्तोऽस्मि अन्तरादन्तरोऽस्म्यहम् । देशकालविहीनोऽस्मि दिगम्बरसुखोऽस्म्यहम् ॥

नास्ति ह्यस्ति विमुक्तोऽस्मि नकाररहितोऽस्म्यहम् ।
सर्वचिन्मात्ररूपोऽस्मि सच्चिदानन्दमस्म्यहम् ॥ ४५ ॥

अखण्डाकाररूपोऽस्मि अखण्डाकारमस्म्यहम् । प्रपञ्चचित्तरूपोऽस्मि प्रपञ्चरहितोऽस्म्यहम् ॥

सर्वप्रकाररूपोऽस्मि सद्भावावर्जितोऽस्म्यहम् । कालत्रयविहीनोऽस्मि कामादिरहितोऽस्म्यहम् ॥

कायकायिविमुक्तोऽस्मि निर्गुणप्रभव ऽस्म्यहम् ।
मुक्तिहीनोऽस्मि मुक्तोऽस्मि मोक्षहीनोऽस्म्यहं सदा ॥ ४८ ॥

सत्यासत्यविहीनोऽस्मि सदा सन्मात्रमस्म्यहम् । गन्तव्यदेशहीनोऽस्मि गमनारहितोऽस्म्यहम् ।

सर्वदा समरूपोऽस्मि शान्तोऽस्मि सुहितोऽस्म्यहम् ।
एवं स्वानुभवं प्रोक्तं एतत् प्रकरणं महत् ॥ ५० ॥

यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् ।

पिण्डाण्डसंभवजगद्गतखण्डनोद्यद्वेतण्डशुण्डनिभपीवरबाहुदण्ड ।
ब्रह्मोरुमुण्डकलिताण्डजशाडबाण कोदण्डभूधरधरं भजतामखण्डम् । ५१ ॥

विश्वात्मन्यद्वितीये भगवति गिरिजानायके कामरूपे
नीरूपे विश्वरूपे गतदुरितधियः प्राप्नुवन्त्यात्मभावम् ।
अन्ये भेदधियः श्रुतिप्रकथितैर्वर्णाश्रमोत्थश्रमैः
तान्ताः शान्तिविवर्जिता विषयिणो दुःखं भजन्त्यन्वहम् ॥ ५२ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे स्वात्मनिरूपणं नाम सप्तमोऽध्यायः ॥

## ॥ अष्टमोऽध्यायः ॥

ऋभुः —

वक्ष्ये प्रपञ्चशून्यत्वं शशशृङ्गेण संमितम् । दुर्लभं सर्वलोकेषु सावधानमनाः शृणु ॥ १ ॥

इदं प्रपञ्चं यत् किञ्चिद्यः शृणोति च पश्यति । दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥ २ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कारश्च तेजश्च सर्वं शशविषाणवत् ॥ ३ ॥

नाशं जन्म च सत्यं च लोकं भुवनमण्डलम् । पुण्यं पापं जयो मोहः सर्वं शशविषाणवत् ॥ ४ ॥

कामक्रोधौ लोभमोहौ मदमोहौ रतिर्धृतिः । गुरुशिष्योपदेशादि सर्वं शशविषाणवत् ॥ ५ ॥

अहं त्वं जगदित्यादि आद्यन्तिममध्यमम् । भूतं भव्यं वर्तमानं सर्वं शशविषाणवत् ॥ ६ ॥

स्थूलदेहं सूक्ष्मदेहं कारणं कार्यमप्ययम् । दृश्यं च दर्शनं किञ्चित् सर्वं शशविषाणवत् ॥ ७ ॥

भोक्ता भोज्यं भोगरूपं लक्ष्यलक्षणमद्वयम् । शमो विचारः सन्तोषः सर्वं शशविषाणवत् ॥ ८ ॥

यमं च नियमं चैव प्राणायामादिभाषणम् । गमनं चलनं चित्तं सर्वं शशविषाणवत् ॥ ९ ॥

श्रोत्रं नेत्रं गात्रगोत्रं गुह्यं जाड्यं हरिः शिवः । आदिरन्तो मुमुक्षा च सर्वं शशविषाणवत् ॥ १० ॥

ज्ञानेन्द्रियं च तन्मात्रं कर्मेन्द्रियगणं च यत् । जाग्रत्स्वप्नसुषुप्त्यादि सर्वं शशविषाणवत् ॥ ११ ॥

चतुर्विंशतितत्त्वं च साधनानां चतुष्टयम् । सजातीयं विजातीयं सर्वं शशविषाणवत् ॥ १२ ॥

सर्वलोकं सर्वभूतं सर्वधर्मं सतत्त्वकम् । सर्वाविद्या सर्वविद्या सर्वं शशविषाणवत् ॥ १३ ॥

सर्ववर्णः सर्वजातिः सर्वक्षेत्रं च तीर्थकम् । सर्ववेदं सर्वशास्त्रं सर्वं शशविषाणवत् ॥ १४ ॥

सर्वबन्धं सर्वमोक्षं सर्वविज्ञानमीश्वरः । [1]सर्वकालं सर्वबोधं सर्वं शशविषाणवत् ॥ १५ ॥

सर्वास्तित्वं सर्वकर्म सर्वसङ्गयुतिर्महान् । सर्वद्वैतमसद्भावं[2] सर्वं शशविषाणवत् ॥ १६ ॥

सर्ववेदान्तसिद्धान्तः सर्वशास्त्रार्थनिर्णयः । सर्वजीवत्वसद्भावं सर्वं शशविषाणवत् ॥ १७ ॥

यद्यत् संवेद्यते किञ्चित् यद्यज्जगति दृश्यते । यद्यच्छृणोति गुरुणा सर्वं शशविषाणवत् ॥ १८ ॥

---

१ सर्ववाक्यं सर्वबोध्यं C    २ सर्वद्वैतस्य C

यद्यद्ध्यायति चित्ते च यद्यत् संकल्प्यते क्वचित् । बुद्ध्या निश्चीयते यच्च सर्वं शशविषाणवत् ॥

यद्यद् वाचा व्याकरोति यद्वाचा चार्थभाषणम् । यद्यत् सर्वेन्द्रियैर्भाव्यं सर्वं शशविषाणवत् ॥

यद्यत् सन्त्यज्यते वस्तु यच्छृणोति च पश्यति स्वकीयमन्यदीयं च सर्वं शशविषाणवत् ॥

सत्यत्वेन च यद्भाति वस्तुत्वेन रसेन च । यद्यत् सङ्कल्प्यते चित्ते सर्वं शशविषाणवत् ॥ २२ ॥

यद्यदात्मेति निर्णीतं यद्यन्नित्यमितं वचः । यद्यद्विचार्यते चित्ते सर्वं शशविषाणवत् ॥ २३ ॥

[1]शिवः संहरते नित्यं विष्णुः पाति जगत्त्रयम् ।
स्रष्टा सृजति लोकान् वै सर्वं शशविषाणवत् ॥ २४ ॥

जीव इत्यपि यद्यस्ति भाषयत्यपि भाषणम् । संसार इति या वार्ता सर्वं शशविषाणवत् ॥ २५ ॥

यद्यदस्ति पुराणेषु यद्यद्वेदेषु निर्णयः । सर्वोपनिषदां भावं सर्वं शशविषाणवत् ॥ २६ ॥

शशशृङ्गवदेवेदमुक्तं प्रकरणं तव । यः शृणोति रहस्यं वै ब्रह्मैव भवति स्वयम् ॥ २७ ॥

भूयः शृणु निदाघ त्वं सर्वं ब्रह्मेति निश्चयम् । सुदुर्लभमिदं नृणां देवानामपि सत्तम ॥ २८ ॥

इदमित्यापि यद्रूपमहमित्यपि यत्पुनः । दृश्यते यद्यदेवेदं सर्वं ब्रह्मेति केवलम् ॥ २९ ॥

देहोऽयमिति सङ्कल्पस्तदेव भयमुच्यते । कालत्रयेपि तन्नास्ति सर्वं ब्रह्मेति केवलम् ॥ ३० ॥

देहोऽहमिति संकल्पस्तदन्तःकरणं स्मृतम् । कालत्रयेऽपि .... ... ... ॥ ३१ ॥

देहोऽहमिति संकल्पः स हि संसार उच्यते । कालत्रयेऽपि ... ... ... ॥ ३२ ॥

देहोऽहमिति सङ्कल्पस्तद्बन्धनमिहोच्यते । कालत्रयेऽपि ... ... ... ॥ ३३ ॥

देहोऽहमिति यद् ज्ञानं तदेव नरकं स्मृतम् । कालत्रयेऽपि ... ... ... ॥ ३४ ॥

देहोऽहमिति सङ्कल्पो जगत् सर्वमितीर्यते । कालत्रयेऽपि ... ... ... ॥ ३५ ॥

देहोऽहमिति संकल्पो हृदयग्रन्थिरीरितः । कालत्रयेऽपि ... ... ... ॥ ३६ ॥

देहत्रयेऽपि भावं यत् (?) तद्देहज्ञानमुच्यते । कालत्रयेऽपि ... .... .... ॥ ३७ ॥

देहोऽहमिति यद्भावं सदसद्भावमेव च । कालत्रयेऽपि ... ... ... ॥ ३८ ॥

---

१ शिवो रक्षति मां नित्यं C

देहोऽहमिति सङ्कल्पं तत्प्रपञ्चमिहोच्यते। कालत्रयेऽपि ... ... ... ॥ ३९ ॥

देहोऽहमिति सङ्कल्पस्तदेवाज्ञानमुच्यते। कालत्रयेऽपि ... ... ... ॥ ४० ॥

देहोऽहमिति या बुद्धिर्मलिना वासनोच्यते। कालत्रयेऽपि ... ... ... ॥ ४१ ॥

देहोऽहमिति या बुद्धिः सत्यं जीवः स एव सः। कालत्रयेऽपि ... ... ॥ ४२ ॥

देहोऽहमिति सङ्कल्पो महानरकमीरितम्। कालत्रयेऽपि .... ... ... ॥ ४३ ॥

देहोऽहमिति या बुद्धिर्मन एवेति निश्चितम्। कालत्रयेऽपि ... ... ... ॥ ४४ ॥

देहोऽहमिति या बुद्धिः परिच्छिन्नमितीर्यते। कालत्रयेऽपि ... ... ... ॥ ४५ ॥

देहोऽहमिति यत् ज्ञानं सर्वं शोक इतीरितम्। कालत्रयेऽपि ... ... ... ॥ ४६ ॥

देहोऽहमिति यद् ज्ञानं संस्पर्शमिति कथ्यते। कालत्रयेऽपि ... ... ... ॥ ४७ ॥

देहोऽहमिति या बुद्धिस्तदेव मरणं स्मृतम्। कालत्रयेऽपि ... ... ... ॥ ४८ ॥

देहोऽहमिति या बुद्धिस्तदेवाशोभनं स्मृतम्। कालत्रयेऽपि ... ... ॥ ४९ ॥

देहोऽहमिति या बुद्धिर्महापापमिति स्मृतम्। कालत्रयेऽपि ... ... ... ॥ ५० ॥

देहोऽहमिति या बुद्धिः तुष्टा सैव हि चोच्यते (?)। कालत्रयेऽपि ... ... ॥ ५१ ॥

देहोऽहमिति सङ्कल्पः सर्वदोषमिति स्मृतम्। कालत्रयेऽपि ... ... ... ॥ ५२ ॥

देहोऽहमिति सङ्कल्पस्तदेव मलमुच्यते। कालत्रयेऽपि ... ... ... ॥ ५३ ॥

देहोऽहमिति सङ्कल्पो महत्संशयमुच्यते। कालत्रयेऽपि ... ... ... ॥ ५४ ॥

यत्किञ्चित्स्मरणं दुःखं यत्किञ्चित् स्मरणं जगत्। यत्किञ्चित्स्मरणं कामो यत्किञ्चित्स्मरणं मलम्॥

यत्किञ्चित्स्मरणं पापं यत्किञ्चित्स्मरणं मनः। यत्किञ्चिदपि सङ्कल्पं महारोगेति कथ्यते ॥५६॥

यत्किञ्चिदपि सङ्कल्पं महामोहेति कथ्यते। यत्किञ्चिदपि सङ्कल्पं तापत्रयमुदाहृतम् ॥ ५७॥

यत्किञ्चिदपि सङ्कल्पं कामक्रोधं च कथ्यते। यत्किञ्चिदपि सङ्कल्पं संबन्धो नेतरत् क्वचित्॥

यत्किञ्चिदपि सङ्कल्पं सर्वदुःखेति नेतरत्। यत्किञ्चिदपि सङ्कल्पं जगत्सत्यत्वविभ्रमम् ॥ ५९॥

यत्किञ्चिदपि सङ्कल्पं महादोषं च नेतरत्। यत्किञ्चिदपि संकल्पं कालत्रयमुदीरितम् ॥ ६० ॥

यत्किञ्चिदपि संकल्पं नानारूपमुदीरितम् । यत्र यत्र च संकल्पं तत्र तत्र महज्जगत् ॥ ६१ ॥
यत्र यत्र च संकल्पं तदेवासत्यमेव हि । यत्किञ्चिदपि संकल्पं तज्जगन्नास्ति संशयः ॥ ६२ ॥
यत्किञ्चिदपि संकल्पं तत्सर्वं नेति निश्चयः । मन एव जगत् सर्वं मन एव महारिपुः ॥ ६३ ॥
मन एव हि संसारो मन एव जगत्त्रयम् । मन एव महादुःखं मन एव जरादिकम् ॥ ६४ ॥
मन एव हि कालं च मन एव मलं सदा । मन एव हि सङ्कल्पो मन एव हि जीवकः ॥६५॥
मन एवाशुचिर्नित्यं मन एवेन्द्रजालकम् । मन एव सदा मिथ्या मनो वन्ध्याकुमारवत् ॥६६॥
मन एव सदा नास्ति मन एव जडं सदा । मन एव हि चित्तं च मनोऽहंकारमेव च ॥ ६७ ॥
मन एव महद्बन्धं मनोऽन्तः करणं क्वचित् । मन एव हि भूमिश्च मन एव हि तोयकम् ॥६८॥
मन एव हि तेजश्च मन एव मरुन्महान् । मन एव हि चाकाशो मन एव हि शब्दकः ॥६९॥
मन एव स्पर्शरूपं मन एव हि रूपकम् । मन एव रसाकारं मनो गन्धः प्रकीर्तितः ॥ ७० ॥
अन्नकोशं मनोरूपं प्राणकोशं मनोमयम् । मनोकोशं मनोरूपं विज्ञानं च मनोमयः ॥ ७१ ॥
मन एवानन्दकोशं मनो जाग्रदवस्थितम् । मन एव हि स्वप्नं च मन एव सुषुप्तिकम् ॥ ७२ ॥
मन एव हि देवादि मन एव यमादयः । मन एव हि यत्किञ्चिन्मन एव मनोमयः ॥ ७३ ॥
मनोमयमिदं विश्वं मनोमयमिदं पुरम् । मनोमयमिदं भूतं मनोमयमिदं द्वयम् ॥ ७४ ॥
मनोमयमियं जातिर्मनोमयमयं गुणः । मनोमयमिदं दृश्यं मनोमयमिदं जडम् ॥ ७५ ॥
मनोमयमिदं यद्यन्मनो जीव इति स्थितम् । संकल्पमात्रमज्ञानं भेदः सङ्कल्प एव हि ॥ ७६ ॥
संकल्पमात्रं विज्ञानं[1] द्वन्द्वं सङ्कल्प एव हि । सङ्कल्पमात्रकालं च देशं संकल्पमेव हि ॥ ७७ ॥
सङ्कल्पमात्रो देहश्च प्राणः सङ्कल्पमात्रकः । सङ्कल्पमात्रं मननं सङ्कल्पं श्रवणं सदा ॥ ७८ ॥
सङ्कल्पमात्रं नरकं सङ्कल्पं स्वर्ग इत्यपि । सङ्कल्पमेव चिन्मात्रं सङ्कल्पं चात्मचिन्तनम् ॥ ७९ ॥
सङ्कल्पं वा मनाक्तत्त्वं ब्रह्मसङ्कल्पमेव हि । संकल्प एव यत्किञ्चित् तन्नास्त्येव कदाचन ॥

१ इतः परं C कोशे नवमाध्यायस्य ४२ श्लोकपर्यन्तं नोपलभ्यते । तदुपरि च अध्यायविपर्यासो दृश्यते ।

नास्ति नास्त्येव सङ्कल्पं नास्ति नास्ति जगत्त्रयम् ।
नास्ति नास्ति गुरुर्नास्ति नास्ति शिष्योऽपि वस्तुतः । ८१ ॥

नास्ति नास्ति शरीरं च नास्ति नास्ति मनः क्वचित् ।
नास्ति नास्त्येव किञ्चिद्वा नास्ति नास्त्यखिलं जगत् । ८२ ॥

नास्ति नास्त्येव भूतं वा सर्वं नास्ति न संशयः ।
"सर्वं नास्ति" प्रकरणं मयोक्तं च निदाघ ते ।
यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् ॥ ८३ ॥

वेदान्तैरपि चन्द्रशेखरपदाम्भोजानुरागादरा-
दारोदारकुमारदारनिकरैः प्राणैर्वनैरुज्झितः ।
त्यागाद्यो मनसा सकृत् शिवपदध्यानेन यत्प्राप्यते
तन्नैवाप्यतिशब्दतर्कनिवहैः शान्तं मनस्तद्भवेत् ॥ ८४ ॥

अशेषदृश्योज्झितदृङ्मयानां सङ्कल्पवर्जेन सदास्थितानाम् ।
न जाग्रतः स्वप्नसुषुप्तिभावो न जीवनं नो मरणं च चित्रम् ॥ ८५ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे प्रपञ्चशून्यत्व–सर्वनास्तित्वनिरूपणं नाम अष्टमोऽध्यायः ॥

---

## ॥ नवमोऽध्यायः ॥

निदाघः —

कुत्र वा भवता स्नानं क्रियते नितरां गुरो । स्नानमन्त्रं स्नानकाले तर्पणं च वदस्व मे ॥ १ ॥

ऋभुः —

आत्मस्नानं महास्नानं नित्यस्नानं न चान्यतः । इदमेव महास्नानं अहं ब्रह्मास्मि निश्चयः ॥
परब्रह्मस्वरूपोऽहं परमानन्दमस्म्यहम् । इदमेव महास्नानं अहं ब्रह्मेति निश्चयः ॥ ३ ॥
केवलं ज्ञानरूपोऽहं केवलं परमोऽस्म्यहम् । केवलं शान्तरूपोऽहं केवलं निर्मलोऽस्म्यहम् ॥ ४ ॥
केवलं नित्यरूपोऽहं केवलं शाश्वतोऽस्म्यहम् । इदमेव परं ब्रह्म अहं ब्रह्मास्मि केवलम् ॥ ५ ॥
केवलं सर्वरूपोऽहं अहंत्यक्तोऽहमस्म्यहम् । इदमेव परं ब्रह्म अहं ब्रह्मास्मि केवलम् ॥ ६ ॥

सर्वहीनस्वरूपोऽहं चिदाकाशोहमस्म्यहम् । इदमेव ... ... ... ॥ ७ ॥

केवलं तुर्यरूपोऽस्मि तुर्यातीतोऽस्मि केवलम् । इदमेव ... ... ... ॥ ८ ॥

सदा चैतन्यरूपोऽस्मि सच्चिदानन्दमस्म्यहम् । इदमेव ... ... ... ॥ ९ ॥

केवलाकाररूपोऽस्मि शुद्धरूपोऽस्म्यहं सदा । इदमेव ... ... ... ॥ १० ॥

केवलं ज्ञानशुद्धोऽस्मि केवलोऽस्मि प्रियोऽस्म्यहम् । इदमेव ... ... ... ॥ ११ ॥

केवलं निर्विकल्पोऽस्मि स्वस्वरूपोऽहमस्मि ह । इदमेव ... ... ... ॥ १२ ॥

सदा सत्सङ्गरूपोऽस्मि सर्वदा परमोऽस्म्यहम् । इदमेव ... ... ... ॥ १३ ॥

सदा ह्येकस्वरूपोऽस्मि सदाऽनन्योऽस्म्यहं सुखम् । इदमेव ... ... ... ॥ १४ ॥

अपरिच्छिन्नरूपोऽहं अनन्तानन्दमस्म्यहम् । इदमेव ... ... ... ॥ १५ ॥

सत्यानन्दस्वरूपोऽहं चित्परानन्दमस्म्यहम् । इदमेव ... ... ... ॥ १६ ॥

अनन्तानन्दरूपोऽहमवाङ्मनसगोचरः । इदमेव ... ... ... ॥ १७ ॥

ब्रह्मानन्दस्वरूपोऽहं सत्यानन्दोऽस्म्यहं सदा । इदमेव ... ... ... ॥ १८ ॥

आत्ममात्रस्वरूपोऽस्मि आत्मानन्दमयोऽस्म्यहम् । इदमेव ... ... .... ॥ १९ ॥

आत्मप्रकाशरूपोऽस्मि आत्मज्योतिरसोऽस्म्यहम् । इदमेव ... ... ... ॥ २० ॥

आदिमध्यान्तहीनोऽस्मि आकाशसदृशोऽस्म्यहम् । इदमेव ... ... ... ॥ २१ ॥

नित्यसत्तास्वरूपोऽस्मि नित्यमुक्तोऽस्म्यहं सदा । इदमेव ... ... ... ॥ २२ ॥

नित्यसंपूर्णरूपोऽस्मि नित्यं निर्मनसोऽस्म्यहम् । इदमेव ... ... ... ॥ २३ ॥

नित्यसत्ता स्वरूपोऽस्मि नित्यमुक्तोऽस्म्यहं सदा । इदमेव ... ... ... ॥ २४ ॥

नित्यशब्दस्वरूपोऽस्मि सर्वातीतोऽस्म्यहं सदा । इदमेव ... ... ... ॥ २५ ॥

रूपातीतस्वरूपोऽस्मि व्योमरूपोऽस्म्यहं सदा । इदमेव ... ... ... ॥ २६ ॥

भूतानन्दस्वरूपोऽस्मि भाषानन्दोऽस्म्यहं सदा । इदमेव ... ... ... ॥ २७ ॥

सर्वाधिष्ठानरूपोऽस्मि सर्वदा चिद्घनोऽस्म्यहम् । इदमेव ... ... ... ॥ २८ ॥

देहभावविहीनोऽहं चित्तहीनोऽहमेव हि । इदमेव ... ... ... ॥ २९ ॥

देहवृत्तिविहीनोऽहं मन्त्रवाह(?)महं सदा । इदमेव ... ... ... ॥ ३० ॥

सर्वदृश्यविहीनोऽस्मि दृश्यरूपोऽहमेव हि । इदमेव ... ... ... ॥ ३१ ॥

सर्वदा पूर्णरूपोऽस्मि नित्यतृप्तोऽस्म्यहं सदा । इदमेव ... ... ... ॥ ३२ ॥

इदं ब्रह्मेव सर्वस्य अहं चैतन्यमेव हि । इदमेव ... ... ... ॥ ३३ ॥

अहमेवाहमेवास्मि नान्यत् किञ्चिच्च विद्यते । इदमेव ... ... ... । ३४ ॥

अहमेव महानात्मा अहमेव परायणम् । इदमेव ... ... ... । ३५ ॥

अहमेव महाशून्यमित्येवं मन्त्रमुत्तमम् । इदमेव ... ... ... ॥ ३६ ॥

अहमेवान्यवद्भामि अहमेव शरीरवत् । इदमेव ... ... ... ॥ ३७ ॥

अहं च शिष्यवद्भामि अहं लोकत्रयादिवत् । इदमेव ... ... ... ॥ ३८ ॥

अहं कालत्रयातीतः अहं वेदैरुपासितः । इदमेव ... ... ... ॥ ३९ ॥

अहं शास्त्रेषु निर्णीत अहं चित्ते व्यवस्थितः । इदमेव ... ... ... ॥ ४० ॥

मत्त्यक्तं नास्ति किञ्चिद्वा मत्त्यक्तं पृथिवी च या(?) । इदमेव ... ... ... ॥ ४१ ॥

मयातिरिक्तं तोय वा इत्येवं मन्त्रमुत्तमम् । इदमेव ... ... ... ॥ ४२ ॥

अहं ब्रह्मास्मि शुद्धोऽस्मि नित्यशुद्धोऽस्म्यहं [1]सदा ।
निर्गुणोऽस्मि निरीहोऽस्मि इत्येवं मन्त्रमुत्तमम् ॥ ४३ ॥

हरिब्रह्मादिरूपोऽस्मि एतद्भेदोऽपि नास्म्यहम् ।
केवलं ब्रह्ममात्रोऽस्मि केवलोऽस्म्यजयोऽस्म्यहम् ॥ ४२ ॥

स्वयमेव स्वयंभास्यं स्वयमेव हि नान्यतः । स्वयमेवात्मनि स्वस्थः इत्येवं मन्त्रमुत्तमम् ॥

स्वयमेव स्वयं भुञ्ज्ञ स्वयमेव स्वयं रमे । स्वयमेव स्वयंज्योतिः स्वयमेव स्वयं रमे ॥ ४४ ॥

स्वस्यात्मनि स्वयं रंस्ये स्वात्मन्येवावलोकये । स्वात्मन्येव सुखेनासि (स्म)इत्येवं मन्त्रमुत्तमम् ॥

स्वचैतन्ये स्वयं स्थास्ये स्वात्मराज्ये सुखं रमे । स्वात्मसिंहासने तिष्ठ इत्येवं मन्त्रमुत्तमम् ॥

---

१ अध्यायारंभप्रभृति एतदन्तो भागः C कोशे एकादशाध्यायतया पठितः । एवं च मातृकायां पत्रपौर्वापर्यं जातं यथावदङ्गीकृत्य कलङमातृका मुद्रितेति भाति इति न तत्र पाठभेदः ।

स्वात्ममन्त्रं सदा पश्यन् स्वात्मज्ञानं सदाऽभ्यसन् ।
अहं ब्रह्मास्म्यहं मन्त्रः स्वात्मपापं विनाशयेत् ॥ ४७ ॥

अहं ब्रह्मास्म्यहं मन्त्रो द्वैतदोषं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रो भेददुःखं विनाशयेत् ॥
अहं ब्रह्मास्म्यहं मन्त्रश्चिन्तारोगं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रो बुद्धिव्याधिं विनाशयेत् ॥
अहं ब्रह्मास्म्यहं मन्त्र आधिव्याधिं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रः सर्वलोकं विनाशयेत् ॥
अहं ब्रह्मास्म्यहं मन्त्रः कामदोषं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रः क्रोधदोषं विनाशयेत् ॥
अहं ब्रह्मास्म्यहं मन्त्रश्चिन्तादोषं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रः सङ्कल्पं च विनाशयेत् ॥
अहं ब्रह्मास्म्यहं मन्त्रः इदं दुःखं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रः अविवेकमलं दहेत् । ५३ ।
अहं ब्रह्मास्म्यहं मन्त्रः अज्ञानध्वंसमाचरेत् । अहं ब्रह्मास्म्यहं मन्त्रः कोटिदोषं विनाशयेत् ॥
अहं ब्रह्मास्म्यहं मन्त्रः सर्वतन्त्रं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रो देहदोषं विनाशयेत् ॥५५॥
अहं ब्रह्मास्म्यहं मन्त्रो दृष्टादृष्टं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रः आत्मज्ञानप्रकाशकम् ॥
अहं ब्रह्मास्म्यहं मन्त्रः आत्मलोकजयप्रदम् (?) । अहं ब्रह्मास्म्यहं मन्त्रः असत्यादि विनाशकम् ॥
अहं ब्रह्मास्म्यहं मन्त्रः अन्यत् सर्वं विनाशयेत् । अहं ब्रह्मास्म्यहं मन्त्रः अप्रतर्क्यसुखप्रदम् ॥
अहं ब्रह्मास्म्यहं मन्त्र अनात्मज्ञानमाहरेत् । अहं ब्रह्मास्म्यहं मन्त्रो ज्ञानानन्दं प्रयच्छति ॥
सप्तकोटिमहामन्त्रा जन्मकोटिशतप्रदाः । सर्वमन्त्रान् समुत्सृज्य जपमेनं समभ्यसेत् ॥ ६० ॥
सद्यो मोक्षमवाप्नोति नात्र सन्देहमस्ति (?) मे । मन्त्रप्रकरणे प्रोक्तं रहस्यं वेदकोटिषु ॥ ६१ ॥

यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् ॥

नित्यानन्दमयः स एव परमानन्दोदयः शाश्वतो
यस्मान्नान्यदतोऽन्यदार्तमखिलं तज्जं जगत् सर्वदः ।
यो वाचा मनसा(तथे)न्द्रियगणैर्देहोऽपि वेद्यो न चे-
दच्छेद्यो भववैद्य ईश इति या सा धीः परं मुक्तये ॥ ६२ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे
अहंब्रह्मास्मिप्रकरणनिरूपणं नाम [1] नवमोऽध्यायः ॥

---

१ C कोशेऽत्रैवाष्टमाध्यायसमाप्तिः ।

## ॥ दशमोऽध्यायः ॥

नित्यतर्पणमाचक्ष्ये निदाघ शृणु मे वचः । वेदशास्त्रेषु सर्वेषु अत्यन्तं दुर्लभं नृणाम् ॥ १ ॥
सदा प्रपञ्चं नास्त्येव इदमित्यपि नास्ति हि । ब्रह्ममात्रं सदापूर्णं इत्येवं ब्रह्मतर्पणम् ॥ २ ॥
सद्रूपमात्रं ब्रह्मैव सच्चिदानन्दमप्यहम् । आनन्दघन एवाहं इत्येवं ... ... ... ॥ ३ ॥
सर्वदा सर्वशून्योऽहं सदात्मानन्दवानहम् । नित्यानित्यस्वरूपोऽहं इत्येवं ... ... ॥ ४ ॥
अहमेव चिदाकाश आत्माकाशोऽस्मि नित्यदा । आत्मनाऽऽत्मनि तृप्तोऽहं इत्येवं ... ॥ ५ ॥
एकत्वसंख्याहीनोऽस्मि अरूपोऽस्म्यहमद्वयः । नित्यशुद्धस्वरूपोऽहं इत्येवं ... ... ॥ ६ ॥
आकाशादपि सूक्ष्मोऽहं अत्यन्ताभावकोऽस्म्यहम् । सर्वप्रकाशरूपोऽहं इत्येवं ... ॥ ७ ॥
परब्रह्मस्वरूपोऽहं परावरसुखोऽस्म्यहम् । सत्रामात्रस्वरूपोऽहं दृग्दृश्यादिविवर्जितः ॥ ८ ॥
यत् किञ्चिदप्यहं नास्ति तूष्णीं तूष्णीमिहास्म्यहम् । शुद्धमोक्षस्वरूपोहं इत्येवं ब्रह्मतर्पणम् ॥
सर्वानन्दस्वरूपोऽहं ज्ञानानन्दमहं सदा । विज्ञानमात्ररूपोऽह इत्येवं ... ... ... ॥ १० ॥
ब्रह्ममात्रमिदं सर्वं नास्ति नान्यत्र ते शपे । तदेवाहं न सन्देहः इत्येवं ... ... ... ॥ ११ ॥
त्वमित्येतत् तदित्येतन्नास्ति नास्तीह किञ्चन । शुद्धचैतन्यमात्रोऽहं इत्येवं ... ... ॥ १२ ॥
अत्यन्ताभावरूपोऽहमहमेव परात्परः । अहमेव सुखं नान्यत् इत्येवं ... ... ... ॥ १३ ॥
इदं हेममयं किञ्चिन्नास्ति नास्त्येव ते शपे । निर्गुणानन्दरूपोऽहं इत्येवं .... ... ... ॥ १४ ॥
साक्षिवस्तुविहीनत्वात् साक्षित्वं नास्ति मे सदा । केवलं ब्रह्ममावत्वात् इत्येवं ... ॥ १५ ॥
अहमेवाविशेषोऽहं अहमेव हि नामकम् । अहमेव विमोहं वै इत्येवं ... ... ... ॥ १६ ॥
इन्द्रियाभावरूपोऽहं सर्वाभावस्वरूपकम् । बन्धमुक्तिविहीनोऽस्मि इत्येवं ... ... ॥ १७ ॥
सर्वानन्दस्वरूपोऽहं सर्वानन्दघनोऽस्म्यहम् । नित्यचैतन्यमात्रोऽहं इत्येवं ... ... ... ॥ १८ ॥
वाचामगोचरश्चाहं वाङ्मनो नास्ति किञ्चन । चिदानन्दमयश्चाहं इत्येवं ... ... ... ॥ १९ ॥
सर्वत्र पूर्णरूपोऽहं सर्वत्र सुखमस्म्यहम् । सर्वत्राचिन्त्यरूपोऽहं इत्येवं ... ... ... ॥ २० ॥
सर्वत्र तृप्तिरूपोऽहं सर्वानन्दमयोऽस्म्यहम् । सर्वशून्यस्वरूपोऽहं इत्येवं ... ... ... ॥ २१ ॥

सर्वदा मत्स्वरूपोऽहं परमानन्दवानहम् । एक एवाहमेवाहं इत्येवं ... ... — ॥ २२ ॥

मुक्तोऽहं मोक्षरूपोऽहं सर्वमौनपरोऽस्म्यहम् । सर्वनिर्वाणरूपोऽहं इत्येवं ... ... ... ॥ २३ ॥

सर्वदा सत्स्वरूपोऽहं सर्वदा तुर्यवानहम् । तुर्यातीतस्वरूपोऽहं ... ... ... ॥ २४ ॥

सत्यविज्ञानमात्रोऽहं सन्मात्रानन्दवानहम् । निर्विकल्पस्वरूपोऽहं इत्येवं ... ... ॥ २५ ॥

सर्वदा ह्यजरूपोऽहं निरीहोऽहं निरञ्जनः । ब्रह्मविज्ञानरूपोऽहं इत्येवं ... ... ... ॥ २६ ॥

ब्रह्मतर्पणमेवोक्तं एतत्प्रकरणं मया । यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् ॥ २७ ॥

नित्यहोमं प्रवक्ष्यामि सर्ववेदेषु दुर्लभम् । सर्वशास्त्रार्थमद्वैतं सावधानमनाः शृणु ॥ २८ ॥

अहं ब्रह्मास्मि शुद्धोऽस्मि नित्योऽस्मि प्रभुरस्म्यहम् ।
ओंकारार्थस्वरूपोऽस्मि एवं होमं (?) सुदुर्लभम् ॥ २९ ॥

परमात्मस्वरूपोऽस्मि परानन्दपरोऽस्म्यहम् । चिदानन्दस्वरूपोऽस्मि एवं ... ... ॥ ३० ॥

नित्यानन्दस्वरूपोऽस्मि निष्कलङ्कमयो ह्यहम् । चिदाकारस्वरूपोऽहं एवं ... ... ... ॥ ३१ ॥

न हि किञ्चित् स्वरूपोऽस्मि नाहमस्मि न सोऽस्म्यहम् । निर्व्यापारस्वरूपोऽस्मि एवं ... ॥

निरंशोऽस्मि निराभासो न मनो नेन्द्रियोऽस्म्यहम् । न बुद्धिर्न विकल्पोऽहं एवं ... ॥ ३३ ॥

न देहादिस्वरूपोऽस्मि त्रयादिपरिवर्जितः । न जाग्रत्स्वप्नरूपोऽस्मि एवं ... ... ॥ ३४ ॥

श्रवणं मननं नास्ति निदिध्यासनमेव हि । स्वगतं च न मे किञ्चिदेवं ... ... ... ॥ ३५ ॥

असत्यं हि मनःसत्ता असत्यं बुद्धिरूपकम् । अहङ्कारमसद्विद्धि कालत्रयमसत् सदा ॥ ३६ ॥

गुणत्रयमसद्विद्धि एवं होमं ... ... ... ॥ ३७ ॥

श्रुतं सर्वमसद्विद्धि वेदं सर्वमसत् सदा । सर्वतत्त्वमसद्विद्धि एवं ... ... ... ॥ ३८ ॥

नानारूपमसद्विद्धि नानावर्णमसत् सदा । नानाजातिमसद्विद्धि एवं ... ... ... ॥ ३९ ॥

शास्त्रज्ञानमसद्विद्धि वेदज्ञानं तपोऽप्यसत् । सर्वतीर्थमसद्विद्धि एवं ... ... ... ॥ ४० ॥

गुरुशिष्यमसद्विद्धि गुरोर्मन्त्रमसत् ततः । यद् दृश्यं तदसद्विद्धि एवं ... ... ... ॥ ४१ ॥

सर्वान् भोगानसद्विद्धि यच्चिन्त्यं तदसत् सदा । यद् दृश्यं तदसद्विद्धि एवं ... ... ॥ ४२ ॥

सर्वेन्द्रियमसद्विद्धि सर्वमन्त्रमसत् त्विति । सर्वप्राणानसद्विद्धि एवं ... ... ... ॥ ४३ ॥

जीवं देहमसद्विद्धि परे ब्रह्मणि नैव हि । मयि सर्वमसद्विद्धि एवं ... .. ... ॥ ४४ ॥

दृष्टं श्रुतमसद्विद्धि ओतं प्रोतमसन्मयि । कार्याकार्यमसद्विद्धि एवं ... ... ... ॥ ४५ ॥

दृष्टप्राप्तिमसद्विद्धि सन्तोषमसदेव हि । सर्वकर्माण्यसद्विद्धि एवं ... ... ... ॥ ४६ ॥

सर्वासर्वमसद्विद्धि पूर्णापूर्णमसत् परे । सुखं दुःखमसद्विद्धि एवं ... ... ... ॥ ४७ ॥

यथाधर्ममसद्विद्धि पुण्यपुण्यमसत् सदा । लाभालाभमसद्विद्धि [1] सदा देहमसत् सदा ॥ ४८ ॥

सदा जयमसद्विद्धि सदा गर्वमसत् सदा । मनोमयमसद्विद्धि संशयं निश्चयं तथा ॥ ४९ ॥

शब्दं सर्वमसद्विद्धि स्पर्शं सर्वमसत् सदा । रूपं सर्वमसद्विद्धि रसं सर्वमसत् सदा ॥ ५० ॥

गन्धं सर्वमसद्विद्धि ज्ञानं सर्वमसत् सदा । भूतं भव्यमसद्विद्धि असत् प्रकृतिरुच्यते ॥ ५१ ॥

असदेव सदा सर्वमसदेव भवोद्भवम् । असदेव गुणं सर्वं एवं ... ... ॥ ५२ ॥

शशशृङ्गवदेव त्वं शशशृङ्गवदस्म्यहम् । शशशृङ्गवदेवेदं शशशृङ्गवदन्तरम् ॥ ५३ ॥

इत्येवमात्ममहोमाहात्म्यमुक्तं प्रकरणं मया । यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् ॥ ५४ ॥

स्कन्दः —

यस्मिन् संच विचैति विश्वमखिलं द्योतन्ति सूर्येन्दवो
विद्युद्वह्निमरुद्गणाः सवरुणा भीता भजन्तीश्वरम् ।
भूतं चापि भवत्यदृश्यमखिलं शम्भोः सुखांशं जगत्
जातं चापि जनिष्यति प्रतिभवं देवासुरे[2] र्नित्यपि (?) ॥ ५५ ॥

तत्रेहास्ति न किञ्चिदत्र भगवद्ध्यानाच्च किञ्चित् प्रियम् ॥

यः प्राणापानभेदैर्मननमननधिया धारणापञ्चकाद्यैः
मध्ये विश्वजनस्य सन्नपि शिवो नो दृश्यते सूक्ष्मया ।
बुद्ध्यादध्यातयापि श्रुतिवचनशतैर्देशिकोक्त्यैकयुक्त्या
योगैर्भक्तिसमन्वितैः शिवतरो दृश्यो न चान्यत् तथा ॥ ५६ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे ब्रह्मतर्पणात्महोमाख्य प्रकरणद्वयवर्णनं नाम [3] दशमोऽध्यायः ॥

---

१ दानं C २ देवासुरैरीरितं C ३ नवमोऽध्यायः C

## ॥ एकादशोऽध्यायः ॥

ऋभुः —

ब्रह्मज्ञानं प्रवक्ष्यामि जीवन्मुक्तस्य लक्षणम् । आत्ममात्रेण यस्तिष्ठेत् स जीवन्मुक्त उच्यते ॥ १॥
अहं ब्रह्मवदेव[1]हमात्मा न संशयः । चैतन्यात्मेति यस्तिष्ठेत् स जीवन्मुक्त उच्यते ॥ २ ॥
चिदात्माहं परात्माहं निर्गुणोऽहं परात्परः । इत्येवं निश्चयो यस्य स जीवन्मुक्त उच्यते ॥ ३ ॥
देहत्रयातिरिक्तोऽहं ब्रह्म चैतन्यमस्म्यहम् । ब्रह्माहमिति यस्यान्तः स ... ... ... ॥ ४ ॥
आनन्दघनरूपोऽस्मि परानन्दपरोऽस्म्यहम् । यश्चिदेवं परानन्दं स ... ... ... ॥ ५ ॥
यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः । परमानन्दपूर्णो यः ... ... ... ॥ ६ ॥
यस्य किञ्चिदहं नास्ति चिन्मात्रेणावतिष्ठते । [2]परानन्दो मुदानन्दः स ... ... ... ॥ ७ ॥
चैतन्यमात्रं यस्यान्तश्चिन्मात्रैकस्वरूपवान् । न स्मरत्यन्यकलनं (लं) स ... ... ... ॥ ८ ॥
सर्वत्र परिपूर्णात्मा सर्वत्र कलनात्मकः । सर्वत्र नित्यपूर्णात्मा ... ... ... ॥ ९ ॥
परमात्मपरा नित्यं परमात्मा निश्चितः । आनन्दाकृतिरव्यक्तः स ... ... ... ॥ १० ॥
शुद्धकैवल्यजीवात्मा सर्वसङ्गविवर्जितः । नित्यानन्दप्रसन्नात्मा स ... ... ... ॥ ११ ॥
एकरूपः प्रशान्तात्मा अन्यचिन्ताविवर्जितः । किञ्चिदास्तित्वहीनो यः स ... ... ॥ १२ ॥
न मे चित्तं न मे बुद्धिर्नाहङ्कारो न चेन्द्रियः । केवलं ब्रह्ममात्रत्वात् स ... ... ॥ १३ ॥
न मे दोषो न मे देहो न मे प्राणो न मे क्वचित् । दृढनिश्चयवान् योऽन्तः स ... ॥ १४ ॥
न मे माया न मे कामो न मे क्रोधोऽपरोऽस्म्यहम् । न मे किञ्चिदिदं वाऽपि स ... ॥ १५ ॥
न मे दोषो न मे लिङ्गं न मे बन्धः क्वचिज्जगत् । यस्तु नित्यं सदानन्दः स ... ... ॥ १६ ॥
न मे श्रोत्रं न मे नासा न मे चक्षुर्न मे मनः । न मे जिह्वेति यस्यान्तः स ... ... ॥ १७ ॥
न मे देहो न मे लिङ्गं न मे कारणमेव च । न मे तुर्यमिति स्वस्थः स ... ... ... ॥ १८ ॥
इदं सर्वं न मे किञ्चिदयं सर्वं न मे क्वचित् । ब्रह्ममात्रेण यस्तिष्ठेत् स जी ... ... ... ॥ १९ ॥
न मे किञ्चिन्न मे कश्चिन्न मे कश्चित् क्वचित् जगत् । अहमेवेति यस्तिष्ठेत् स .... ... ॥ २० ॥
न मे कालो न मे देशो न मे वस्तु न मे स्थितिः । न मे स्नानं न मे प्रासः स ... ॥ २१ ॥

---

१ अहं ब्रह्मवदेवेदं C   २ परमानन्दपूर्णो यः C

न मे तीर्थं न मे सेवा न मे देवो न मे स्थलम् । न क्वचिद्भेदहीनोऽयं स ... ... ॥ २२ ॥
न मे बन्धं (?) न मे जन्म न मे ज्ञानं न मे पदम् । न मे वाक्यमिति स्वस्थः स ... ... ॥
न मे पुण्यं न मे पापं न मे कायं न मे शुभम् । न मे दृश्यमिति ज्ञानी स ... ... ॥ २४ ॥
न मे शब्दो न मे स्पर्शो न मे रूपं न मे रसः । न मे जीव इति ज्ञात्वा स ... .. ॥ २५ ॥
न मे सर्वं न मे किञ्चित् न मे जीवं न मे क्वचित् । न मे भावं न मे वस्तु स ... ... ॥
न मे मोक्ष्ये न मे द्वैतं न मे वेदो न मे विधिः । न मे दूरमिति स्वस्थः स ... ... ॥ २७ ॥
न मे गुरुर्न मे शिष्यो न मे बोधो न मे परः । न मे श्रेष्ठं क्वचिद्वस्तु स ... ... ॥ २८ ॥
न मे ब्रह्मा न मे विष्णुर्न मे रुद्रो न मे रविः । न मे कर्म क्वचिद्वस्तु स ... ... ॥ २९ ॥
न मे पृथ्वी न मे तोयं न मे तेजो न मे वियत्[1] । न मे कार्यमिति स्वस्थः स... ... ॥
न मे वार्ता न मे वाक्यं न मे गोत्रं न मे कुलम् न मे विद्येति यः स्वस्थः स ... ... ॥
न मे नादो न मे शब्दो न मे लक्ष्यं न मे भवः । न मे ध्यानमिति स्वस्थः स .. ... ॥
न मे शीतं न मे चोष्णं न मे मोहो न मे जपः । न मे सन्ध्येति यः स्वस्थः स .. ... ॥
न मे जपो न मे मन्त्रो न मे होमो न मे निशा । न मे सर्वमिति स्वस्थः स ... ... ॥ ३४ ॥
न मे भयं न मे चान्नं न मे तृष्णा न मे क्षुधा । न मे चात्मेति यः स्वस्थः स ... ... ॥
न मे पूर्वं न मे पश्चात् न मे चोर्ध्वं न मे दिशः । न मे चित्तमिति स्वस्थः स ... ... ॥
न मे वक्तव्यमल्पं वा न मे श्रोतव्यमण्वपि । न मे मन्तव्यमीषद्वा स ... ... ॥ ३७ ॥
न मे भोक्तव्यमीषद्वा न मे ध्यातव्यमण्वपि । न मे स्मर्तव्यमेवायं स ... ... ॥ ३८ ॥
न मे भोगो न मे रोगो न मे योगो न मे लयः । न मे सर्वमिति स्वस्थः स ... ... ॥ ३९ ॥
न मेऽस्तित्वं न मे जातं न मे वृद्धं न मे क्षयः । अध्यारोपो न मे स्वस्थः स ... ... ॥ ४० ॥
अध्यारोप्यं न मे किञ्चिदपवादो न मे क्वचित् न मे किञ्चिदहं यत्तु स ... ... ॥ ४१ ॥
न मे शुद्धिर्न मे शुभ्रो न मे चैकं न मे बहु । न मे भूतं न मे कार्यं स जीवन्मुक्त ... ... ॥
न मे कोऽहं न मे चेदं न मे नान्यं न मे स्वयम् । न मे कश्चिन्न मे स्वस्थः स ... ... ॥
न मे मांसं न मे रक्तं न मे मेदो न मे शकृत् । न मे कृपा न मेऽस्तीति स ... ... ॥ ४४ ॥

---

१ इतः परं C कोशे अष्टमाध्यायस्य 78 श्लोकादारभ्याध्यायान्तं पाठः दशमाध्यायशेषतया पठितः

न मे सर्वं न मे शुक्लं न मे नीलं न मे पृथक् । न मे स्वस्थः स्वयं यो वा स ... ... ॥ ४५ ॥
न मे तापं न मे लोभो न मे गौणं न मे यशः न मे तत्त्वमिति स्वस्थः ... ... ॥ ४६ ॥
न मे भ्रान्तिर्न मे ज्ञानं न मे गुह्यं न मे कुलम् । न मे किञ्चिदिति ध्यायन् स ... ॥ ४७ ॥
न मे त्याज्यं न मे ग्राह्यं न मे हास्यं न मे लयः । न मे दैवमिति स्वस्थः स ... ... ॥ ४८ ॥
न मे व्रतं न मे ग्लानिः न मे शोच्यं न मे सुखम् । न मे न्यूनं क्वचिद्वस्तु स ... ॥ ४९ ॥
न मे ज्ञाता न मे ज्ञानं न मे ज्ञेयं न मे स्वयम् । न मे सर्वमिति ज्ञानी स ... ... ॥ ५० ॥
न मे तुभ्यं न मे मह्यं न मे त्वत्तो न मे त्वहम् (?) । न मे गुरुर्न मे यन्तु स ... ॥ ५१ ॥
न मे जडं न मे चैतन्यं न मे ग्लानं न मे शुभम् । न मे न मेति यस्तिष्ठेत् स ... ॥ ५२ ॥
न मे गोत्रं न मे सूत्रं न मे पात्रं न मे कृपा । न मे किञ्चिदिति ध्यायी स ... ... ॥ ५३ ॥
न मे चात्मा न मे नात्मा न मे स्वर्गं न मे फलम् । न मे दूष्यं क्वचिद्वस्तु स ... ॥ ५४ ॥
न मेऽभ्यासो न मे विद्या न मे शान्तिर्न मे दमः । न मे पुरमिति ज्ञानी स ... ॥ ५५ ॥
न मे शल्यं न मे शङ्का न मे सुप्तिर्न मे मनः । न मे विकल्प इत्याप्तः स ... ... ॥ ५६ ॥
न मे जरा न मे बाल्यं न मे यौवनमण्वपि । न मे मृतिर्न मे ध्वान्तं स ... ... ॥ ५७ ॥
न मे लोकं न मे भोगं न मे सर्वमिति स्मृतः । न मे मौनमिति प्राप्तं स ... ... ॥ ५८ ॥
अहं ब्रह्म ह्यहं ब्रह्म ह्यहं ब्रह्मेति निश्चयः । चिदहं चिदहं चेति स ... ... ॥ ५९ ॥
ब्रह्मैवाहं चिदेवाहं परैवाहं न संशयः । स्वयमेव स्वयं ज्योतिः स ... ... ॥ ६० ॥
स्वयमेव स्वयं पश्येत् स्वयमेव स्वयं स्थितः । स्वात्मन्येव स्वयं भूतः स ... ... ॥ ६१ ॥
स्वात्मानन्दं स्वयं भुङ्क्ते (?) स्वात्मराज्ये स्वयं वसे । स्वात्मराज्ये स्वयं पश्ये स ... ... ॥
स्वयमेवाहमेकाग्रः स्वयमेव स्वयं प्रभुः । स्वस्वरूपः स्वयं पश्ये स ... ... ॥ ६३ ॥
जीवन्मुक्तिप्रकरणं सर्ववेदेषु दुर्लभम् । यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् ॥ ६४ ॥

ये वेदवादविधिकल्पितभेदबुद्ध्या पुण्याभिसन्धितधिया परिकर्शयन्तः ।
देहं स्वकीयमतिदुःखपरं पराभिस्तेषां सुखाय न तु जातु तवेश पादौ ॥ ६५ ॥
कः सन्तरेत भवसागरमेतदुद्यत्तरङ्गसदृशं जनिमृत्युरूपम् ।
ईशार्चनाविधिसुबोधितभेदहीनज्ञानोडुपेन प्रतरेद्भवभावयुक्तः ॥ ६६ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे जीवन्मुक्तप्रकरणं नाम एकादशोऽध्यायः ॥

## ॥ द्वादशोऽध्यायः ॥

ऋभुः —

देहमुक्तिप्रकरणं निदाघ शृणु दुर्लभम् । त्यक्तात्यक्तं न स्मरति विदेहान्मुक्त एव सः ॥ १ ॥
ब्रह्मरूपः प्रशान्तात्मा नान्यरूपः सदा सुखी । स्वस्थरूपो महामौनी विदेहा ... ... ॥ २ ॥
सर्वात्मा सर्वभूतात्मा शान्तात्मा मुक्तिवर्जितः । एकात्मवर्जितः साक्षी विदेहा ... ... । ३ ॥
लक्ष्यात्मा लालितात्माहं लीलात्मा स्वात्ममात्रकः । तूष्णीमात्मा स्वभावात्मा विदेहा ... ॥
शुभ्रात्मा स्वयमात्माहं सर्वात्मा स्वात्ममात्रकः । अजात्मा चामृतात्मा हि विदेहा ... । ५ ॥
आनन्दात्मा प्रियः स्वात्मा मोक्षात्मा कोऽपि निर्णयः । इत्येवमिति निध्यायी विदेहा ... ॥
ब्रह्मैवाहं चिदेवाहं एकं वापि न चिन्त्यते । चिन्मात्रेणैव यस्तिष्ठेद्विदेहा ... ... ॥ ७ ॥
निश्चयं च परित्यज्य अहं ब्रह्मेति निश्चयः । आनन्दभूरिदेहस्तु विदेहा ... ... ॥ ८ ॥
सर्वमस्तीति नास्तीति निश्चयं त्यज्य तिष्ठति । अहं ब्रह्मास्मि नान्योस्मि विदेहा ... ॥ ९ ॥
किञ्चित् कचित् कदाचिच्च आत्मानं न स्मरत्यसौ । स्वस्वभावेन यस्तिष्ठेद्विदेहा ... ॥ १० ॥
अहमात्मा परो ह्यात्मा चिदात्माहं न चिन्त्यते । स्वास्वामीत्यपि यो युक्तो विदेहा ... ... ॥
तूष्णीमेव स्थितस्तूष्णीं सर्वं तूष्णीं न किञ्चन । अहमर्थपरित्यक्तो विदेहा — ... ॥ १२ ॥
परमात्मा गुणातीतः सर्वात्मापि न संमतः । सर्वभावान्महात्मा यो विदेहा ... ... ॥ १३ ॥
कालभेदं देशभेदं वस्तुभेदं स्वभेदकम् । किञ्चिद्भेदं न यस्यास्ति विदेहा ... ... ॥ १४ ॥
अहं त्वं तदिदं सोऽयं किञ्चिद्वापि न विद्यते । अत्यन्तसुखमात्रोऽहं विदेहा ... ... ॥ १५ ॥
निर्गुणात्मा निरात्मा हि नित्यात्मा नित्यनिर्णयः । शून्यात्मा सूक्ष्मरूपो यो विदेहा ... ॥
विश्वात्मा विश्वहीनात्मा कालात्मा कालहेतुकः । देवात्मा देवहीनो यो विदेहा ... । १७ ॥
मात्रात्मा मेयहीनात्मा मूढात्माऽनात्मवर्जितः । केवलात्मा परात्मा ... ... ॥ १८ ॥
सर्वत्र जडहीनात्मा सर्वेषामन्तरात्मकः । सर्वेषामिति यस्तूक्तो विदेहा ... ... ॥ १९ ॥
सर्वसङ्कल्पहीनेति सच्चिदानन्दमात्रकः । स्वास्वामीति न यस्यान्तो विदेहा ... ... ॥ २० ॥
सर्वं नास्ति तदस्तीति चिन्मात्रोऽस्तीति सर्वदा । प्रबुद्धो नास्ति यस्यान्तो विदेहा ... ॥ २१ ॥
केवलं परमात्मा यः केवलं ज्ञानविग्रहः । सत्तामात्रस्वरूपो यो विदेहा ... ... ॥ २२ ॥
जीवेश्वरेति चैत्येति वेदशास्त्रे त्वहं त्विति । ब्रह्मैवेति न यस्यान्तो विदेहा ... ... ॥ २३ ॥

ब्रह्मैव सर्वमेवाहं नान्यत् किञ्चिज्जगद्भवेत् । इत्येवं निश्चयो भावः विदेहा ... ... ॥ २४ ॥
इदं चैतन्यमेवेति अहं चैतन्यमेव हि । इति निश्चयशून्यो यो(?) विदेह ... ... ॥ २५ ॥
चैतन्यमात्रः संसिद्धः स्वात्मारामः सुखासनः । सुखमात्रान्तरङ्गो यो विदेह ... ... ॥ २६ ॥
अपरिच्छिन्नरूपात्मा अणोरणुविनिर्मलः । तुर्यातीतः परानन्दो विदेहा ... ... ॥ २७ ॥
नामापि नास्ति सर्वात्मा न रूपो न च नास्तिकः । परब्रह्मस्वरूपात्मा विदेहा ... ... ॥ २८॥
तुर्यातीतः स्वतोऽतीतः अतोऽतीतः स सन्मयः । अशुभाशुभशान्तात्मा विदेहा ... ॥ २९ ॥
बन्धमुक्तिप्रशान्तात्मा सर्वात्मा चान्तरात्मकः । प्रपञ्चात्मा परो ह्यात्मा विदेहा ... ॥ ३० ॥
सर्वत्र परिपूर्णात्मा सर्वदा च परात् परः । अन्तरात्मा ह्यनन्तात्मा विदेहा ... ... ॥ ३१ ॥
अबोधबोधहीनात्मा अजडो जडवर्जितः । अतत्त्वातत्त्वसर्वात्मा विदेहा ... ... ॥ ३२ ॥
असमाधिसमाध्यन्तः अलक्ष्यालक्ष्यवर्जितः । अभूतो भूत एवात्मा विदेहा ... ... ॥ ३३ ॥
चिन्मयात्मा चिदाकाशश्चिदानन्दश्चिदंबरः । चिन्मात्ररूप एवात्मा विदेहा ... ... ॥ ३४ ॥
सच्चिदानन्दरूपात्मा सच्चिदानन्दविग्रहः । सच्चिदानन्दपूर्णात्मा विदेहा ... ... ॥ ३५ ॥
सदा ब्रह्ममयो नित्यं सदा स्वात्मनि निष्ठितः । सदाखण्डैकरूपात्मा विदेहा ... ... ॥ ३६ ॥
प्रज्ञानघन एवात्मा प्रज्ञानघनविग्रहः । नित्यज्ञानपरानन्दो विदेहा ... ... ॥ ३७ ॥
यस्य देहः क्वचिन्नास्ति यस्य किञ्चित् स्मृतिश्च न । सदात्मा ह्यात्मनि स्वस्थो विदेहा ... ॥
यस्य निर्वासनं चित्तं यस्य ब्रह्मात्मना स्थितिः । योगात्मा योगयुक्तात्मा विदेहा ... ॥ ३९ ॥
चैतन्यमात्र एवेति त्यक्तं सर्वमतिर्न हि । गुणागुणविकारान्तो विदेहा ... ... ॥ ४० ॥
कालदेशादि नास्त्यन्तो न ग्राह्यो नास्मृतिः परः । निश्चयं च परित्यक्तो विदेहा ... ॥ ४१ ॥
भूमानन्दापरानन्दो भोगानन्दविवर्जितः । साक्षी च साक्षिहीनश्च विदेहा ... ... ॥ ४२ ॥

सोऽपि कोऽपि न सो कोऽपि किञ्चित् किञ्चिन्न किञ्चन ।
आत्मानात्मा चिदात्मा च चिदचिच्चाहमेव च ॥ ४३ ॥

यस्य प्रपञ्चश्चानात्मा ब्रह्माकारमपीह न । स्वस्वरूपः स्वयंज्योतिर्विदेहा ... ... ॥ ४४ ॥
वाचामगोचरानन्दः सर्वेन्द्रियविवर्जितः । अतीतातीतभावो यो विदेह ... ... ॥ ४५ ॥
चित्तवृत्तेरतीतो यश्चित्तवृत्तिर्न भासकः । सर्ववृत्तिविहीनो यो विदेह ... ... ॥ ४६ ॥
तस्मिन् काले विदेहो यो देहस्मरणवर्जितः । न स्थूलो न कृशो वापि विदेह ... ... ॥ ४७ ॥

ईषन्मात्रस्थितो यो वै सदा सर्वविवर्जितः । ब्रह्ममात्रेण यस्तिष्ठेत् विदेह ... ... ।। ४८ ।।
परं ब्रह्म परानन्दः परमात्मा परात् परः । परैरदृष्टबाह्यान्तो विदेह ... ... ।। ४९ ।।
शुद्धवेदान्तसारोऽयं शुद्धसत्वात्मनि स्थितः । तद्भेदमपि यस्त्यक्तो विदेह ... ... ।। ५० ।।
ब्रह्मामृतरसास्वादो ब्रह्मामृतरसायनम् । ब्रह्म मृतरसे मग्नो विदेहा ... ... ।। ५१ ।।
ब्रह्मामृतरसाधारो ब्रह्मामृतरसः स्वयम् । ब्रह्मामृतरसे तृप्तो विदेहा ... ... ।। ५२ ।।
ब्रह्मानन्दपरानन्दो ब्रह्मानन्दरसप्रभः । ब्रह्मानन्दपरं ज्योतिर्विदेह ... ... ।। ५३ ।।
ब्रह्मानन्दरसानन्दो ब्रह्मामृतनिरन्तरम् । ब्रह्मानन्दः सदानन्दो विदेहा — ... ।। ५४ ।।
ब्रह्मानन्दानुभावो यो ब्रह्मामृतशिवार्चनम् । ब्रह्मानन्दरसप्रीतो विदेहा .. ... ।। ५५ ।।
ब्रह्मानन्दरसोद्वाहो ब्रह्मामृतकुटुम्बकः । ब्रह्मानन्दजनैर्युक्तो विदेहा ... ... ।। ५६ ।।
ब्रह्मामृतवरे वासो ब्रह्मानन्दालये स्थितः । ब्रह्मामृतजपो यस्य विदेहा ... ... ।। ५७ ।।
ब्रह्मानन्दशरीरान्तो ब्रह्मानन्देन्द्रियः क्वचित् । ब्रह्मामृतमयी विद्या विदेहा ... ... ।। ५८ ।।
ब्रह्मानन्दमदोन्मत्तो ब्रह्मामृतरसंभरः । ब्रह्मात्मनि सदा स्वस्थो विदेहा ... ... ।। ५९ ।।
देहमुक्तिप्रकरणं सर्ववेदेषु दुर्लभम् । मयोक्तं ते महायोगिन् विदेहः श्रवणाद्भवेत् ।। ६० ।।

स्कन्दः —

अनाथ नाथ ते पदं भजाम्युमासनाथ स-
निशीथनाथमौलिसंस्फुटाल्ललाटसञ्ज-
स्फुलिङ्गदग्धमन्मथं प्रमाथनाथ पाहि माम् ।। ६१ ।।

विभूतिभूषगात्र ते त्रिनेत्रमित्रतामियात्
मनःसरोरुहं क्षणं तथेक्षणेन मे सदा ।
प्रबन्धसंसृतिभ्रमद्भ्रमज्जनौघसन्ततौ
न वेद वेदमौलिरप्यपास्तदुःखसन्ततिम् ।। ६२ ।।

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे देहमुक्तिप्रकरणवर्णनं नाम द्वादशोऽध्यायः ।।

## ॥ त्रयोदशोऽध्यायः ॥

ऋभुः —

शृणुष्व दुर्लभं लोके सारात् सारतरं परम् । आत्मरूपमिदं सर्वमात्मनोऽन्यन्न किञ्चन ॥ १ ॥
सर्वमात्माऽस्ति परमा[1] परमात्मा परात्मकः । नित्यानन्दस्वरूपात्मा ह्यात्मनोऽन्यन्न किञ्चन ॥
पूर्णरूपो महानात्मा पूतात्मा शाश्वतात्मकः । निर्विकारस्वरूपात्मा निर्मलात्मा निरात्मकः ॥

शान्ताशान्तस्वरूपात्मा ह्यात्मनोऽन्यन्न किञ्चन ।
जीवात्मा परमात्मा हि चित्ताचित्तात्मचिन्मयः ।
एकात्मा एकरूपात्मा नैकात्मात्मविवर्जितः ॥ ४ ॥

मुक्तामुक्तस्वरूपात्मा मुक्तामुक्तविवर्जितः । मोक्षरूपस्वरूपात्मा ह्यात्मनो ... ... ॥ ५ ॥
द्वैताद्वैतस्वरूपात्मा द्वैताद्वैतविवर्जितः सर्ववर्जितसर्वात्मा ह्यात्मनो ... ... ॥ ६ ॥
मुदामुदस्वरूपात्मा मोक्षात्मा देवतात्मकः । सङ्कल्पहीनसारात्मा ह्यात्मनो ... ... ॥ ७ ॥
निष्कलात्मा निर्मलात्मा बुद्ध्यात्मा पुरुषात्मकः । आनन्दात्मा ह्यजात्मा च ह्यात्मनो ... ॥८॥
अगण्यात्मा गणात्मा च अमृतात्मामृतान्तरः । भूतभव्यभविष्यात्मा ... ... ॥ ९ ॥
अखिलात्माऽनु[2]मन्यात्मा मानात्मा भावभावनः । तुर्यरूपप्रसन्नात्मा आत्मनोऽन्यन्न किञ्चन ॥
नित्यं प्रत्यक्षरूपात्मा नित्यप्रत्यक्षनिर्णयः । अन्यहीनस्वभावात्मा आत्मनो ... ... ॥ ११ ॥
असद्धीनस्वभावात्मा अन्यहीनः स्वयं प्रभुः । विद्याविद्यान्यशुद्धात्मा मानामानविहीनकः ॥
नित्यानित्यविहीनात्मा इहामुत्रफलान्तरः । शमादिषट्कशून्यात्मा ह्यात्मनोऽ ... । १३ ॥
मुमुक्षुत्वं च हीनात्मा शब्दात्मा दमनात्मकः । नित्योपरतरूपात्मा ह्यात्मनो ... ॥ १४ ॥
सर्वकालतितिक्षात्मा समाधानात्मनि स्थितः । शुद्धात्मा स्वात्मनि स्वात्मा ह्यात्मनो .... ॥
अन्नकोशविहीनात्मा प्राणकोशविवर्जितः । मनःकोशविहीनात्मा ह्यात्मनो ... ... ॥ १६ ॥
विज्ञानकोशहीना[3]त्मा आनन्दादिविवर्जितः । [4]पञ्चकोशविहीनात्मा ह्यात्मनो ... ... ॥ १७ ॥
निर्विकल्पस्वरूपात्मा सविकल्पविवर्जितः । दृश्यानुविध्यहीनात्मा ह्यात्मनो ... ... ॥ १८ ॥
स्थूलदेहविहीनात्मा सूक्ष्मदेहविवर्जितः । कारणादिविहीनात्मा ह्यात्मनो ... ... ॥ १९ ॥

---

१ ब्रह्मास्मि C  २ मानात्मा C  ३ स्वानन्दकोशविवर्जितः C
४ पञ्चकोशेत्यादि पादचतुष्टयं C कोशे नास्ति ।

दृश्यानुविद्धशून्यात्मा ह्यादिमध्यान्तवर्जितः । शान्ता समाधिशून्यात्मा ह्यात्मनो ... ॥ २० ॥
प्रज्ञानवाक्यहीनात्मा अहं ब्रह्मास्मिवर्जितः । तत्वमस्यादिवाक्यात्मा ह्यात्मनो ... ... ॥ २१ ॥
अयमात्मेत्यावात्मा सर्वात्मा वाक्यवर्जितः । ओंकारात्मा गुणात्मा च ह्यात्मनो ... ॥ २२ ॥
जाग्रद्धीनस्वरूपात्मा स्वप्नावस्थाविवर्जितः । आनन्दरूपपूर्णात्मा आत्मनोऽन्य ... .... ॥ २३ ॥
भूतात्मा च भविष्यात्मा ह्यक्षरात्मा चिदात्मकः । अनादिमध्यरूपात्मा ह्यात्मनो ... ॥ २४ ॥
सर्वसङ्कल्पहीनात्मा स्वच्छचिन्मात्रमक्षयः । ज्ञातृज्ञेयादिहीनात्मा ह्यात्मनो ... ... ॥ २५ ॥
एकात्मा एकहीनात्मा द्वैताद्वैतविवर्जितः । स्वयमात्मा स्वभावात्मा ह्यात्मनो ... ... ॥ २६ ॥
तुर्यात्मा नित्यमात्मा च यत्किञ्चिदिदमात्मकः । भानात्मा मानहीनात्मा ह्यात्मनो ॥ २७ ॥
वाचावधिरनेकात्मा वाच्यानन्दात्मनन्दकः । सर्वहीनात्मसर्वात्मा ह्यात्मनो ... ... ॥ २८ ॥
आत्मानमेव वीक्षस्व आत्मानं भावय स्वकम् । स्वस्वात्मानं स्वयं भुंक्ष्व ह्यात्मनो ... ॥ २९ ॥

स्वात्मानमेव सन्तुष्य आत्मानं स्वयमेव हि ।
स्वस्वात्मानं स्वयं पश्येत् स्वमात्मानं स्वयं श्रुतम् ॥ ३० ॥

स्वमात्मनि स्वयं तृप्तः स्वमात्मानं स्वयंभरः । स्वमात्मानं स्वयं भस्म ह्यात्मनो ... ॥ ३१ ॥

स्वमात्मानं स्वयं मोदं स्वमात्मानं स्वयं प्रियम् ।
स्वमात्मानमेव मन्तव्यं ह्यात्मनोऽन्यन्न किञ्चन ॥ ३२ ॥

आत्मानमेव श्रोतव्यं आत्मानं श्रवणं भव । आत्मानं कामयन्नित्यं आत्मानं नित्यमर्चय ॥
आत्मानं श्लाघयेन्नित्यमात्मानं परिपालय । आत्मानं कामयेन्नित्यं आत्मनोऽन्यन्न किञ्चन ॥
आत्मैवेयमियं भूमिः आत्मैवेदमिदं जलम् । आत्मैवेदमिदं ज्योतिरात्मनो ... ... ॥ ३५ ॥
आत्मैवायमयं वायुरात्मैवेदमिदं वियत् । आत्मैवायमहङ्कारः आत्मनो ... .. ॥ ३६ ॥
आत्मैवेदमिदं चित्तं आत्मैवेदमिदं मनः । आत्मैवेयमियं बुद्धिरात्मनो ... ... ॥ ३७ ॥
आत्मैवायमयं देहः आत्मैवायमयं गुणः । आत्मैवेदमिदं तत्वं आत्मनो ... ... ॥ ३८ ॥
आत्मैवायमयं मन्त्रः आत्मैवायमयं जपः । आत्मैवायमयं लोकः आत्मनो ... ... ॥ ३९ ॥
आत्मैवायमयं शब्दः आत्मैवायमयं रसः । आत्मैवायमयं स्पर्शः आत्मनो ... ... ॥ ४० ॥
आत्मैवायमयं गन्धः आत्मैवायमयं शमः । आत्मैवेदमिदं दुःखं आत्मैवेदमिदं सुखम् ॥ ४१ ॥
आत्मीयमेवेदं जगत् आत्मीयः स्वम एव हि । सुषुप्तं चाप्यथात्मीयं आत्मनो ... ॥ ४२ ॥

आत्मैव कार्यमात्मैव प्रायो ह्यात्मैवमद्वयम् । आत्मीयमेवमद्वैतं आत्मनो ... ॥ ४३ ॥
आत्मीयमेवायं कोपि आत्मैवेदमिदं क्वचित् । आत्मैवायमयं लोकः आत्मनो ... ॥ ४४ ॥
आत्मैवेदमिदं दृश्यं आत्मैवायमयं जनः । आत्मैवेदमिदं सर्वं आत्मनो ... ॥ ४५ ॥
आत्मैवायमयं शंभुः आत्मैवेदमिदं जगत् । आत्मैवायमयं ब्रह्मा आत्मनो ... ॥ ४६ ॥
आत्मैवायमयं सूर्य आत्मैवेदमिदं जडम् । आत्मैवेदमिदं ध्यानं आत्मैवेदमिदं फलम् ॥ ४७ ॥
आत्मैवायमयं योगः सर्वमात्ममयं जगत् । सर्वमात्ममयं भूतं आत्मनोऽन्यन्न किञ्चन ॥ ४८ ॥
सर्वमात्ममयं भावि सर्वमात्ममयं गुरुः । सर्वमात्ममयं शिष्य आत्मनो ... ॥ ४९ ॥
सर्वमात्ममयं देवः सर्वमात्ममयं फलम् । सर्वमात्ममयं लक्ष्यं आत्मनो ... ॥ ५० ॥
सर्वमात्ममयं तीर्थं सर्वमात्ममयं स्वयम् । सर्वमात्ममयं मोक्षं आत्मनो ... ॥ ५१ ॥
सर्वमात्ममयं कामं सर्वमात्ममयं क्रिया । सर्वमात्ममयं क्रोधः आत्मनो ... ॥ ५२ ॥
सर्वमात्ममयं विद्या सर्वमात्ममयं दिशः । सर्वमात्ममयं लोभः आत्मनो ... ॥ ५३ ॥
सर्वमात्ममयं मोहः सर्वमात्ममयं भयम् । सर्वमात्ममयं चिन्ता आत्मनो ... ॥ ५४ ॥
सर्वमात्ममयं धैर्यं सर्वमात्ममयं ध्रुवम् । सर्वमात्ममयं सत्यं आत्मनो ... ॥ ५५ ॥
सर्वमात्ममयं बोधं सर्वमात्ममयं दृढम् । सर्वमात्ममयं मेयं आत्मनो ... ॥ ५६ ॥
सर्वमात्ममयं गुह्यं सर्वमात्ममयं शुभम् । सर्वमात्ममयं शुद्धं आत्मनो ... ॥ ५७ ॥
सर्वमात्ममयं सर्वं सत्यमात्मा सदात्मकः । पूर्णमात्मा क्षयं ह्यात्मा परमात्मा परात्परः ॥
इतोऽप्यात्मा ततोऽप्यात्मा ह्यात्मैवात्मा ततस्ततः । सर्वमात्ममयं सत्यं आत्मनो ... ॥ ५९ ॥
सर्वमात्मस्वरूपं हि दृश्यादृश्यं चराचरम् । सर्वमात्ममयं भुत्वा मुक्तिमाप्नोति मानवः ॥ ६० ॥

स्वतन्त्रशक्तिर्भगवानुमाधवो
विचित्रकार्यात्मकजाग्रतस्य ।
सुकारणं कार्यपरंपराभिः
स एव मायाविततोऽप्ययात्मा ॥ ६१ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे सर्वमात्मप्रकरणं नाम
त्रयोदशोऽध्यायः ॥

———

## ॥ चतुर्दशोऽध्यायः ॥

ऋभुः —

शृणुष्व सर्वं ब्रह्मैव सत्यं सत्यं शिवं शपे। निश्चयेनात्मयोगीन्द्र अन्यत्त किञ्चिन्न किञ्चन ॥ १ ॥

[1]अणुमात्रमसद्रूपं अणुमात्रमिदं ध्रुवम्। अणुमात्रशरीरं च अन्यत् ... ... ॥ २ ॥

सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम्। नित्यनिर्मलशुद्धात्मा अन्यत्त किञ्चिन्न किञ्चन ॥

अणुमात्रे विचिन्त्यात्मा सर्वं न ह्यणुमात्रकम्। अणुमात्रमसंकल्पो अन्यत्त किञ्चिन्न किञ्चन ॥

चैतन्यमात्रं सङ्कल्पं चैतन्यं परमं पदम्। आनन्दं परमं मानं इदं दृश्यं न किञ्चन। ५ ॥

चैतन्यमात्रमोंकारः चैतन्यं सकलं स्वयम्। आनन्दं ... ... ... ... ॥ ६ ॥

आनन्दश्चाहमेवास्मि अहमेव चिदव्ययः आनन्दं ... ... ... ... ॥ ७ ॥

अहमेव हि गुप्तात्मा अहमेव निरन्तरम्। आनन्दं ... ... ... ... ॥ ८ ॥

अहमेव परं ब्रह्म अहमेव गुरोर्गुरुः। आनन्दं ... ... ... ... ॥ ९ ॥

अहमेवाखिलाधार अहमेव सुखात् सुखम्। आनन्दं ... ... ... ... ॥ १० ॥

अहमेव परं ज्योतिरहमेवाखिलात्मकः। आनन्दं ... ॥ ११ ॥

अहमेव हि तृप्तात्मा अहमेव हि निर्गुणः। आनन्दं ... ॥ १२ ॥

अहमेव हि पूर्णात्मा अहमेव पुरातनः। आनन्दं ... ॥ १३ ॥

अहमेव हि शान्तात्मा अहमेव हि शाश्वतः। आनन्दं ... । १४ ॥

अहमेव हि सर्वत्र अहमेव हि सुस्थिरः। आनन्दं ... ॥ १५ ॥

अहमेव हि जीवात्मा अहमेव परात्परः। आनन्दं ... ॥ १६ ॥

अहमेव हि वाक्यार्थो अहमेव हि शङ्करः। आनन्दं ... ॥ १७ ॥

अहमेव हि दुर्लक्ष्य अहमेव प्रकाशकः। आनन्दं ... ॥ १८ ॥

अहमेवाहमेवाहं अहमेव स्वयं स्वयम्। अहमेव परानन्द अहमेव हि चिन्मयः ॥ १९ ॥

अहमेव हि शुद्धात्मा अहमेव हि सन्मयः। अहमेव हि शून्यात्मा अहमेव हि सर्वगः ॥ २० ॥

अहमेव हि वेदान्तः अहमेव हि चित्परः ॥ २१ ॥

अहमेव हि चिन्मात्रं अहमेव हि चिन्मयः। [2]अन्यन्न किञ्चित् चिद्रूपादहं बाह्यविवर्जितः ॥

---

१ अणुमात्रं स्वरूपं च C २ अहं न C

अहं न किञ्चिद्ब्रह्मात्मा अहं नान्यदहं परम् : नित्यशुद्धविमुक्तोऽहं नित्यतृप्तो निरञ्जनः ॥ २३ ॥

आनन्दं परमानन्दमन्यत् किञ्चिन्न किञ्चन ।
नास्ति किञ्चिन्नास्ति किञ्चित् नास्ति किञ्चित् परात्परात् ॥ २४ ॥

आत्मैवेदं जगत सर्वमात्मैवेदं मनोभवम्। आत्मैवेदं सुखं सर्वं आत्मैवेदमिदं जगत् ॥ २५ ॥
ब्रह्मैव सर्वं चिन्मात्रं अहं ब्रह्मैव केवलम्। आनन्द ... ॥ २६ ॥

दृश्यं सर्वं परं ब्रह्म दृश्यं नास्त्येव सर्वदा ।
ब्रह्मैव सर्वसङ्कल्पो ब्रह्मैव न परं क्वचित् । आनन्दं परमं ... ॥ २७ ॥

ब्रह्मैव,ब्रह्म चिद्रूपं चिदेवं चिन्मयं जगत् । असदेव जगत्सर्वं असदेव प्रपञ्चकम् ॥ २८ ॥
असदेवाहमेवास्मि असदेव त्वमेव हि । असदेव मनोवृत्तिरसदेव गुणागुणौ ॥ २९ ॥
असदेव मही सर्वा असदेव जलं सदा । असदेव जगत्खानि असदेव च तैजकम् ॥ ३० ॥
असदेव सदा वायुरसदेवेदमित्यपि । अहङ्कारमसद्बुद्धिर्ब्रह्मैव जगतां गणः ॥ ३१ ॥
असदेव सदा चित्तमात्मैवेदं न संशयः । असदेवासुराः सर्वे असदेवेश्वराकृतिः ॥ ३२ ॥
असदेव सदा विश्वं असदेव सदा हरिः। असदेव सदा ब्रह्मा तत्सृष्टिरसदेव हि ॥ ३३ ॥
असदेव महादेवः असदेव गणेश्वरः । असदेव सदा चोमा असत् स्कन्दो गणेश्वराः ॥ ३४ ॥
असदेव सदा जीव असदेव हि देहकम् । असदेव सदा वेदा असद्देहान्तमेव च ॥ ३५ ॥
धर्मशास्त्रं पुराणं च असत्ये सत्यविभ्रमः । असदेव हि सर्वं च असदेव परंपरा ॥ ३६ ॥
असदेवेदमाद्यन्तमसदेव मुनीश्वराः । असदेव सदा लोका लोक्या अप्यसदेव हि ॥ ३७ ॥
असदेव सुखं दुःखं असदेव जयाजयौ । असदेव परं बन्धमसन्मुक्तिरपि ध्रुवम् ॥ ३८ ॥
असदेव मृतिर्जन्म असदेव जडाजडम् । असदेव जगत् सर्वमसदेवात्मभावना ॥ ३९ ॥
असदेव च रूपाणि असदेव पदं शुभम् । असदेव सदा चाहमसदेव त्वमेव हि ॥ ४० ॥
असदेव हि सर्वत्र असदेव चलाचलम् । असच्च सकलं भूतमसत्यं सकलं फलम् ॥ ४१ ॥
असत्यमखिलं विश्वमसत्यमखिलो गुणः। असत्यमखिलं शेषमसत्यमखिलं द्वयम् ॥ ४२ ॥
असत्यमखिलं पापं असत्यं श्रवणत्रयम् । असत्यं च सजातीयविजातीयमसत् सदा ॥ ४३ ॥
असत्यमधिकाराश्च अनित्या विषयाः सदा । असदेव हि देवाद्या असदेव प्रयोजनम् ॥ ४४ ॥

असदेव शमं नित्यं असदेव दमोऽनिशम् । असदेव ससन्देहं असद्युद्धं सुरासुरम् ।। ४५ ।।
असदेवेशभावं चासदेवोपास्यमेव हि । असच्च कालदेशादि असत् क्षेत्रादिभावनम् ।। ४६ ।।
तज्जन्यधर्माधर्मौ च असदेव विनिर्णयः । असच्च सर्वकर्माणि असदस्वपरभ्रमः ।। ४७ ।।
असच्च चित्तसद्भाव असच्च स्थूलदेहकम् । असच्च लिङ्गदेहं च सत्यं सत्यं शिवं शपे ।। ४८ ।।
असत्यं स्वर्गनरकं असत्यं तद्भवं सुखम् । असच्च ग्राहकं सर्वं असत्यं ग्राह्यरूपकम् ।। ४९ ।।
असत्यं सत्यवज्ज्ञानं असत्यं ते शिवे शपे । असत्यं वर्तमानाख्यं असत्यं भूतरूपकम् ।। ५० ।।
असत्यं हि भविष्याख्यं सत्यं सत्यं शिवे शपे । असत् पूर्वमसन्मध्यमसदन्तमिदं जगत् ।। ५१ ।।
असदेव सदा प्रायं असदेव न संशयः । असदेव सदा ज्ञानमज्ञानज्ञेयमेव च ।। ५२ ।।
असत्यं सर्वदा विश्वमसत्यं सर्वदा जडम् । असत्यं सर्वदा दृश्यं भाति तौ शृङ्गमृङ्गवत् ।। ५३ ।।
असत्यं सर्वदा भावः असत्यं कोशसंभवम् । असत्यं सकलं मन्त्रं सत्यं सत्यं न संशयः ।। ५४ ।।
आत्मनोऽन्यज्जगन्नास्ति नास्त्यनात्ममिदं सदा । आत्मनोऽन्यन्मृषैवेदं सत्यं सत्य न संशयः ।।

आत्मनोऽन्यत्सुखं नास्ति आत्मनोऽन्यच्च किञ्चन ।
आत्मनोऽन्या गतिर्नास्ति स्थितमात्मनि सर्वदा ।। ५६ ।।

आत्मनोन्यन्न हि क्वापि आत्मनोऽन्यत् तृणं नहि ।
आत्मनोऽन्यन्न किञ्चिच्च क्वचिदप्यात्मनो नहि ।। ५७ ।।

आत्मानन्दप्रकरणमेतत्तेऽभिहितं मया । यः शृणोति सकृद्विद्वान् ब्रह्मैव भवति स्वयम् ।। ५८ ।।
सकृच्छ्रवणमात्रेण सद्योबन्धविमुक्तिदम् । एतद्ग्रन्थार्थमात्रं वै गृणन् सर्वैर्विमुच्यते ।। ५९ ।।

सूतः —

पूर्णं सत्यं महेशं भज नियतहृदा योऽन्तरायैर्विहीनः
सो नित्यो निर्विकल्पो भवति भुवि सदा ब्रह्मभूतो [1]ऋतात्मा ।
विच्छिन्नग्रन्थिरीशे शिवविमलपदे विद्यते भासतेऽन्तः
आरामोऽन्तर्भवति नियतं विश्वभूतो मृतश्च ।। ६० ।।

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे आत्मानन्दप्रकरणवर्णनं नाम चतुर्दशोऽध्यायः ।।

---

१ यतात्मा G

## ॥ पञ्चदशोऽध्यायः ॥

महारहस्यं वक्ष्यामि गुह्यात् गुह्यतरं पुनः । अत्यन्तदुर्लभं लोके सर्वं ब्रह्मैव केवलम् ॥ १ ॥
ब्रह्ममात्रमिदं सर्वं ब्रह्ममात्रमसच्च हि । ब्रह्ममात्रं श्रुतं सर्वं सर्वं ब्रह्मैव केवलम् ॥ २ ॥
ब्रह्ममात्रं महायन्त्रं ब्रह्ममात्रं क्रियाफलम् । ब्रह्ममात्रं महावाक्यं सर्वं ... ॥ ३ ॥
ब्रह्ममात्रं जगत्सर्वं ब्रह्ममात्रं जडाजडम् । ब्रह्ममात्रं परं देहं सर्वं ... ॥ ४ ॥
ब्रह्ममात्रं गुणं प्रोक्तं ब्रह्ममात्रमहं महत् । ब्रह्ममात्रं परं ब्रह्म सर्वं ... ॥ ५ ॥
ब्रह्ममात्रमिदं वस्तु ब्रह्ममात्रं स च पुमान् । ब्रह्ममात्रं च यत् किञ्चित् सर्वं ... ॥ ६ ॥
ब्रह्ममात्रमनन्तात्मा ब्रह्ममात्रं परं सुखम् । ब्रह्ममात्रं परं ज्ञानं सर्वं ... ॥ ७ ॥
ब्रह्ममात्रं परं पारं ब्रह्ममात्रं पुरत्रयम् । ब्रह्ममात्रमनेकत्वं सर्वं ... ॥ ८ ॥
ब्रह्मैव केवलं गन्धं ब्रह्मैव परमं पदम् । ब्रह्मैव केवलं घ्राणं सर्वं ... ९ ॥
ब्रह्मैव केवलं स्पर्शं शब्दं ब्रह्मैव केवलम् । ब्रह्मैव केवलं रूपं सर्वं ... ॥ १० ॥
ब्रह्मैव केवलं लोकं रसो ब्रह्मैव केवलम् । ब्रह्मैव केवलं चित्तं सर्वं ... ॥ ११ ॥
तत्पदं च सदा ब्रह्म त्वंपदं ब्रह्म एव हि । असीत्येव पदं ब्रह्म [1] ब्रह्मैक्यं केवलं सदा ॥ १२ ॥
ब्रह्मैव केवलं गुह्यं ब्रह्म बाह्यं च केवलम् । ब्रह्मैव केवलं नित्यं सर्वं ... ॥ १३ ॥
ब्रह्मैव तज्जलानीति जगदाद्यन्तयोः स्थितिः । ब्रह्मैव जगदाद्यन्तं सर्वं ब्रह्मैव ... ॥ १४ ॥
ब्रह्मैव चास्ति नास्तीति ब्रह्मैवाहं न संशयः । ब्रह्मैव सर्वं यत् किञ्चित् सर्वं ... ॥ १५ ॥
ब्रह्मैव जाग्रत् सर्वं हि ब्रह्ममात्रमहं परम् । ब्रह्मैव सत्यमस्तित्वं ब्रह्मैव तुर्यमुच्यते । १६ ॥
ब्रह्मैव सत्ता ब्रह्मैव ब्रह्मैव गुरुभावनम् । ब्रह्मैव शिष्यसङ्कल्पं मोक्षं ब्रह्मैव केवलम् ॥ १७ ॥
पूर्वापरं च ब्रह्मैव पूर्णं ब्रह्म सनातनम् । ब्रह्मैव केवलं साक्षात् सर्वं ब्रह्मैव केवलम् ॥ १८ ॥
ब्रह्म सच्चित्सुखं ब्रह्म पूर्णं ब्रह्म सनातनम् । ब्रह्मैव केवलं साक्षात् सर्वं ... ॥ १९ ॥
ब्रह्मैव केवलं सच्चित् सुखं ब्रह्मैव केवलम् । आनन्दं ब्रह्म सर्वत्र प्रियरूपमवस्थितम् ॥ २० ॥
शुभवासनया जीवं शिववद्भाति सर्वदा । पापवासनया जीवो नरकं [2] भोक्तृवत् स्थितम् ॥
ब्रह्मैवेन्द्रियवद्भानं ब्रह्मैव विषयादिवत् । ब्रह्मैव व्यवहारश्च सर्वं ... ॥ २२ ॥

---

१ सर्वं ब्रह्मैव केवलं C  २ मोक्तुमिच्छतीति पाठः स्यादपि ।

ब्रह्मैव सर्वमानन्दं ब्रह्मैव ज्ञानविग्रहम् । ब्रह्मैव मायाकार्याख्यं सर्वं ... ॥ २३ ॥
ब्रह्मैव यज्ञसन्धानं ब्रह्मैव हृदयाम्बरम् । ब्रह्मैव मोक्षसाराख्यं सर्वं ... ॥ २४ ॥
ब्रह्मैव शुद्धाशुद्धं च सर्वं ब्रह्मैव कारणम् । ब्रह्मैव कार्यं भूलोकं सर्वं ... ॥ २५ ॥
ब्रह्मैव नित्यतृप्तात्मा ब्रह्मैव सकलं दिनम् । ब्रह्मैव तूष्णीं भूतात्मा सर्वं ... ॥ २६ ॥
ब्रह्मैव वेदसारार्थः ब्रह्मैव ध्यानगोचरम् । ब्रह्मैव योगयोगाख्यं सर्वं ... ॥ २७ ॥
नानारूपत्वाद्ब्रह्म उपाधित्वेन दृश्यते । मायामात्रमिति ज्ञात्वा वस्तुतो नास्ति तत्त्वतः ॥ २८ ॥
ब्रह्मैव लोकवद्भाति ब्रह्मैव जनवत्तथा । ब्रह्मैव रूपवद्भाति वस्तुतो नास्ति किञ्चन ॥ २९ ॥
ब्रह्मैव देवताकारं ब्रह्मैव मुनिमण्डलम् । ब्रह्मैव ध्यानरूपं च सर्वं ब्रह्मैव केवलम् ॥ ३० ॥
ब्रह्मैव ज्ञानविज्ञानं ब्रह्मैव परमेश्वरः । ब्रह्मैव शुद्धबुद्धात्मा सर्वं ... ॥ ३१ ॥
ब्रह्मैव परमानन्दं ब्रह्मैव व्यापकं महत् । ब्रह्मैव परमार्थं च सर्वं ... ॥ ३२ ॥
ब्रह्मैव यज्ञरूपं च ब्रह्म हव्यं च केवलम् । ब्रह्मैव जीवभूतात्मा सर्वं ... ॥ ३३ ॥
ब्रह्मैव सकलं लोकं ब्रह्मैव गुरुशिष्यकम् । [1]ब्रह्मैव सर्वसिद्धिं च सर्वं ... ॥ ३४ ॥
ब्रह्मैव सर्वमन्त्रं ब्रह्मैव सकलं जपम् । ब्रह्मैव सर्वकार्यं च सर्वं ... ॥ ३५ ॥
ब्रह्मैव सर्वशान्तत्वं ब्रह्मैव हृदयान्तरम् । ब्रह्मैव सर्वकैवल्यं सर्वं ... ॥ ३६ ॥
ब्रह्मैवाक्षरभावश्च ब्रह्मैवाक्षरलक्षणम् । ब्रह्मैव ब्रह्मरूपं च सर्वं ... ॥ ३७ ॥
ब्रह्मैव सत्यमवनं ब्रह्मैवाहं न संशयः । ब्रह्मैव तत्पदार्थश्च सर्वं ... ॥ ३८ ॥
ब्रह्मैवाहंपदार्थश्च ब्रह्मैव परमेश्वरः । ब्रह्मैव त्वंपदार्थश्च सर्वं ... ॥ ३९ ॥
ब्रह्मैव यद्यत् परमं ब्रह्मैवेति परायणम् । ब्रह्मैव कलनाभावं सर्वं ... ॥ ४० ॥
ब्रह्म सर्वं न सन्देहो ब्रह्मैव त्वं सदाशिवः । ब्रह्मैवेदं जगत् सर्वं ... ॥ ४१ ॥
ब्रह्मैव सर्वसुलभं ब्रह्मैवात्मा स्वयं स्वयम् । ब्रह्मैव सुखमात्रत्वात् सर्वं ... ॥ ४२ ॥
ब्रह्मैव सर्वं ब्रह्मैव ब्रह्मणोऽन्यदसत् सदा । ब्रह्मैव ब्रह्ममात्रात्मा सर्वं ... ॥ ४३ ॥
ब्रह्मैव सर्ववाक्यार्थः ब्रह्मैव परमं पदम् । ब्रह्मैव सत्यासत्यं च सर्वं ... ॥ ४४ ॥
ब्रह्मैवैकमनन्तं च ब्रह्मैवैकं न संशयः ब्रह्मैवैकं चिदानन्दः सर्वं ... ॥ ४५ ॥
ब्रह्मैवैकं सुखं नित्यं ब्रह्मैवैकं परायणम् । ब्रह्मैवैकं परं ब्रह्म सर्वं ... ॥ ४६ ॥

---

१ लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति परिभाषणादिव अत्र ग्रन्थे लिङ्गविचारो न मनसिकृतः ।

ब्रह्मैव चित् स्वयं स्वस्थं ब्रह्मैव गुणवर्जितम् । ब्रह्मैवात्यन्तिकं सर्वं सर्वं ··· ॥ ४७ ॥

ब्रह्मैव निर्मलं सर्वं ब्रह्मैव सुलभं सदा । ब्रह्मैव सत्यं सत्यानां सर्वं ··· ॥ ४८ ॥

ब्रह्मैव सौख्यं सौख्यं च ब्रह्मैवाहं सुखात्मकम् । ब्रह्मैव सर्वदा प्रोक्तं सर्वं ··· ॥ ४९ ॥

ब्रह्मैवमखिलं ब्रह्म ब्रह्मैकं सर्वसाक्षिकम् । ब्रह्मैव भूरिभवनं सर्वं ब्रह्मैव ··· ॥ ५० ॥

ब्रह्मैव परिपूर्णात्मा ब्रह्मैवं सारमव्ययम् । ब्रह्मैव कारणं मूलं ब्रह्मैवैकं परायणम् ॥ ५१ ॥

ब्रह्मैव सर्वभूतात्मा ब्रह्मैव सुखविग्रहम् । ब्रह्मैव नित्यतृप्तात्मा सर्वं ब्रह्मैव ··· ॥ ५२ ॥

ब्रह्मैवाद्वैतमात्रात्मा ब्रह्मैवाकाशवत् प्रभुः । ब्रह्मैव हृदयानन्दः सर्वं ब्रह्मैव ··· ॥ ५३ ॥

ब्रह्मणोऽन्यत् परं नास्ति ब्रह्मणोऽन्यज्जगन्न च । ब्रह्मणोऽन्यदहं नाहं सर्वं ··· ॥ ५४ ॥

ब्रह्मैवान्यसुखं नास्ति ब्रह्मणोऽन्यत् फलं न हि । ब्रह्मणोऽन्यत् तृणं नास्ति सर्वं ··· ॥ ५५ ॥

ब्रह्मणोऽन्यत् पदं मिथ्या ब्रह्मणोऽन्यन्न किञ्चन । ब्रह्मणोऽन्यज्जगन्मिथ्या सर्वं ··· । ५६ ॥

ब्रह्मणोऽन्यदहं मिथ्या ब्रह्ममात्रोऽहमेव हि । ब्रह्मणोऽन्यो गुरुर्नास्ति सर्वं ... ॥ ५७ ॥

ब्रह्मणोऽन्यदसत् कार्यं ब्रह्मणोऽन्यदसद्वपुः । ब्रह्मणोऽन्यन्मनो नास्ति सर्वं ॥ ५८ ॥

ब्रह्मणोऽन्यज्जगन्मिथ्या ब्रह्मणोऽन्यन्न किञ्चन । ब्रह्मणोऽन्यन्न चाहन्ता सर्वं ... ॥ ५९ ॥

ब्रह्मैव सर्वमित्येवं प्रोक्तं प्रकरणं मया । यः पठेत् भावयेत् सद्यो ब्रह्मैव भवति स्वयम् ॥ ६० ॥

अस्ति ब्रह्मेति वेदे हृदमिदमखिलं [1] वेद सो सम्भवेत (?)
सत्यासत्य जगत्तथा श्रुतिवचो ब्रह्मैव तज्जादिकम् ।
यतो विद्येवेदं परिलुठति मोहेन जगति
अतो विद्यापादो [2] परिभवति ब्रह्मैव हि सदा ॥ ६१ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे ब्रह्मैव सर्वं प्रकरणनिरूपणं नाम पञ्चदशोऽध्यायः ॥

---

१ वेदसारोद्भवेत C  २ प्रासः C

## ॥ षोडशोऽध्यायः ॥

ऋभुः —

अत्यन्तं दुर्लभं वक्ष्ये वेदशास्त्रागमादिषु । शृण्वन्तु सावधानेन असदेव हि केवलम् ॥ १ ॥

यत्किञ्चिद् दृश्यते लोके यत्किञ्चिद्भाषते सदा । यत्किञ्चिद् भुज्यते क्वापि तत्सर्वमसदेव हि ॥

यद्यत् किञ्चिज्जपं वापि स्नानं वा जलमेव वा । आत्मनोऽन्यत् परं यद्यत् असत् सर्वं न संशयः ॥

चित्तकार्यं बुद्धिकार्यं मायाकार्यं तथैव हि । आत्मनोऽन्यत् परं किञ्चित् तत्सर्वमसदेव हि ॥

अहन्तायाः परं रूपं इदंत्वं सत्यमित्यपि । आत्मनोऽन्यत् परं किञ्चित् तत्सर्वमसदेव हि ॥

नानात्वमेव रूपत्वं व्यवहारः क्वचित् क्वचित् । आत्मीय एव सर्वत्र तत्सर्वं ... ॥ ६ ॥

तत्वभेदं जगद्भेदं सर्वभेदमसत्यकम् । इच्छाभेदं जगद्भेदं तत्सर्वं — ॥ ७ ॥

द्वैतभेदं चित्रभेदं जाग्रद्भेदं मनोमयम् । अहंभेदमिदंभेद [1]मसदेव हि केवलम् ॥ ८ ॥

स्वप्नभेदं सुप्तिभेदं तुर्यभेदमभेदकम् । कर्तृभेदं कार्यभेदं गुणभेदं रसात्मकम् ।
लिङ्गभेदमिदंभेदमसदेव हि केवलम् ॥ ९ ॥

आत्मभेदमसद्भेदं सद्भेदमसदण्वपि (?) । अत्यन्ताभावसद्भेदं असदेव ... ॥ १० ॥

अस्तिभेदं नास्तिभेदमभेदं भेदविभ्रमः । भ्रान्तिभेदं भूतिभेदं असदेव ... ॥ ११ ॥

पुनरन्यत्र सद्भेदमिदमन्यत्र वा भयम् । पुण्यभेदं पापभेदं [2]असदेव ... ॥ १२ ॥

सङ्कल्पभेदं तद्भेदं सदा सर्वत्र भेदकम् । ज्ञानाज्ञानमयं सर्वं असदेव ... ॥ १३ ॥

ब्रह्मभेदं क्षत्रभेदं भूतभौतिकभेदकम् । इदंभेदमहंभेदं असदेव ... ॥ १४ ॥

वेदभेदं देवभेदं लोकानां भेदमीदृशम् । पञ्चाक्षरमसन्नित्यं असदेव ... ॥ १५ ॥

ज्ञानेन्द्रियमसन्नित्यं कर्मेन्द्रियमसत्सदा । असदेव च शब्दाख्यं असत्यं तत्फलं तथा ॥ १६ ॥

असत्यं पञ्चभूताख्यमसत्यं पञ्चदेवताः । असत्यं पञ्चकोशाख्यं असदेव ... ॥ १७ ॥

असत्यं षड्विकारादि असत्यं षट्कमूर्मिणाम् । असत्यमरिषड्वर्गमसत्यं षडृतुस्तथा ॥ १८ ॥

असत्यं द्वादशमासाः असत्यं वत्सरस्तथा । असत्यं षडवस्थाख्यं षट्कालमसदेव हि ॥ १९ ॥

असत्यमेव षट्शास्त्रं असदेव हि केवलम् । असदेव सदा ज्ञानं असदेव हि केवलम् ॥ २० ॥

---

१ तत्सर्वमसदेव हि C एवमुत्तरत्रापि   २ असद्भेदमनण्वपि C

अनुक्तमुक्तं नोक्तं च (?) असदेव हि केवलम् । असत्प्रकरणं प्रोक्तं सर्ववेदेषु दुर्लभम् ॥ २१ ॥
भूयः शृणु त्वं योगीन्द्र साक्षान्मोक्षं ब्रवीम्यहम् । सन्मात्रमहमेवात्मा सच्चिदानन्दकेवलम् ॥
सन्मयानन्दभूतात्मा चिन्मयानन्दसद्घनः । चिन्मयानन्दसन्दोहचिदानन्दो हि केवलम् ॥
चिन्मात्रज्योतिरानन्दश्चिन्मात्रज्योतिविग्रहः । चिन्मात्रज्योतिरीशानः सर्वदानन्दकेवलम् ॥
चिन्मात्रज्योतिरखिलं चिन्मात्रज्योतिरस्म्यहम् । चिन्मात्रं सर्वमेवाहं सर्वं चिन्मात्रमेव हि ॥
चिन्मात्रमेव चित्तं च चिन्मात्रं मोक्ष एव च । चिन्मात्रमेव मननं चिन्मात्रं श्रवणं तथा ॥
चिन्मात्रमहमेवास्मि सर्वं चिन्मात्रमेव हि । चिन्मात्रं निर्गुणं ब्रह्म चिन्मात्रं सगुणं परम् ॥
चिन्मात्रमहमेव त्वं सर्वं चिन्मात्रमेव हि । चिन्मात्रमेव हृदयं चिन्मात्रं चिन्मयं सदा ॥
चिदेव त्वं चिदेवाहं सर्वं चिन्मात्रमेव हि । चिन्मात्रमेव शान्तत्वं चिन्मात्रं शान्तिलक्षणम् ॥
चिन्मात्रमेव विज्ञानं चिन्मात्रं ब्रह्म केवलम् । चिन्मात्रमेव संकल्पं चिन्मात्रं भुवनत्रयम् ॥
चिन्मात्रमेव सर्वत्र चिन्मात्रं व्यापको गुरुः । चिन्मात्रमेव शुद्धत्वं चिन्मात्रं ब्रह्म केवलम् ॥
चिन्मात्रमेव चैतन्यं चिन्मात्रं भास्करादिकम् । चिन्मात्रमेव सन्मात्रं चिन्मात्रं जगदेव हि ॥
चिन्मात्रमेव सत्कर्म चिन्मात्रं नित्यमङ्गलम् । चिन्मात्रमेव हि ब्रह्म चिन्मात्रं हरिरेव हि ॥
चिन्मात्रमेव मौनात्मा चिन्मात्रं सिद्धिरेव हि । चिन्मात्रमेव वनितं चिन्मात्रं सुखमेव हि ॥
चिन्मात्रमेव गगनं चिन्मात्रं पर्वतं जलम् । चिन्मात्रमेव नक्षत्रं चिन्मात्रं मेघमेव हि ॥ ३५ ॥
चिदेव देवताकारं चिदेव शिवपूजनम् । चिन्मात्रमेव काठिन्यं चिन्मात्रं शीतलं जलम् ॥ ३६ ॥
चिन्मात्रमेव मन्तव्यं चिन्मात्रं दृश्यभावनम् । चिन्मात्रमेव सकलं चिन्मात्रं भुवनं पिता ॥
चिन्मात्रमेव जननी चिन्मात्रान्नास्ति किञ्चन । चिन्मात्रमेव नयनं चिन्मात्रं श्रवणं सुखम् ॥
चिन्मात्रमेव करणं चिन्मात्रं कार्यमीश्वरम् । चिन्मात्रं चिन्मयं सत्यं चिन्मात्रं नास्ति नास्ति हि ॥
चिन्मात्रमेव वेदान्तं चिन्मात्रं ब्रह्म निश्चयम् । चिन्मात्रमेव सद्भाति चिन्मात्रं भाति नित्यशः ॥
चिदेव जगदाकारं चिदेव परमं पदम् । चिदेव हि चिदाकारं चिदेव हि चिदव्ययः ॥ ४१ ॥
चिदेव हि शिवाकारं चिदेव शिवविग्रहः । चिदाकारमिदं सर्वं चिदाकारं सुखासुखम् ॥ ४२ ॥
चिदेव हि जडाकारं चिदेव हि निरन्तरम् । चिदेव कलनाकारं जीवाकारं चिदेव हि ॥ ४३ ॥
चिदेव देवताकारं चिदेव शिवपूजनम् । चिदेव त्वं चिदेवाहं सर्वं चिन्मात्रमेव हि ॥ ४४ ॥

चिदेव परमाकारं चिदेव हि निरामयम् । चिन्मात्रमेव सततं चिन्मात्रं हि परायणम् ॥ ४५ ॥
चिन्मात्रमेव वैराग्यं चिन्मात्रं निर्गुणं सदा । चिन्मात्रमेव सञ्चारं चिन्मात्रं मन्त्रतन्त्रकम् ॥
चिदाकारमिदं विश्वं चिदाकारं जगत्त्रयम् । चिदाकारमहङ्कारं चिदाकारं परात् परम् ॥ ४७ ॥
चिदाकारमिदं भेदं चिदाकारं तृणादिकम् । चिदाकारं चिदाकाशं चिदाकारमरूपकम् ॥ ४८ ॥
चिदाकारं महानन्दं चिदाकारं सुखात् सुखम् । चिदाकारं सुखं भोज्यं चिदाकारं परं गुरुम् (?)॥
चिदाकारमिदं विश्वं चिदाकारमिदं पुमान् । चिदाकारमजं शान्तं चिदाकारमनामयम् ॥ ५० ॥
चिदाकारं परातीतं चिदाकारं चिदेव हि । चिदाकारं चिदाकाशं चिदाकाशं शिवायते ॥ ५१ ॥
चिदाकारं सदा चित्तं चिदाकारं सदाऽमृतम् । चिदाकारं चिदाकाशं तदा सर्वान्तरान्तरम् ॥
चिदाकारमिदं पूर्णं चिदाकारमिदं प्रियम् । चिदाकारमिदं सत्रं चिदाकारमहं सदा ॥ ५३ ॥
चिदाकारमिदं स्थानं चिदाकारं हृदम्बरम् । चिदाबोधं चिदाकारं चिदाकाशं ततं सदा ॥ ५४ ॥
चिदाकारं सदा पूर्णं चिदाकारं महत्फलम् । चिदाकारं परं तत्त्वं चिदाकारं परं भवान् ॥ ५५ ॥
चिदाकारं सदामोदं चिदाकारं सदा मृतम् । चिदाकारं परं ब्रह्म चिदहं चिदहं सदा ॥ ५६ ॥
चिदहं चिदहं चित्तं चित्तं स्वस्थ न संशयः । चिदेव जगदाकारं चिदेव शिवशङ्करः ॥ ५७ ॥
चिदेव गगनाकारं चिदेव गणनायकम् । चिदेव भुवनाकारं चिदेव भवभावनम् ॥ ५८ ॥
चिदेव हृदयाकारं चिदेव हृदयेश्वरः । चिदेव अमृताकारं चिदेव चलनास्पदम् ॥ ५९ ॥
चिदेवाहं चिदेवाहं चिन्मयं चिन्मयं सदा । चिदेव सत्यविश्वासं चिदेव ब्रह्मभावनम् ॥ ६० ॥
चिदेव परमं देवं (?) चिदेव हृदयालयम् । चिदेव सकलाकारं चिदेव जनमण्डलम् ॥ ६१ ॥
चिदेव सर्वमानन्दं चिदेव प्रियभाषणम् । चिदेव त्वं चिदेवाहं सर्वं चिन्मात्रमेव हि ॥ ६२ ॥
चिदेव परमं ध्यानं चिदेव परमर्हणम् । चिदेव त्वं चिदेवाहं सर्वं चिन्मयमेव हि ॥ ६३ ॥
चिदेव त्वं प्रकरणं सर्ववेदेषु दुर्लभम् । सकृच्छ्रवणमात्रेण ब्रह्मैव भवति ध्रुवम् ॥ ६४ ॥

यस्याभिध्यानयोगाज्जनिमृतिविवशाः शाश्वतं वृत्तिमियें
मायामोहैर्विहीना हृदुदरभयजं छिद्यते ग्रन्थिजातम् ।
विश्वं विश्वाधिकरसं भवति भवतो दर्शनादाप्तकामः
सो(?) नित्यो निर्विकल्पो भवति भुवि सदा ब्रह्मभूतोऽन्तरात्मा ॥ ६५ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे चिदेवत्वंप्रकरणवर्णनं नाम षोडशोऽध्यायः ॥

## ॥ सप्तदशोऽध्यायः ॥

ऋभुः —

निदाघ शृणु गुह्यं मे सर्वसिद्धान्तसङ्ग्रहम् । द्वैताद्वैतमिदं शून्यं शान्तं ब्रह्मैव सर्वदा ॥ १ ॥

अहमेव परं ब्रह्म अहमेव परात् परम् । द्वैताद्वैतमिदं शून्यं शान्तं ब्रह्मैव केवलम् ॥ २ ॥

अहमेव हि शान्तात्मा अहमेव हि सर्वगः । अहमेव हि शुद्धात्मा अहमेव हि नित्यशः ॥ ३ ॥

अहमेव हि नानात्मा अहमेव हि निर्गुणः ; अहमेव हि नित्यात्मा अहमेव हि कारणम् ॥ ४ ॥

अहमेव हि जगत् सर्वं इदं चैवाहमेव हि । अहमेव हि मोदात्मा अहमेव हि मुक्तिदः ॥

अहमेव हि चैतन्यं अहमेव हि चिन्मयः । अहमेव हि चैतन्यमहं सर्वान्तरः सदा ॥ ६ ॥

अहमेव हि भूतात्मा भौतिकं त्वहमेव हि । अहमेव त्वमेवाहमहमेवाहमेव हि ॥ ७ ॥

जीवात्मा त्वहमेवाहमहमेव परेश्वरः । अहमेव विभुर्नित्यमहमेव स्वयं सदा ॥ ८ ॥

अहमेवाक्षरं साक्षाद् अहमेव हि मे प्रियम् । अहमेव सदा ब्रह्म अहमेव सदाऽव्ययः ॥ ९ ॥

अहमेवा [1]हमेवाग्रे अहमेवान्तरान्तरः । अहमेव चिदाकाशमहमेवावभासकः ॥ १० ॥

अहमेव सदा स्रष्टा अहमेव हि रक्षकः । अहमेव हि लीलात्मा अहमेव हि निश्चयः ॥ ११ ॥

अहमेव सदा साक्षी त्वमेव त्वं पुरातनः । त्वमेव हि परं ब्रह्म त्वमेव हि निरन्तरम् ॥ १२ ॥

अहमेवाहमेवाहमहमेव त्वमेव हि । अहमेवाद्वयाकारः अहमेव विदेहकः ॥ १३ ॥

अहमेव ममाधारः अहमेव सदात्मकः । अहमेवोपशान्तात्मा अहमेव [2] तितिक्षकः ॥ १४ ॥

अहमेव समाधानं श्रद्धा चाप्यहमेव हि । अहमेव महाव्योम अहमेव कलात्मकः ॥ १५ ॥

अहमेव हि कामान्तः अहमेव सदान्तरः । अहमेव पुरस्ताच्च अहं पश्चादहं सदा ॥ १६ ॥

अहमेव हि विश्वात्मा अहमेव हि केवलम् । अहमेव परं ब्रह्म अहमेव परात्परः ॥ १७ ॥

अहमेव चिदानन्दः अहमेव सुखासुखम् । अहमेव गुरुत्वं च अहमेवाच्युतः सदा ॥ १८ ॥

अहमेव हि वेदान्तः अहमेव हि चिन्तनः । देहोऽहं शुद्धचैतन्यः(?) अहं संशयवर्जितः ॥ १९ ॥

अहमेव परं ज्योतिरहमेव परं पदम् । अहमेवाविनाश्यात्मा अहमेव पुरातनः ॥ २० ॥

अहं ब्रह्म न सन्देहः अहमेव हि निष्कलः । अहं तुर्यो न सन्देहः अहमात्मा न संशयः ॥

---

१ हमेकोऽयं C  २ विवक्षकः C

अहमित्यपि हीनोऽहमहं भावनवर्जितः । अहमेव हि भावान्ता अहमेव हि शोभनम् ॥ २२ ॥
अहमेव क्षणातीतः अहमेव हि मङ्गलम् । अहमेवाच्युतानन्दः अहमेव निरन्तरम् ॥ २३ ॥
अहमेवाप्रमेयात्मा अहं संकल्पवर्जितः । अहं बुद्धः परन्धाम अहं बुद्धिविवर्जितः ॥ २४ ॥
अहमेव सदा सत्यं अहमेव सदासुखम् । अहमेव सदा लभ्यं अहं सुलभकारणम् ॥ २५ ॥
अहं सुलभविज्ञानं दुर्लभो ज्ञानिनां सदा । अहं चिन्मात्र एवात्मा अहमेव हि चिद्घनः ॥ २६ ॥
अहमेव त्वमेवाहं त्वमेवाहं न संशयः । अहमात्मा न सन्देहः सर्वव्यापी न संशयः ॥ २७ ॥
अहमात्मा प्रियं सत्यं सत्यं सत्यं पुनः पुनः । अहमात्माऽजरो व्यापी अहमेवात्मनो गुरुः ॥
अहमेवामृतो मोक्षो अहमेव हि निश्चलः । अहमेव हि नित्यात्मा अहं मुक्तो न संशयः ॥
अहमेव सदा शुद्धः अहमेव हि निर्गुणः । अहं प्रपञ्चहीनोऽहं अहं देहविवर्जितः ॥ ३० ॥
अहं कामविहीनात्मा अहं मायाविवर्जितः । अहं दोषप्रवृत्तात्मा अहं संसारवर्जितः ॥ ३१ ॥
अहं सङ्कल्परहितो विकल्परहितः शिवः । अहमेव हि तुर्यात्मा अहमेव हि निर्मलः ॥ ३२ ॥
अहमेव सदा ज्योतिरहमेव सदा प्रभुः । अहमेव सदा ब्रह्म अहमेव सदा परः ॥ ३३ ॥
अहमेव सदा ज्ञानमहमेव सदा मृदुः । अहमेव हि चित्तं च अहं मानविवर्जितः ॥ ३४ ॥
अहंकारश्च संसारमहङ्कारमसत्सदा । अहमेव हि चिन्मात्रं मत्तोऽन्यन्नास्ति नास्ति हि ॥ ३५ ॥
अहमेव हि मे सत्यं मत्तोऽन्यन्नास्ति किञ्चन । मत्तोऽन्यत् तत्पदं नास्ति मत्तोऽन्यत् स्वत्पदं नहि ॥
पुण्यमित्यपि न क्वापि पापमित्यपि नास्ति हि । इदं भेदमयं भेदं सदसद्भेदमित्यपि ॥ ३७ ॥
नास्ति नास्ति त्वया सत्यं सत्यं सत्यं पुनः पुनः । नास्ति नास्ति सदा नास्ति सर्वं नास्तीति निश्चयः ॥
इदमेव परं ब्रह्म अहं ब्रह्म त्वमेव हि । कालो ब्रह्म कला ब्रह्म कार्यं ब्रह्म क्षणं तदा ॥ ३९ ॥
सर्वं ब्रह्माप्यहं ब्रह्म ब्रह्मास्मीति न संशयः । चित्तं ब्रह्म मनो ब्रह्म सत्यं ब्रह्म सदाऽस्म्यहम् ॥
निर्गुणं ब्रह्म नित्यं च निरन्तरमहं परः । आद्यन्तं ब्रह्म एवाहं आद्यन्तं च नहि क्वचित् ॥ ४१ ॥
अहमित्यपि वार्ताऽपि स्मरणं भाषणं न च । सर्वं ब्रह्मैव सन्देहस्त्वमित्यपि न हि क्वचित् ॥
वक्ता नास्ति न सन्देहः एषा गीता सुदुर्लभा । सद्यो मोक्षप्रदं ह्येतत् सद्यो मुक्तिं प्रयच्छति ॥
सद्य एव परं ब्रह्म पदं प्राप्नोति निश्चयः । सकृच्छ्रवणमात्रेण सद्यो मुक्तिं प्रयच्छति ॥ ४४ ॥
एतत्तु दुर्लभं लोके त्रैलोक्येऽपि च दुर्लभम् । अहं ब्रह्म न सन्देह इत्येवं भावयेत् दृढम् ॥
ततः सर्वं परित्यज्य तूष्णीं तिष्ठ यथासुखम् ॥

सूतः —

भुवनगगनमध्यध्यानयोगाङ्गसङ्गे
यमनियमविशेषैर्भस्मरागाङ्गसङ्गैः ।
सुखसुखभरिताशाः कोशपाशाद्विहीना
हृदि मुदितपराशाः शांभवाः शंभुरत्र ॥ ४६ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे सर्वसिद्धान्तसंग्रहप्रकरणं नाम सप्तदशोऽध्यायः ॥

## ॥ अष्टादशोऽध्यायः ॥

ऋभुः —

शृणु भूयः परं तत्त्वं सद्यो मोक्षप्रदायकम् । सर्वं ब्रह्मैव सततं सर्वं शान्तं न संशयः ॥ १ ॥
ब्रह्माक्षरमिदं सर्वं पराकारमिदं नहि । इदमित्यपि यद् दोषं वयमित्यपि भाषणम्[1] ॥ २ ॥

यत् किञ्चित्स्मरणं नास्ति यत् किञ्चिद् ध्यानमेव हि ।
यत्किञ्चिद् ज्ञानरूपं वा तत्सर्वं ब्रह्म एव हि ॥ ३ ॥

यत्किञ्चिद्ब्रह्म वाक्यं वा यत्किञ्चिद्देववाक्यकम् । यत्किञ्चिद्गुरुवाक्यं वा तत्सर्वं ब्रह्म एव हि ॥
यत्किञ्चित्कल्मषं सत्यं यत्किञ्चित् प्रियभाषणम् । यत्किञ्चिन्मननं सदा तत्सर्वं ... ॥ ५ ॥
यत्किञ्चित् श्रवणं नित्यं यत् किञ्चिद्ध्यानमश्नुते । यत्किञ्चिन्निश्चयं श्रद्धा तत्सर्वं ... ॥ ६ ॥
यत्किञ्चि[2]द्गुरूपदेशं यत्किञ्चिद्गुरुचिन्तनम् । यत्किञ्चिद्योगभेदं वा तत्सर्वं ... ॥ ७ ॥
सर्वं त्यज्य गुरुं त्यज्य सर्वं सन्त्यज्य नित्यशः । तूष्णीमेवासनं ब्रह्म दुः (सु) खमेव हि केवलम् ॥
सर्वं त्यक्त्वा सुखं नित्यं सर्वत्यागं सुखं महत् । सर्वत्यागः परानन्दं सर्वत्यागः परं सुखम् ॥
सर्वत्यागं मनस्त्यागः सर्वत्यागमहंकृतेः । सर्वत्यागं महायागः सर्वत्यागः सुखं परम् ॥ १० ॥
सर्वत्यागं महामोक्षं चित्तत्यागं तदेव हि । चित्तमेव जगन्नित्यं चित्तमेव हि संसृतिः ॥ ११ ॥
चित्तमेव महामाया चित्तमेव शरीरकम् । चित्तमेव भयं देहः चित्तमेव मनोमयम् ॥ १२ ॥

---

१ इतःपरं "मत्तोऽन्यत् पावनं नास्ति मत्तोऽन्यत् सत्पदं नहि ।
मत्तोऽन्यद्धर्मरूपं वा मत्तोऽन्यदखिलं न च ॥" इति श्लोकः C कोशेऽधिकः ।

२ सद्गुरोर्वाक्यं C

चित्तमेव प्रपञ्चाख्यं चित्तमेव हि कल्मषम् । चित्तमेव जडं सर्वं चित्तमेवेन्द्रियादिकम् ॥
चित्तमेव सदा सत्यं चित्तमेव नहि क्वचित् । चित्तमेव महाशास्त्रं चित्तमेव मनःप्रदम् ॥ १४ ॥
चित्तमेव सदा पापं चित्तमेव सदा मतम् । चित्तमेव हि सर्वाख्यं चित्तमेव सदा [1] जहि ॥

चित्तं नास्तीति चिन्ता स्यात् (?) आत्ममात्रं प्रकाशते ।
चित्तमस्तीति चिन्ता चेत् चित्तत्वं स्वयमेव हि ॥ १६ ॥

स्वयमेव हि चित्ताख्यं स्वयं ब्रह्म न संशयः । चित्तमेव हि सर्वाख्यं चित्तं सर्वमिति स्मृतम् ॥
ब्रह्मैवाहं स्वयंज्योतिर्ब्रह्मैवाहं न संशयः । सर्वं ब्रह्म न सन्देहः सर्वं चिज्ज्योतिरेव हि ॥ १८ ॥
अहं ब्रह्मैव नित्यात्मा पूर्णात् पूर्णतरं सदा । अहं पृथ्व्यादिसहितं अहमेव विलक्षणम् ॥ १९ ॥
अहं सूक्ष्मशरीरान्तमहमेव पुरातनम् । अहमेव हि मानात्मा सर्वं ब्रह्मैव केवलम् ॥ २० ॥
चिदाकारो ह्यहं पूर्णश्चिदाकारमिदं जगत् । चिदाकारं चिदाकाशं चिदाकाशमहं सदा ॥ २१ ॥
चिदाकाशं त्वमेवासि चिदाकाशमहं सदा । चिदाकाशं चिदेवेदं चिदाकाशान्न किञ्चन ॥ २२॥
चिदाकाशततं सर्वं चिदाकारं प्रकाशकम् । चिदाकारं मनोरूपं चिदाकाशं हि चिद्घनम् ॥
चिदाकाशं परं ब्रह्म चिदाकाशं च चिन्मयः । चिदाकाशं शिवं साक्षाच्चिदाकाशमहं सदा ॥
सच्चिदानन्दरूपोऽहं सच्चिदानन्दशाश्वतः । सच्चिदानन्द सन्मात्रं सच्चिदानन्दभावनः ॥ २५ ॥
सच्चिदानन्दपूर्णोऽहं सच्चिदानन्दकारणम् । सच्चिदानन्दसन्दोहः सच्चिदानन्द [2] हीनकः (?) ॥
सच्चिदानन्दनित्योऽहं सच्चिदानन्दलक्षणम् । सच्चिदानन्दमात्रोऽहं सच्चिदानन्दरूपकः ॥ २७ ॥
आत्मैवेदमिदं सर्वमात्मैवाहं न संशयः । आत्मैवास्मि परं सत्यमात्मैव परमं पदम् ॥ २८ ॥
आत्मैव जगदाकारं आत्मैव भुवनत्रयम् । आत्मैव जगतां श्रेष्ठः आत्मैव हि मनोमयः ॥ २९ ॥
आत्मैव जगतां त्राता आत्मैव गुरुरात्मनः । आत्मैव बहुधा भाति आत्मैवैकं परात्मनः ॥
आत्मैव परमं ब्रह्म आत्मैवाहं न संशयः । आत्मैव परमं लोकं आत्मैव परमात्मनः ॥ ३१ ॥
आत्मैव जीवरूपात्मा आत्मैवेश्वरविग्रहः । आत्मैव हरिरानन्दः आत्मैव स्वयमात्मनः ॥ ३२ ॥
आत्मैवानन्दसन्दोह आत्मैवेदं सदा सुखम् । आत्मैव नित्यशुद्धात्मा आत्मैव जगतः परः ॥
आत्मैव पञ्चभूतात्मा आत्मैव ज्योतिरात्मनः । आत्मैव सर्वदा नान्यदात्मैव परमोऽव्ययः ॥
आत्मैव ह्यात्ममात्रात्मा आत्मैव विश्वरूपयः । आत्मैव ब्रह्मविज्ञानं आत्मैवाहं त्वमेव हि ॥

---

१ जयि C २ ईश्वरः C

आत्मैव परमानन्द आत्मैवाहं जगन्मयः । आत्मैवाहं जगद्भानं आत्मैवाहं न किञ्चन ॥ ३६ ॥
आत्मैव ह्यात्मनः स्नानमात्मैव ह्यात्मनो जपः । आत्मैव ह्यात्मनो मोदमात्मैवात्मप्रियः सदा ॥
आत्मैव ह्यात्मनो नित्यो ह्यात्मैव गुणभासकः । आत्मैव तुर्यरूपात्मा आत्मातीतस्तवः परः ॥
आत्मैव नित्यपूर्णात्मा आत्मैवाहं न संशयः । आत्मैव त्वमहं चात्मा सर्वमात्मैव केवलम् ॥
नित्योऽहं नित्यपूर्णोऽहं नित्योऽहं सर्वदा सदा । आत्मैवाहं जगन्नान्यद् अमृतात्मा पुरातनः ॥

पुरातनोऽहं पुरुषोऽहमीशः परात् परोऽहं परमेश्वरोऽहम् ।
भवप्रदोऽहं भवनाशनोऽहं सुखप्रदोऽहं सुखरूपमद्वयम् ॥ ४१ ॥

आनन्दोऽहमशेषोऽहममृतोऽहं न संशयः । अजोऽहमात्मरूपोऽहमन्यन्नास्ति सदा प्रियः ॥४२॥
ब्रह्मैवाहमिदं ब्रह्म सर्वं ब्रह्म सदाऽव्ययः । सदा सर्वपदं नास्ति सर्वमेव सदा न हि ॥ ४३ ॥
निर्गुणोऽहं निराधार अहं नास्तीति सर्वदा । अनर्थमूलं नास्त्येव मायाकार्यं न किञ्चन ॥ ४४ ॥
अविद्याविभवो नास्ति अहं ब्रह्म न संशयः । सर्वं ब्रह्म चिदाकाशं तदेवाहं न संशयः ॥ ४५ ॥
तदेवाहं स्वयं चाहं परं चाहं परेश्वरः । विद्याधरोऽहमेवात्र विद्याविद्ये न किञ्चन ॥ ४६ ॥
चिदहं चिदहं नित्यं तुर्योऽहं तुर्यकः परः । ब्रह्मैव सर्वं ब्रह्मैव सर्वं ब्रह्म सदाऽस्म्यहम् ॥ ४७ ॥

मत्तोऽन्यन्नापरं किञ्चिन्मत्तोऽन्यद्ब्रह्म च क्वचिद् ।
मत्तोऽन्यत् परमं नास्ति मत्तोऽन्यच्चित्पदं नहि ॥

मत्तोऽन्यत् सत्पदं नास्ति मत्तोऽन्यच्चित्पदं न मे ।
मत्तोऽन्यत् भवनं नास्ति मत्तोऽन्यद् ब्रह्म एव न ॥ ४९ ॥

मत्तोऽन्यत् कारणं नास्ति मत्तोऽन्यत् किञ्चिदप्यणु ।
मत्तोऽन्यत् सत्वरूपं च मत्तोऽन्यत् शुद्धमेव न ॥ ५० ॥

मत्तोऽन्यत् पावनं नास्ति मत्तोऽन्यत् तत्पदं न हि ।
मत्तोऽन्यत् धर्मरूपं वा मत्तोऽन्यदखिलं न च ॥ ५१ ॥

मत्तोऽन्यदसदेवात्र मत्तोऽन्यन्मिथ्या एव हि ।
मत्तोऽन्यद्भाति [1] सर्वस्वं मत्तोऽन्यच्छशशृङ्गवत् ॥ ५२ ॥

मत्तोऽन्यद्भाति चेन्मिथ्या मत्तोऽन्यचेन्द्रजालकम् ।
मत्तोऽन्यत् [2] संशयो नास्ति मत्तोऽन्यत् कार्य [3] कारणम् ॥ ५३ ॥

---

१ सर्वस्य C  २ सदृशं C  ३ लक्षणम् C

ब्रह्ममात्रमिदं सर्वं सोऽहमस्मीति भावनम् । सर्वमुक्तं भगवता एवमेवेति निश्चिनु ॥ ५४ ॥
बहुनोक्तेन किं योगिन् निश्चयं कुरु सर्वदा । सकृन्निश्चयमात्रेण ब्रह्मैव भवति स्वयम् ॥ ५५ ॥

वननगभुवनं यच्छङ्कराद्यान्यदस्ति जगदिदमसुगाधं देवदेवः स एव ।
तनुमनगमनाद्यैः कोशकाशावकाशे म खलु परशिवात्मा दृश्यते सूक्ष्मबुद्ध्या ॥ ५६ ॥

चक्षुःश्रोत्रमनोऽमवश्च हृदि खादुद्भासितध्यान्तरात
तस्मिन्नेव विलीयते गतिपरं यद्वासना वासिनी ।
चित्तं चेतयते हृदिन्द्रियगणं वाचां मनोदूरगं
तं ब्रह्मामृतमेतदेव गिरिजाकान्तात्मना संज्ञिनम् ॥ ५७ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे अष्टादशोऽध्यायः ॥

---

## ॥ एकोनविंशोऽध्यायः ॥

---

ऋभुः —

ब्रह्मानन्दं प्रवक्ष्यामि त्रिषु लोकेषु दुर्लभम् । यस्य श्रवणमात्रेण सदा मुक्तिमवाप्नुयात् ॥ १ ॥
परमानन्दोऽहमेवात्मा सर्वदानन्दमेव हि । पूर्णानन्दस्वरूपोऽहं चिदानन्दमयं जगत् ॥ २ ॥
सदानन्तमनन्तोऽहं बोधानन्दमिदं जगत् । बुद्धानन्दस्वरूपोऽहं नित्यानन्दमिदं मनः ॥ ३ ॥
केवलानन्दमात्रोऽहं केवलज्ञानवानहम् । इति भावय यत्नेन प्रपञ्चोपशमाय वै ॥ ४ ॥

सदा सत्यं परं ज्योतिः सदा सत्यादिलक्षणः ।
सदा सत्यादिहीनात्मा सदा ज्योतिः प्रियो ह्यहम् ॥ ५ ॥

नास्ति मिथ्याप्रपञ्चात्मा नास्ति मिथ्या मनोमयः ।
नास्ति मिथ्याभिधानात्मा नास्ति चित्तं दुरात्मवान् ॥ ६ ॥

नास्ति मूढतरो लोके नास्ति मूढतमो नरः । अहमेव परं ब्रह्म अहमेव स्वयं सदा ॥ ७ ॥
इदं परं च नास्त्येव अहमेव हि केवलम् । अहं ब्रह्मास्मि शुद्धोऽस्मि सर्वं ब्रह्मैव केवलम् ॥ ८ ॥
जगत् सर्वं सदा नास्ति चित्तमेव जगन्मयम् । चित्तमेव प्रपञ्चाख्यं चित्तमेव शरीरकम् ॥ ९ ॥
चित्तमेव महादोषं चित्तमेव हि बालकः । चित्तमेव महात्माऽयं चित्तमेव महानसत् ॥ १० ॥
चित्तमेव हि मिथ्यात्मा चित्तं शशविषाणवत् । चित्तं नास्ति सदा सत्यं चित्तं वन्ध्याकुमारवत् ॥

चित्तं शून्यं न सन्देहो ब्रह्मैव सकलं जगत् । अहमेव हि चैतन्यं अहमेव हि निर्गुणम् ॥ १३ ॥
मन एव हि संसारं मन एव हि मण्डलम् । मन एव हि बन्धत्वं मन एव हि पातकम् ॥
मन एव महद् दुःखं मन एव शरीरकम् । मन एव प्रपञ्चाख्यं मन एव कलेबरम् ॥ १४ ॥
मन एव महासत्वं मन एव चतुर्मुखः । मन एव हरिः साक्षात् मन एव शिवः स्मृतः ॥ १५ ॥
मन एवेन्द्रजालाख्यं मनः सङ्कल्पमात्रकम् । मन एव महापापं मन एव दुरात्मवान् ॥ १६ ॥
मन एव हि सर्वाख्यं मन एव महद्भयम् । मन एव परं ब्रह्म मन एव हि केवलम् ॥ १७ ॥
मन एव चिदाकारं मन एव मनायते । चिदेव हि परं रूपं चिदेव हि परं पदम् ॥ १८ ॥
परं ब्रह्माहमेवाद्य परं ब्रह्माहमेव हि । अहमेव हि तृप्तात्मा अहमानन्दविग्रहः ॥ १९ ॥
अहं बुद्धिः प्रवृद्धात्मा नित्यं निश्चलनिर्मलः । अहमेव हि शान्तात्मा अहमाद्यन्तवर्जितः ॥ २० ॥
अहमेव प्रकाशात्मा अहं ब्रह्मैव केवलम् । अहं नित्यो न सन्देह अहं बुद्धिप्रियः सदा ॥ २१ ॥
अहमेवाहमेवैको अहमेवाखिलामृतः । अहमेव स्वयं सिद्ध अहमेवानुमोदकः ॥ २२ ॥
अहमेव त्वमेवाहं सर्वात्मा सर्ववर्जितः । अहमेव परं ब्रह्म अहमेव परात् परः ॥ २३ ॥

अहङ्कारं न मे दुःखं न मे दोषं न मे सुखम् ।
न मे बुद्धिर्न मे चित्तं न मे देहो न मेन्द्रियम् ॥ २४ ॥

न मे गोत्रं न मे नेत्रं न मे पात्रं न मे तृणम् ।
न मे जपो न मे मन्त्रो [न[1] मे लोको न मे सुहृत् ॥ २५ ॥

न मे बन्धुर्न मे शत्रुर्न मे माता न मे पिता ।
न मे भोज्यं न मे भोक्ता न मे वृत्तिर्न मे कुलम् ॥ २६ ॥

न मे जातिर्न मे वर्णः] न मे श्रोत्रं न मे क्वचित् ।
न मे वाह्यं न मे बुद्धिः स्थानं वापि न मे वयः ॥ २७ ॥

न मे तत्त्वं न मे लोको न मे शान्तिर्न मे कुलम् ।
न मे कोपो न मे कामः केवलं ब्रह्ममात्रतः ॥ २८ ॥

केवलं ब्रह्ममात्रत्वात् केवलं स्वयमेव हि । न मे रागो न मे लोभो न मे स्तोत्रं न मे स्मृतिः ॥

---

१ कोष्ठान्तर्गतः पाठः C कोशे नास्ति ।

न मे मोहो न मे तृष्णा न मे स्नेहो न मे गुणः ।
न मे कोशं न मे बाल्यं न मे यौवनवार्धकम् ॥ ३० ॥

सर्वं ब्रह्मैकरूपत्वादेकं ब्रह्मेति निश्चितम् । ब्रह्मणोऽन्यत् परं नास्ति ब्रह्मणोऽन्यन्न किञ्चन ॥ ३१ ॥
ब्रह्मणोऽन्यदिदं नास्ति ब्रह्मणोऽन्यदिदं न हि । आत्मनोऽन्यत् सदा नास्ति आत्मैवाहं न संशयः ॥
आत्मनोऽन्यत् सुखं नास्ति आत्मनोऽन्यदहं न च । ग्राह्यग्राहकहीनोऽहं त्यागत्याज्यविवर्जितः ॥

न त्याज्यं न च मे ग्राह्यं न बन्धो न च मुक्तिदम् ।
न मे लोकं न मे हीनं न श्रेष्ठं नापि दूषणम् ॥ ३४ ॥

न मे बलं न चण्डालो न मे विप्रादिवर्णकम् ।
न मे पानं न मे ह्रस्वं न मे क्षीणं न मे बलम् ॥ ३५ ॥

न मे शक्तिर्न मे भुक्तिर्न मे दैवं न मे पृथक् ।
अहं ब्रह्मैकमात्रत्वात् नित्यन्वान्यन्न किञ्चन ॥ ३६ ॥

न मतं न च मे मिथ्या न मे सत्यं वपुः क्वचित् । अहमित्यपि नास्त्येव ब्रह्म इत्यपि नाम वा ॥
यद्यद्यद्यत्प्रपञ्चोऽस्ति यद्यद्यद्गुरोर्वचः । तत्सर्वं ब्रह्म एवाहं तत्सर्वं चिन्मयं मतम् ॥ ३८ ॥
चिन्मयं चिन्मयं ब्रह्म सन्मयं सन्मयं सदा । स्वयमेव स्वयं ब्रह्म स्वयमेव स्वयं परः ॥ ३९ ॥
स्वयमेव स्वयं मोक्षः स्वयमेव निरन्तरः । स्वयमेव हि विज्ञानं स्वयमेव हि नास्त्यकम् ॥
स्वयमेव सदाधारः स्वयमेव स्वयं परः । स्वयमेव हि शून्यात्मा स्वयमेव मनोहरः ॥ ४१ ॥
तूष्णीमेवासनं स्नानं तूष्णीमेवासनं जपः । तूष्णीमेवासनं पूजा तूष्णीमेवासनं परः ॥ ४२ ॥
विचार्य मनसा नित्यमहं ब्रह्मेति निश्चिनु । अहं ब्रह्म न सन्देहः एवं तूष्णींस्थितिर्जपः ॥ ४३ ॥
सर्वं ब्रह्मैव नास्त्यन्यत् सर्वं ज्ञानमयं तपः । स्वयमेव हि नास्त्येव सर्वातीतस्वरूपवान् । ४४ ॥
वाचातीतस्वरूपोऽहं वाचा जप्यमनर्थकम् । मानसः परमार्थोयं एतद्भेदमहं न मे ॥ ४५ ॥
कुणपं सर्वभूतादि कुणपं सर्वसङ्ग्रहम् । असत्यं सर्वदा लोकमसत्यं सकलं जगत् ।
असत्यमन्यदस्तित्वमसत्यं नास्ति भाषणम् । असत्याकारमस्तित्वं ब्रह्ममात्रं सदा स्वयम् ॥ ४७ ॥
असत्यं वेदवेदाङ्गं असत्यं शास्त्रनिश्चयः । असत्यं श्रवणं ह्येतदसत्यं मननं च तत् ॥ ४८ ॥
असत्यं च निदिध्यासः सजातीयमसत्यकम् । विजातीयमसत् प्रोक्तं सत्यं सत्यं न संशयः ॥

सर्वं ब्रह्म सदा ब्रह्म एकं ब्रह्म चिदव्ययम् ॥

चेतोविलासजनितं किल विश्वमेतद्
विश्वाधिकस्य कृपया [1] परिपूर्णभासात् (?)।
नास्त्यन्यतः श्रुतिशिरोत्थितवाक्यमोघ-
शास्त्रानुसारिकरणैर्भवते विमुक्त्यै ॥ ५० ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे ब्रह्मानन्दप्रकरणं नाम एकोनविंशोऽध्यायः ॥

## ॥ विंशोऽध्यायः ॥

ऋभुः —

शृणु केवलमत्यन्तं रहस्यं परमाद्भुतम्। इति गुह्यतरं सद्यो मोक्षप्रदमिदं सदा ॥ १ ॥
सुलभं ब्रह्मविज्ञानं सुलभं शुभमुत्तमम्। सुलभं ब्रह्मनिष्ठानां सुलभं सर्वबोधकम् ॥ २ ॥
सुलभं कृतकृत्यानां सुलभं स्वयमात्मनः। सुलभं कारणाभावं (?) सुलभं ब्रह्मणि स्थितम् ॥ ३ ॥
सुलभं चित्तहीनानां स्वयं तच्च स्वयं स्वयम्। स्वयं संसारहीनानां चित्तं संसारमुच्यते ॥ ४ ॥
ब्रह्मैवेदं न संसारः ब्रह्मैवेदं मनो न च। ब्रह्मैवेदं भयं नास्ति ब्रह्मैवेदं न किञ्चन ॥
ब्रह्मैवेदमसत् सर्वं ब्रह्मैवेदं परायणम्। ब्रह्मैवेदं शरीराणां ब्रह्मैवेदं तृणं न च ॥ ६ ॥
ब्रह्मैवास्मि न चान्योऽस्मि ब्रह्मैवेदं जगन्न च। ब्रह्मैवेदं वियन्नास्ति ब्रह्मैवेदं क्रिया न च ॥
ब्रह्मैवेदं महात्मानं ब्रह्मैवेदं प्रियं सदा। ब्रह्मैवेदं [2] जगद्भ्रान्तो ब्रह्मैवाहं भयं नहि ॥ ८ ॥
ब्रह्मैवाहं सदाचित्तं ब्रह्मैवाहमिदं न हि। ब्रह्मैवाहं तु यन्मिथ्या ब्रह्मैवाहमियं भ्रमा ॥ ९ ॥
ब्रह्मैव सर्वसिद्धान्तो ब्रह्मैव मनसास्पदम्। ब्रह्मैव सर्वभवनं ब्रह्मैव मुनिमण्डलम् ॥ १० ॥
ब्रह्मैवाहं तु नास्त्यन्यद् ब्रह्मैव गुरुपूजनम्। ब्रह्मैव नान्यत् किञ्चित्तु ब्रह्मैव सकलं सदा ॥ ११ ॥
ब्रह्मैव त्रिगुणाकारं ब्रह्मैव हरिरूपकम्। ब्रह्मणोऽन्यत् पदं नास्ति ब्रह्मणोऽन्यत् क्षणं न मे ॥
ब्रह्मैवाहं नान्यवार्ता ब्रह्मैवाहं न च श्रुतम्। ब्रह्मैवाहं समं नास्ति सर्वं ब्रह्मैव केवलम् ॥ १३ ॥
ब्रह्मैवाहं न मे भोगो ब्रह्मैवाहं न मे पृथक्। ब्रह्मैवाहं सतं (?) नास्ति ब्रह्मैव ब्रह्मरूपकः ॥
ब्रह्मैव सर्वदा भाति ब्रह्मैव सुखमुत्तमम्। ब्रह्मैव नानाकारत्वात् ब्रह्मैवाहं प्रियं महत् ॥ १५ ॥
ब्रह्मैव ब्रह्मणः पूज्यं ब्रह्मैव ब्रह्मणो गुरुः। ब्रह्मैव ब्रह्ममाता तु ब्रह्मैवाहं पिता सुतः ॥ १६ ॥

---

१ भाक् G   २ नास्ति C

ब्रह्मैव ब्रह्म देवं च ब्रह्मैव ब्रह्म तज्जयः। ब्रह्मैव ध्यानरूपात्मा ब्रह्मैव ब्रह्मणो गुणः ॥ १७ ॥
आत्मैव सर्वनित्यात्मा आत्मनोऽन्यन्न किञ्चन। आत्मैव सततं ह्यात्मा आत्मैव गुरुरात्मनः ॥
आत्मज्योतिरहंभूतमात्मैवास्ति सदा स्वयम्। स्वयं तत्वमसि ब्रह्म स्वयं भामि प्रकाशकः ॥
स्वयं जीवत्वसंशान्तिः स्वयमीश्वररूपवान्। स्वयं ब्रह्म परं ब्रह्म स्वयं केवलमव्ययम् ॥ २० ॥
स्वयं नाशं च सिद्धान्तं स्वयमात्मा प्रकाशकः। स्वयं प्रकाशरूपात्मा स्वयमत्यन्तनिर्मलः ॥
स्वयमेव हि नित्यात्मा स्वयं शुद्धः प्रियाप्रियः। स्वयमेव स्वयं छन्दः स्वयं देहादिवर्जितः ॥
स्वयं दोषविहीनात्मा स्वयमाकाशवत् स्थितः। अयं चेदं च नास्त्येव अयं भेदविवर्जितः ॥ २३ ॥
ब्रह्मैव चित्तवद्भाति ब्रह्मैव शिववत् सदा। ब्रह्मैव बुद्धिवद्भाति ब्रह्मैव शिववत् सदा ॥ २४ ॥
ब्रह्मैव [1] शशवद्भाति ब्रह्मैव स्थूलवत् स्वयम्। ब्रह्मैव सततं नान्यत् ब्रह्मैव गुरुरात्मनः ॥ २५ ॥
आत्मज्योतिरहं भूतमहं नास्ति सदा स्वयम्। स्वयमेव परं ब्रह्म स्वयमेव चिदव्ययः ॥ २६ ॥
स्वयमेव स्वयं ज्योतिः स्वयं सर्वत्र भासते। स्वयं ब्रह्म स्वयं देहः स्वयं पूर्णः परः पुमान् ॥
स्वयं तत्वमसि ब्रह्म स्वयं भाति प्रकाशकः। स्वयं जीवत्वसंशान्तः स्वयमीश्वररूपवान् ॥
स्वयमेव परं ब्रह्म स्वयं केवलमव्ययः। स्वयं [2] राद्धान्तसिद्धान्तः स्वयमात्मा प्रकाशकः ॥
स्वयं प्रकाशरूपात्मा स्वयमत्यन्तनिर्मलः। स्वयमेव हि नित्यात्मा स्वयं शुद्धः प्रियाप्रियः ॥
स्वयमेव स्वयं स्वस्थः स्वयं देहविवर्जितः। स्वयं दोषविहीनात्मा स्वयमाकाशवत् स्थितः ॥
अखण्डः परिपूर्णोऽहमखण्डरसपूरणः। अखण्डानन्द एवाहमपरिच्छिन्नविग्रहः ॥ ३२ ॥
इति निश्चित्य पूर्णात्मा ब्रह्मैव न पृथक् स्वयम्। अहमेव हि नित्यात्मा अहमेव हि शाश्वतः ॥
अहमेव हि तद्ब्रह्म ब्रह्मैवाहं जगत्प्रभुः। ब्रह्मैवाहं निराभासो ब्रह्मैवाहं निरामयः ॥ ३४ ॥
ब्रह्मैवाहं चिदाकाशो ब्रह्मैवाहं निरन्तरः। ब्रह्मैवाहं महानन्दो ब्रह्मैवाहं सदात्मवान् ॥ ३५ ॥
ब्रह्मैवाहमनन्तात्मा ब्रह्मैवाहं सुखं परम्। ब्रह्मैवाहं महामौनी सर्ववृत्तान्तवर्जितः ॥ ३६ ॥
ब्रह्मैवाहमिदं मिथ्या ब्रह्मैवाहं जगन्न हि। ब्रह्मैवाहं न देहोऽस्मि ब्रह्मैवाहं महाद्वयः ॥ ३७ ॥
ब्रह्मैव चित्तवद्भाति ब्रह्मैव शिववत् सदा। ब्रह्मैव बुद्धिवद् भाति [[3] ब्रह्मैव फलवत् स्वयम् ॥
ब्रह्मैव मूर्तिवद्भाति तद्ब्रह्मास्मि न संशयः। ब्रह्मैव कालवद्भाति ब्रह्मैव सकलादिवत् ॥ ३९ ॥
ब्रह्मैव भूतिवद्भाति] ब्रह्मैव जडवत् स्वयम्। ब्रह्मैवोंकारवत् सर्वं ब्रह्मैवोंकाररूपवत् ॥ ४० ॥

---

१ कृश C  २ नाशश्च C  ३ कोष्ठान्तर्गतः पाठः C कोशे नास्ति।

ब्रह्मैव नादवद्ब्रह्म नास्ति भेदो न चाद्वयम् । सत्यं सत्यं पुनः सत्यं ब्रह्मणोऽन्यन्न किञ्चन ॥
ब्रह्मैव सर्वमात्मैव ब्रह्मणोऽन्यन्न किञ्चन । [1]सर्वं मिथ्या जगन्मिथ्या दृश्यत्वाद्घटवत् सदा ॥
ब्रह्मैवाहं न सन्देहश्चिन्मात्रत्वादहं सदा । ब्रह्मैव शुद्धरूपत्वात् दृग्रूपत्वात् स्वयं महत् ॥ ४३ ॥
अहमेव परं ब्रह्म अहमेव परात् परः । अहमेव मनोतीत अहमेव जगत्परः ॥ ४४ ॥
अहमेव हि नित्यात्मा अहं मिथ्या स्वभावतः । आनन्दोऽहं निराधारो ब्रह्मैव न च किञ्चन ॥
नान्यत् किञ्चिदहं ब्रह्म नान्यत् किञ्चिचिदव्ययः । आत्मनोऽन्यत् परं तुच्छमात्मनोऽन्यदहं नहि॥

आत्मनोऽन्यन्न मे देहः आत्मैवाहं न मे मलम् ।
आत्मन्येवात्मना चित्तमात्मैवाहं न तत् पृथक् ॥ ४७ ॥
आत्मैवाहमहंशून्यमात्मैवाहं सदा न मे ।
आत्मैवाहं गुणो नास्ति आत्मैव न पृथक् क्वचित् ॥ ४८ ॥

अत्यन्ताभाव एव त्वं अत्यन्ताभावमीदृशम् । अत्यन्ताभाव एवेदमत्यन्ताभावमण्वपि ॥ ४९ ॥
आत्मैवाहं परं ब्रह्म सर्वं मिथ्या जगत्त्रयम् । अहमेव परं ब्रह्म अहमेव परो गुरुः ॥ ५० ॥
जीवभावं सदासत्यं शिवसद्भावमीदृशम् । विष्णुवद्भावनाभ्रान्तिः सर्वं शशविषाणवत् ॥ ५१ ॥
अहमेव सदा पूर्ण अहमेव निरन्तरम् । नित्यतृप्तो निराकारो ब्रह्मैवाहं न संशयः ॥ ५२ ॥
अहमेव परानन्द अहमेव क्षणान्तिकः । अहमेव त्वमेवाहं त्वं चाहं नास्ति नास्ति हि ॥ ५३ ॥
वाचामगोचरोऽहं वै वाङ्मनो नास्ति कल्पितम् । अहं ब्रह्मैव सर्वात्मा अहं ब्रह्मैव निर्मलः ॥
अहं ब्रह्मैव चिन्मात्रं अहं ब्रह्मैव नित्यशः । इदं च सर्वदा नास्ति अहमेव सदा स्थिरः ॥ ५५ ॥
इदं सुखमहं ब्रह्म इदं सुखमहं जडम् । इदं ब्रह्म न सन्देहः सत्यं सत्यं पुनः पुनः ॥ ५६ ॥
इत्यात्मवैभवं प्रोक्तं सर्वलोकेषु दुर्लभम् । सकृच्छ्रवणमात्रेण ब्रह्मैव भवति स्वयम् ॥ ५७ ॥

शान्तिदान्तिपरमा भवतान्ताः स्वान्तभान्तमनिशं शशिकान्तम् ।
अन्तकान्तकमहो कलयन्तो वेदमौलिवचनैः किल शान्ताः ॥ ५८ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघ संवादे आत्मवैभवप्रकरणं नाम विंशोऽध्यायः ॥

---

१ सर्वं मिथ्या जगन्मिथ्येत्यस्य स्थाने "सर्वं मिथ्याय वचसे दृश्यत्वाद्घटवत् तदा । पञ्चाननाय पतये यतये वीतरागिणे । चामराय शरण्याय वसामांसप्रियाय च । पन्नगाभरणायाथ सन्नगोर्ध्वनिकेतिने सत्यं सत्यं न सन्देहश्चिन्मात्रत्वादहं सदा इति C कोशे पाठः ।

## ॥ एकविंशोऽध्यायः ॥

ऋभुः —

महारहस्यं वक्ष्यामि वेदान्तेषु च गोपितम् । यस्य श्रवणमात्रेण ब्रह्मैव भवति स्वयम् ॥ १ ॥
सच्चिदानन्दमात्रोऽहं सर्वं सच्चिन्मयं ततम् । तदेव ब्रह्म संपश्यत् ब्रह्मैव भवति स्वयम् ॥ २ ॥
अहं ब्रह्म इदं ब्रह्म नाना ब्रह्म न संशयः । सत्यं ब्रह्म सदा ब्रह्माप्यहं ब्रह्मैव केवलम् ॥ ३ ॥
गुरुर्ब्रह्म गुणो ब्रह्म सर्वं ब्रह्मपरोऽस्म्यहम् । नान्तं ब्रह्म अहं ब्रह्म सर्वं ब्रह्मापरोऽस्म्यहम् ॥
वेदवेद्यं परं ब्रह्म विद्या ब्रह्म विशेषतः । आत्मा ब्रह्म अहं ब्रह्म आद्यन्तं ब्रह्म सोऽस्म्यहम् ॥ ५ ॥
सत्यं ब्रह्म सदा ब्रह्म अन्यन्नास्ति सदा परम् । अहं ब्रह्मा त्वहं नास्ति अहंकारपरं नहि ॥ ६ ॥
अहं ब्रह्म इदं नास्ति अयमात्मा महान् सदा । वेदान्तवेद्यो ब्रह्मात्मा अपरं शशशृङ्गवत् ॥ ७ ॥
भूतं नास्ति भविष्यं न ब्रह्मैव स्थिरतां गतः । चिन्मयोऽहं जडं तुच्छं चिन्मात्रं देहनाशनम् ॥ ८ ॥
चित्तं किञ्चित् क्वचिन्नापि चित्तं ह(दू)रोऽहमात्मकः । सत्यं ज्ञानमनन्तं यन्नानृतं जडदुःखकम् ॥
आत्मा सत्यमनन्तात्मा देहमेव न संशयः । वार्ताप्यसच्छ्रुतं तत्र अहमेव महोमहः ॥ १० ॥
एकसंख्याप्यसद्ब्रह्म सत्यमेव सदाऽप्यहम् । सर्वमेवमसत्यं च उत्पन्नत्वात् परात् सदा ॥ ११ ॥
सर्वावयवहीनोऽपि नित्यत्वात् परमो ह्यहम् । सर्वं दृश्यं न मे किञ्चित् चिन्मयत्वात्सदाप्यहम् ॥
आग्रहं च न मे किञ्चित् चिन्मयत्वात्सदाप्यहम् । इदमित्यपि निर्देशो न क्वचिन्न क्वचित् सदा ॥
निर्गुणब्रह्म एवाहं सुगुरोरुपदेशतः । विज्ञानं सगुणो(णं) ब्रह्म अहं निज्ञानविग्रहः ॥ १४ ॥

निर्गुणोऽस्मि निरंशोऽस्मि भवोऽस्मि भवोऽस्म्यहम् ।
देवोऽस्मि द्रव्यपूर्णोऽस्मि शुद्धोऽस्मि रहितोऽस्म्यहम् ॥ १५ ॥

रसोऽस्मि रसहीनोऽस्मि तुर्योऽस्मि शुभभावनः । [1]कामोऽस्मि कार्यहीनोऽस्मि नित्यनिर्मलविग्रहः ॥
आचारफलहीनोऽस्मि अहं ब्रह्मास्मि केवलम् । इदं सर्वं परं ब्रह्म अयमात्मा न विस्मयः ॥ १७ ॥
पूर्णापूर्णस्वरूपात्मा नित्यं सर्वात्मविग्रहः । परमानन्दतत्त्वात्मा परिच्छिन्नं न हि क्वचित् ॥
एकात्मा निर्मलाकार अहमेवेति भावय । अहंभावनया युक्त अहंभावेन संयुतः ॥ १९ ॥
शान्तं भावय सर्वात्मा [2]शाम्यतत्वं मनोमलः । देहोऽहमिति सन्त्यज्य ब्रह्माहमिति निश्चिनु ॥

१ कार्योऽस्मि C  २ शाम्यत्वन्तं C

ब्रह्मैवाहं ब्रह्ममात्रं ब्रह्मणोऽन्यन्न किञ्चन । इदं नाहमिदं नाहमिदं नाहं सदा स्मर ॥ २१ ॥
अहं सोहमहं सोहमहं ब्रह्मेति भावय । चिदहं चिदहं ब्रह्म चिदहं चिदहं वद ॥ २२ ॥
नेदं नेदं सदा नेदं न त्वं नाहं च भावय । सर्वं ब्रह्म न सन्देहः सर्वं वेदं न किञ्चन ॥ २३ ॥
सर्वं शब्दार्थभवनं सर्वलोकभयं न च । सर्वतीर्थं न सत्यं हि सर्वदेवालयं न हि ॥ २४ ॥
[[1] सर्वचैतन्यमात्रत्वात् सर्वं नाम सदा नहि । सर्वरूपं परित्यज्य सर्वं ब्रह्मेति निश्चिनु ॥ २५ ॥
ब्रह्मैव सर्वं तत्सत्यं प्रपञ्चं प्रकृतिर्नहि ।] प्राकृतं स्मरणं त्यक्त्वा ब्रह्मस्मरणमाहर ॥ २६ ॥
ततस्तदपि सन्त्यज्य निजरूपे स्थिरो भव । स्थिररूपं परित्यज्य आत्ममात्रं भवत्यसौ ॥ २७ ॥
त्यागत्वमपि सन्त्यज्य भेदमात्रं सदा त्यज । स्वयं निजं समावृत्य स्वयमेव स्वयं भज ॥ २८ ॥
इदमित्यङ्गुलीदृष्टमिदमस्तमचेतनम् । इदं वाक्यं च वाक्येन वाचाऽपि परिवेदनम् ॥ २९ ॥
[2] सर्वभावं न सन्देहः सर्वं नास्ति न संशयः । सर्वं तुच्छं न सन्देहः सर्वं माया न संशयः ॥
त्वं [3] ब्रह्माहं न सन्देहो ब्रह्मवेदं न संशयः । सर्वं चित्तं न सन्देहः सर्वं ब्रह्म न संशयः ॥
ब्रह्मान्यद्भाति चेन्मिथ्या सर्वं मिथ्या परात्परा । न देहं पंचभूतं वा न चित्तं भ्रान्तिमात्रकम् ॥
न च बुद्धीन्द्रियाभावो न मुक्तिर्ब्रह्ममात्रकम् । निमिषं च न शङ्कापि न सङ्कल्पं तदस्ति चेत् ॥
अहङ्कारमसद्बिद्धि अभिमानं तदस्ति चेत् । न चित्तस्मरणं तत्रैव सन्देहो जरा यदि ॥ ३४ ॥
प्राणो ... दीयते ह्यस्ति घ्राणो यदिह गन्धकम् । चक्षुर्यदिह भूतस्य श्रोत्रं श्रवणभावनम् ॥ ३५ ॥
त्वगस्ति चेत् स्पर्शसत्ता जिह्वा चेद्रससङ्ग्रहः । जीवोऽस्ति चेज्जीवनं च पादश्चेत् पादचारणम् ॥
हस्तौ यदि क्रियासत्ता स्रष्टा चेत् सृष्टिसंभवः । रक्ष्यं चेद्रक्षको विष्णुर्भक्ष्यं चेद्भक्षकः शिवः ॥
सर्वं ब्रह्म न सन्देहः सर्वं ब्रह्मैव केवलम् । पूज्यं चेत् पूजनं चास्ति भास्यं चेद्भासकः शिवः ॥
[4] सर्वं मिथ्या न सन्देहः सर्वं चिन्मात्रमेव हि । अस्ति चेत् कारणं सत्यं कार्यं चैव भविष्यति ॥
नास्ति चेन्नास्ति हीनोऽहं ब्रह्मैवाहं परायणम् । अत्यन्तदुःखमेतद्धि अत्यन्तसुखमव्ययम् ॥
अत्यन्तं जन्मभावं च अत्यन्तं रजसंभवम् । अत्यन्तं मलिनं सर्वमत्यन्तं निर्मलं परम् ॥ ४१ ॥
अत्यन्तं कल्पनं दुष्टं अत्यन्तं निर्मलं त्वहम् । अत्यन्तं सर्वदा दोषमत्यन्तं सर्वदा गुणम् ॥

---

१ कोष्ठान्तर्गतः सार्धः श्लोकः C कोशे नास्ति । २ सर्वं भ्रान्तं C
३ इदमर्धं C कोशे नास्ति ४ इदमर्धं C कोशे नास्ति ।

अत्यन्तं सर्वदा शुभ्रमत्यन्तं सर्वदा मलम् । अत्यन्तं सर्वदा चाहमत्यन्तं सर्वदा इदम् ॥ ४३ ॥
अत्यन्तं सर्वदा ब्रह्म अत्यन्तं सर्वदा जगत् । एतावदुक्तमभयमहं भेदं न किञ्चन ॥ ४४ ॥
सदसद्वापि नास्त्येव सदसद्वापि वाक्यकम् । नास्ति नास्ति न सन्देहो ब्रह्मैवाहं न संशयः ॥
कारणं कार्यरूपं वा सर्वं नास्ति न संशयः । कर्ता भोक्ता क्रिया वापि न भोज्यं भोगतृप्तता ॥
सर्वं ब्रह्म न सन्देहः सर्वशब्दो न वास्तवम् । भूतं भविष्यं वार्तं तु कार्यं वा नास्ति सर्वदा ॥
सदसद्भेदमेदं वा न गुणा गुणभागिनः । निर्मलं वा मलं वापि नास्ति नास्ति न किञ्चन ॥
भाष्यं वा भाषणं वाऽपि नास्ति नास्ति च किञ्चन । प्रबलं दुर्बलं वापि अहं च त्वं च वा क्वचित् ॥
ग्राह्यं च ग्राहकं वापि उपेक्ष्यं नात्मनः क्वचित् । तीर्थं वा स्नानरूपं वा देवो वा देवपूजनम् ॥
जन्म वा मरणं हेतुर्नास्ति नास्ति न किञ्चन । सत्यं वा सत्यरूपं वा नास्ति नास्ति न किञ्चन ॥
मातरः पितरो वापि देहो वा नास्ति किञ्चन । दृग्रूपं दृश्यरूपं वा नास्ति नास्तीह किञ्चन ॥

मायाकार्यं च माया वा नास्ति नास्तीह किञ्चन ।
ज्ञानं वा ज्ञानभेदो वा नास्ति नास्तीह किञ्चन ॥ ५३ ॥

सर्वप्रपञ्चहेयत्वं प्रोक्तं प्रकरणं च ते । यः शृणोति सकृद्वापि आत्माकारं प्रपद्यते ॥ ५४ ॥

स्कन्दः —

माया सा त्रिगुणा गणाधिपगुरोरेणाङ्कचूडामणेः
पादाम्भोजसमर्चनेन विलयं यात्येव नास्त्यन्यथा ।
विद्या हृद्यतमा सुविशुद्धिव सा भात्येव हृत्पङ्कजे
यस्यानल्पतपोभिरुग्रकरुणाद्दक् तस्य मुक्तिः स्थिरा ॥ ५५ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे सर्वप्रपञ्चहेयत्वप्रकरणवर्णनं नाम एकविंशोऽध्यायः ॥

---

## ॥ द्वाविंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये ब्रह्ममयं सर्वं नास्ति सर्वं जगन्मृषा । अहं ब्रह्म न मे चिन्ता अहं ब्रह्म न मे जडम् ॥ १ ॥
अहं ब्रह्म न मे दोषः अहं ब्रह्म न मे फलम् अहं ब्रह्म न मे वार्ता अहं ब्रह्म न मे द्वयम् ॥ २ ॥
अहं ब्रह्म न मे नित्यमहं ब्रह्म न मे गतिः । अहं ब्रह्म न मे माता अहं ब्रह्म न मे पिता ॥ ३ ॥
[1]अहं ब्रह्म न मे सोऽयमहं वैश्वानरो नहि । अहं ब्रह्म चिदाकाशमहं ब्रह्म न संशयः ॥ ४ ॥
सर्वान्तरोऽहं पूर्णात्मा सर्वान्तरमनोऽन्तरः । अहमेव शरीरान्तरहमेव स्थिरः सदा ॥ ५ ॥
एवं विज्ञानवान् मुक्त एवं ज्ञानं सुदुर्लभम् । अनेकशतसाहस्रेष्वेक एव विवेकवान् ॥ ६ ॥
तस्य दर्शनमात्रेण पितरस्तृप्तिमागताः । ज्ञानिनो दर्शनं पुण्यं सर्वतीर्थावगाहनम् ॥ ७ ॥
ज्ञानिन(१)श्चार्चनेनैव जीवन्मुक्तो भवेन्नरः । ज्ञानिनो भोजने दाने सद्यो मुक्तो भवेन्नरः ॥
अहं ब्रह्म न सन्देहः अहमेव गुरुः परः । अहं शान्तोऽस्मि शुद्धोऽस्मि अहमेव गुणान्तरः ॥
गुणातीतो जनातीतो परातीतो मनः परः । परतः परतोऽतीतो बुद्ध्यातीतो रसात् परः ॥ १० ॥
भावातीतो मनातीतो वेदातीतो विदः परः । शरीरादेश्च परतो जाग्रत्स्वप्नसुषुप्तिनः ॥ ११ ॥
अव्यक्तात् परतोऽतीत इत्येवं ज्ञाननिश्चयः । क्वचिदेतत्परित्यज्य सर्वं संत्यज्य मूकवत् ॥ १२ ॥
तूष्णीं ब्रह्म परं ब्रह्म शाश्वतब्रह्मवान् स्वयम् । ज्ञानिनो महिमा किञ्चिदणुमात्रमपि स्फुटम् ॥
हरिणापि हरेणापि ब्रह्मणापि सुरैरपि । न शक्यते वर्णयितुं कल्पकोटिशतैरपि ॥ १४ ॥
अहं ब्रह्मेति विज्ञानं त्रिषु लोकेषु दुर्लभम् । विवेकिनं महात्मानं ब्रह्ममात्रेणावस्थितम् ॥ १५ ॥
द्रष्टुं च भाषितुं वापि दुर्लभं पादसेवनम् । कदाचित् पादतीर्थेन स्नातश्चेत् ब्रह्म एव सः ॥
सर्वं मिथ्या न सन्देहः सर्वं ब्रह्मैव केवलम् । एतत्प्रकरणं प्रोक्तं सर्वसिद्धान्तसंग्रहः ॥ १७ ॥
दुर्लभं यः पठेद्भक्त्या ब्रह्म संपद्यते नरः । वक्ष्ये ब्रह्ममयं सर्वं नान्यत् सर्वं जगन्मृषा ॥ १८ ॥
ब्रह्मैव जगदाकारं ब्रह्मैव परमं पदम् । अहमेव परं ब्रह्म अहमित्यपि वर्जितः ॥ १९ ॥
सर्ववर्जितचिन्मात्रं सर्ववर्जितचेतनः । सर्ववर्जितशान्तात्मा सर्वमङ्गलविग्रहः ॥ २० ॥

---

१ "अत्र सन्दर्भे अहं ब्रह्म न मे किञ्चिदहं ब्रह्म न मे मही । अहमेव सदा ब्रह्म अहमेव परात्परः । सिद्धचैतन्यमेवाहं शुद्धब्रह्म न संशयः" इत्यादिरधिकः पाठः C कोशे दृश्यते ॥

अहं ब्रह्म परं ब्रह्म असम्भेदं न मे न मे । न मे भूतं भविष्यच्च न मे वर्णो न संशयः ॥ २१ ॥
ब्रह्मैवाहं न मे तुच्छं अहं ब्रह्म परं तपः । ब्रह्मरूपमिदं सर्वं ब्रह्मरूपमनामयम् ॥ २२ ॥
ब्रह्मैव भाति भेदेन ब्रह्मैव न परः परः । आत्मैव द्वैतवद्भाति आत्मैव परमं पदम् ॥ २३ ॥
ब्रह्मैवं भेदरहितं भेदमेव महद्भयम् । आत्मैवाहं निर्मलोऽहमात्मैव भुवनत्रयम् ॥ २४ ॥
आत्मैव नान्यत् सर्वत्र सर्वं ब्रह्मैव नान्यकः । अहमेव सदा [1]भामि ब्रह्मैवास्मि परोऽस्म्यहम् ॥
निर्मलोऽस्मि परं ब्रह्म कार्याकार्यविवर्जितः । सदा शुद्धैकरूपोऽस्मि सदा चैतन्यमात्रकः ॥ २६ ॥

निश्चयोऽस्मि परं ब्रह्म सत्योऽस्मि सकलोऽस्म्यहम् ।
अक्षरोऽस्मि परं ब्रह्म शिवोऽस्मि शिखरोऽस्म्यहम् ॥ २७ ॥

समरूपोऽस्मि शान्तोऽस्मि तत्परोऽस्मि चिदव्ययः ।
सदा ब्रह्म हि नित्योऽस्मि सदा चिन्मात्रलक्षणः ॥ २८ ॥

सदाऽखण्डैकरूपोऽस्मि सदा मानविवर्जितः । सदा शुद्धैकरूपोऽस्मि सदा चैतन्यमात्रकः ॥ २९ ॥
सदा [2]सन्मानरूपोऽस्मि सदा सत्ताप्रकाशकः । सदा सिद्धान्तरूपोऽस्मि सदा पावनमङ्गलः ॥ ३० ॥
एवं निश्चितवान् मुक्तः एवं नित्यपरो वरः । एवं भावनया युक्तः परं ब्रह्मैव सर्वदा ॥ ३१ ॥
एवं ब्रह्मात्मवान् ज्ञानी ब्रह्माहमिति निश्चयः । स एव पुरुषो लोके ब्रह्माहमिति निश्चितः । ३२॥
स एव पुरुषो ज्ञानी जीवन्मुक्तः स आत्मवान् । ब्रह्मैवाहं महानात्मा सच्चिदानन्दविग्रहः ॥
नाहं जीवो न मे भेदो नाहं चिन्ता न मे मनः । नाहं मांसं न मेऽस्थीनि नाहंकारकलेवरः ॥
न प्रमाता न मेयं वा नाहं सर्वं परोऽस्म्यहम् । [ [3]सर्वविज्ञानरूपोऽस्मि नाहं सर्वं कदाचन ॥

नाहं मृतो जन्मनान्यो न चिन्मात्रोऽस्मि नास्म्यहम् ।
न वाच्योऽहं न मुक्तोऽहं न बुद्धोऽहं कदाचन ॥ ३६ ॥

न शून्योऽहं न मूढोऽहं न सर्वोऽहं परोऽस्म्यहम् । ] सर्वदा ब्रह्ममात्रोऽहं न रसोऽहं सदाशिवः ॥

न घ्राणोऽहं न गन्धोऽहं न जिह्वोऽयं न मे प्रियः ।
नाहं जीवो रसो नाहं वरुणो न च गोलकः ॥ ३८ ॥

ब्रह्मैवाहं न सन्देहो नामरूपं न किञ्चन । न श्रोत्रोऽहं न शब्दोऽहं न दिशोऽहं न साक्षिकः ॥

---

१ भाति C   २ समान C   ३ [ ] कोष्ठान्तर्गतौ द्वौ श्लोकौ C कोशे नोपलभ्येते ।

नाहं न त्वं न च स्वर्गो नाहं वायुर्न साक्षिकः । पायुर्नाहं विसर्गो न न मृत्युर्न च साक्षिकः ॥
गुह्यं नाहं नचानन्दो न प्रजापतिर्देवता । सर्वं ब्रह्म न सन्देहः सर्वं ब्रह्मैव केवलम् ॥ ४१ ॥
नाहं मनो न संकल्पो न चन्द्रो न च साक्षिकः । नाहं बुद्धीन्द्रियो ब्रह्मा नाहं निश्चयरूपवान् ॥
नाहंकारमहं रुद्रो नाभिमानो न साक्षिकः । चित्तं नाहं वासुदेवो धारणा नायमीश्वरः ॥ ४३ ॥
नाहं विश्वो न जाग्रद्वा स्थूलदेहो न मे क्वचित् । न प्रातिभासिको जीवो न चाहं व्यावहारिकः ॥
न पारमार्थिको देवो नाहमन्नमयो जडः । न प्राणमयकोशोऽहं न मनोमयकोशवान् ॥ ४५ ॥
न विज्ञानमयः कोशो नानन्दमयकोशवान् । ब्रह्मैवाहं न सन्देहो नामरूपे न किञ्चन ॥ ४६ ॥
एतावदुक्त्वा सकलं नामरूपद्वयात्मकम् । सर्वं क्षणेन विस्मृत्य काष्ठलोष्टादिवत् त्यजेत् ॥
एतत्सर्वमसन्नित्यं सदा वन्ध्याकुमारवत् । शशशृङ्गवदेवेदं नरशृङ्गवदेव तत् ॥ ४८ ॥
आकाशपुष्पसदृशं यथा मरुमरीचिका । गन्धर्वनगरं यद्वदिन्द्रजालवदेव हि ॥ ४९ ॥
असत्यमेव सततं पञ्चरूपकमिष्यते । शिष्योपदेशकालो हि द्वैतं न परमार्थतः ॥ ५० ॥
माता मृते रोदनाय द्रव्यं दत्वाऽऽह्वयेज्जनान् । तेषां रोदनमात्रं यत् केवलं द्रव्यपञ्चकम् ॥ ५१ ॥
तद्द्वैतं मया प्रोक्तं सर्वं विस्मृत्य कुड्यवत् । अहं ब्रह्मेति निश्चित्य अहमेवेति भावय ॥ ५२ ॥
अहमेव सुखं चेति अहमेव न चापरः । अहं चिन्मात्रमेवेति ब्रह्मैवेति विनिश्चिनु ॥ ५३ ॥
अहं निर्मलशुद्धेति अहं जीवविलक्षणः । अहं ब्रह्मैव सर्वात्मा अहमित्यवभासकः ॥ ५४ ॥
अहमेव हि चिन्मात्रमहमेव हि निर्गुणः । सर्वान्तर्याम्यहं ब्रह्म चिन्मात्रोऽहं सदाशिवः ॥ ५५ ॥
नित्यमङ्गलरूपात्मा नित्यमोक्षमयः पुमान् । एवं निश्चित्य सततं स्वात्मानं स्वयमास्थितः ॥ ५६ ॥
ब्रह्मैवाहं न सन्देहो नामरूपे न किञ्चन । एतद्रूपप्रकरणं सर्ववेदेषु दुर्लभम् ॥ ५७ ॥
यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् ॥

तं वेदादिवचोभिरीडितमहायागैश्च योगैर्व्रतै-
दानैश्चानशनैर्यमादिनियमैस्तं विद्विषन्ते द्विजाः ।
तस्यानङ्गरिपोरतीव सुमहाद्युं हि लिङ्गार्चनं
तेनैवाशु विनाश्य मोहमखिलं ज्ञानं ददातीश्वरः ॥ ५८ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे नामरूपनिषेधप्रकरणं नाम द्वाविंशोऽध्यायः ॥

---

## ॥ त्रयोविंशोऽध्यायः ॥

ऋभुः —

निदाघ शृणु वक्ष्यामि सर्वलोकेषु दुर्लभम् । इदं ब्रह्म परं ब्रह्म सच्चिदानन्द एव हि ॥ १ ॥
नानाविधजनं लोकं नानाकारणकार्यकम् । ब्रह्मैवान्यदसत् सर्वं सच्चिदानन्द एव हि ॥ २ ॥
अहं ब्रह्म सदा ब्रह्म अस्मि ब्रह्माहमेव हि । कालो ब्रह्म क्षणो ब्रह्म अहं ब्रह्म न संशयः ॥ ३ ॥
वेदो ब्रह्म परं ब्रह्म सत्यं ब्रह्म परात् परः । हंसो ब्रह्म हरिर्ब्रह्म शिवो ब्रह्म चिदव्ययः ॥ ४ ॥
सर्वोपनिषदो ब्रह्म साम्यं ब्रह्म समोऽस्म्यहम् । अजो ब्रह्म रसो ब्रह्म वियद्ब्रह्म परात्परः ॥ ५ ॥
त्रुटिर्ब्रह्म मनो ब्रह्म व्यष्टिर्ब्रह्म सदामुदः । इदं ब्रह्म परं ब्रह्म तत्त्वं ब्रह्म सदा जपः ॥ ६ ॥
अकारो ब्रह्म एवाहमुकारोऽहं न संशयः । मकारब्रह्ममात्रोऽहं मन्त्रब्रह्ममनुः परम् ॥ ७ ॥
शिकारब्रह्ममात्रोऽहं वाकारं ब्रह्म केवलम् । यकारं ब्रह्म नित्यं च पञ्चाक्षरमहं परम् ॥ ८ ॥
रेचकं ब्रह्म सद्ब्रह्म पूरकं ब्रह्म सर्वतः । कुंभकं ब्रह्म सर्वोऽहं धारणं ब्रह्म सर्वतः ॥ ९ ॥
ब्रह्मैव नान्यत् तत्सर्वं सच्चिदानन्द एव हि । [1]एवं च निश्चितो मुक्तः सद्य एव न संशयः ॥
केचिदेव महामूढाः द्वैतमेवं वदन्ति हि । न संभाष्याः सदानर्हा नमस्कारे न योग्यता ॥ ११ ॥
मूढा मूढतरास्तुच्छास्तथा मूढतमाः पर । एते न सन्ति मे नित्यं अहंविज्ञानमात्रतः ॥ १२ ॥
सर्वं चिन्मात्ररूपत्वादानन्दत्वान्न मे भयम् । अहंनित्यापि नास्त्येव परमित्यपि न क्वचित् ॥
ब्रह्मैव नान्यत् तत्सर्वं सच्चिदानन्द एव हि । कालातीतं सुखातीतं सर्वातीतमतीतकम् ॥ १४ ॥
नित्यातीतमनित्यानामामितं ब्रह्म केवलम् । ब्रह्मैव नान्यदत्सर्वं सच्चिदानन्दमात्रकम् ॥ १५ ॥
द्वैतसत्यत्वबुद्धिश्च द्वैतबुद्ध्या न तत् स्मर । सर्वं ब्रह्मैव नान्योऽस्ति सर्वं ब्रह्मैव केवलम् ॥ १६ ॥
बुद्ध्यातीतं मनोऽतीतं वेदातीतमतः परम् । आत्मातीतं जनातीतं जीवातीतं च निर्गुणम् ॥
काष्ठातीतं कलातीतं नाट्यातीतं परं सुखम् । ब्रह्ममात्रेण संपश्यन् ब्रह्ममात्रपरो भव ॥ १८ ॥
ब्रह्ममात्रपरो नित्यं चिन्मात्रोऽहं न संशयः । ज्योतिरानन्दमात्रोऽहं निजानन्दात्ममात्रकः ॥
शून्यानन्दात्ममात्रोऽहं चिन्मात्रोऽहमिति स्मर । सत्तामात्रोऽहमेवात्र सदा कालगुणान्तरः ॥
नित्यसन्मात्ररूपोऽहं शुद्धानन्दात्ममात्रकम् । प्रपञ्चहीनरूपोऽहं सच्चिदानन्दमात्रकः ॥ २१ ॥

---

१ इतः परं श्लोकद्वयं C कोशे नोपलभ्यते ।

निश्चयानन्दमात्रोऽहं केवलानन्दमात्रकः । परमानन्दमात्रोऽहं पूर्णानन्दोऽहमेव हि ॥ २२ ॥
द्वैतस्य मात्रसिद्धोऽहं साम्राज्यपदलक्षणम् । इत्येवं निश्चयं कुर्वन् सदा त्रिषु यथासुखम् ॥ २३ ॥
[1] दृश्यनिश्चयरूपात्मा दृढनिश्चयसन्मयः । [[2] दृढनिश्चयशान्तात्मा दृढनिश्चयमानसः ॥ २४ ॥
दृढनिश्चयपूर्णात्मा दृढनिश्चयनिर्मलः । दृढनिश्चयजीवात्मा दृढनिश्चयमङ्गलः ] ॥ २५ ॥
दृढनिश्चयजीवात्मा संशयं नाशमेष्यति । दृढनिश्चयमेवात्र ब्रह्मज्ञानस्य लक्षणम् ॥ २६ ॥
दृढनिश्चयमेवात्र वाक्यज्ञानस्य लक्षणम् । दृढनिश्चयमेवात्र कारणं मोक्षसंपदः ॥ २७ ॥
एवमेव सदा कार्यं ब्रह्मैवाहमिति स्थिरम् । ब्रह्मैवाहं न सन्देहः सच्चिदानन्द एव हि ॥ २८ ॥
आत्मानन्दस्वरूपोऽहं नान्यदस्तीति भावय । ततस्तदपि सन्त्यज्य एक एव स्थिरो भव ॥ २९ ॥
ततस्तदपि सन्त्यज्य निर्गुणो भव सर्वदा । निर्गुणत्वं च सन्त्यज्य वाचातीतो भवेत् ततः ॥
वाचातीतं च सन्त्यज्य चिन्मात्रत्वपरो भव । आत्मातीतं च सन्त्यज्य ब्रह्ममात्रपरो भव ॥
चिन्मात्रत्वं च सन्त्यज्य सर्वतूष्णींपरो भव । सर्वतूष्णीं च सन्त्यज्य [3] महातूष्णींपरो भव ॥
महातूष्णीं च सन्त्यज्य चित्ततूष्णीं समाश्रय । चित्ततूष्णीं च सन्त्यज्य जीवतूष्णीं समाहर ॥
जीवतूष्णीं परित्यज्य जीवशून्यपरो भव । शून्यत्यागं परित्यज्य यथा तिष्ठ तथासि भो ॥ ३४ ॥
तिष्ठत्वमपि सन्त्यज्य अवाङ्मनसगोचरः । ततः परं न वक्तव्यं ततः [4] पश्येन्न किञ्चन ॥ ३५ ॥
नो चेत् सर्वपरित्यागो ब्रह्मैवाहमितीरय । सदा स्मरन् सदा चिन्त्यं सदा भावय निर्गुणम् ॥
सदा तिष्ठस्व तत्त्वज्ञ सदा ज्ञानी सदा परः । सदानन्दः सदातीतः सदादोषविवर्जितः ॥ ३७ ॥
सदा शान्तः सदा तृप्तः सदा ज्योतिः सदा रसः । सदा नित्यः सदा शुद्धः सदा बुद्धः सदा लयः ॥
सदा ब्रह्म सदा मोदः सदानन्दः सदा परः । सदा स्वयं सदा शून्यः सदा मौनी सदाशिवः ॥
सदा सर्वं सदा मित्रः सदा स्नानं सदा जपः । सदा सर्वं च विस्मृत्य सदा मौनं परित्यज ॥
देहाभिमानं सन्त्यज्य चित्तसत्तां परित्यज । आत्मैवाहं स्वयं चाहं इत्येवं सर्वदा भव ॥ ४१ ॥
एवं स्थिते त्वं मुक्तोऽसि न तु कार्या विचारणा । ब्रह्मैव सर्वं यत्किञ्चित् सच्चिदानन्द एव हि ॥
अहं ब्रह्म इदं ब्रह्म त्वं ब्रह्मासि निरन्तरः । प्रज्ञानं ब्रह्म एवासि त्वं ब्रह्मासि न संशयः ॥ ४३ ॥
दृढनिश्चयमेवं त्वं कुरु कल्याणमात्मनः । मनसो भूषणं ब्रह्म [5] मनसो भूषणं परः ॥ ४४ ॥

---

१ दृढ C　२ कोष्ठान्तर्गतः पाठः C कोशे नास्ति ।　३ निर्गुणो भव सर्वदा C
४ पश्यान C　५ मनोभूषणकं परः C

मनसो भूषणं कर्ता ब्रह्मैवाहमवेक्षतः । ब्रह्मैव सच्चिदानन्दः सच्चिदानन्दविग्रहः ॥ ४५ ॥
सच्चिदानन्दमखिलं सच्चिदानन्द एव हि । सच्चिदानन्दजीवात्मा सच्चिदानन्दविग्रहः ॥ ४६ ॥
सच्चिदानन्दमद्वैतं सच्चिदानन्दशङ्करः । सच्चिदानन्दविज्ञानं सच्चिदानन्दभोजनः ॥ ४७ ॥
सच्चिदानन्दपूर्णात्मा सच्चिदानन्दकारणः । सच्चिदानन्दलीलात्मा सच्चिदानन्दशेवधिः ॥ ४८ ॥
सच्चिदानन्दसर्वाङ्गः सच्चिदानन्दचन्दनः । सच्चिदानन्दसिद्धान्तः सच्चिदानन्दवेदकः ॥ ४९ ॥
सच्चिदानन्दशास्त्रार्थः सच्चिदानन्दवाचकः । सच्चिदानन्दहोमश्च सच्चिदानन्दयाजकः ॥ ५० ॥
सच्चिदानन्दपूर्णात्मा सच्चिदानन्दपूर्णकः । सच्चिदानन्दसन्मात्रं मूढेषु पाठितं च यत् ॥ ५१ ॥
शुद्धं मूढेषु यद्दत्तं सुबद्धं मार्गचारिणा । विषयासक्तचित्तेषु न संभाष्यं विवेकिना ॥ ५२ ॥
सकृच्छ्रवणमात्रेण ब्रह्मैव भवति स्वयम् । इच्छा चेद्यदि नारीणां मुखं ब्राह्मण एव हि ॥ ५३ ॥
सर्वं चैतन्यमात्रत्वात् स्त्रीभेदं च न विद्यते । वेदशास्त्रेण युक्तोऽपि ज्ञानाभावाद् द्विजोऽद्विजः ॥
ब्रह्मैव तन्तुना तेन बद्धास्ते मुक्तिचिन्तकाः । सर्वमुक्तं भगवता रहस्यं शङ्करेण हि ॥ ५५ ॥

सोमापीडपदांबुजार्चनफलैर्[1] मुक्त्यै भवान् मानसं
नान्ययोगपथा श्रुतिश्रवणतः किं कर्मभिर्[2] भूयते ।
युक्त्या शिक्षितमानसानुभवतोऽप्यप्राप्यसङ्गो वचां
किं ग्राह्यं भवतीन्द्रियार्थरहितानन्दैकसान्द्रः शिवः ॥ ५६ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुनिदाघसंवादे रहस्योपदेशप्रकरणं नाम त्रयोविंशोऽध्यायः ॥

## ॥ चतुर्विंशोऽध्यायः ॥

ऋभुः —

पुनः पुनः परं वक्ष्ये आत्मनोऽन्यदसत् स्वतः । असतो वचनं नास्ति सतो नास्ति सदा शिवे ॥
ब्रह्माभ्यास[3] परस्याहं वक्ष्ये निर्णयमात्मनः । तस्यापि सकृदेवाहं वक्ष्ये मङ्गलपूर्वकम् ॥ २ ॥
सर्वं ब्रह्माहमेवास्मि चिन्मात्रो नास्ति किञ्चन । अहमेव परं ब्रह्म अहमेव चिदात्मकम् ॥ ३ ॥

१ मुक्त्यैक्यवान् G २ भूतये C ३ रहस्यं च C

अहं ममेति नास्त्येव अहं ज्ञानीति नास्ति च । शुद्धोऽहं ब्रह्मरूपोऽहमानन्दोऽहमजो न (अ) रः ॥
देवोऽहं दिव्यभानोऽहं तुर्योऽहं भवभाव्यहम् । अण्डजोऽहमशेषोऽहमन्तरादन्तरोऽस्म्यहम् ॥
अमरोऽहमजस्त्रोऽहमत्यन्तपरमोऽस्म्यहम् । परापरस्वरूपोऽहं नित्यानित्यरसोऽस्म्यहम् ॥ ६ ॥
गुणागुणविहीनोऽहं तुर्यातुर्यरसोऽस्म्यहम् । शान्ताशान्तविहीनोऽहं ज्ञानाज्ञानरसोऽस्म्यहम् ॥
कालाकालविहीनोऽहमात्मानात्मविवर्जितः । लब्धालब्धादिहीनोऽहं सर्वशून्योऽहमव्ययः ॥ ८ ॥
अहमेवाहमेवाहमनन्तरनिरनन्तरम् । शाश्वतोऽहमलक्ष्योऽहमात्मा न परिपूर्णतः (?) ॥ ९ ॥
इत्यादिशब्दमुक्तोऽहं इत्याद्यं च नचास्म्यहम् । इत्यादिवाक्यमुक्तोऽहं सर्ववर्जितदुर्जयः ॥
निरन्तरोऽहं भृतोऽहं भव्योऽहं भववर्जितः । लक्ष्यलक्षणहीनोऽहं कार्यहीनोऽहमाशुगः ॥ ११ ॥
व्योमादिरूपहीनोऽहं व्योमरूपोऽहमच्युतः । अन्तरान्तरभावोऽहमन्तरान्तरवर्जितः ॥ १२ ॥
सर्वसिद्धान्तरूपोऽहं सर्वदोषविवर्जितः । न कदाचन मुक्तोऽहं न बद्धोऽहं कदाचन ॥ १३ ॥
एवमेव सदा कृत्वा ब्रह्मैवाहमिति स्मर । एतावदेव मात्रं तु मुक्तो भवतु निश्चयः ॥ १४ ॥
चिन्मात्रोऽहं शिवोऽहं वै शुभमात्रमहं सदा । सदाकारोऽहं मुक्तोऽहं सदा वाचामगोचरः ॥
सर्वदा परिपूर्णोऽहं वेदोपाधिविवर्जितः । चित्तकार्यविहीनोऽहं चित्तमस्तीति मे न हि ॥ १६ ॥
यत्र किञ्चिदपि नास्त्येव नास्त्येव प्रियभाषणम् । आत्मप्रियमनात्मा हि इदं मे वस्तुतो न हि ॥
इदं दुःखमिदं सौख्यमिदं भाति अहं न हि । सर्ववर्जितरूपोऽहं सर्ववर्जितचेतनः ॥ १८ ॥
अनिर्वाच्यमनिर्वाच्यं परं ब्रह्म रसोऽस्म्यहम् । अहं ब्रह्म न संदेह अहमेव परात् परः ॥ १९ ॥
अहं चैतन्यभूतात्मा देहो नास्ति कदाचन । लिङ्गदेहं च नास्त्येव कारणं देहमेव न ॥ २० ॥
अहं त्यक्त्वा परं चाहं अहं ब्रह्मस्वरूपतः । कामादिवर्जितोऽतीतः कालभेदपरात्परः (?) ॥
ब्रह्मवेदं न संवेद्यं नाहं भावं न चा नहि । सर्वसंशयसंशान्तो ब्रह्मैवाहमिति स्थितिः ॥ २२ ॥
निश्चयं च न मे किञ्चित् चिन्ताभावात् सदाऽक्षरः । चिदहं चिदहं ब्रह्म चिदहं चिदहं सदा ॥
एवं भावनया युक्तस्त्यक्तशङ्कः सुखीभव । सर्वसङ्गं परित्यज्य [1] आत्मैकयैवं भवान्वहम् ॥ २४ ॥
सङ्गं नाम प्रवक्ष्येऽहं ब्रह्माहमिति निश्चयः । सत्योऽहं परमात्माऽहं स्वयमेव स्वयं स्वयम् ॥
नाहं देहो न च प्राणो न द्वन्द्वो न च निर्मलः । एष एव हि सत्सङ्गः एष एव हि निर्मलः ॥
[2] महत्सङ्गं महद्ब्रह्मभावनं परमं पदम् । अहं शान्तप्रभावोऽहं अहं ब्रह्म न संशयः ॥ २७ ॥
अहं त्यक्तस्वरूपोऽहं अहं चिन्तादिवर्जितः । एष एव हि सत्सङ्गः एष नित्यं भवानहम् ॥

१ आत्मैकी + एवं इति पदच्छेदो वा ? २ महत्सङ्गो C

सर्वसङ्कल्पहीनोऽहं सर्ववृत्तिविवर्जितः। अमृतोऽहमजो नित्यं मृतिभीतिरतीतिकः (?) ॥ २९॥
सर्वकल्याणरूपोऽहं सर्वदा प्रियरूपवान्। समलाङ्गो मलातीतः सर्वदाऽहं सदानुगः ॥ ३० ॥
अपरिच्छिन्नसन्मात्रं सत्यज्ञानस्वरूपवान्। नादान्तरोऽहं नाद्रोऽहं नामरूपविवर्जितः ॥ ३१ ॥
अत्यन्ताभिमहीनोऽहमादिमध्यान्तवर्जितः। एवं नित्यं दृढाभ्यास एवं ह्यानुभवेन च ॥ ३२॥
एवमेव हि नित्यात्मभावनेन सुखी भव। एवमात्मा सुखं प्राप्तः पुनर्जन्म न संभवेत् ॥ ३३ ॥
सद्यो मुक्तो भवेद्ब्रह्माकारेण परितिष्ठति। आत्माकारमिदं विश्वमात्माकारमहं महत् ॥ ३४ ॥
आत्मैव नान्यद्भूतं वा आत्मैव मन एव हि। आत्मैव चित्तवद्भाति आत्मैव स्मृतिवत् क्वचित् ॥
आत्मैव वृत्तिमद्भाति आत्मैव क्रोधवत् सदा। आत्मैव श्रवणं तद्वदात्मैव मननं च तत् ॥ ३६॥
आत्मैवोपक्रमं नित्यमुपसंहारमात्मवत्। आत्मैवाभ्यां समं नित्यमात्मैवापूर्वताफलम् ॥ ३७ ॥
अर्थवादवदात्मा हि परमात्मोपपत्ति हि। इच्छा प्रारभ्य (ब्ध) वद्ब्रह्म इच्छा[1] मारभ्यवत् परः ॥
परेच्छारब्धवद्ब्रह्म इच्छाशक्तिश्चिदेव हि। अनिच्छाशक्तिरात्मैव परेच्छाशक्तिरव्ययः ॥ ३९ ॥
परमात्मैवाविकारो विषयं परमात्मनः। संबन्धं परमात्मैव प्रयोजनं परात्मकम् ॥ ४० ॥
ब्रह्मैव परमं सङ्गं कर्मजं ब्रह्म सङ्गमम्। ब्रह्मैव भ्रान्तिजं भाति द्वन्द्वं ब्रह्मैव नान्यतः ॥ ४१ ॥
सर्वं ब्रह्मेति निश्चित्य सद्य एव विमोक्षदम्। सविकल्पसमाधिस्थं निर्विकल्पसमाधि हि ॥ ४२ ॥
शब्दानुविद्धं ब्रह्मैव ब्रह्म दृश्यानुविद्धकम्। ब्रह्मैवादिसमाधिश्च तन्मध्यमसमाधिकम् ॥ ४३ ॥
ब्रह्मैव निश्चयं शून्यं तदुक्तमसमाधिकम्। देहाभिमानरहितं तद्वैराग्यसमाधिकम् ॥ ४४ ॥
एतद्भावनया शान्तं जीवन्मुक्तसमाधिकः। अत्यन्तं सर्वशान्तत्वं देहो मुक्तिसमाधिकम् ॥
एतदभ्यासिनां प्रोक्तं सर्वं चैतत्समन्वितम्। सर्वं विस्मृत्य विस्मृत्य त्यक्त्वा त्यक्त्वा पुनः पुनः ॥
सर्ववृत्तिं च शून्येन स्थास्यामीति विमुच्य हि। न स्थास्यामीति विस्मृत्य[2] भास्यामीति च विस्मर ॥
चैतन्योऽहमिति त्यक्त्वा सन्मात्रोऽहमिति त्यज। त्यजनं च परित्यज्य भावनं च परित्यज ॥
सर्वं त्यक्त्वा मनः क्षिप्रं स्मरणं च परित्यज। स्मरणं किञ्चिदेवात्र महासंसारसागरम् ॥ ४९ ॥
स्मरणं किञ्चिदेवात्र महादुःखं भवेत् तदा। महादोषं भवं बन्धं चित्तजन्म गतं मनः ॥ ५० ॥
प्रारब्धं हृदयग्रन्थि ब्रह्महत्यादि पातकम्। स्मरणं चैवमेवेह बन्धमोक्षस्य कारणम् ॥ ५१ ॥
अहं ब्रह्मप्रकरणं सर्वदुःखविनाशकम्। सर्वप्रपञ्चशमनं सद्यो मोक्षप्रदं सदा ॥ ५२ ॥
एतच्छ्रवणमात्रेण ब्रह्मैव भवति स्वयम्।

---

१ प्रारब्ध C  २ स्थास्यामीति C

भक्त्या पद्मदलाक्षपूजितपदध्यानानुवृत्त्या मनः
स्वान्तानन्तपथप्रचारविधुरं मुक्त्यै भवेन्मानसम् ।
सङ्कल्पोज्झितमेतदल्पमुमहाशीलो दयाम्भोनिधौ
कश्चित् स्याच्छिवभक्तधुर्यमुमहाशान्तः शिवप्रेमतः ॥ ५३ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे अहं ब्रह्मप्रकरणनिरूपणं नाम चतुर्विंशोऽध्यायः ॥

## ॥ पञ्चविंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये प्रसिद्धमात्मानं सर्वलोकप्रकाशकम् । सर्वाकारं सदा सिद्धं सर्वत्र निबिडं महत् ॥ १ ॥
तद्ब्रह्माहं न सन्देह इति निश्चित्य तिष्ठ भोः । चिदेवाहं चिदेवाहं चित्रं चेदहमेव हि ॥ २ ॥
वाचावधिश्च देवोऽहं चिदेव मनसः परः । चिदेवाहं परं ब्रह्म चिदेव सकलं पदम् ॥ ३ ॥
स्थूलदेहं चिदेवेदं सूक्ष्मदेहं चिदेव हि । चिदेव कारणं सोऽहं कायमेव चिदेव हि ॥ ४ ॥
अखण्डाकारवृत्तिश्च उत्तमाधममध्यमाः । देहहीनश्चिदेवाहं सूक्ष्मदेहश्चिदेव हि ॥ ५ ॥
चिदेव कारणं सोऽहं बुद्धिहीनश्चिदेव हि । भावहीनश्चिदेवाहं दोषहीनश्चिदेव हि ॥ ६ ॥
[1]अस्तित्वं ब्रह्म नास्त्येव नास्ति ब्रह्मेति नास्ति हि । अस्ति नास्तीति नास्त्येव अहमेव चिदेव हि ॥
सर्वं नास्त्येव नास्त्येव साकारं नास्ति नास्ति हि । यत्किञ्चिदपि नास्त्येव अहमेव चिदेव हि ॥
अन्वयव्यतिरेकं च आदिमध्यान्तदूषणम् । सर्वं चिन्मात्ररूपत्वादहमेव चिदेव हि ॥ ९ ॥
सर्वापरं च सदसत् कार्यकारणकर्तृकम् । सर्वं नास्त्येव नास्त्येव अहमेव हि केवलम् ॥ १० ॥
अशुद्धं शुद्धमद्वैतं द्वैतमेकमनेककम् । सर्वं ... ... ॥ ११ ॥
[2]असत्यसत्यमद्वन्द्वं द्वन्द्वं च परतः परम् । सर्वं ... ... ॥ १२ ॥
भूतं भविष्यं वर्तं च मोहामोहौ समासमौ । सर्वं ... ... ॥ १३ ॥
क्षणं लवं त्रुटिर्ब्रह्म त्वंपदं तत्पदं तथा । सर्वं ... ... ॥ १४ ॥
त्वंपदं तत्पदं वापि ऐक्यं च ह्यहमेव हि । सर्वं ... ... ॥ १५ ॥
आनन्दं परमानन्दं सर्वानन्दं निजं महत् । सर्वं ... ... ॥ १६ ॥

१ अस्ति ब्रह्मैव मस्त्येव C २ असत्यं सत्यमद्वैतं C

अहं ब्रह्म इदं ब्रह्म कं ब्रह्म ह्यक्षरं परम् । सर्वं ... ... ॥ १७ ॥
विष्णुरेव परं ब्रह्म शिवो ब्रह्माहमेव हि । सर्वं ... ... ॥ १८ ॥
श्रोत्रं ब्रह्म परं ब्रह्म शब्दं ब्रह्म पदं शुभम् । सर्वं ... ... ॥ १९ ॥
स्पर्शो ब्रह्म पदं [1]त्वक्च त्वक्च ब्रह्म परत्परम् । सर्वं ... ... ॥ २० ॥
परं रूपं चक्षुर्भिरेव तत्रैव योज्यताम् । सर्वं ... ... ॥ २१ ॥
ब्रह्मैव सर्वं सततं सच्चिदानन्दमात्रकम् । सर्वं ... ... ॥ २२ ॥
चिन्मयानन्दमात्रोऽहं इदं विश्वमिदं सदा । सर्वं ... ... ॥ २३ ॥
ब्रह्मैव सर्वं यत्किञ्चित् तद्ब्रह्माहं न संशयः । सर्वं ... ... ॥ २४ ॥
वाचा यत् प्रोच्यते नाम मनसा मनुते तु यत् । सर्वं ... ... ॥ २५ ॥
[2]कारणे कल्पिते यद्यत् तूष्णीं वा स्थीयते सदा ।
शरीरेण तु यद्भुङ्क्ते इन्द्रियैर्यत्तु भाव्यते । सर्वं ... ... ॥ २६ ॥
वेदे यत् कर्म वेदोक्तं शास्त्रं शास्त्रोक्तनिर्णयम् । गुरूपदेशसिद्धान्तं शुद्धाशुद्धविशासकम् ॥
कामादिकलनं ब्रह्म देवादिकलनं पृथक् । जीवयुक्तेति कलनं विदेहो मुक्तिकल्पनम् ॥ २८ ॥
ब्रह्म इत्यपि सङ्कल्पं ब्रह्मविद्वरकल्पनम् । [3]वरीयानिति सङ्कल्पं वरिष्ठ इति कल्पनम् ॥ २९ ॥
ब्रह्माहमिति सङ्कल्पं चिदहं चेति कल्पनम् । महाविद्येति सङ्कल्पं महामायेति कल्पनम् ॥ ३० ॥
महाशून्येति सङ्कल्पं महाचिन्तेति कल्पनम् । महालोकेति सङ्कल्पं महासत्येति कल्पनम् ॥
महारूपेति सङ्कल्पं महारूपं च कल्पनम् । सर्वसङ्कल्पकं चित्तं सर्वसङ्कल्पकं मनः ॥ ३२ ॥
सर्वं नास्त्येव नास्त्येव सर्वं ब्रह्मैव केवलम् । सर्वं द्वैतं मनोरूपं सर्वं दुःखं मनोमयम् ॥ ३३ ॥
चिदेवाहं न सन्देहः चिदेवेदं जगत्त्रयम् ।
यत्किञ्चिद्भाषणं वापि यत्किञ्चिन्मनसो जपम् । यत्किञ्चिन्मानसं कर्म सर्वं ब्रह्मैव केवलम् ॥
सर्वं नास्तीति सन्मन्त्रं जीवब्रह्मस्वरूपकम् । ब्रह्मैव सर्वमित्येवं मन्त्रश्चैवोत्तमोत्तमम् ॥ ३५ ॥
अनुक्तमन्त्रं सन्मन्त्रं वृत्तिशून्यं परं महत् । सर्वं ब्रह्मेति सङ्कल्पं तदेव परमं पदम् ॥ ३६ ॥
सर्वं ब्रह्मेति सङ्कल्पं महादेवेति कीर्तनम् । सर्वं ब्रह्मेति सङ्कल्पं शिवपूजासमं महत् ॥ ३७ ॥

---

१ त्वं च त्वं च C ब्रह्म त्वक्चेति पाठः स्यात् । २ इदमर्धद्वयं C कोशे नास्ति
३ कनीयानिति सङ्कल्पं गरीयानिति कल्पनम् C

सर्वं ब्रह्मेत्यनुभवः सर्वाकारो न संशयः। सर्वं ब्रह्मेति सङ्कल्पं सर्वत्यागमितीरितम् ॥ ३८ ॥
सर्वं ब्रह्मेति सङ्कल्पं भावाभावविनाशनम्। सर्वं ब्रह्मेति सङ्कल्पं महादेवेति निश्चयः ॥ ३९ ॥
सर्वं ब्रह्मेति सङ्कल्पं कालसत्ताविनिर्मुक्तः (मुक्तिकः)। सर्वं ब्रह्मेति सङ्कल्पः देहसत्ता विमुक्तिकः ॥
सर्वं ब्रह्मेति सङ्कल्पः सच्चिदानन्दरूपकः। सर्वोऽहं ब्रह्ममात्रैव सर्वं ब्रह्मैव केवलम् ॥ ४१ ॥
इदमित्येव यत्किञ्चित् तद्ब्रह्मैव नसंशयः। भ्रान्तिश्च नरकं दुःखं स्वर्गभ्रान्तिरितीरिता ॥ ४२ ॥
ब्रह्मा विष्णुरिति भ्रान्तिर्भ्रान्तिश्च शिवरूपकम्। विराट् स्वराट् तथा सम्राट् सूत्रात्मा भ्रान्तिरेव च ॥
देवाश्च देवकार्याणि सूर्याचन्द्रमसोर्गतिः। मुनयो मनवः सिद्धा भ्रान्तिरेव संशयः ॥ ४४ ॥
सर्वदेवासुरा भ्रान्तिस्तेषां युद्धादि जन्म च। विष्णोर्जन्मावताराणि चरितं भ्रान्तिरेव हि ॥
ब्रह्मणः सृष्टिकृत्यानि रुद्रस्य चरितानि च। सर्वभ्रान्तिसमायुक्तं भ्रान्त्या लोकाश्चतुर्दश ॥
वर्णाश्रमविभागश्च भ्रान्तिरेव न संशयः। ब्रह्मविष्ण्वीशरुद्राणामुपासा भ्रान्तिरेव च ॥ ४७ ॥
तत्रापि यन्त्रमन्त्राभ्यां भ्रान्तिरेव न संशयः। वाचामगोचरं ब्रह्म सर्वं ब्रह्ममयं च हि ॥ ४८ ॥
सर्वं नास्त्येव नास्त्येव अहमेव चिदेव हि। एवं वद त्वं तिष्ठ त्वं सद्यो मुक्तो भविष्यसि ॥
एतावदुक्तं यत्किञ्चित् तन्नास्त्येव न संशयः। एवं यदान्तरं क्षिप्रं ब्रह्मैव दृढनिश्चयम् ॥ ५० ॥
दृढनिश्चयमेवात्र प्रथमं कारणं भवेत्। निश्चयः खल्वयं पश्चात् स्वयमेव भविष्यति ॥ ५१ ॥

आर्तं यच्छिवपादतोऽन्यदितरं तज्जादिशब्दात्मकं
चेतोवृत्तिपरं पराप्रमुदितं षड्भावसिद्धं जगत्।
भूताद्यादिमनोवचोभिरनघे सान्द्रे महेशे घने
सिन्धौ सैन्धवखण्डवज्जगदिदं लीयेत बुद्ध्युज्झितम् ॥ ५२ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ब्रह्मणः सर्वरूपत्वनिरूपणप्रकरणं नाम पञ्चविंशोऽध्यायः ॥

## ॥ षड्विंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये सच्चित्परानन्दं स्वभावं सर्वदा सुखम्। सर्ववेदपुराणानां साक्षात् सारतरं स्वयम् ॥ १ ॥
न भेदं च द्वयं द्वन्द्वं न भेदं भेदवर्जितम्। इदमेव परं ब्रह्म ज्ञानाश्रयमनामयम् ॥ २ ॥
न कश्चिन्नात्र एवाहं नाक्षरं न परात्परम्। इदमेव ··· ··· ॥ ३ ॥

न बहिर्नान्तरं नाहं न सङ्कल्पो न विग्रहः । इदमेव .... .... ॥ ४ ॥
न सत्यं च परित्यज्य न वार्ता नार्थदूषणम् । इदमेव ··· ··· ॥ ५ ॥
न गुणा गुणिवाक्यं वा न मनोवृत्तिनिश्चयः । न जपं न परिच्छिन्नं न व्यापकमसत् फलम् ॥
न गुरुर्न च शिष्यो वा न स्थिरं न शुभाशुभम् । नैकरूपं नान्यरूपं न मोक्षो न च बन्धकम् ॥
हं पदार्थस्तत्पदं वा नेन्द्रियं विषयादिकम् । न संशयं न तुच्छं वा न निश्चय न वा कृतम् ॥
न शान्तिरूपमद्वैतं न चोच्चं न च नीचकम् । न लक्षणं न दुःखाङ्गं न सुखं न च चञ्चलम् ॥
न शरीरं न लिङ्गं वा न कारणमकारणम् । न दुःखं नान्तिकं नाहं न गूढं न परं पदम् ॥

न सञ्चितं च नागामि न सत्यं च त्वमाहकम् (?) ।
नाज्ञानं न च विज्ञानं न मूढो न च [1] विज्ञवान् ॥ ११ ॥

न नीचं नरकं नान्तं न मुक्तिर्नच पावनम् । न तृष्णा न च विद्यात्वं नाहं तत्वं न देवता ॥
न शुभाशुभसङ्केतो न मृत्युर्न च जीवनम् । न तृप्तिर्न च भोज्यं वा न खण्डैकरसोऽद्वयम् ॥
न सङ्कल्पं न प्रपञ्चं न जागरणराजकम् । न किञ्चित्समतादोषो न तुर्यगणना भ्रमः ॥ १४ ॥
न सर्वं समलं नेष्टं न नीतिर्न च पूजनम् । न प्रपञ्चं न बहुना नान्यभाषणसङ्गमः ॥ १५ ॥
न सत्सङ्गमसत्सङ्गः न ब्रह्म न विचारणम् । नाभ्यासं न च वक्ता च न स्नानं न च तीर्थकम् ॥
न पुण्यं न च वा पापं न क्रिया दोषकारणम् । न चाध्यात्मं नाधिभूतं न दैवतमसम्भवम् ॥
न जन्ममरणे क्वापि जाग्रत्स्वप्नसुषुप्तिकम् । न भूलोकं न पातालं न जयापजयाजयौ ॥ १८ ॥
न हीनं न च वा भीतिर्न रतिर्न मतिस्त्वरा । अचिन्त्यं नापराध्यात्मा निगमागमविभ्रमः ॥
न सात्त्विकं राजसं च न तामसगुणाधिकम् । न शैवं न च वेदान्तं न स्वाद्यं तन्न मानसम् ॥

न बन्धो न च मोक्षो वा न वाक्यं ऐक्यलक्षणम् ।
न स्त्रीरूपं न पुंभावः न षण्डो न स्थिरः पदम् (?) ॥ २१ ॥

न भूषणं न दूषणं न स्तोत्रं न स्तुतिर्न हि । न लौकिकं वैदिकं न शास्त्रं न च शासनम् ॥
न पानं न कष्टं नेदं न भेदं न मदामदम् । न भावनमभावो वा न कुलं नामरूपकम् ॥ २३ ॥
नोत्कृष्टं च निकृष्टं च न श्रेयोऽश्रेय एव हि । निर्मलत्वं मलोत्सर्गो न जीवो न मनोद्भवः ॥
न शान्तिकलना नागं न शान्तिर्न शमो दमः । न क्रीडा नच भावाङ्गं न विकारं न दोषकम् ॥

---

[1] विवेकवान् G

न यत्किञ्चिन्न यत्राहं न मायाख्या न मायिका। यत्किञ्चिन्न च धर्मादि न धर्मपरिपीडनम् ॥
न यौवनं न बाल्यं वा न जरामरणादिकम्। न बन्धुर्न च वाऽबन्धुर्न मित्रं न च सोदरः ॥
नापि सर्वं न चाकिञ्चिन्न विरिञ्चो न केशवः। न शिवो नाष्टदिक्पालो न विश्वो न च तैजसः ॥
न प्राज्ञो हि न तुर्यो वा न ब्रह्मक्षत्रविट्शूद्रः। इदमेव परं ब्रह्म ज्ञानामृतमनामयम् ॥ २९ ॥
न पुनर्भावि पश्चाद्वा न पुनर्भवसंभवः। न कालकलना नाहं न संभाषणकारणम् ॥ ३० ॥
न चोच्चैमन्तःकरणं न च चिन्मात्रभाषणम्। न ब्रह्माहमिति द्वैतं न चिन्मात्रमिति द्वयम् ॥
नान्नकोशं न च प्राणमनोमयमकोशकम्। न विज्ञानमयः कोशः न चानन्दमयः पृथक् ॥३२॥
न बाधरूपं बोध्यं वा बोधकं नात्र यद्भ्रमः। न बाध्यं बाधकं मिथ्या त्रिपुटीज्ञाननिर्णयः ॥
न प्रमाता प्रमाणं वा न प्रमेयं फलोदयम्। इदमेव परं ब्रह्म ज्ञानामृतमनोमयम् ॥ ३४ ॥
न गुह्यं न प्रकाशं वा न महत्त्वं न चाणुता। न प्रपञ्चो विद्यमानं न प्रपञ्चः कदाचन ॥ ३५ ॥
नान्तःकरणसंसारो न मनो जगतां भ्रमः। न चित्तरूपसंसारो बुद्धिपूर्वं प्रपञ्चकम् ॥ ३६ ॥
न जीवरूपसंसारो वासनारूपसंसृतिः। न लिङ्गभेदसंसारो नाज्ञानमयसंसृतिः ॥ ३७ ॥
न वेदरूपसंसारो न शास्त्रागमसंसृतिः। नान्यदस्तीति संसारमन्यदस्तीति भेदकम् ॥ ३८ ॥
न भेदाभेदकलनं न दोषादोषकल्पनम्। न शान्ताशान्तसंसारं न गुणागुणसंसृतिः ॥ ३९ ॥
न स्त्रीलिङ्गं न पुंलिङ्गं न नपुंसकसंसृतिः। न स्थावरं जङ्गमं च न दुःखं न सुखं क्वचित् ॥
न शिष्टाशिष्टरूपं वा न योग्यायोग्यनिश्चयः। न द्वैतवृत्तिरूपं वा साक्षिवृत्तित्वलक्षणम् ॥ ४१ ॥
अखण्डाकारवृत्तित्वमखण्डैकरसं सुखम्। देहोऽहमिति या वृत्तिर्ब्रह्माहमिति शब्दकम् ॥ ४२ ॥
अखण्डनिश्चया वृत्तिर्नाखण्डैकरसं महत्। न सर्ववृत्तिभवनं सर्ववृत्तिविनाशकम् ॥ ४३ ॥
सर्ववृत्त्यनुसन्धानं सर्ववृत्तिविमोचनम्। सर्ववृत्तिविनाशान्तं सर्ववृत्तिविशून्यकम् ॥ ४४ ॥
न सर्ववृत्तिसाहस्रं क्षणक्षणविनाशनम्। न सर्ववृत्तिसाक्षित्वं न च ब्रह्मात्मभावनम् ॥ ४५ ॥
न जगन्न मनो नान्तो न कार्यकलनं क्वचित्। न दूषणं भूषणं वा न निरङ्कुशलक्षणम् ॥
[1]न च धर्मात्मनो लिङ्गं गुणशालित्वलक्षणम्। न समाधिकलिङ्गं वा न प्रारब्धं प्रबन्धकम् ॥
[2]ब्रह्मवित्तं आत्मसत्यो न परः स्वप्नलक्षणम्। न च वर्यपरो रोषो वरिष्ठो नार्थतत्परः ॥ ४८ ॥
आत्मज्ञानविहीनो यो महापातकिरेव सः। एतावज्ज्ञानहीनो यो महारोगी स एव हि ॥ ४९ ॥

---

१ अयं श्लोकः C कोशे नास्ति। २ न ब्रह्मवित्त आत्मन्यो C

अहं ब्रह्म न सन्देह अखण्डैकरसात्मकः । ब्रह्मैव सर्वमेवेति निश्चयानुभवात्मकः ॥ ५० ॥
सद्यो मुक्तो न सन्देहः सद्यः प्रज्ञानविग्रहः । स एव ज्ञानवान् लोके स एव परमेश्वरः ॥ ५१ ॥
इदमेव परं ब्रह्म ज्ञानामृतमनोमयम् । एतत्प्रकरणं यस्तु शृणुते ब्रह्म एव सः ॥ ५२ ॥

एकत्वं न बहुत्वमप्यणुमहत् कार्यं न वै कारणं
विश्वं विश्वपतित्वमप्यरसकं नो गन्धरूपं सदा ।
बद्धं मुक्तमनुत्तमोत्तममहानन्दैकमोदं सदा
भूमानन्दसदाशिवं जनिजरारोगाद्यसङ्गं महः ॥ ५३ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ज्ञानामृतमनोमयप्रकरणवर्णनं नाम षड्विंशोऽध्यायः ॥

## ॥ सप्तविंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये प्रकरणं सत्यं ब्रह्मानन्दमनोमयम् । कार्यकारणनिर्मुक्तं नित्यानन्दमयं त्विदम् ॥ १ ॥
अक्षयानन्द एवाहमात्मानन्दप्रकाशकम् । ज्ञानानन्दस्वरूपोऽहं लक्ष्यानन्दमयं सदा ॥ २ ॥
विषयानन्दशून्योऽहं मिथ्यानन्दप्रकाशकः । [1]वृत्तिशून्यसुखात्माहं वृत्तिशून्यसुखात्परम् ॥ ३ ॥
जडानन्दप्रकाशात्मा आत्मानन्दरसोऽस्म्यहम् । आत्मानन्दविहीनोऽहं नास्त्यानन्दात्मविग्रहः ॥
कार्यानन्दविहीनोऽहं कार्यानन्दकलात्मकः । गुणानन्दविहीनोऽहं गुह्यानन्दस्वरूपवान् ॥ ५ ॥
गुप्तानन्दस्वरूपोऽहं कृत्यानन्दमहानहम् । ज्ञेयानन्दविहीनोऽहं गोप्यानन्दविवर्जितः ॥ ६ ॥
सदानन्दस्वरूपोऽहं मुदानन्दनिजात्मकः । लोकानन्दो महानन्दो लोकातीतमहानयम् ॥ ७ ॥
भेदानन्दश्चिदानन्दः सुखानन्दोऽहमद्वयः । क्रियानन्दोऽक्षयानन्दो वृत्त्यानन्दविवर्जितः ॥ ८ ॥
सर्वानन्दोऽक्षयानन्दश्चिदानन्दोऽहमव्ययः । सत्यानन्दः परानन्दः सद्योनन्दः परात्परः ॥ ९ ॥
वाक्यानन्दमहानन्दः शिवानन्दोहमद्वयः । शिवानन्दोत्तरानन्द आद्यानन्दविवर्जितः ॥ १० ॥
अमलात्मा परानन्दश्चिदानन्दोऽहमद्वयः । वृत्त्यानन्दपरानन्दो विद्यातीतो हि निर्मलः ॥ ११ ॥
कारणातीत आनन्दश्चिदानन्दोऽहमद्वयः । सर्वानन्दः परानन्दो ब्रह्मानन्दात्मभावनः ॥ १२ ॥

---

१ वृत्तिशून्यं सुखात्माहं वृत्तिहीनं सुखात् परम् । C

जीवानन्दो लयानन्दश्चिदानन्दस्वरूपवान् । शुद्धानन्दस्वरूपात्मा बुद्ध्यानन्दो मनोमयः ॥ १३ ॥
शब्दानन्दो महानन्दश्चिदानन्दोऽहमद्वयः । आनन्दानन्दशून्यात्मा भेदानन्दविशून्यकः ॥ १४ ॥
द्वैतानन्दप्रभावात्मा चिदानन्दोऽहमद्वयः । एवमादिमहानन्द अहमेवेति भावय ॥ १५ ॥
शान्तानन्दोऽहमेवेति चिदानन्दप्रभास्वरः । एकानन्दपरानन्द एक एव चिदव्ययः ॥ १६ ॥
एक एव महानात्मा एकसंख्याविवर्जितः । एकतत्वमहानन्दस्तत्वभेदविवर्जितः ॥ १७ ॥
विजितानन्दहीनोऽहं निर्जितानन्दहीनकः । हीनानन्दप्रशान्तोऽहं शान्तोऽहमिति शान्तकः ॥
ममतानन्दशान्तोऽहमहमादिप्रकाशकम् । सर्वदा देहशान्तोऽहं शान्तोऽहमिति वर्जितः ॥ १९ ॥
ब्रह्मैवाहं न संसारी इत्येवमिति शान्तकः । अन्तरादन्तरोऽहं वै अन्तरादन्तरान्तरः ॥ २० ॥
एक एव महानन्द एक एवाहमक्षरः । एक एवाक्षरं ब्रह्म एक एवाक्षरोऽक्षरः ॥ २१ ॥
एक एव महानात्मा एक एव मनोहरः । एक एवाद्वयोऽहं वै एक एव न चापरः ॥ २२ ॥
एक एव न भूरादि एक एव न बुद्धयः । एक एव प्रशान्तोऽहं एक एव सुखात्मकः ॥ २३ ॥
एक एव न कामात्मा एक एव न कोपकम् । एक एव न लोभात्मा एक एव न मोहकः ॥
एक एव मदो नाहं एक एव न मे रसः । एक एव न चित्तात्मा एक एव न चान्यकः ॥
एक एव न सत्तात्मा एक एवा जरामरः । एक एव हि पूर्णात्मा एक एव हि निश्चलः ॥
एक एव महानन्द एक एवाहमेकवान् । देहोऽहमिति हीनोऽहं शान्तोऽहमिति शाश्वतः ॥
शिवोऽहमिति शान्तोऽहं [1]आत्मैवाहमिति क्रमः । जीवोऽहमिति शान्तोऽहं नित्यशुद्धहृदन्तरः ॥
एवं भावय निःशङ्कं सद्यो मुक्तस्त्वमद्वये । एवमादि सुशब्दं वा नित्यं पठतु [2]निश्चलः ॥ २९ ॥

> कालस्वभावो नियतैश्च भूतैः
> 　जगद्विजायेत इति श्रुतीरितम् ।
> तद्वै मृषा स्याज्जगतो जडत्वतः
> 　इच्छाभवं चैतदथेश्वरस्य ॥ ३० ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे आनन्दरूपत्वनिरूपणप्रकरणं नाम सप्तविंशोऽध्यायः ॥

---

१ आत्मैवाहमित्यक्रियः C

२ जन्ममृत्युजराव्याधिसंसाराब्धिं तरिष्यसि इति G कोशेऽधिकः पाठः ।

## ॥ अष्टाविंशोऽध्यायः ॥

ऋभुः —

ब्रह्मैवाहं चिदेवाहं निर्मलोऽहं निरन्तरः। शुद्धस्वरूप एवाहं नित्यरूपः परोऽस्म्यहम् ॥ १ ॥
नित्यनिर्मलरूपोऽहं नित्यचैतन्यविग्रहः। आद्यन्तरूपहीनोऽहमाद्यन्तद्वैतहीनकः ॥ २ ॥
अजस्रसुखरूपोऽहं अजस्रानन्दरूपवान्। अहमेवादिनिर्मुक्त अहं कारणवर्जितः ॥ ३ ॥
अहमेव परं ब्रह्म अहमेवाहमेव हि। इत्येवं भावयन्नित्यं सुखमात्मनि निर्मलः ॥ ४ ॥
सुखं तिष्ठ सुखं तिष्ठ सुचिरं सुखमावह। सर्वेदमनन्यस्त्वं सर्वदा नास्ति कल्पनम् ॥ ५ ॥
सर्वदा नास्ति चित्ताख्यं सर्वदा नास्ति संसृतिः। सर्वदा नास्ति नास्त्येव सर्वदा जगदेव न ॥
जगत्प्रसक्तो नास्त्येव देहवार्ता कुतस्ततः। ब्रह्मैव सर्वचिन्मात्रमहमेव हि केवलम् ॥ ७ ॥
चित्तमित्यपि नास्त्येव चित्तमस्ति हि नास्ति हि। अस्तित्वभावना[1] निष्ठा जगदस्तित्ववाङ् मृषा ॥
अस्तित्ववक्ता (क्तृ) वार्ता हि जगदस्तीति भावना। स्वान्यनोऽन्यज्जगद्द्रष्टा देहोऽहमिति निश्चितः॥
महाचण्डाल एवासौ महाविप्रोऽपि निश्चयः (?)। तस्मादिति जगन्नेति चित्तं वा बुद्धिरेव च ॥
नास्ति नास्तीति सहसा निश्चयं कुरु निर्मलः। दृश्यं नास्त्येव नास्त्येव नास्ति नास्तीति भावय ॥
अहमेव परं ब्रह्म अहमेव हि निष्कलः। अहमेव न सन्देहः अहमेव सुखात् सुखम् ॥ १२ ॥
अहमेव हि दिव्यात्मा अहमेव हि केवलः। वाचामगोचरोऽहं वै अहमेव न चापरः ॥ १३ ॥
अहमेव हि मत्तात्मा अहमेव सदा प्रियः। अहमेव हि भावात्मा अहं वृत्तिविवर्जितः ॥ १४ ॥
अहमेवापरिच्छिन्न अहमेव निरन्तरः। अहमेव हि निश्चिन्त अहमेव हि सद्गुरुः ॥ १५ ॥
अहमेव सदा साक्षी अहमेवाहमेव हि। नाहं गुप्तो न नाऽगुप्तो न प्रकाशात्मकः सदा ॥ १६ ॥
नाहं जडो न चिन्मात्रः क्वचित् किञ्चित् तदस्ति हि। नाहं प्राणो जडत्वं तदत्यन्तं सर्वदा भ्रमः ॥
अहमत्यन्तमानन्द अहमत्यन्तनिर्मलः। अहमत्यन्तवेदात्मा अहमत्यन्तशाङ्करः ॥ १८ ॥
अहमित्यपि मे किञ्चिदहमित्यपि न स्मृतिः। सर्वहीनोऽहमेवाग्रे सर्वहीनः सुखाच्छुभात् ॥
परात् परतरं ब्रह्म परात् परतरः पुमान्। परात् परतरोऽहं वै सर्वस्मात् परतः परः ॥ २० ॥
सर्वदेहविहीनोऽहं सर्वकर्मविवर्जितः। सर्वमन्त्रः प्रशान्तात्मा सर्वान्तःकरणात् परः ॥ २१ ॥
सर्वस्तोत्रविहीनोऽहं सर्वदेवप्रकाशकः। सर्वस्नानविहीनात्मा एकमग्नोऽहमद्वयः ॥ २२ ॥

---

१ नष्टा G

आत्मतीर्थे ह्यात्मजले आत्मानन्दमनोहरे । आत्मैवाहमिति ज्ञात्वा आत्मारामो वसाम्यहम् ॥
आत्मैव भोजनं ह्यात्मा तृप्तिरात्मसुखात्मकः । आत्मैव ह्यश्नो ह्यात्मा आत्मैव परमो ह्यहम् ॥
अहमात्माऽहमात्माहमहमात्मा न लौकिकः । सर्वात्माहं सदात्माहं नित्यात्माहं गुणान्तरः ॥
एवं नित्यं भावयित्वा सदा भावय सिद्धये । सिद्धं तिष्ठति चिन्मात्रो निश्चयं ममात्मेव सा(?) ॥
निश्चयं च लयं याति स्वयमेव सुखी भव ।

शाखादिभिश्च श्रुतयो ह्यनन्ता-
स्त्वामेकमेव भगवन् बहुधा वदन्ति ।
विष्ण्विन्द्रधातृरविसून्वनलानिलादि
भूतात्मनाथ गणनाथललाम शम्भो ॥ २७ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे आत्मवैलक्षण्यप्रकरणं नाम अष्टाविंशोऽध्यायः ॥

## ॥ एकोनत्रिंशोऽध्यायः ॥

ऋभुः —

अत्यन्तं तन्मयं वक्ष्ये दुर्लभं योगिनामपि । वेदशास्त्रेषु देवेषु (?) रहस्यमतिदुर्लभम् ॥ १ ॥
यः परं ब्रह्म सर्वात्मा सच्चिदानन्दविग्रहः । सर्वात्मा परमात्मा हि तन्मयो भव सर्वदा ॥ २ ॥
आत्मरूपमिदं सर्वमाद्यन्तरहितोऽजयः । कार्याकार्यमिदं नास्ति तन्मयो .... ॥ ३ ॥
यत्र द्वैतभयं नास्ति यत्राद्वैतप्रबोधनम् । शान्ताशान्तद्वयं नास्ति तन्मयो .... ॥ ४ ॥
यत्र सङ्कल्पकं नास्ति यत्र भ्रान्तिर्न विद्यते । तदेव हि मतिर्नास्ति तन्मयो ... ॥ ५ ॥
यत्र ब्रह्मणि नास्त्येव यत्र भावि विकल्पनम् । यत्र सर्वं जगन्नास्ति तन्मयो ... ॥ ६ ॥
यत्र भावमभावं वा मनोभ्रान्ति विकल्पनम् । यत्र [1] भ्रान्तेर्न वार्ता वा तन्मयो ... ॥ ७ ॥
यत्र नास्ति सुखं नास्ति देहोऽहमिति रूपकम् । सर्वसङ्कल्पनिर्मुक्तं तन्मयो ... ॥ ८ ॥
यत्र ब्रह्म विना भावो यत्र दोषो न विद्यते । यत्र द्वन्द्वभयं नास्ति तन्मयो ... ॥ ९ ॥
यत्र वाक्कायकार्यं वा यत्र कल्पो लयं गतः । यत्र प्रपञ्चं नोत्पन्नं तन्मयो ... ॥ १० ॥

१ वार्ता न वार्ता वा C

यत्र माया प्रकाशो न माया कार्यं न किञ्चन । यत्र दृश्यमदृश्यं वा तन्मयो ... ॥ ११ ॥
विद्वान् विद्याऽपि नास्त्येव यत्र पक्षविपक्षकौ । न यत्र दोषादोषौ वा तन्मयो ... ॥ १२ ॥
यत्र विष्णुत्वभेदो न यत्र ब्रह्मा न विद्यते । यत्र शङ्करभेदो न तन्मयो ... ॥ १३ ॥
न यत्र सदसद्भेदो न यत्र कलनापदम् । न यत्र जीवकलना तन्मयो ... ॥ १४ ॥
न यत्र शङ्करध्यानं न यत्र परमं पदम् । न यत्र कलनाकारं तन्मयो ... ॥ १५ ॥
न यत्राणुर्महत्त्वं च यत्र सन्तोषकल्पनम् । यत्र प्रपञ्चमाभासं तन्मयो ... ॥ १६ ॥
न यत्र देहकलनं न यत्र हि कुतूहलम् । न यत्र चित्तकलनं तन्मयो ... ॥ १७ ॥
न यत्र बुद्धिविज्ञानं न यत्रात्मा मनोमयः । न यत्र कामकलनं तन्मयो ... ॥ १८ ॥
न यत्र मोक्षविश्रान्तिर्यत्र बन्धत्ववि(नि)ग्रहः । न यत्र शाश्वतं ज्ञानं तन्मयो ... ॥ १९ ॥
न यत्र कालकलनं यत्र दुःखत्वभावनम् । न यत्र देहकलनं तन्मयो ... ॥ २० ॥
न यत्र जीववैराग्यं यत्र शास्त्रविकल्पनम् । यत्राहमहमात्मत्वं तन्मयो .... ॥ २१ ॥
न यत्र जीवन्मुक्तिर्वा यत्र देहविमोचनम् । यत्र सङ्कल्पितं कार्यं तन्मयो ... ॥ २२ ॥
न यत्र भूतकलनं यत्रान्यत्त्वप्रभावनम् । न यत्र जीवभेदो वा तन्मयो ... ॥ २३ ॥
यत्रानन्दपदं ब्रह्म यत्रानन्दपदं सुखम् । यत्रानन्दगुणं नित्यं तन्मयो ... ॥ २४ ॥
न यत्र वस्तुप्रभवं न यत्रापजयो जयः । न यत्र नाकगकथनं तन्मयो ... ॥ २५ ॥
न यत्रात्मविचाराङ्गं न यत्र श्रवणाकुलम् । न यत्र च महानन्दं तन्मयो ... ॥ २६ ॥
न यत्र हि सजातीयं विजातीयं न यत्र हि । न यत्र स्वगतं भेदं तन्मयो ... ॥ २७ ॥
न यत्र नरको घोरो न यत्र स्वर्गसंपदः । न यत्र ब्रह्मलोको वा तन्मयो ... ॥ २८ ॥
न यत्र विष्णुसायुज्यं यत्र कैलासपर्वतः । ब्रह्माण्डमण्डलं यत्र तन्मयो ... ॥ २९ ॥
न यत्र भूषणं यत्र दूषणं वा न विद्यते । न यत्र समता दोषं (?) तन्मयो ... ॥ ३० ॥
न यत्र मनसा भावो न यत्र सविकल्पनम् । न यत्रानुभवं दुःखं तन्मयो ... ॥ ३१ ॥
यत्र पापभयं नास्ति पञ्चपापादपि क्वचित् । न यत्र सङ्गदोषं वा तन्मयो ... ॥ ३२ ॥
यत्र तापत्रयं नास्ति यत्र जीवत्रयं क्वचित् । यत्र विश्वविकल्पाख्यं तन्मयो ... ॥ ३३ ॥
न यत्र बोधमुत्पन्नं न यत्र जगतां भ्रमः । न यत्र कारणाकारं तन्मयो ... ॥ ३४ ॥
न यत्र हि मनो राज्यं यत्रैव परमं सुखम् । यत्र वै शाश्वतं स्थानं तन्मयो ... ॥ ३५ ॥
यत्र वै कारणं शान्तं यत्रैव सकलं सुखम् । यद्गत्वा न निवर्तन्ते तन्मयो ... ॥ ३६ ॥

यद् ज्ञात्वा मुच्यते सर्वं यद् ज्ञात्वाऽन्यन्न विद्यते । यद् ज्ञात्वा नान्यविज्ञानं तन्मयो ... ॥
यत्रैव दोषं नोत्पन्नं यत्रैव स्थाननिश्चलः । यत्रैव जीवसङ्घातः तन्मयो ... ॥ ३८ ॥
यत्रैव नित्यतृप्तात्मा यत्रैवानन्दनिश्चलम् । यत्रैव निश्चलं शान्तं तन्मयो ... ॥ ३९ ॥
यत्रैव सर्वसौख्यं वा यत्रैव सन्निरूपणम् । यत्रैव निश्चयाकारं तन्मयो ... ॥ ४० ॥
न यत्राहं न यत्र त्वं न यत्र त्वं स्वयं स्वयम् । यत्रैव निश्चयं शान्तं तन्मयो ... ॥ ४१ ॥
यत्रैव मोदते नित्यं यत्रैव सुखमेधते । यत्र दुःखभयं नास्ति तन्मयो ... ॥ ४२ ॥
यत्रैव चिन्मयाकारं यत्रैवानन्दसागरः । यत्रैव परमं साक्षात् तन्मयो ... ॥ ४३ ॥
यत्रैव स्वयमेवात्र स्वयमेव तदेव हि । स्वस्वात्मनोक्तभेदोऽस्ति तन्मयो ... ॥ ४४ ॥
यत्रैव परमानन्दं स्वयमेव सुखं परम् । यत्रैवाभेदकलनं तन्मयो ... ॥ ४५ ॥
न यत्र चाणुमात्रं वा न यत्र मनसो मलम् । न यत्र च ददाम्येव तन्मयो ... ॥ ४६ ॥
यत्र चित्तं मृतं देहं मनो मरणमात्मनः । यत्र स्मृतिर्लयं याति तन्मयो ... ॥ ४७ ॥
यत्रैवाहं मृतो नूनं यत्र कामो लयं गतः । यत्रैव परमानन्दं तन्मयो ... ॥ ४८ ॥
यत्र देवास्त्रयो लीनं(?) यत्र देहादयो मृताः । न यत्र व्यवहारोऽस्ति तन्मयो ... ॥ ४९ ॥
यत्र मग्नो निरायासो यत्र मग्नो न पश्यति । यत्र मग्नो न जन्मादिस्तन्मयो ... ॥ ५० ॥
यत्र मग्नो न चाभाति यत्र जाग्रन्न विद्यते । यत्रैव मोहमरणं तन्मयो ... ॥ ५१ ॥
यत्रैव कालमरणं यत्र योगो लयं गतः । यत्र सत्सङ्गतिर्निष्ठा तन्मयो ... [1] ॥ ५२ ॥
यत्रैव ब्रह्मणो रूपं यत्रैवानन्दमात्रकम् । यत्रैव परमानन्दं तन्मयो ... ॥ ५३ ॥
यत्र विश्वं क्वचिन्नास्ति यत्र नास्ति ततो जगत् । यत्रान्तःकरणं नास्ति तन्मयो ... ॥ ५४ ॥
यत्रैव सुखमात्रं च यत्रैवानन्दमात्रकम् । यत्रैव परमानन्दं तन्मयो ... ॥ ५५ ॥
यत्र सन्मात्रचैतन्यं यत्र चिन्मात्रमात्रकम् । यत्रानन्दमयं भाति तन्मयो ... ॥ ५६ ॥
यत्र साक्षात् परं ब्रह्म यत्र साक्षात् स्वयं परम् । यत्र शान्तं परं लक्ष्यं तन्मयो ... ॥ ५७ ॥
यत्र साक्षादखण्डार्थं यत्र साक्षात् परायणम् । यत्र नाशादिकं नास्ति तन्मयो ... ॥ ५८ ॥
यत्र साक्षात् स्वयं मात्रं यत्र साक्षात्स्वयं जयम् । यत्र साक्षान्महानात्मा तन्मयो ... ॥

---

१ यत्र विश्रातिमरणं यत्र विश्वं लयं गतम् । यत्र भ्रान्तिनिवृत्तत्वं तन्मयो भव सर्वदा ॥
यत्र प्राणादयो नष्टा यत्र देहादयो मृताः । यत्र मानावमानं न तन्मयो भव सर्वदा ॥
इति G कोशेऽधिकः पाठः ।

यत्र साक्षात् परं तत्त्वं यत्र साक्षात् स्वयं महत् । यत्र साक्षात्तु विज्ञानं तन्मयो ... ॥ ६० ॥
यत्र साक्षाद्गुणातीतं यत्र साक्षाद्धि निर्मलम् । यत्र साक्षात् सदा शुद्धं तन्मयो ... ॥ ६१ ॥
यत्र साक्षान्महानात्मा यत्र साक्षात् सुखात् सुखम् । यत्रैव ज्ञानविज्ञानं तन्मयो ... ॥
यत्रैव हि स्वयं ज्योतिर्यत्रैव स्वयमद्वयम् । यत्रैव परमानन्दं तन्मयो ... ॥ ६३ ॥
एवं तन्मयभावोक्तं एवं नित्यशनित्यशः । ब्रह्माहं सच्चिदानन्दं अखण्डोऽहं सदा सुखम् ॥
विज्ञानं ब्रह्ममात्रोऽहं स शान्तं परमोऽस्म्यहम् । चिदहं चित्तहीनोऽहं नाहं सोहं भवाम्यहम् ॥
तदहं चिदहं सोऽहं निर्मलोऽहमहं परम् । परोऽहं परमोऽहं वै सर्वं त्यक्त्य सुखीभव ॥ ६६ ॥
इदं सर्वं चित्तशेषं [1]शुद्धत्वकमलीकृतम् । एवं सर्वं परित्यज्य विस्मृत्वा शुद्धकाष्ठवत् ॥ ६७ ॥
प्रेतवद्देहं संत्यज्य काष्ठवल्लोष्ठवत् सदा । स्मरणं च परित्यज्य ब्रह्ममात्रपरो भव ॥ ६८ ॥
एतत् प्रकरणं यस्तु शृणोति सकृदस्ति वा । महापातकयुक्तोऽपि सर्वं त्यक्त्वा परं गतः ॥

अज्ञावबद्धाभिरुपासनाभि-
र्वदन्ति वेदाः किल त्वामसङ्गम् ।
समस्तहृत्कोशविशेषसङ्गं
भूमानमात्मानमखण्डरूपम् ॥ ७० ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे तन्मयभावोपदेशप्रकरणं नाम एकोनत्रिंशोऽध्यायः ॥

## ॥ त्रिंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये परं ब्रह्ममात्रं जगत्सन्त्यागपूर्वकम् । सकृच्छ्रवणमात्रेण ब्रह्मभावं परं लभेत् ॥ १ ॥
ब्रह्म ब्रह्मपरं मात्रं निर्गुणं नित्यनिर्मलम् । शाश्वतं सममत्यन्तं ब्रह्मणोऽन्यन्न विद्यते ॥ २ ॥
अहं सत्यः परानन्दः शुद्धो नित्यो निरञ्जनः । सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः ॥ ३ ॥
अखण्डैकरसैवास्मि परिपूर्णोऽस्मि सर्वदा । ब्रह्मैव सर्वं नान्योऽस्ति सर्वं ब्रह्म न संशयः ॥ ४ ॥
सर्वदा केवलात्माहं सर्वं ब्रह्मेति नित्यशः । आनन्दरूपमेवाहं नान्यत् किञ्चिन्न शाश्वतम् ॥ ५ ॥
शुद्धानन्दस्वरूपोऽहं शुद्धविज्ञानमात्मनः । एकाकारस्वरूपोऽहं नैकसत्ताविवर्जितः ॥ ६ ॥

१ शुद्धत्वं च मलत्वकम् G

बन्तरज्ञानशुद्धोऽहमहमेव परायणम् । सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः ॥ ७ ॥
[1] अनेकतत्त्वहीनोऽहं एकत्वं च न विद्यते । सर्वं ... ॥ ८ ॥
सर्वप्रकाररूपोऽस्मि सर्वं इत्यपि वर्जितः । सर्वं ... ॥ ९ ॥
निर्मलज्ञानरूपोऽहं अहमेव न विद्यते । शुद्धब्रह्मस्वरूपोऽहं विशुद्धपदवर्जितः ॥ १० ॥
नित्यानन्दस्वरूपोऽहं ज्ञानानन्दमहं सदा । सूक्ष्मात् सूक्ष्मतरोऽहं वै सूक्ष्म इत्यादिवर्जितः ॥
अखण्डानन्दमात्रोऽहं अखण्डानन्दविग्रहः । सदाऽमृतस्वरूपोऽहं सदा कैवल्यविग्रहः ॥ १२ ॥
ब्रह्मानन्दमिदं सर्वं नास्ति नास्ति कदाचन । जीवत्वधर्महीनोऽहमीश्वरत्वविवर्जितः ॥ १३ ॥
वेदशास्त्रस्वरूपोऽहं शास्त्रस्मरणकारणम् । जगत्कारणकार्यं च ब्रह्मविष्णुमहेश्वराः ॥ १४ ॥
वाच्यवाचकभेदं च स्थूलसूक्ष्मशरीरकम् । जाग्रत्स्वप्नसुषुप्त्याद्यप्राज्ञतैजसविश्वकाः ॥ १५ ॥
सर्वशास्त्रस्वरूपोऽहं सर्वानन्दमहं सदा । अतीतनामरूपार्थ अतीतः सर्वकल्पनात् ॥ १६ ॥
द्वैताद्वैतं सुखं दुःखं लाभालाभौ जयाजयौ । सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः ॥ १७ ॥
सात्त्विकं राजसं भेदं संशयं हृदयं फलम् । दृक् दृष्टं सर्वद्रष्टा च भूतभौतिकदैवतम् ॥ १८ ॥
सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः । तुर्यरूपमहं साक्षात् ज्ञानरूपमहं सदा ॥ १९ ॥
अज्ञानं चैव नास्त्येव तत्कार्यं कुत्र विद्यते । सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः ॥ २० ॥
चित्तवृत्तिविलासं च बुद्धीनामपि नास्ति हि । देहसङ्कल्पहीनोऽहं बुद्धिसङ्कल्पकल्पना ॥ २१ ॥
सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः । बुद्धिनिश्चयरूपोऽहं निश्चयं च गलत्यहो ॥ २२ ॥
अहंकारं बहुविदं देहोऽहमिति भावनम् । सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः ॥ २३ ॥
ब्रह्माहमपि काणोऽहं बधिरोऽहं परोऽस्म्यहम् । सर्वं ब्रह्म ... ॥ २४ ॥
देहोऽहमिति तादात्म्यं देहस्य परमात्मनः । सर्वं ब्रह्म ... ॥ २५ ॥
सर्वोऽहमिति तादात्म्यं सर्वस्य परमात्मनः । इति भावय यत्नेन ब्रह्मैवाहमिति प्रभो[2] ॥ २६ ॥
दृढनिश्चयमेवेदं सत्यं सत्यमहं परम् । दृढनिश्चयमेवात्र सद्गुरोर्वाक्यनिश्चयम् ॥ २७ ॥
दृढनिश्चयसाम्राज्ये तिष्ठ तिष्ठ सदा परः । अहमेव परं ब्रह्म आत्मानन्दप्रकाशकः ॥ २८ ॥
शिवपूजा शिवश्चाहं विष्णुर्विष्णुप्रपूजनम् । यद्यत् संवेद्यते किञ्चित् यद्यन्निश्चीयते क्वचित् ॥
तदेव त्वं त्वमेवाहं इत्येवं नास्ति किञ्चन । इदं चित्तमिदं दृश्यं इत्येवमिति नास्ति हि ॥ ३० ॥

---

१ अहमेकत्व C   २ दिपतं C

सदसद्भावनिर्देशोऽपि तत्त्वभेदं न विद्यते। सुखरूपमिदं सर्वं सुखरूपमिदं न च ॥ ३१ ॥
लक्ष्यभेदं सकलभेदं सर्वभेदं न विद्यते। ब्रह्मानन्दो न सन्देहस्तद्ब्रह्माहं न संशयः ॥ ३२ ॥
ब्रह्मभेदं तुर्यभेदं जीवभेदमभेदकम्। इदमेव हि नोत्पन्नं सर्वदा नास्ति किञ्चन ॥ ३३ ॥
स देवमिति निर्देशो नास्ति नास्त्येव सर्वदा। अस्ति चेत् किल वक्तव्यं नास्ति चेत् कथमुच्यते॥
परं विशेषमेवेति नास्ति किञ्चित् सदा मयि। चञ्चलं च मनश्चैव नास्ति नास्ति न संशयः॥
एवमेव सदापूर्णो निरीहस्तिष्ठ शान्तधीः। सर्वं ब्रह्मास्मि पूर्णोऽस्मि एवं च न कदाचन ॥ ३६॥
आनन्दोऽहं वरिष्ठोऽहं ब्रह्मास्मीत्यपि नास्ति हि। ब्रह्मानन्दमहानन्दमात्मानन्दमखण्डितम् ॥
इदं परमहन्ता च सर्वदा नास्ति किञ्चन। इदं सर्वमिति [1] ख्याति आनन्दं नेति नो भ्रमः॥
सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः। लक्ष्यलक्षणभावं च दृश्यदर्शनदृश्यता ॥ ३९ ॥
अत्यन्ताभावमेवेति सर्वदानुभवं महत्। सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः ॥ ४० ॥
गुह्यं मन्त्रं गुणं शास्त्रं सत्यं श्रोत्रं कलेवरम्। मरणं जननं कार्यं कारणं पावनं शुभम् ॥ ४१ ॥
कामक्रोधौ लोभमोहौ मदो मात्सर्यमेव हि। द्वैतदोषं भयं शोकं सर्वं नास्त्येव सर्वदा॥ ४२ ॥
इदं नास्त्येव नास्त्येव नास्त्येव सकलं सुखम्। इदं ब्रह्मेति मननमहं ब्रह्मेति चिन्तनम् ॥ ४३ ॥
अहं ब्रह्मेति मननं त्वं ब्रह्मत्वविनाशनम्। सत्यत्वं ब्रह्मविज्ञानं असत्यत्वं न बाध्यते ॥ ४४ ॥
एक एव परो ह्यात्मा एकत्वभ्रान्तिवर्जितः। सर्वं ब्रह्म सदा ब्रह्म तद्ब्रह्माहं न संशयः ॥ ४५ ॥
जीवरूपा जीवभावा जीवशब्दत्रयं न हि। ईशरूपं चेशभावं ईशशब्दं च कल्पितम् ॥ ४६ ॥
नाक्षरं न च सर्वं वा न पदं वाच्यवाचकम्। हृदयं मन्त्रतन्त्रं च चित्तं बुद्धिर्न किञ्चन ॥
मूढो ज्ञानी विवेकी वा शुद्ध इत्यपि नास्ति हि। निश्चयं प्रणवं तारं आत्मायं गुरुशिष्यकम् ॥
तूष्णीं तूष्णीं महातूष्णीं मौनं वा मौनभावनम्। प्रकाशनं प्रकाश्यं च आत्मानात्मविवेचनम् ॥
ध्यानयोगं राजयोगं भोगमष्टाङ्गलक्षणम्। सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः ॥ ५० ॥
अस्तित्वभाषणं चापि नास्तित्वस्य च भाषणम्। पञ्चाशद्वर्णरूपोऽहं चतुःषष्टिकलात्मकः ॥
सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः। ब्रह्मैवाहं प्रसन्नात्मा ब्रह्मैवाहं चिदव्ययः ॥ ५२ ॥
शास्त्रज्ञानविदूरोहं वेदज्ञानविदूरकः। उक्तं सर्वं परं ब्रह्म नास्ति सन्देहलेशतः ॥ ५३ ॥
सर्वं ब्रह्म न सन्देहस्तद्ब्रह्माहं न संशयः। ब्रह्मैवाहं प्रसन्नात्मा ब्रह्मैवाहं चिदव्ययः ॥ ५४ ॥

---

१ ख्यातिरनिन्दन्तिति G

इत्येवं ब्रह्मतन्मात्रं तत्र तुभ्यं प्रियं ततः । यस्तु बुद्ध्येत सततं सर्वं ब्रह्म न संशयः ॥ ५५ ॥

नित्यं शृण्वन्ति ये मर्त्यास्ते चिन्मात्रमयामलाः ।

सन्देहसन्देहकरोऽर्यकास्त्रकैः
करादिसन्दोहजगद्विकारिभिः ।
यो वीतमोहं न करोति दुर्हृदं
विदेहमुक्तिं शिवहकप्रभावतः ॥ ५६ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ब्रह्मैकरूपत्वनिरूपणप्रकरणं नाम
त्रिंशोऽध्यायः ॥

## ॥ एकत्रिंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये रहस्यमत्यन्तं साक्षाद्ब्रह्मप्रकाशकम् । सर्वोपनिषदामर्थं सर्वलोकेषु दुर्लभम् ॥ १ ॥
प्रज्ञानं ब्रह्म निश्चित्य पदद्वयसमन्वितम् । महावाक्यं चतुर्वाक्यं ऋग्यजुःसामसंभवम् ॥ २ ॥
मम प्रज्ञैव ब्रह्माहं ज्ञानमात्रमिदं जगत् । ज्ञानमेव जगत् सर्वं ज्ञानादन्यन्न विद्यते ॥ ३ ॥
ज्ञानस्यानन्तरं सर्वं दृश्यते ज्ञानरूपतः । ज्ञानस्य ब्रह्मणश्चापि ममैव हि पृथङ् न हि ॥ ४ ॥
जीवः प्रज्ञानशब्दस्य ब्रह्मशब्दस्य चेश्वरः । ऐक्यमस्मीत्यखण्डार्थमखण्डैकरसं ततम् ॥ ५ ॥
अखण्डाकारवृत्तिस्तु जीवन्मुक्तिरितीरितम् । अखण्डैकरसं वस्तु विदेहो मुक्तिरुच्यते ॥ ६ ॥
ब्रह्मैवाहं न संसारी सच्चिदानन्दमस्म्यहम् । निर्गुणोऽहं निरंशोऽहं परमानन्दवानहम् ॥ ७ ॥
नित्योऽहं निर्विकल्पोऽहं चिदहं चिदहं सदा । अखण्डाकारवृत्त्याख्यं चित्तं ब्रह्मात्मना स्थितम् ॥
लवणं तोयमात्रेण यथैकत्वमखण्डितम् । अखण्डैकरसं वक्ष्ये विदेहो(?) मुक्तिलक्षणम् ॥ ९ ॥
प्रज्ञापदं परित्यज्य ब्रह्मैव पदमेव हि । अहमस्मि महानस्मि सिद्धोऽस्मीति परित्यजन् ॥ १० ॥
स्मरणं च परित्यज्य भावनं चित्तकर्तृकम् । सर्वमन्तः परित्यज्य सर्वशून्यं [1] परिस्थितिः ॥ ११ ॥
तूष्णीं स्थितिं च सन्त्यज्य ततो मौनविकल्पनम् । यच्चचित्तं विकल्पांशं मनसा कल्पितं जगत् ॥

१ परा_स्थितिः ७

देहोऽहमित्यहङ्कारं द्वैतवृत्तिरितीरितम् । सर्वं साक्षिरिदं ब्रह्म इत्येवं दृढनिश्चयम् ॥ १३ ॥
मदर्थाऽसंशयं ब्रह्म साक्षिवृत्तिरितीरितम् । द्वैतवृत्तिः साक्षिवृत्तिरखण्डाकारवृत्तिकम् ॥ १४ ॥
अखण्डैकरसं चेति लोके वृत्तित्रयं भवेत् । प्रथमे निश्चिते द्वैते द्वितीये साक्षिसंशयः ॥ १५ ॥
तृतीये पदभागे हि दृढनिश्चयमीरितम् । एतत्त्रयार्थं संशोध्य तं परित्यज्य निश्चिनु ॥ १६ ॥
अखण्डैकरसाकारो नित्यं तन्मयतां व्रज । अभ्यासवाक्यमेतत्तु सदाऽभ्यासस्य कारणम् ॥ १७ ॥
मननस्य परं वाक्यं योऽयं चन्दनवृक्षवत् । युक्तिभिश्चिन्तनं वृत्तं पदत्रयमुदाहृतम् ॥ १८ ॥
अहं पदस्य जीवोऽर्थं ईशो ब्रह्मपदस्य हि । अस्मीति पदभागस्य अखण्डाकारवृत्तिकम् ॥ १९ ॥
पदत्रयं परित्यज्य विचार्य मनसा सह । अखण्डैकरसं प्राप्य विदेहो मुक्तिलक्षणम् ॥ २० ॥
[1] अहं ब्रह्मास्मि चिन्मात्रं सच्चिदानन्दविग्रहः । अहं ब्रह्मास्मि वाक्यस्य श्रवणानन्तरं सदा ॥

अहं ब्रह्मास्मि नित्योऽस्मि शान्तोऽस्मि परमोऽस्म्यहम् ।
निर्गुणोऽहं निरीहोऽहं [2] निरंशोऽस्मि (?) सदा स्मृतः ॥ २२ ॥

आत्मैवास्मि न सन्देहः अखण्डैकरसोऽस्म्यहम् । एवं निरन्तरं तज्ज्ञो भावयेत् परमात्मनि ॥
यथा चानुभवं वाक्यं तस्मादनुभवेत सदा । आरंभाच्च द्वितीयात्तु स्मृतमभ्यासवाक्यतः ॥ २४ ॥
[3] तृतीयान्तत्वमस्येति वाक्यसामान्यनिर्णयम् । तत्पदं त्वंपदं त्वस्य (सि?) पदत्रयमुदाहृतम् ॥
तत्पदस्येश्वरो ह्यर्थो जीवोऽर्थस्त्वंपदस्य हि । [4] ऐक्यस्यापि पदस्यार्थमखण्डैकरसं परम् ॥ २६ ॥
द्वैतवृत्तिः साक्षिवृत्तिरखण्डाकारवृत्तिकः । अखण्डं सच्चिदानन्दं तत् त्वमेवासि निश्चयः ॥ २७ ॥
त्वं ब्रह्मासि न सन्देहस्त्वमेवासि चिदव्ययः । त्वमेव सच्चिदानन्दस्त्वमेवाखण्डनिश्चयः ॥ २८ ॥
इत्येवमुक्तो गुरुणा स एव परमो गुरुः । अहं ब्रह्मेति निश्चित्य सच्छिष्यं परमात्मवान् ॥ २९ ॥
नान्यो गुरुर्नान्यशिष्यस्त्वं ब्रह्मासि गुरुः परः । सर्वमन्त्रोपदेष्टारो गुरवः स गुरुः परः ॥ ३० ॥
त्वं ब्रह्मासीति वक्तारं गुरुरेवेति निश्चिनु । तथा तत्त्वमसि ब्रह्म त्वमेवासि च सद्गुरुः ॥
सद्गुरोर्वचने यस्तु निश्चयं तत्वनिश्चयम् । करोति सततं मुक्तेर्नात्र कार्या विचारणा ॥ ३२ ॥
महावाक्यं गुरोर्वाक्यं तत्त्वमस्यादिवाक्यकम् । शृणोति श्रवणं चित्तं नान्यत् श्रवणमुच्यते ॥
सर्ववेदान्तवाक्यानामद्वैते ब्रह्मणि स्थितिः । इत्येवं च गुरोर्वक्त्रात् श्रुतं ब्रह्मेति तच्छ्रवः ॥ ३४ ॥

---

१ अयं श्लोकः G कोशे नोपलभ्यते २ निरंशोऽस्मि इति पाठः स्याद्वा !
३ तृतीयं तत्त्वमस्येति G ४ ऐक्यं भावपदस्यार्थं C

गुरोर्नान्यो मन्त्रवादी एक एव हि सद्गुरुः । त्वं ब्रह्मासीति येनोक्तं एष एव हि सद्गुरुः ॥
वेदान्तश्रवणं चैतन्नान्यच्छ्रवणमीरितम् । युक्तिभिश्चिन्तनं चैव मननं परिकथ्यते ॥ ३६ ॥
एवं चन्दनवृक्षोऽपि श्रुतोऽपि परिशोध्यते । त्वं ब्रह्मासीति चोक्तोऽपि संशयं परिपश्यति ॥
संशोध्य निश्चिनोत्येवमात्मानं परिशोध्यते । युक्तिर्नाम वदाम्यत्र देहो नाहं विनाशतः ॥
स्थूलदेहं सूक्ष्मदेहं स्थूलसूक्ष्मं च कारणम् । अयं चतुर्थे नास्तीति सर्वं चिन्मात्रमेव हि ॥ ३९ ॥
एतत्सर्वं जडत्वाच्च दृश्यत्वाद्घटवन्नहि । अहं चैतन्यमेवात्र दृग्रूपत्वाल्लयं न हि ॥ ४० ॥
सत्यं ज्ञानमनन्तं यदात्मनः सहजा गुणाः । अनृतं जडदुःखादि जगतः प्रथितो गुणः ॥
तस्मादहं ब्रह्म एव इदं सर्वमसत्यकम् । एवं च मननं नित्यं करोति ब्रह्मवित्तमः ॥ ४२ ॥
वक्ष्ये निदिध्यासनं च उभयत्यागलक्षणम् । त्वं ब्रह्मासीति श्रवणं मननं चाहमेव हि ॥ ४३ ॥
एतत्त्यागं निदिध्यासं सजातीयत्वभावनम् । विजातीयपरित्यागं स्वगतत्वविभावनम् ॥ ४४ ॥
सर्वत्यागं परित्यज्य तुरीयत्वं च वर्जनम् । ब्रह्मचिन्मात्रसारत्वं साक्षात्कारं प्रचक्षते ॥ ४५ ॥
उपदेशे महावाक्यमस्तित्वमिति निर्णयः । तथैवानुभवं वाक्यमहं ब्रह्मास्मि निर्णयः ॥ ४६ ॥
प्रज्ञानं ब्रह्मवाक्योत्थमभ्यासार्थमितीरितम् । अयमात्मेति वाक्योत्थदर्शनं वाक्यमीरितम् ॥
अयमेकपदं चैक आत्मेति ब्रह्म च त्रयम् । अयंपदस्य जीवोऽर्थ आत्मनो ईश्वरः परः ॥ ४८ ॥
तथा ब्रह्मपदस्यार्थं अखण्डाकारवृत्तिकम् । अखण्डैकरसं सर्वं पदत्रयलयं गतम् ॥ ४९ ॥
अखण्डैकरसो ह्यात्मा नित्यशुद्धविमुक्तकः । तदेव सर्वमुद्भूतं भविष्यति न संशयः ॥ ५० ॥
अखण्डैकरसो देव अयमेकमुदीरितम् । आत्मेति पदमेकस्य ब्रह्मेति पदमेककम् ॥ ५१ ॥
अयं पदस्य जीवोऽर्थ आत्मेतीश्वर ईरितः । अस्यार्थोस्मीत्यखण्डार्थमखण्डैकरसं पदम् ॥ ५२ ॥
द्वैतवृत्तिः साक्षिवृत्तिरखण्डाकारवृत्तिकम् । अखण्डैकरसं पश्चात् सोऽहमस्तीति भावय ॥ ५३ ॥
इत्येवं च चतुर्वाक्यतात्पर्यार्थं समीरितम् । उपाधिसहितं वाक्यं केवलं लक्ष्यमीरितम् ॥
किञ्चिज्ज्ञत्वादि जीवस्य सर्वज्ञत्वादि चेश्वरः । [1]जीवोपरो सचैतन्यमीश्वरोऽहं परोक्षकः ॥
सर्वशून्यमिति त्याज्यं ब्रह्मासीति विनिश्चयः । अहं ब्रह्म न सन्देहः सच्चिदानन्दविग्रहः ॥ ५६ ॥
अहमैक्यं परं मत्वा स्वस्वभावो भवोत्तम । एतत् सर्वं महामिथ्या नास्ति नास्ति न संशयः ॥
सर्वं नास्ति न सन्देहः सर्वं ब्रह्म न संशयः । एकाकारमखण्डार्थं तदेवाहं न संशयः ॥ ५८ ॥

---

१ जीवापरोक्षचैतन्यं C

ब्रह्मेदं विततांकारं तद्ब्रह्माहं न संशयः ।

सूतः —

भवोद्भवमुखोद्भवं भवहराघहृद्यं भुवि
प्रकृष्टरसभावतः प्रथितबोधबुद्धं भव ।
भजन्ति भसिताङ्गका भरितमोदभारादरा
भुजङ्गवरभूषणं भुवनमध्यवृन्दावनम् ॥ ५९ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे महावाक्यार्थनिरूपणप्रकरणं नाम एकत्रिंशोऽध्यायः ॥

## ॥ द्वात्रिंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये पुनस्सत्यागं ब्रह्मनिश्चयमेव च । यस्य श्रवणमात्रेण सद्यो मुक्तो भवेन्नरः ॥ १ ॥
चित्तसत्ता मनःसत्ता ब्रह्मसत्ताऽन्यथा स्थिता । सर्वं मिथ्या न सन्देहो ब्रह्मैवाहं न संशयः ॥
देहसत्ता लिङ्गसत्ता भावसत्ताऽक्षरा स्थिता । सर्वं मिथ्या ... ॥ ३ ॥
दृश्यं च दर्शनं द्रष्टा कर्ता कारयिता क्रिया । सर्वं मिथ्या ... ॥ ४ ॥
एकं द्वित्वं पृथग्भावं अस्ति नास्तीति निर्णयः । सर्वं मिथ्या ... ॥ ५ ॥
शास्त्रभेदं वेदभेदं मुक्तीनां भेदभावनम् । सर्वं मिथ्या ... ॥ ६ ॥
जातिभेदं वर्णभेदं शुद्धाशुद्धविनिर्णयः । सर्वं मिथ्या ... ॥ ७ ॥
अखण्डाकारवृत्तिश्च अखण्डैकरसं परम् । सर्वं मिथ्या ... ॥ ८ ॥
परापरविकल्पश्च पुण्यपापविकल्पनम् । सर्वं मिथ्या ... ॥ ९ ॥
कल्पनाकल्पनाद्वैतं मनोकल्पनभावनम् । सर्वं मिथ्या ... ॥ १० ॥
सिद्धं साध्यं साधनं च [1]नाशनं ब्रह्मभावनम् । सर्वं मिथ्या ... ॥ ११ ॥
आत्मज्ञानं मनोधर्मं मनोऽभावे कुतो भवेत् । सर्वं मिथ्या ... ॥ १२ ॥
अज्ञानं च मनोधर्मस्तदभावे च तत्कुतः । सर्वं मिथ्या ... ॥ १३ ॥
शमो दमो मनोधर्मस्तदभावे च तत् कुतः । सर्वं मिथ्या ... ॥ १४ ॥

१ शासनं

बन्धमोक्षौ मनोधर्मौ तदभावे कुतो भवेत् । सर्वं मिथ्या ... ॥ १५ ॥
सर्वं मिथ्या जगन्मिथ्या देहो मिथ्या जडत्वतः । सर्वं मिथ्या ... ॥ १६ ॥
ब्रह्मलोकः सदा मिथ्या बुद्धिरूपं तदेव हि । सर्वं मिथ्या ... ॥ १७ ॥
विष्णुलोकः सदा मिथ्या शिवमेव हि सर्वदा । सर्वं मिथ्या ... ॥ १८ ॥
रुद्रलोकः सदा मिथ्या अहंकारस्वरूपतः । सर्वं मिथ्या ... ॥ १९ ॥
चन्द्रलोकः सदा मिथ्या मनोरूपविकल्पनम् । सर्वं मिथ्या ... ॥ २० ॥
दिशो लोकः सदा मिथ्या श्रोत्रशब्दसमन्वितः । सर्वं मिथ्या ... ॥ २१ ॥
सूर्यलोकः सदा मिथ्या नेत्ररूपसमन्वितः । सर्वं मिथ्या ... ॥ २२ ॥
वरुणस्य सदा लोको जिह्वारससमन्वितः । सर्वं मिथ्या ... ॥ २३ ॥
त्वचो लोकः सदा मिथ्या वायोः स्पर्शसमन्वितः । सर्वं मिथ्या ... ॥ २४ ॥
अश्विनोर्घ्राणलोकश्च गन्धद्वैतसमन्वितः । सर्वं मिथ्या ... ॥ २५ ॥
अग्नेर्लोकः सदा मिथ्या वागेव वचनेन तत् । सर्वं मिथ्या ... ॥ २६ ॥
इन्द्रलोकः सदा मिथ्या पाणिपादेन संयुतः । सर्वं मिथ्या ... ॥ २७ ॥
उपेन्द्रस्य महर्लोको गमनेन पदं युतम् । सर्वं मिथ्या ... ॥ २८ ॥
मृत्युरेव सदा नास्ति पायुरेव विसर्गकम् । सर्वं मिथ्या ... ॥ २९ ॥
प्रजापतेर्महर्लोको गुह्यमानन्दसंयुतम् । सर्वं मिथ्या ... ॥ ३० ॥
सर्वं मिथ्या न सन्देहः सर्वमात्मेति निश्चितम् । तितिक्षोश्च समाधानं श्रद्धा चाचार्यभाषणे ॥
मुमुक्षुत्वं च मोक्षश्च मोक्षार्थे मम जीवने । चतुःसाधनसंपन्नः सोऽधिकारीति निश्चयः ॥ ३२ ॥
जीवब्रह्मैक्यसद्भावं विषद्ब्रह्मेति निश्चयः । वेदान्तब्रह्मणो बोध्यं बोधकं बन्धमुच्यते ॥ ३३ ॥
सर्वज्ञाननिवृत्तिश्चेदानन्दावाप्तिकं फलम् । इत्येवमादिभिः शब्दैः प्रोक्तं सर्वमसत् सदा ॥ ३४ ॥
सर्वशब्दार्थरूपं च निश्चयं भावनं तथा । ब्रह्ममात्रं परं सत्यमन्यत् सर्वमसत् सदा ॥ ३५ ॥
अनेकशब्दश्रवणमनेकार्थविचारणम् । सर्वं मिथ्या न सन्देहो ब्रह्मैवाहं न संशयः ॥ ३६ ॥
नानुध्यायाद्ब्रह्मशब्दान् ... महानसौ । ब्रह्मोपदेशकाले तु सर्वं चोक्तं न संशयः ॥ ३७ ॥
ब्रह्मैवाहमिदं द्वैतं चित्तसत्ताविभावनम् । चिन्मात्रोऽहमिदं द्वैतं जीवब्रह्मेति भावनम् ॥ ३८ ॥
अहं चिन्मात्रमन्त्रं वा कार्यकारणचिन्तनम् । अक्षयानन्दविज्ञानमखण्डैकरसाद्वयम् ॥ ३९ ॥
परं ब्रह्म इदं ब्रह्म शान्तं ब्रह्म स्वयं जगत् । अन्तरिन्द्रियविज्ञानं बाह्येन्द्रियनिरोधनम् ॥ ४० ॥

सर्वोपदेशकालं च साम्यं शेषं महोदयम् । भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ॥ ४१ ॥
कारणं कार्यमेदं च शास्त्रमार्गैककल्पनम् । अहं ब्रह्म इदं ब्रह्म सर्वं ब्रह्मेति शब्दतः ॥ ४२ ॥
सत्यरूपं कचिन्नास्ति सत्यं नाम कदा नहि । संशयं च विपर्यासं सङ्कल्पः कारणं भ्रमः ॥
आत्मनोऽन्यत् कचिन्नास्ति सर्वं मिथ्या न संशयः । [1] महतां ध्रयते मन्त्री मेधाशुद्धिशुभाशुभम् ॥
देवमेदं वस्तुमेदं नच चैतन्यमेदकम् । आत्मनोऽन्यत् पृथग्भावमात्मनोऽन्यन्निरूपणम् ॥ ४५ ॥
आत्मनोऽन्यन्नामरूपमात्मनोऽन्यच्छुभाशुभम् । आत्मनोऽन्यद्वस्तुसत्ता आत्मनोऽन्यज्जगत्त्रयम् ॥

आत्मनोऽन्यत् सुखं दुःखमात्मनोऽन्यद्विचिन्तनम् ।
आत्मनोऽन्यत्प्रपञ्चं वा आत्मनोऽन्यज्जयाजयौ ॥ ४७ ॥

आत्मनोऽन्यद्देवपूजा आत्मनोऽन्यच्छिवार्चनम् ।
आत्मनोऽन्यन्महाध्यानमात्मनोऽन्यत् कलाक्रमम् ॥ ४८ ॥

सर्वं मिथ्या न सन्देहो ब्रह्म सर्वं न संशयः । सर्वमुक्तं भगवता [2] निदिध्यासस्तु सर्वदा ॥
सकृच्छ्रवणमात्रेण हृदयग्रन्थिरन्तिमम् । कर्मनाशं च मूढानां महतां मुक्तिरेव हि ॥ ५० ॥
अनेककोटिजननपातकं भस्मसाद्भवेत् । सत्यं सत्यं पुनः सत्यं सत्यं सर्वं विनश्यति ॥ ५१ ॥
सद्यो मुक्तिर्न सन्देहो नास्ति मङ्गलमङ्गलम् ।

क भेदभावदर्शनं न चैव शोकमोहहृत्
प्रपश्यतां श्रुते शिखाविशेषमैक्यभावनात् ।
यतो भवेज्जगद् तं महेश येन जीवितं
यदन्तराऽविशत् सदा यथोर्णनाभतन्तुवत् ॥ ५२ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे सर्वमिथ्यात्वनिरूपणप्रकरणं नाम द्वात्रिंशोऽध्यायः ॥

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये परं ब्रह्ममात्रमनुत्पन्नमिदं जगत् । सत्पदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ॥ १ ॥
आत्मैवाहं परं ब्रह्म नान्यत् संसारदृष्टयः । सत्पदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ॥ २ ॥

---

१ महत्वं दधते मन्त्री मेधाशुद्धिं ग    २ निजाध्यासस्तु ग

सत्पदानन्दमात्रोऽहं चित्पदानन्दविग्रहम् । अहमेवाहमेवैकमहमेव परात् परः ॥ ३ ॥
सच्चिदानन्दमेवैकमहं ब्रह्मैव केवलम् । अहमस्मि सदा भामि एवं रूपं कुतोऽप्यसत् ॥ ४ ॥
त्वमित्येवं परं ब्रह्म चिन्मयानन्दरूपवान् । चिदाकारं चिदाकाशं चिदेव परमं सुखम् ॥ ५ ॥
आत्मैवाहमसन्नाहं कूटस्थोऽहं गुरुः परः । कालं नास्ति जगन्नास्ति कल्मषत्वानुभावनम् ॥
अहमेव परं ब्रह्म अहमेव सदा शिवः । शुद्धचैतन्य एवाहं शुद्धसत्वानुभावनः ॥ ७ ॥
अद्वयानन्दमात्रोऽहमव्ययोऽहं महानहम् । सर्वं ब्रह्मैव सततं सर्वं ब्रह्मैव निर्मलः ॥ ८ ॥
सर्वं ब्रह्मैव नान्योऽस्ति सर्वं ब्रह्मैव चेतनः । सर्वप्रकाशरूपोऽहं सर्वप्रियमनो ह्यहम् ॥ ९ ॥
एकान्तैकप्रकाशोऽहं सिद्धासिद्धविवर्जितः । सर्वान्तर्यामिरूपोऽहं सर्वसाक्षित्वलक्षणम् ॥ १० ॥
शमो विचारसन्तोषरूपोऽहमिति निश्चयः । [1]परमात्मा परं ज्योतिः परं परविवर्जितः ॥ ११ ॥
परिपूर्णस्वरूपोऽहं परमात्माऽहमच्युतः । [2]सर्ववेदस्वरूपोऽहं सर्वशास्त्रस्य निर्णयः ॥ १२ ॥
लोकानन्दस्वरूपोऽहं मुख्यानन्दस्य निर्णयः । सर्वं ब्रह्मैव भूर्नास्ति सर्वं ब्रह्मैव कारणम् ॥
सर्वं ब्रह्मैव नाकार्यं सर्वं ब्रह्म स्वयं वरः । नित्याक्षरोऽहं नित्योऽहं सर्वकल्याणकारकम् ॥ १४ ॥
सत्यज्ञानप्रकाशोऽहं मुख्यविज्ञानविग्रहः । तुर्यातुर्यप्रकाशोऽहं सिद्धासिद्धादिवर्जितः ॥ १५ ॥
सर्वं ब्रह्मैव सततं सर्वं ब्रह्म निरन्तरम् । सर्वं ब्रह्म चिदाकाशं नित्यब्रह्म निरञ्जनम् ॥ १६ ॥
सर्वं ब्रह्म गुणातीतं सर्वं ब्रह्मैव केवलम् । सर्वं ब्रह्मैव इत्येवं निश्चयं कुरु सर्वदा ॥ १७ ॥
ब्रह्मैव सर्वमित्येवं सर्वदा दृढनिश्चयः । सर्वं ब्रह्मैव इत्येवं निश्चयित्वा सुखीभव ॥ १८ ॥
सर्वं ब्रह्मैव सततं भावाभावौ चिदेव हि । द्वैताद्वैतविवादोऽयं नास्ति नास्ति न संशयः ॥ १९ ॥
सर्वविज्ञानमात्रोऽहं सर्वं ब्रह्मेति निश्चयः । गुह्याद्गुह्यतरं सोऽहं गुणातीतोऽहमद्वयः ॥ २० ॥
अन्वयव्यतिरेकं च कार्याकार्यं विशोधय । सच्चिदानन्दरूपोऽहमनुत्पन्नमिदं जगत् ॥ २१ ॥
ब्रह्मैव सर्वमेवेदं चिदाकाशमिदं जगत् । ब्रह्मैव परमानन्दं आकाशसदृशं विभु ॥ २२ ॥
ब्रह्मैव सच्चिदानन्दं सदा वाचामगोचरम् । ब्रह्मैव सर्वमेवेदमस्ति नास्तीति केचन ॥ २३ ॥
आनन्दभावना किञ्चित् सदसन्मात्र एव हि । ब्रह्मैव सर्वमेवेदं सदा सन्मात्रमेव हि ॥ २४ ॥
ब्रह्मैव सर्वमेवेदं चिद्घनानन्दविग्रहम् । ब्रह्मैव सच्च सत्यं च सनातनमहं महत् ॥ २५ ॥
ब्रह्मैव सच्चिदानन्द ओतप्रोतेव (?) तिष्ठति । ब्रह्मैव सच्चिदानन्दं सर्वाकारं सनातनम् ॥ २६ ॥
ब्रह्मैव सच्चिदानन्दं परमानन्दमव्ययम् । ब्रह्मैव सच्चिदानन्दं मायातीतं निरञ्जनम् ॥ २७ ॥

---

१ श्लो. ११ तः श्लो. ३१ पर्यन्तं C कोशे समनन्तराध्याये मुद्रितम् ।

२ सर्वदा सत्स्वरूपोऽहं C

ब्रह्मैव सच्चिदानन्दं सत्तामात्रं सुखात् सुखम् । ब्रह्मैव सच्चिदानन्दं चिन्मात्रैकस्वरूपकम् ॥ २८॥
ब्रह्मैव सच्चिदानन्दं सर्वभेदविवर्जितम् । सच्चिदानन्दं ब्रह्मैव नानाकारमिव स्थितम् ॥ २९ ॥
ब्रह्मैव सच्चिदानन्दं कर्ता चान्तरोऽस्ति हि । सच्चिदानन्दं ब्रह्मैव परं ज्योतिः स्वरूपकम् । ३०॥
ब्रह्मैव सच्चिदानन्दं नित्यनिश्चलमव्ययम् । ब्रह्मैव सच्चिदानन्दं वाचावधिरसावयम् ॥ ३१ ॥
ब्रह्मैव सच्चिदानन्दं स्वयमेव स्वयं सदा । ब्रह्मैव सच्चिदानन्दं न करोति न तिष्ठति ॥ ३२ ॥
ब्रह्मैव सच्चिदानन्दं न गच्छति न तिष्ठति । ब्रह्मैव सच्चिदानन्दं ब्रह्मणोऽन्यन्न किञ्चन ॥ ३३ ॥
ब्रह्मैव सच्चिदानन्दं न शुक्लं न च कृष्णकम् । ब्रह्मैव सच्चिदानन्दं सर्वाधिष्ठानमव्ययम् ॥ ३४ ॥
ब्रह्मैव सच्चिदानन्दं न तूष्णीं न विभाषणम् । ब्रह्मैव सच्चिदानन्दं सत्त्वं नाहं न किञ्चन ॥ ३५ ॥
ब्रह्मैव सच्चिदानन्दं परात्परमनुद्भवम् । ब्रह्मैव सच्चिदानन्दं तत्त्वातीतं महोत्सवम् ॥ ३६ ॥
ब्रह्मैव सच्चिदानन्दं परमाकाशमाततम् । ब्रह्मैव सच्चिदानन्दं सर्वदा गुरुरूपकम् ॥ ३७ ॥
ब्रह्मैव सच्चिदानन्दं सदा निर्मलविग्रहम् । ब्रह्मैव सच्चिदानन्दं शुद्धचैतन्यमाततम् ॥ ३८ ॥
ब्रह्मैव सच्चिदानन्दं स्वप्रकाशात्मरूपकम् । ब्रह्मैव सच्चिदानन्दं निश्चयं चात्मकारणम् ॥ ३९ ॥
ब्रह्मैव सच्चिदानन्दं स्वयमेव प्रकाशते । ब्रह्मैव सच्चिदानन्दं नानाकार इति स्थितम् ॥ ४० ॥
ब्रह्मैव सच्चिदाकारं भ्रान्ताधिष्ठानरूपकम् । ब्रह्मैव सच्चिदानन्दं सर्वं नास्ति न मे स्थितम् ॥
वाचामगोचरं ब्रह्म सच्चिदानन्दविग्रहम् । सच्चिदानन्दरूपोऽहमनुत्पन्नमिदं जगत् ॥ ४२ ॥
ब्रह्मैवेदं सदा सत्यं नित्यमुक्तं निरञ्जनम् । सच्चिदानन्दं ब्रह्मैव एकमेव सदा सुखम् ॥ ४३ ॥
सच्चिदानन्दं ब्रह्मैव पूर्णात् पूर्णतरं महत् । सच्चिदानन्दं ब्रह्मैव सर्वव्यापकमीश्वरम् ॥ ४४ ॥
सच्चिदानन्दं ब्रह्मैव नामरूपप्रभास्वरम् । सच्चिदानन्दं ब्रह्मैव अनन्तानन्दनिर्मलम् ॥ ४५ ॥
सच्चिदानन्दं ब्रह्मैव परमानन्ददायकम् । सच्चिदानन्दं ब्रह्मैव सन्मात्रं सदसत्परम् ॥ ४६ ॥
सच्चिदानन्दं ब्रह्मैव सर्वेषां परमव्ययम् । सच्चिदानन्दं ब्रह्मैव मोक्षरूपं शुभाशुभम् ॥ ४७ ॥
सच्चिदानन्दं ब्रह्मैव परिच्छिन्नं न हि क्वचित् । ब्रह्मैव सर्वमेवेदं शुद्धबुद्धमलेपकम् ॥ ४८ ॥
सच्चिदानन्दरूपोऽहमनुत्पन्नमिदं जगत् । एतत् प्रकरणं सत्यं सद्योमुक्तिप्रदायकम् ॥ ४९ ॥
सर्वदुःखक्षयकरं सर्वविज्ञानदायकम् । नित्यानन्दकरं सत्यं शान्तिदान्तिप्रदायकम् ॥ ५० ॥

यस्त्वन्तकान्तकमहेश्वरपादपद्म-
लोलम्बसप्रभहृदा परिशीलकश्च ।
वृन्दारवृन्दविनतामलदिव्यपादो
भावो भवोद्भवकृपावशतो भवेच्च ॥ ५१ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे सच्चिदानन्दरूपताप्रकरणं नाम त्रयस्त्रिंशोऽध्यायः ॥

## ॥ चतुस्त्रिंशोऽध्यायः ॥

ऋभुः —

शृणुष्व ब्रह्म विज्ञानमद्भुतं त्वतिदुर्लभम् । एकैकश्रवणेनैव कैवल्यं परमश्नुते ॥ १ ॥
सत्यं मत्यं जगन्नास्ति संकल्पकलनादिकम् । नित्यानन्दमयं ब्रह्मविज्ञानं सर्वदा स्वयम् ॥ २ ॥
आनन्दमव्ययं शान्तमेकरूपमनामयम् । चित्तप्रपञ्चं नैवास्ति नास्ति कार्यं च तत्वतः ॥ ३ ॥
प्रपञ्चभावना नास्ति दृश्यरूपं न किञ्चन । असत्यरूपं सङ्कल्पं तत्कार्यं च जगन्न हि ॥ ४ ॥
सर्वमित्येव नास्त्येव कालमित्येवमीश्वरः । वन्ध्याकुमारे भीतिश्च तदधीनमिदं जगत् ॥ ५ ॥
गन्धर्वनगरे शृङ्गे मदग्र दृश्यते जगत् । मृगतृष्णाजलं पीत्वा तृप्तिश्चेदस्त्विदं जगत् ॥ ६ ॥
नगे शृङ्ग न बाणेन नष्टं पुरुषमस्त्विदम् । गन्धर्वनगरे सत्ये जगद्भवतु सर्वदा ॥ ७ ॥
गगने नीलिमासिन्धौ जगत सत्यं भविष्यति । शुक्तिकारजतं सत्यं भूषणं चिज्जगद्भवेत ॥ ८ ॥
रज्जुसर्पेण नष्टश्चेत् नरो भवति संसृतिः (?) । जातिरूपेण बाणेन ज्वालाग्नौ नाशिते सति ॥
रंभास्तम्भेन काष्ठेन पाकसिद्धिर्जगद्भवेत । नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् । १० ॥
सद्यः कुमारिकारूपैः पाके सिद्धे जगद्भवेत । नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ॥
मिथ्याटव्यां वायसान्नं अस्ति चेज्जगदुद्भवम् । मूलारोपणमन्त्रस्य प्रीतिश्चेद्भाषणं जगत् ॥ १२ ॥
मासात् पूर्वं मृतो मर्त्य आगतश्चेज्जगद् भवेत् । तक्रं क्षीरस्वरूपं चेत् किञ्चित् किञ्चिज्जगद्भवेत ॥
गोस्तनादुद्भवं क्षीरं पुनरारोहणं जगत । भूर ... जन्दमुत्पन्नं जगद्भवतु सर्वदा ॥ १४ ॥
कूर्मरोम्णा गजे बद्धे जगदस्तु मदोत्कटे । मृणालतन्तुना मेरुश्चलितश्चेज्जगद् भवेत ॥ १५ ॥
तरङ्गमालया सिन्धुः बद्धश्चेदस्त्विदं जगत । ज्वालाग्निमण्डले पद्मं वृद्धं चेत् तज्जगद्भवेत ॥
महच्छैलेन्द्रनिरुपं संभवश्चेदिदं भवेत् । नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ॥ १७ ॥
मीन आगत्य पद्माक्षे स्थितश्चेदस्त्विदं जगत् । निगीर्णश्चेद्भृङ्गशनुः मेरुपुच्छवदस्त्विदम् ॥ १८ ॥
मशकेनाशिते सिंहे हते भवतु कल्पनम् । अणुकोटरविस्तीर्णे त्रैलोक्ये चेज्जगद्भवेत् ॥ १९ ॥
स्वप्ने तिष्ठति यद्वस्तु जागरे चेज्जगद्भवेत् । नदीवेगो निश्चलश्चेत् जगद्भवतु सर्वदा ॥ २० ॥
जात्यन्धै रत्नविषयः सुज्ञातश्चेज्जगद्भवेत । चन्द्रसूर्यादिकं त्यक्त्वा राहुश्चेत् दृश्यते जगत् ॥
भ्रष्टबीजेन उत्पन्ने वृद्धिश्चेच्चित्तसंभवः । महादरिद्रैराढ्यानां सुखे ज्ञाते जगद्भवेत् ॥ २२ ॥
दुग्धं दुग्धगतक्षीरं पुनरारोहणं पुनः । केवलं दर्पणे नास्ति प्रतिबिम्बं तदा जगत् ॥ २३ ॥
यथा शून्यगतं व्योम प्रतिबिम्बेन वै जगत् । अजकुक्षौ गजो नास्ति आत्मकुक्षौ जगन्न हि ॥

यथा तान्त्रे समुत्पन्नं तथा ब्रह्ममयं जगत् । कार्पासकेऽग्निदग्धेन भस्म नास्ति तथा जगत् ॥
परं ब्रह्म परं ज्योतिः परस्तात् परतः परः । सर्वदा भेदकलनं द्वैताद्वैतं न विद्यते ॥ २६ ॥
चित्तवृत्तिर्जगद्दुःखं अस्ति चेत् किल नाशनम् । मनःसंकल्पकं बन्ध अस्ति चेद्ब्रह्मभावना ॥
अविद्या कार्यदेहादि अस्ति चेद्द्वैतभावनम् । चित्तमेव महारोगो व्याप्तश्चेद्ब्रह्मभेषजम् ॥ २८ ॥
अहं शत्रुर्यदि भवेदहं ब्रह्मैव भावनम् । देहोऽहमिति दुःखं चेद्ब्रह्माहमिति निश्चिनु ॥ २९ ॥
संशयश्च पिशाचश्चेद्ब्रह्ममात्रेण नाशय । द्वैतभूतविष्टरेश (?) अद्वैतं मम आश्रय ॥ ३० ॥
अनात्मत्वपिशाचश्चेदात्ममन्त्रेण बन्धय । नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ॥ ३१ ॥
चतुःषष्टिकदृष्टान्तैरेवं ब्रह्मैव साधितम् । यः शृणोति नरो नित्यं स मुक्तो नात्र संशयः ॥ ३२ ॥
कृतार्थ एव सततं नात्र कार्या विचारणा ॥ ३३ ॥

मनोवचोविदूरगं त्वरूपगन्धवर्जितं
. हृदम्भोकसन्ततं विजानतां मुदे सदा ।
... दुज्वलप्रभाविकासस‌द्युति
प्रकाशदं (महेश्वर) त्वदीयपादपङ्कजम् ॥ ३४ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे दृष्टान्तैर्ब्रह्मसाधनप्रकरणं नाम चतुस्त्रिंशोऽध्यायः ॥

## ॥ पञ्चत्रिंशोऽध्यायः ॥

ऋभुः —

निदाघ शृणु गुह्यं मे सद्यो मुक्तिप्रदं नृणाम् । आत्मैव नान्यदेवेदं परमात्माहमव्ययः ॥ १ ॥
अहमेव परं ब्रह्म सच्चिदानन्दविग्रहः । अहमस्मि महानस्मि शिवोऽस्मि परमोऽस्म्यहम् ॥ २ ॥
अदृश्यं परमं ब्रह्म नान्यदस्ति स्वभावतः । सर्वं नास्त्येव नास्त्येव अहं ब्रह्मैव केवलम् ॥ ३ ॥
शान्तं ब्रह्म परं चास्मि सर्वदा नित्यनिर्मलः । सर्वं नास्त्येव नास्त्येव अहं ब्रह्मैव केवलम् ॥
सर्वसङ्कल्पमुक्तोऽस्मि सर्वसन्तोषवर्जितः । कालकर्मजगद्द्वैतद्रष्टृदर्शनविग्रहः ॥ ५ ॥
आनन्दोऽस्मि सदानन्दकेवलो जगतां प्रियम् । समरूपोऽस्मि नित्योऽस्मि भूतभव्यमजो जयः ॥
चिन्मात्रोऽस्मि सदा मुक्तो जीवो बन्धो न विद्यते । श्रवणं [1] षड्विधं लिङ्गं नैवास्ति जगदीदृशम् ॥

1 द्विविधं C

चित्तसंसारहीनोऽस्मि चिन्मात्रत्वं जगत सदा । चित्तमेव हितं देह ह्यविचारः परो रिपुः ॥
अविचारो जगद्दुःखमविचारो महद्भयम् । सद्योऽस्मि सर्वदा तृप्तः परिपूर्णः परो महान् ॥ ९ ॥
नित्यशुद्धोऽस्मि बुद्धोस्मि चिदाकाशोऽस्मि चेतनः । आत्मैव नान्यदेवेदं परमात्माऽहमक्षतः ॥
सर्वदोषविहीनोऽस्मि सर्वत्र विततोऽस्म्यहम् । वाचातीतस्वरूपोऽस्मि परमात्माऽहमक्षतः ॥ ११ ॥
चित्रातीतं परं द्वन्द्वं सन्तोषः समभावनम् । अन्तर्बहिरनाद्यन्तं सर्वभेदविनिर्णयम् ॥ १२ ॥
अहंकारं बलं सर्वं कामं क्रोधं परिग्रहम् । ब्रह्मेन्द्रो विष्णुर्वरुणो भावाभावविनिश्चयः ॥ १३ ॥
जीवसत्ता जगत्सत्ता मायासत्ता न किञ्चन । गुरुशिष्यादिभेदं च कार्याकार्यविनिश्चयः ॥ १४ ॥
त्वं ब्रह्मासीति वक्ता च अहं ब्रह्मास्मि [1]संभवः । सर्ववेदान्तविज्ञानं सर्वाम्नायविचारणम् ॥
इदं पदार्थसद्भावमहं रूपेण संभवम् । वेदवेदान्तसिद्धान्तजगद्भेदं न विद्यते ॥ १६ ॥
सर्वं ब्रह्म न सन्देहः सर्वमिन्थ्यैव नास्ति हि । केवलं ब्रह्मशान्तात्मा अहमेव निरन्तरम् ॥ १७ ॥
शुभाशुभविभेदं च दोषादोषं च मे न हि । चित्तसत्ता जगत्सत्ता बुद्धिवृत्तिविजृम्भणम् ॥
ब्रह्मैव सर्वदा नान्यत् सत्यं सत्यं निजं पदम् । आत्माकारमिदं द्वैतं [2]मिथ्यैव न परः पुमान् ॥
सच्चिदानन्दमात्रोऽहं सर्वं केवलमव्ययम् । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ २० ॥
मनो जगदहं भेदं चित्तवृत्तिजगद्भयम् । सर्वानन्दमहानन्दमात्मानन्दमनन्तकम् ॥ २१ ॥
अत्यन्तस्वल्पमल्पं वा प्रपञ्चं नास्ति किञ्चन । प्रपञ्चमिति शब्दो वा स्मरणं वा न विद्यते ॥
अन्तरस्थप्रपञ्चं वा क्वचिन्नास्ति क्वचिद्बहिः । यत् किञ्चिदेवं तूष्णीं वा यच्च किञ्चित् सदा क वा ॥
येन केन यदा किञ्चिद्यस्य कस्य न किञ्चन । शुद्धं मलिनरूपं वा ब्रह्मवाक्यमबोधकम् ॥ २४ ॥
ईदृशं तादृशं वेति न किञ्चिद्वक्तुमर्हति । ब्रह्मैव सर्वं सततं ब्रह्मैव सकलं मनः ॥ २५ ॥
[3]आनन्दं परमानन्दं नित्यानन्दं सदाऽद्वयम् । चिन्मात्रमेव सततं नास्ति नास्ति परोऽस्म्यहम् ॥
प्रपञ्चं सर्वदा नास्ति प्रपञ्चं चित्रमेव च । चित्तमेव हि संसारं नान्यत् संसारमेव हि ॥ २७ ॥
मन एव हि संसारो देहोऽहमिति रूपकम् । सङ्कल्पमेव संसारं तन्नाशेऽसौ विनश्यति ॥ २८ ॥
सङ्कल्पमेव जननं तन्नाशेऽसौ विनश्यति । सङ्कल्पमेव दारिद्र्यं तन्नाशेऽसौ विनश्यति ॥ २९ ॥
सङ्कल्पमेव मननं तन्नाशेऽसौ विनश्यति । आत्मैव नान्यदेवेदं परमात्माऽहमक्षतः ॥ ३० ॥
नित्यमात्ममयं बोधमहमेव सदा महान् । आत्मैव नान्यदेवेदं परमात्माऽहमक्षतः ॥ ३१ ॥

---

१ सर्वगः C  २ आत्मैव C  ३ अत्र "सर्वं ब्रह्ममयं सत्यं नेह नानास्ति किञ्चन" इत्यर्धमधिकं C कोशे ।

इत्येवं भावयेन्नित्यं क्षिप्रं मुक्तो भविष्यति । त्वमेव ब्रह्मरूपोऽसि त्वमेव ब्रह्मविग्रहः ॥ ३२ ॥
एवं च परमानन्दं ध्यात्वा ध्यात्वा सुखीभव । सुखमात्रं जगत् सर्वं प्रियमात्रं प्रपञ्चकम् ॥
जडमात्रमयं लोकं ब्रह्ममात्रमयं सदा । ब्रह्मैव नान्यदेवेदं परमात्माऽहमव्ययः ॥ ३४ ॥
एक एव सदा एष एक एव निरन्तरम् । एक एव परं ब्रह्म एक एव चिदव्ययः ॥ ३५ ॥
एक एव गुणातीत एक एव सुखावहः । एक एव महानात्मा एक एव निरन्तरम् (?) ॥
एक एव चिदाकार एक एवात्मनिर्णयः । ब्रह्मैव नान्यदेवेदं परमात्माऽहमक्षतः ॥ ३७ ॥
परमात्माहमन्यन्न परमानन्दमन्दिरम् । इत्येवं भावयन्नित्यं सदा चिन्मय एव हि ॥ ३८ ॥

सूतः (?)

विरिञ्चिवञ्चनाततप्रपञ्चपञ्चबाणभित्-
सुकाञ्चनाद्रिधारिणं कुलुञ्चनां पतिं भजे ।
अकिञ्चनेऽपि सिञ्चके जलेन लिङ्गमस्तके
विमुञ्चति क्षणादघं न किञ्चिदत्र शिष्यते ॥ ३९ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ब्रह्मभावनोपदेशप्रकरणं नाम पञ्चत्रिंशोऽध्यायः ॥

---

## ॥ षट्त्रिंशोऽध्यायः ॥

ऋभुः —

शृणु वक्ष्यामि विप्रेन्द्र सर्वं ब्रह्मैव निर्णयम् । यस्य श्रवणमात्रेण सद्यो मुक्तिमवाप्नुयात् ॥ १ ॥
इदमेव सदा नास्ति ह्यहमेव हि केवलम् । आत्मैव सर्वदा नास्ति आत्मैव सुखलक्षणम् ॥ २ ॥
आत्मैव परमं तत्त्वमात्मैव जगतां गणः । आत्मैव गगनाकारमात्मैव च निरन्तरम् ॥ ३ ॥
आत्मैव सत्यं ब्रह्मैव आत्मैव गुरुलक्षणम् । आत्मैव चिन्मयं नित्यमात्मैवाक्षरमव्ययम् ॥ ४ ॥
आत्मैव सिद्धरूपं वा आत्मैवात्मा न संशयः । आत्मैव जगदाकारं आत्मैवात्मा स्वयं स्वयम् ॥
आत्मैव शान्तिकलनमात्मैव मनसा वियत् । आत्मैव सर्वं यत् किञ्चिदात्मैव परमं पदम् ॥
आत्मैव भुवनाकारमात्मैव प्रियमव्ययम् । आत्मैवान्यन्न च क्वापि आत्मैवान्यं मनोमयम् ॥
आत्मैव सर्वविज्ञानमात्मैव परमं धनम् । आत्मैव भूतरूपं वा आत्मैव भ्रमणं महत् ॥ ८ ॥
आत्मैव नित्यशुद्धं वा आत्मैव गुरुरात्मनः । आत्मैव ह्यात्मनः शिष्य आत्मैव लयमात्मनि ॥

आत्मैव ह्यात्मनो ध्यानमात्मैव गतिरात्मनः । आत्मैव ह्यात्मनो होम आत्मैव ह्यात्मनो जपः ॥
आत्मैव तृप्तिरात्मैव आत्मनोऽन्यन्न किञ्चन । आत्मैव ह्यात्मनो मूलमात्मैव ह्यात्मनो व्रतम् ॥
आत्मज्ञानं व्रतं नित्यमात्मज्ञानं परं सुखम् । आत्मज्ञानं परानन्दमात्मज्ञानं परायणम् ॥ १२ ॥
आत्मज्ञानं परं ब्रह्म आत्मज्ञानं महाव्रतम् । आत्मज्ञानं स्वयं वेद्यमात्मज्ञानं महाधनम् ॥ १३ ॥
आत्मज्ञानं परं ब्रह्म आत्मज्ञानं महत् सुखम् । आत्मज्ञानं महानात्मा आत्मज्ञानं जनास्पदम् ॥
आत्मज्ञानं महातीर्थमात्मज्ञानं जयप्रदम् । आत्मज्ञानं परं ब्रह्म आत्मज्ञानं चराचरम् ॥ १५ ॥
आत्मज्ञानं परं शास्त्रमात्मज्ञानमनूपमम् । आत्मज्ञानं परो योग आत्मज्ञानं परा गतिः ॥ १६ ॥
आत्मज्ञानं परं ब्रह्म इत्येवं दृढनिश्चयः । आत्मज्ञानं मनोनाशः आत्मज्ञानं परो गुरुः ॥ १७ ॥
आत्मज्ञानं चित्तनाश आत्मज्ञानं विमुक्तिदम् । आत्मज्ञानं भयनाशमात्मज्ञानं सुखावहम् ॥
आत्मज्ञानं महातेज आत्मज्ञानं महाशुभम् । आत्मज्ञानं सतां रूपमात्मज्ञानं सतां प्रियम् ॥
आत्मज्ञानं सतां मोक्षमात्मज्ञानं विवेकजम् । आत्मज्ञानं परो धर्म आत्मज्ञानं सदा जपः ॥
आत्मज्ञानस्य सदृशमात्मविज्ञानमेव हि । आत्मज्ञानेन सदृशं न भूतं न भविष्यति ॥ २१ ॥
आत्मज्ञानं परो मन्त्र आत्मज्ञानं परं तपः । आत्मज्ञानं हरिः साक्षादात्मज्ञानं शिवः परः ॥
आत्मज्ञानं परो धाता आत्मज्ञानं स्वसमतम् । आत्मज्ञानं स्वयं पुण्यमात्मज्ञानं विशोधनम् ॥
आत्मज्ञानं महातीर्थमात्मज्ञानं शमादिकम् । आत्मज्ञानं प्रियं मन्त्रमात्मज्ञानं स्वपावनम् ॥
आत्मज्ञानं च किन्नाम अहं ब्रह्मेति निश्चयः । अहं ब्रह्मेति विश्वासमात्मज्ञानं महोदयम् ॥ २५ ॥
अहं ब्रह्मास्मि नित्योऽस्मि सिद्धोऽस्मीति विभावनम् । आनन्दोऽहं परानन्दं शुद्धोऽहं नित्यमव्ययः ॥
चिदाकाशस्वरूपोऽस्मि सच्चिदानन्दशाश्वतम् । निर्विकारोऽस्मि शान्तोऽहं सर्वतोऽहं निरन्तरः ॥
सर्वदा सुखरूपोऽस्मि सर्वदोषविवर्जितः । सर्वसङ्कल्पहीनोऽस्मि सर्वदा स्वयमस्म्यहम् ॥ २८ ॥
सर्वं ब्रह्मेत्यनुभवं विना शब्दं पठ स्वयम् । कोट्यश्वमेधे यत् पुण्यं क्षणात् तत्पुण्यमाप्नुयात् ॥
अहं ब्रह्मेति निश्चित्य मेरुदानफलं लभेत् । ब्रह्मैवाहमिति स्थित्वा सर्वभूदानमप्यणु ॥ ३० ॥
ब्रह्मैवाहमिति स्थित्वा कोटिशो दानमप्यणु । ब्रह्मैवाहमिति स्थित्वा सर्वानन्दं तृणायते ॥ ३१ ॥
ब्रह्मैव सर्वमित्येव भावितस्य फलं स्वयम् । ब्रह्मैवाहमिति स्थित्वा समानं ब्रह्म एव हि ॥ ३२ ॥
तस्मात् स्वप्नेऽपि नित्यं च सर्वं सन्त्यज्य यत्नतः । अहं ब्रह्म न सन्देहः अहमेव गतिर्मम ॥
अहमेव सदा नान्यदहमेव सदा गुरुः । अहमेव परो ह्यात्मा अहमेव न चापरः ॥ ३४ ॥
अहमेव गुरुः शिष्यः अहमेवेति निश्चिनु । इदमित्येव निर्देशः परिच्छिन्नो जगन्न हि (?) ॥

न भूमिर्न जलं नाग्निर्न वायुर्न च खं तथा। सर्वं चैतन्यमात्रत्वात् नान्यत् किञ्चन विद्यते ॥
इत्येवं भावनपरो देहमुक्तः सुखीभव। अहमात्मा इदं नास्ति सर्वं चैतन्यमात्रतः ॥ ३७ ॥
अहमेव हि पूर्णात्मा आनन्दाब्धिरनामयः। इदमेव सदा नास्ति जडत्वादसदेव हि ॥ ३८ ॥
इदं मम सदा ब्रह्म इदं नेति सुखीभव ॥ ३८ ॥

तुरङ्गमृङ्गसन्निमा श्रुतिप्ररोचना ...
विशेषकामवासना विनिश्चितात्मवृत्तितः।
नराः सुरा मुनीश्वरा अपङ्गसङ्गमप्युमा-
पतिं ... न ते भजन्ति केचन (?) ... ॥ ३९ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ब्रह्मभावनोपदेशप्रकरणं नाम षट्त्रिंशोऽध्यायः ॥

## ॥ सप्तत्रिंशोऽध्यायः ॥

ऋभुः —

निदाघ शृणु वक्ष्यामि रहस्यं परमद्भुतम्। श्लोकैकश्रवणेनैव सद्यो मोक्षमवाप्नुयात् ॥ १ ॥
इदं [1] दृष्टं परं ब्रह्म दृश्यवद्भाति चित्ततः। सर्वं चैतन्यमात्रत्वात् नान्यत् किञ्चिन्न विद्यते ॥
इदमेव हि नास्त्येव अयमित्यपि नास्ति हि। एक एवाप्यणुर्वापि नास्ति नास्ति न संशयः ॥
व्यवहारमिदं क्वापि वार्तामात्रमपि क्व वा। बन्धरूपं बन्धवार्ता बन्धकार्यं परं च वा ॥ ४ ॥
सन्मात्रकार्यं सन्मात्रमहं ब्रह्मेति निश्चयम्। दुःखं सुखं वा बोधो वा साधकं साध्यनिर्णयः ॥
आत्मेति परमात्मेति जीवात्मेति पृथङ् न हि। देहोऽहमिति मूर्तोऽहं ज्ञानविज्ञानवानहम् ॥
कार्यकारणरूपोऽहमन्तःकरणकार्यकम्। एकमित्येकमात्रं वा नास्ति नास्तीति भावय ॥ ७ ॥
सर्वं सङ्कल्पमात्रेति सर्वं ब्रह्मेति वा जगत्। तत्त्वज्ञानं परं ब्रह्म ओङ्कारार्थं सुखं जपम् ॥ ८ ॥
द्वैताद्वैतं सदाद्वैतं तथा मानावमानकम्। सर्वं चैतन्यमात्रत्वात् नान्यत् किञ्चिन्न विद्यते ॥ ९ ॥
आत्मानन्दमहं ब्रह्म प्रज्ञानं ब्रह्म एव हि। इदं रूपमहं रूपं प्रियाप्रियविचारणम् ॥ १० ॥
यद्यत् संभाव्यते लोके यद्यत् साधनकल्पनम्। यद्यन्तर्राहितं ब्रह्मभावनं चित्तनिर्मितम् ॥ ११ ॥
स्थूलदेहोऽहमेवात्र सूक्ष्मदेहोऽहमेव हि। बुद्धेर्भेदं मनोभेदं अहंकारं जडं च तत् ॥ १२ ॥

---

[1] द्रष्टृ इति युक्तं भाति।

सर्वं चैतन्यमात्रत्वात् नान्यत् किञ्चिन्न विद्यते । श्रवणं मननं चैव साक्षात्कारविचारणम् ॥
आत्मैवाहं परं चैव नाहं मोहमयं स्वयम् । ब्रह्मैव सर्वमेवेदं ब्रह्मैव परमं पदम् ॥ १४ ॥
ब्रह्मैव कारणं कार्यं ब्रह्मैव जगतां जयः । ब्रह्मैव सर्वं चैतन्यं ब्रह्मैव मनसायते ॥ १५ ॥
ब्रह्मैव जीववद्भाति ब्रह्मैव च हरीयते । ब्रह्मैव शिववद्भाति ब्रह्मैव प्रियमात्मनः ॥ १६ ॥
ब्रह्मैव शान्तिवद्भाति ब्रह्मणोऽन्यन्न किञ्चन । नाहं न चायं नैवान्यन्नोत्पन्नं न परात् परम् ॥
न चेदं न च शास्त्रार्थं न मीमांसं न चोद्भवम् । न लक्षणं न वेदादि नापि चित्तं न मे मनः ॥
न मे नायं नेदमिदं न बुद्धिनिश्चयं सदा । कदाचिदपि नास्त्येव सत्यं सत्यं न किञ्चन ॥१९॥
नैकमात्रं न चायं वा नान्तरं न बहिर्न हि । ईषन्मात्रं च न द्वैतं न जन्यं न च दृश्यकम् ॥
न भावनं न स्मरणं न विस्मरणमण्वपि । न कालदेशकलनं न सङ्कल्पं न वेदनम् ॥ २१ ॥
न विज्ञानं न देहान्यं न वेदोऽहं न संसृतिः । न मे दुःखं न मे मोक्षं न गतिर्न च दुर्गतिः ॥
नात्मा नाहं न जीवोऽहं न कूटस्थो न जायते । न देहोऽहं न च श्रोत्रं न त्वगिन्द्रियदेवता ॥
सर्वं चैतन्यमात्रत्वात् सर्वं नास्त्येव सर्वदा । अखण्डाकाररूपत्वात् सर्वं नास्त्येव सर्वदा ॥
हुंकाररूपावकाशो वा हुंकारजननं च वा । नास्त्येव नास्ति नास्त्येव नास्ति नास्ति कदाचन ॥
अन्यत् पदार्थमल्पं वा अन्यदेवान्यभाषणम् । आत्मनोऽन्यदसत्यं वा सत्यं वा भ्रान्तिरेव च ॥

नास्त्येव नास्ति नास्त्येव नास्ति शब्दोऽपि नास्ति हि ।
सर्वं चैतन्यमात्रत्वात् सर्वं नास्त्येव सर्वदा ॥ २७ ॥

सर्वं ब्रह्म न सन्देहो ब्रह्मैवाहं न संशयः । वाक्यं च वाचकं सर्वं वक्ता च त्रिपुटीद्वयम् ॥२८॥
ज्ञाता ज्ञानं ज्ञेयभेदं मातृमानमिति प्रियम् । यद्यच्छास्त्रेषु निर्णीतं यद्यद्वेदेषु निश्चितम् ॥
परापरमतीतं च अतीतोऽहमवेदनम् । गुरुर्गुरूपदेशश्च गुरुं वक्ष्ये न कस्यचित् ॥ ३० ॥
गुरुरूपा गुरुश्रद्धा सदा नास्ति गुरुः स्वयम् । आत्मैव गुरुरात्मैव अन्याभावान्न संशयः ॥
आत्मनः शुभमात्मैव अन्याभावान्न संशयः । आत्मनो मोहमात्मैव आत्मनोऽस्ति न किञ्चन ॥
आत्मनः सुखमात्मैव अन्यन्नास्ति न संशयः । आत्मन्येवात्मनः शक्तिः आत्मन्येवात्मनः प्रियम् ॥
आत्मन्येवात्मनः स्नानं आत्मन्येवात्मनो रतिः । आत्मज्ञानं परं श्रेयः आत्मज्ञानं सुदुर्लभम् ॥

आत्मज्ञानं परं ब्रह्म आत्मज्ञानं सुखात् सुखम् ।
आत्मज्ञानात् परं नास्ति आत्मज्ञानात् स्मृतिर्न हि ॥ ३५ ॥

ब्रह्मैवात्मा न सन्देह आत्मैव ब्रह्मणः स्वयम् । स्वयमेव हि सर्वत्र स्वयमेव हि चिन्मयः ॥

स्वयमेव चिदाकाशः स्वयमेव निरन्तरम् । स्वयमेव च नानात्मा स्वयमेव च नापरः ॥ ३७ ॥
स्वयमेव गुणातीतः स्वयमेव महत् सुखम् । स्वयमेव हि शान्तात्मा स्वयमेव हि निष्कलः ॥
स्वयमेव चिदानन्दः स्वयमेव महत्प्रभुः । स्वयमेव सदा साक्षी स्वयमेव सदाशिवः ॥ ३९ ॥
स्वयमेव हरिः साक्षात् स्वयमेव प्रजापतिः । स्वयमेव परं ब्रह्म ब्रह्म एव स्वयं सदा ॥ ४० ॥
सर्वं ब्रह्म स्वयं ब्रह्म स्वयं ब्रह्म न संशयः । दृढनिश्चयमेव त्वं सर्वथा कुरु सर्वदा ॥ ४१ ॥
विचारयन् स्वयं ब्रह्म ब्रह्ममात्रं स्वयं भवेत् । एतदेव परं ब्रह्म अहं ब्रह्मेति निश्चयः ॥ ४२ ॥
एष एव परो मोक्ष अहं ब्रह्मेति निश्चयः । एष एव कृतार्थो हि एष एव सुखं सदा ॥ ४३ ॥
एतदेव सदा ज्ञानं स्वयं ब्रह्म स्वयं महत् । अहं ब्रह्म एतदेव सदा ज्ञानं स्वयं महत् ॥ ४४ ॥
अहं ब्रह्म एतदेव स्वभावं सततं निजम् । अहं ब्रह्म एतदेव सदानित्यं स्वयं सदा ॥ ४५ ॥
अहं ब्रह्म एतदेव बन्धनाशं न संशयः । अहं ब्रह्म एतदेव सर्वसिद्धान्तनिश्चयम् ॥ ४६ ॥
एष वेदान्तसिद्धान्त अहं ब्रह्म न संशयः । सर्वोपनिषदामर्थः सर्वानन्दमयं जगत् ॥ ४७ ॥
महावाक्यस्य सिद्धान्त अहं ब्रह्मेति निश्चयः । साक्षाच्छिवस्य सिद्धान्त अहं ब्रह्मेति निश्चयः ॥
नारायणस्य सिद्धान्त अहं ब्रह्मेति निश्चयः । चतुर्मुखस्य सिद्धान्त अहं ब्रह्मेति निश्चयः ॥ ४९ ॥
ऋषीणां हृदयं ह्येतत् देवानामुपदेशकम् । सर्वदेशिकसिद्धान्त अहं ब्रह्मेति निश्चयः ॥ ५० ॥
यच्च यावच्च भूतानां महोपदेश एव तत् । अहं ब्रह्म महामोक्षं परं चैतदहं स्वयम् । ५१ ॥
अहं चानुभवं चैतन्महागोप्यमिदं च तत् । अहं ब्रह्म एतदेव सदाज्ञानं स्वयं महत् ॥ ५२ ॥
महाप्रकाशमेवैतत् अहं ब्रह्म एव तत् । एतदेव महामन्त्रं एतदेव महाजपः ॥ ५३ ॥
एतदेव महास्नानमहं ब्रह्मेति निश्चयः । एतदेव महातीर्थमहं ब्रह्मेति निश्चयः ॥ ५४ ॥
एतदेव महागङ्गा अहं ब्रह्मेति निश्चयः । एष एव परो धर्म अहं ब्रह्मेति निश्चयः ॥ ५५ ॥
एष एव महाकाश अहं ब्रह्मेति निश्चयः । एतदेव हि विज्ञानमहं ब्रह्मास्मि केवलम् ॥
सर्वसिद्धान्तमेवैतदहं ब्रह्मेति निश्चयः ॥ ५६ ॥

सव्यासव्यतयाघवज्रहृदया गोपोदहार्यः स्त्रियः
पश्यन्त्यम्बुजमित्रमण्डलगतं शंभुं हिरण्यात्मकम् ।
सर्वत्र प्रसृतैः करैर्जगदिदं पुष्णाति मुष्णन् घनैः
घृष्टं चौषधिजालमम्बुनिकरैर्विश्वोत्थधूतं हरः ॥ ५७ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे सर्वसिद्धान्तप्रकरणं नाम सप्तत्रिंशोऽध्यायः ॥

## ॥ अष्टत्रिंशोऽध्यायः ॥

ऋभुः —

वक्ष्ये अत्यद्भुतं व्यक्तं सच्चिदानन्दमात्रकम् । सर्वप्रपञ्चशून्यत्वं सर्वमात्मेति निश्चितम् ॥ १ ॥
आत्मरूपप्रपञ्चं वा आत्मरूपप्रपञ्चकम् । सर्वप्रपञ्चं नास्त्येव सर्वं ब्रह्मेति निश्चितम् ॥ २ ॥
निरुपानुभवआनन्दं नित्यं ब्रह्मेति भावनम् । चित्तरूपप्रपञ्चं वा चित्तसंसारमेव वा ॥ ३ ॥
इदमस्तीति सत्तान्वमहमस्तीति वा जगत् । स्वान्तःकरणदोषं वा स्वान्तःकरणकार्यकम् ॥ ४ ॥
स्वस्य जीवभ्रमः कश्चित् स्वस्य नाशं स्वजन्मना । ईश्वरः कश्चिदस्तीति जीवोऽहमिति वै जगत् ॥
मायासत्ता ब्रह्मसत्ता चित्तसत्ता जगन्मयम् । यद्यच्च दृश्यते शास्त्रैर्यद्यद्वेदे च भाषणम् ॥ ६ ॥
एकमित्येव निर्देशं द्वैतमित्येव भाषणम् । शिवोऽस्मीति भ्रमः कश्चित् ब्रह्मास्मीति विभ्रमः ॥
विष्णुरस्मीति विभ्रान्तिर्जगदस्ती (स्मी) ति विभ्रमः । ईषदस्तीति वा भेदं ईषदस्तीति वा द्वयम् ॥
सर्वमस्तीति नास्तीति सर्वं ब्रह्मेति निश्चयम् । आत्मध्यानप्रपञ्चं वा स्मरणादिप्रपञ्चकम् ॥ ९ ॥
दुःखरूपप्रपञ्चं वा सुखरूपप्रपञ्चकम् । द्वैताद्वैतप्रपञ्चं वा सत्यासत्यप्रपञ्चकम् ॥ १० ॥
जाग्रत्प्रपञ्चमेवापि तथा स्वप्नप्रपञ्चकम् । सुप्तिज्ञानप्रपञ्चं वा तुर्यज्ञानप्रपञ्चकम् ॥ ११ ॥
वेदज्ञानप्रपञ्चं वा शास्त्रज्ञानप्रपञ्चकम् । पापबुद्धिप्रपञ्चं वा पुण्यभेदप्रपञ्चकम् ॥ १२ ॥
ज्ञानरूपप्रपञ्चं वा निर्गुणज्ञानप्रपञ्चकम् । गुणागुणप्रपञ्चं वा दोषादोषविनिर्णयम् ॥ १३ ॥
सत्यासत्यविचारं वा चराचरविचारणम् । एक आत्मेति सद्भावं मुख्य आत्मेति भावनम् ॥
सर्वप्रपञ्चं नास्त्येव सर्वं ब्रह्मेति निश्चयम् । द्वैताद्वैतसमुद्भेदं नास्ति नास्तीति भाषणम् ॥ १५ ॥
असत्यं जगदेवेति सत्यं ब्रह्मेति निश्चयम् । कार्यरूपं कारणं च नानाभेदविजृम्भणम् ॥ १६ ॥
सर्वमन्त्रप्रदातारं दूरे दूरं तथा तथा । सर्वं सन्त्यज्य सततं स्वात्मन्येव स्थिरो भव ॥ १७ ॥
मौनभावं मौनकार्यं मौनयोगं मनःप्रियम् । पञ्चाक्षरोपदेष्टारं तथा चाष्टाक्षरप्रदम् ॥ १८ ॥
यद्यद्यद्वेदशास्त्रं यद्यद्वेदो गुरोऽपि वा । सर्वदा सर्वलोकेषु सर्वसङ्कल्पकल्पनम् ॥ १९ ॥
सर्ववाक्यप्रपञ्चं हि सर्वचित्तप्रपञ्चकम् । सर्वाकारविकल्पं च सर्वकारणकल्पनम् ॥ २० ॥
सर्वदोषप्रपञ्चं च सुखदुःखप्रपञ्चकम् । सहादेयमुपादेयं ग्राह्यं त्याज्यं च भाषणम् ॥ २१ ॥
विचार्य जन्ममरणं वासनाचित्तरूपकम् । कामक्रोधं लोभमोहं सर्वडम्भं च हुंकृतिम् ॥ २२ ॥
त्रैलोक्यसंभवं द्वैतं ब्रह्मेन्द्रवरुणादिकम् । ज्ञानेन्द्रियं च शब्दादि दिग्वाय्वर्कादिदैवतम् ॥ २३ ॥
कर्मेन्द्रियादिसद्भावं विषयं देवतागणम् । अन्तःकरणवृत्तिं च विषयं चाधिदैवतम् ॥ २४ ॥

चित्तवृत्ति विभेदं च बुद्धिवृत्तिनिरूपणम् । मायामात्रमिदं द्वैतं सदसत्तादिनिर्णयम् ॥ २५ ॥
किञ्चिद् द्वैतं बृहद्द्वैतं जीवद्वैतं सदा ह्यसत् । जगदुत्पत्तिभेदं च गुरुशिष्यत्वनिर्णयम् ॥ २६ ॥
गोपनं तत्पदार्थस्य त्वंपदार्थस्य मेलनम् । तथा चासिपदार्थस्य ऐक्यबुद्ध्यानुभावनम् ॥ २७ ॥
भेदेषु भेदाभेदं च नान्यद् किञ्चिच्च विद्यते । एतत् प्रपञ्चं नास्त्येव सर्वं ब्रह्मेति निश्चयः ॥
सर्वं चैतन्यमात्रत्वात् केवलं ब्रह्म एव सः । आत्माकारमिदं सर्वमात्मनोऽन्यन्न किञ्चन ॥
तुर्यातीतं ब्रह्मणोऽन्यत् सत्यासत्यं न विद्यते । सर्वं त्यक्त्वा तु सततं स्वात्मन्येव स्थिरो भव ॥
चित्तं कालं वस्तुभेदं सङ्कल्पं भावनं स्वयम् । सर्वं संत्यज्य सततं सर्वं ब्रह्मैव भावय ॥ ३१ ॥
यद्यद् भेदपरं शास्त्रं यद्यद् भेदपरं मनः । सर्वं संत्यज्य सततं स्वात्मन्येव स्थिरो भव ॥ ३२ ॥
मनः कल्पितकल्पं वा आत्मकल्पनविभ्रमम् । अहंकारपरिच्छेदं देहोऽहं देहभावना ॥ ३३ ॥
सर्वं सन्त्यज्य सततमात्मन्येव स्थिरो भव । प्रपञ्चस्य च सद्भावं प्रपञ्चोद्भवमन्यकम् ॥ ३४ ॥
बन्धसद्भावकलनं मोक्षसद्भावभाषणम् । देवताभावसद्भावं देवपूजाविनिर्णयम् ॥ ३५ ॥
पञ्चाक्षरेति यद्द्वैतमष्टाक्षरस्य दैवतम् । प्राणादिपञ्चकास्तित्वमुपप्राणादिपञ्चकम् ॥ ३६ ॥
पृथिवीभूतभेदं च गुणा यत् कुण्ठनादिकम् । वेदान्तशास्त्रसिद्धान्तं शैवागमनमेव च ॥ ३७ ॥
लौकिकं वास्तवं दोषं प्रवृत्तिं च निवृत्तिकम् । सर्वं सन्त्यज्य सततमात्मन्येव स्थिरो भव ॥ ३८ ॥
आत्मज्ञानसुखं ब्रह्म अनात्मज्ञानदूषणम् । रेचकं पूरकं कुम्भं षडाधारविशोधनम् ॥ ३९ ॥
द्वैतवृत्तिश्च देहोऽहं साक्षिवृत्तिश्चिदंशकम् । अखण्डाकारवृत्तिश्च अखण्डाकारसंमतम् ॥ ४० ॥
अनन्तानुभवं चापि अहं ब्रह्मेति निश्चयम् । उत्तमं मध्यमं चापि तथा चैवाधमाधमम् ॥ ४१ ॥
दूषणं भूषणं चैव सर्ववस्तुविनिन्दनम् । अहं ब्रह्म इदं ब्रह्म सर्वं ब्रह्मैव तत्त्वतः ॥ ४२ ॥
अहं ब्रह्मास्मि मुग्धोऽस्मि वृद्धोऽस्मि सदसत्परः । वैश्वानरो विराट् स्थूलप्रपञ्चमिति भावनम् ॥
आनन्दस्फारणेनाहं परापरविवर्जितः । नित्यानन्दमयं ब्रह्म सच्चिदानन्दविग्रहः ॥ ४४ ॥
दृग्रूपं दृश्यरूपं च महासत्तास्वरूपकम् । कैवल्यं सर्वनिधनं सर्वभूतान्तरं गतम् ॥ ४५ ॥
भूतमध्यं भविष्यच्च वर्तमानमसत् सदा । कालभावं देहभावं सत्यासत्यविनिर्णयम् ॥ ४६ ॥
प्रज्ञानघन एवाहं शान्ताशान्तं निरञ्जनम् । प्रपञ्चवार्तास्मरणं द्वैताद्वैतविभावनम् ॥ ४७ ॥
शिवागमसमाचारं वेदान्तश्रवणं पदम् । अहं ब्रह्मास्मि शुद्धोऽस्मि चिन्मात्रोऽस्मि सदाशिवः ॥
सर्वं ब्रह्मेति सन्त्यज्य स्वात्मन्येव स्थिरो भव । अहं ब्रह्म न सन्देह इदं ब्रह्म न संशयः ॥
स्थूलदेहं सूक्ष्मदेहं कारणं देहमेव च । एवं ज्ञातुं च सततं ब्रह्मैवेदं क्षणे क्षणे ॥ ५० ॥

शिवो ह्यात्मा शिवो जीवः शिवो ब्रह्म न संशयः । एतत् प्रकरणं यस्तु सकृद्वा सर्वदापि वा ॥
पठेद्वा शृणुयाद्वापि स च मुक्तो न संशयः । निमिषं निमिषार्धं वा श्रुत्वैतद्ब्रह्म भवेत् ॥

लोकालोकजगत्स्थितिप्रविलयप्रोद्भावमुख्यादिका
भीतिः शङ्करनामरूपमसकृद्व्याकृत्यते केवलम् ।
सत्यासत्यनिरङ्कुशश्रुतिवचोवीचीभिरामृश्यते
यस्त्वेतत् सदितीव तत्त्ववचनैर्मीमांस्यतेऽयं शिवः ॥ ५३ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे प्रपञ्चशून्यत्वप्रकरणं नाम अष्टत्रिंशोऽध्यायः ॥

## ॥ एकोनत्रिंशोऽध्यायः ॥

ऋभुः —

परं ब्रह्म प्रवक्ष्यामि निर्विकल्पं निरामयम् । तदेवाहं न सन्देहः सर्वं ब्रह्मैव केवलम् ॥ १ ॥
चिन्मात्रममलं शान्तं सच्चिदानन्दविग्रहम् । आनन्दं परमानन्दं निर्विकल्पं निरञ्जनम् ॥ २ ॥
गुणातीतं जनातीतमवस्थातीतमव्ययम् । एवं भावय चैतन्यमहं ब्रह्मास्मि सोऽस्म्यहम् ॥ ३ ॥
सर्वातीतस्वरूपोऽस्मि सर्वशब्दार्थवर्जितः । सत्योऽहं सर्वहन्ताहं शुद्धोऽहं परमोऽस्म्यहम् ॥ ४ ॥
अजोऽहं शान्तरूपोऽहं अशरीरोऽहमान्तरः । सर्वहीनोऽहमेवाहं स्वयमेव स्वयं महः ॥ ५ ॥
आत्मैवाहं परात्माहं ब्रह्मैवाहं शिवोऽस्म्यहम् । चित्तहीनस्वरूपोऽहं बुद्धिहीनोऽहमस्म्यहम् ॥
व्यापकोऽहमहं साक्षी ब्रह्माहमिति निश्चयः । निष्प्रपञ्चगजारूढो निष्प्रपञ्चाश्ववाहनः ॥ ७ ॥
निष्प्रपञ्चमहाराज्यो निष्प्रपञ्चायुधादिमान् । निष्प्रपञ्चमहावेदो निष्प्रपञ्चात्मभावनः ॥ ८ ॥
निष्प्रपञ्चमहानिद्रो निष्प्रपञ्चस्वभावकः । निष्प्रपञ्चस्तु जीवात्मा निष्प्रपञ्चकलेवरः ॥ ९ ॥
निष्प्रपञ्चपरीवारो निष्प्रपञ्चोत्सवो भवः । निष्प्रपञ्चस्तु कल्याणो निष्प्रपञ्चस्तु दर्पणः ॥ १० ॥
निष्प्रपञ्चरथारूढो निष्प्रपञ्चविचारणम् । निष्प्रपञ्चगुहान्तस्थो निष्प्रपञ्चप्रदीपकम् ॥ ११ ॥
निष्प्रपञ्चप्रपूर्णात्मा निष्प्रपञ्चोऽरिमर्दनः । चित्तमेव प्रपञ्चो हि चित्तमेव जगत्त्रयम् ॥ १२ ॥
चित्तमेव महामोहश्चित्तमेव हि संसृतिः । चित्तमेव महापापं चित्तमेव हि पुण्यकम् ॥ १३ ॥
चित्तमेव महाबन्धश्चित्तमेव विमोक्षदम् । ब्रह्मभावनया चित्तं नाशमेति न संशयः ॥ १४ ॥
ब्रह्मभावनया दुःखं नाशमेति न संशयः । ब्रह्मभावनया द्वैतं ,, ॥ १५ ॥

ब्रह्मभावनया कामः नाशमेति न संशयः । ब्रह्मभावनया क्रोधः नाशमेति न संशयः ॥१६॥
ब्रह्मभावनया लोभः नाशमेति न संशयः । ब्रह्मभावनया ग्रन्थिः ,, ॥ १७ ॥
ब्रह्मभावनया सर्वं ब्रह्मभावनया मदः । ब्रह्मभावनया पूजा ब्रह्मभावनया मदः ॥ १८ ॥
ब्रह्मभावनया ध्यानं ,, । ब्रह्मभावनया स्नानं ,, ॥ १९ ॥
ब्रह्मभावनया मन्त्रो ,, । ब्रह्मभावनया पापं ,, ॥ २० ॥
ब्रह्मभावनया पुण्यं ,, । ब्रह्मभावनया दोषो ,, ॥ २१ ॥
ब्रह्मभावनया भ्रान्तिः ,, । ब्रह्मभावनया दृश्यं ,, ॥ २२ ॥
ब्रह्मभावनया सङ्गो ,, । ब्रह्मभावनया तेजो ,, ॥ २३ ॥
ब्रह्मभावनया प्रज्ञा ,, । ब्रह्मभावनया सभा ,, ॥ २४ ॥
ब्रह्मभावनया भीतिः ,, । ब्रह्मभावनया वेदः ,, ॥ २५ ॥
ब्रह्मभावनया शास्त्रं ,, । ब्रह्मभावनया निद्रा ,, ॥ २६ ॥
ब्रह्मभावनया कर्म ,, । ब्रह्मभावनया तुर्यं ,, ॥ २७ ॥
ब्रह्मभावनया द्वन्द्वं ... ... ... । ब्रह्मभावनया पृच्छेदहं ब्रह्मेति निश्चयम् ॥ २८ ॥
निश्चयं चापि सन्त्यज्य स्वस्वरूपान्तरासनम् । अहं ब्रह्म परं ब्रह्म चिद्ब्रह्म ब्रह्ममात्रकम् ॥ २९ ॥
ज्ञानमेव परं ब्रह्म ज्ञानमेव परं पदम् । दिवि ब्रह्म दिशो ब्रह्म मनो ब्रह्म अहं स्वयम् ॥ ३० ॥
किञ्चिद्ब्रह्म ब्रह्म तत्त्वं तत्त्वं ब्रह्म तदेव हि । अजो ब्रह्म शुभं ब्रह्म आदिब्रह्म ब्रवीमि तम् ॥
अहं ब्रह्म हविर्ब्रह्म कार्यब्रह्म त्वहं सदा । नादो ब्रह्म नदं ब्रह्म तत्त्वं ब्रह्म च नित्यशः ॥ ३२ ॥
एतद्ब्रह्म शिखा ब्रह्म तद्ब्रह्म ब्रह्म शाश्वतम् । निजं ब्रह्म स्वतो ब्रह्म नित्यं ब्रह्म त्वमेव हि ॥
सुखं ब्रह्म प्रियं ब्रह्म मित्रं ब्रह्म सदामृतम् । गुह्यं ब्रह्म गुरुर्ब्रह्म ऋतं ब्रह्म प्रकाशकम् ॥ ३४ ॥
सत्यं ब्रह्म समं ब्रह्म सारं ब्रह्म निरञ्जनम् । एकं ब्रह्म हरिर्ब्रह्म शिवो ब्रह्म न संशयः ॥ ३५ ॥
इदं ब्रह्म स्वयं ब्रह्म लोकं ब्रह्म सदा परः । आत्मब्रह्म परं ब्रह्म आत्मब्रह्म निरन्तरः ॥ ३६ ॥
एकं ब्रह्म चिरं ब्रह्म सर्वं ब्रह्मात्मकं जगत् । ब्रह्मैव ब्रह्म सद्ब्रह्म तत्परं ब्रह्म एव हि ॥ ३७ ॥
चिद्ब्रह्म शाश्वतं ब्रह्म ज्ञेयं ब्रह्म न चापरः । अहमेव हि सद्ब्रह्म अहमेव हि निर्गुणम् ॥ ३८ ॥
अहमेव हि नित्यात्मा एवं भावय सुव्रत । अहमेव हि शास्त्रार्थ इति निश्चित्य सर्वदा ॥ ३९ ॥

आत्मैव नान्यद्भेदोऽस्ति सर्वं मिथ्येति निश्चिनु ।
आत्मैवाहमहं चात्मा अनात्मा नास्ति नास्ति [1] हि ॥ ४० ॥

---

१ आत्मैव स्फुरते लोके जगदेतच्चराचरम् । C

विश्वं वस्तुतया विभाति हृदये मूढात्मनां बोधनो-
ऽप्यज्ञानं न निवर्तते श्रुतिशिरोवार्तानुवृत्त्याऽपि च ।
विश्वेशस्य समर्चनेन सुमहालिङ्गार्चनाद्भस्मधृक्
रुद्राक्षामलधारणेन भगवद्ध्यानेन मात्यात्मवत् ॥ ४१ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे सर्वल्यप्रकरणं नाम एकोनचत्वारिंशोऽध्यायः ॥

---

## ॥ चत्वारिंशोऽध्यायः ॥

---

ऋभुः —

सर्वसाराद् सारतरं ततः सारतरान्तरम् । इदमन्तिमत्यन्तं शृणु प्रकरणं मुदा ॥ १ ॥
ब्रह्मैव सर्वमेवेदं ब्रह्मैवान्यन्न किञ्चन । निश्चयं दृढमाश्रित्य सर्वत्र सुखमास्व ह ॥ २ ॥
ब्रह्मैव सर्वभुवनं भुवनं नाम सन्त्यज । अहं ब्रह्मेति निश्चित्य अहंभावं परित्यज ॥ ३ ॥
सर्वमेव लयं याति स्वयमेव पतत्रिवत् । स्वयमेव लयं याति सुप्तहस्तस्थपद्मवत् ॥ ४ ॥
न त्वं नाहं न प्रपञ्चः सर्वं ब्रह्मैव केवलम् । न भूतं न च कार्यं च सर्वं ब्रह्मैव केवलम् ॥ ५ ॥
न द्वैतं न च कार्याणि न देहं नेन्द्रियाणि च । न जाग्रच्च च वा स्वप्नो न सुषुप्तिर्न तुर्यकम् ॥
इदं प्रपञ्चं नास्त्येव सर्वं ब्रह्मेति निश्चिनु । सर्वं मिथ्या सदा मिथ्या सर्वं ब्रह्मेति निश्चिनु ॥

सदा ब्रह्मविचारं च ,, । तथा द्वैतप्रतीतिश्च ,, ॥ ८ ॥
सदाहं भावरूपं च ,, । नित्यानित्यविवेकं च ,, ॥ ९ ॥
भावाभावप्रतीतिं च ,, । गुणदोषविभागं च ,, ॥ १० ॥
कालाकालविभागं च ,, । अहं जीवेत्यनुभवं ,, ॥ ११ ॥
अहं मुक्तोऽस्म्यनुभवं ,, । सर्वं ब्रह्मेति कलनं ,, ॥ १२ ॥
सर्वं नास्तीति वार्ता च ,, । देवतान्तरसत्ताकं ,, ॥ १३ ॥
देवतान्तरपूजा च ,, । देहोऽहमिति सङ्कल्पं ,, ॥ १४ ॥
ब्रह्माहमिति सङ्कल्पं ,, । गुरुशिष्यादि सङ्कल्पं ,, ॥ १५ ॥
तुल्यातुल्यादि सङ्कल्पं ,, । वेदशास्त्रादि सङ्कल्पं ,, ॥ १६ ॥
विषसत्त्वादि सङ्कल्पं ,, । बुद्धिनिश्चयसङ्कल्पं ,, ॥ १७ ॥

मनोविकल्पसङ्कल्पं सर्वं ब्रह्मेति निश्चिनु । अहंकारादि सङ्कल्पं सर्वं ब्रह्मेति निश्चिनु ॥ १८ ॥
पञ्चभूतादिसङ्कल्पं ,, । शब्दादिसत्तासङ्कल्पं ,, ॥ १९ ॥
दग्वार्तादिकसङ्कल्पं ,, । कर्मेन्द्रियादिसङ्कल्पं ,, ॥ २० ॥
वचनादानसङ्कल्पं ,, । मुनीन्द्रोपेन्द्रसङ्कल्पं ,, ॥ २१ ॥
मनोबुद्ध्यादिसङ्कल्पं ,, । संकल्पाध्यास इत्यादि ,, ॥ २२ ॥
रुद्रक्षेत्रादिसङ्कल्पं ,, । प्राणादिदशसङ्कल्पं ,, ॥ २३ ॥
माया विद्या देहजीवाः ,, । स्थूलव्यष्ट्यादिसङ्कल्पं ,, ॥ २४ ॥
सूक्ष्मव्यष्टिसमष्ट्यादि ,, । व्यष्टयज्ञानादिसङ्कल्पं ,, ॥ २५ ॥
विश्ववैश्वानरत्वं च ,, । तैजसप्राज्ञभेदं च ,, ॥ २६ ॥
वाच्यार्थं चापि लक्ष्यार्थं सर्वं ब्रह्मेति निश्चिनु । जहल्लक्षणयानैक्यं अजहल्लक्षणा ध्रुवम् ॥
भागत्यागेन नित्यैक्यं सर्वं ब्रह्म उपाधिकम् । लक्ष्यं च निरुपाध्यैक्यं सर्वं ब्रह्मेति निश्चिनु ॥
एवमाहुर्महात्मानः सर्वं ब्रह्मेति केवलम् । सर्वमन्तः परित्यज्य अहं ब्रह्मेति भावय ॥ २९ ॥

असङ्कलितकापिलैर्मधुहराक्षिपूज्याम्बुज-
प्रभाङ्घ्रिजनिमोचमो परिषिचेद्यदिन्दुप्रभम् ।
तं डिण्डीरनिभोत्तमोत्तम महाखण्डाज्यदध्ना परं
क्षीराद्यैरभिषिच्य मुक्तिपरमानन्दं लभे शाम्भवम् ॥ ३० ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे चित्तवृत्तिनिरोधप्रकरणं नाम चत्वारिंशोऽध्यायः ॥

## ॥ एकचत्वारिंशोऽध्यायः ॥

ऋभुः —

अहं ब्रह्म न सन्देहः अहं ब्रह्म नसंशयः । अहं ब्रह्मैव नित्यात्मा अहमेव परात्परः ॥ १ ॥
चिन्मात्रोऽहं न सन्देह इति निश्चित्य तं त्यज । सत्यं सत्यं पुनःसत्यमात्मनोऽन्यन्न किञ्चन ॥
शिवपादद्वयं स्पृष्ट्वा वदामीदं न किञ्चन । गुरुपादद्वयं स्पृष्ट्वा वदामीदं न किञ्चन ॥ ३ ॥
जिह्वया परशुं तप्तं धारयामि न संशयः । वेदशास्त्रादिकं स्पृष्ट्वा वदामीदं विनिश्चितम् ॥ ४ ॥
निश्चयात्मन् निश्चयस्त्वं निश्चयेन सुखीभव । चिन्मयस्त्वं चिन्मयत्वं चिन्मयानन्द एव हि ॥

ब्रह्मैव ब्रह्मभूतात्मा ब्रह्मैव त्वं न संशयः । सर्वमुक्तं भगवता योगिनामपि दुर्लभम् ॥ ६ ॥
देवानां च ऋषीणां च अत्यन्तं दुर्लभं सदा । ऐश्वरं परमं ज्ञानमुपदिष्टं शिवेन हि ॥ ७ ॥
एतद् ज्ञानं समानीतं कैलासाच्छङ्करान्तिकात् । देवानां दक्षिणामूर्तिर्दशसाहस्रवत्सरान् ॥ ८ ॥
विघ्नेशो बहुसाहस्रं वत्सरं चोपदिष्टवान् । साक्षाच्छिवोऽपि पार्वत्यै वत्सरं चोपदिष्टवान् ॥ ९ ॥
क्षीराब्धौ च महाविष्णुर्ब्रह्मणे चोपदिष्टवान् । कदाचिद्ब्रह्मलोके तु मत्पितुश्चोक्तवानहम् ॥ १० ॥
नारदादि ऋषीणां च उपदिष्टं महद्बहु । अथातयामं विस्तारं गृहीत्वाऽहमिहागतः ॥ ११ ॥
न समं पादमेकं च तीर्थकोटिफलं लभेत् । न समं ग्रन्थमेतस्य भूमिदानफलं लभेत् ॥ १२ ॥
एकानुभवमात्रस्य न समं सर्वदानकम् । श्लोकार्धश्रवणस्यापि न समं किञ्चिदेव हि ॥ १३ ।
तात्पर्यश्रवणाभावे पठंस्तूष्णीं स मुच्यते । सर्वं सन्त्यज्य सततमेतद्ग्रन्थं समभ्यसेत् ॥ १४ ॥
सर्वमन्त्रं च सन्त्यज्य एतद्ग्रन्थं समभ्यसेत् । सर्वदेवांश्च सन्त्यज्य ,, ॥ १५ ॥
सर्वस्नानं च सन्त्यज्य ,, । सर्वभावं च सन्त्यज्य ,, ॥ १६ ॥
सर्वहोमं च संत्यज्य ,, । सर्वदानं च सन्त्यज्य ,, ॥ १७ ॥
सर्वपूजां च संत्यज्य ,, । सर्वगुह्यं च सन्त्यज्य ,, ॥ १८ ॥
सर्वसेवां च सन्त्यज्य ,, । सर्वास्तित्वं च सन्त्यज्य ,, ॥ १९ ॥
सर्वपाठं च सन्त्यज्य ,, । सर्वाभ्यासं च सन्त्यज्य ,, ॥ २० ॥
दैशिकं च परित्यज्य ,, । गुरुं वापि परित्यज्य ,, ॥ २१ ॥
सर्वलोकं च सन्त्यज्य ,, । सर्वैश्वर्यं च सन्त्यज्य ,, ॥ २२ ॥
सर्वसंकल्पकं त्यज्य ,, । सर्वपुण्यं च सन्त्यज्य ,, ॥ २३ ॥
एतद्ग्रन्थं परं ब्रह्म ,, । अत्रैव सर्वविज्ञानं अत्रैव परमं पदम् ॥ २४ ।
अत्रैव परमो मोक्ष अत्रैव परमं सुखम् । अत्रैव चित्तविश्रान्तिरत्रैव ग्रन्थिभेदनम् ॥ २५ ॥
अत्रैव जीवन्मुक्तिश्च अत्रैव सकलो जपः । एतद्ग्रन्थं पठंस्तूष्णीं सद्यो मुक्तिमवाप्नुयात् ॥ २६ ॥
सर्वशास्त्रं च सन्त्यज्य एतन्मात्रं सदाभ्यसेत् । दिने दिने चैकवारं पठेच्चेन्मुक्त एव सः ॥ २७ ॥
जन्ममध्ये सकृद्वापि श्रुतं चेत् सोऽपि मुच्यते । सर्वशास्त्रस्य सिद्धान्तं सर्ववेदस्य संग्रहम् ॥
सारात् सारतरं सारं सारात् सारतरं महत् । एतद्ग्रन्थस्य न समं त्रैलोक्येऽपि भविष्यति ॥
न प्रसिद्धिं गते लोके न स्वर्गेऽपि च दुर्लभम् । (?) ब्रह्मलोकेषु सर्वेषु शास्त्रेष्वपि च दुर्लभम् ॥
एतद्ग्रन्थं कदाचित्तु चौर्यं कृत्वा पितामहः । क्षीराब्धौ च परित्यज्य सर्वे मुञ्चन्तु नो इति ॥

ज्ञात्वा क्षीरसमुद्रस्य तीरे प्राप्तं गृहीतवान् । गृहीतं चाप्यसौ दृष्ट्वा शपथं च प्रदत्तवान् ॥
तत आरभ्य तल्लोकं त्यक्त्वाहमिममागतः । अत्यद्भुतमिदं ज्ञानं ग्रन्थं चैव महाद्भुतम् ॥ ३३ ॥
तदुज्ञो वक्ता च नास्त्येव ग्रन्थश्रोता च दुर्लभः । आत्मनिष्ठिकलभ्योऽसौ सद्गुरुर्नैव लभ्यते ॥
ग्रन्थवन्तो न लभ्यन्ते तेन न ख्यातिरागता । भवते दर्शितं ह्येतद्गमिष्यामि यथागतम् ॥ ३५ ॥
एतावदुक्तमात्रेण निदाघ ऋषिसत्तमः । पतित्वा पादयोस्तस्य आनन्दाश्रुपरिप्लुतः ॥ ३६ ॥
उवाच वाक्यं सानन्दं साष्टाङ्गं प्रणिपत्य च ।

निदाघः —

अहो ब्रह्मन् कृतार्थोऽस्मि कृतार्थोऽस्मि न संशयः । भवतां दर्शनेनैव मज्जन्म सफलं कृतम् ॥
एकवाक्यस्य मनने मुक्तोऽहं नात्र संशयः । नमस्करोमि ते पादौ सोपचारं न वास्तवौ ॥ ३८ ॥
तस्यापि नावकाशोऽस्ति अहमेव न वास्तवम् । त्वमेव नास्ति मे नास्ति ब्रह्मेति वचनं न च ॥
ब्रह्मेति वचनं नास्ति ब्रह्मभावं न किंचन । एतद्ग्रन्थं न मे नास्ति सर्वं ब्रह्मेति विद्यते ॥
सर्वं ब्रह्मेति वाक्यं न सर्वं ब्रह्मेति तं न हि । तदिति द्वैतभिन्नं तु त्वमिति द्वैतमप्यलम् ॥ ४१ ॥
एवं किञ्चित् क्वचिन्नास्ति सर्वं शान्तं निरामयम् । एकमेव द्वयं नास्ति एकत्वमपि नास्ति हि ॥
भिन्नद्वन्द्वं जगद्दोषं संसारद्वैतवृत्तिकम् । साक्षिवृत्तिप्रपञ्चं वा अखण्डाकारवृत्तिकम् ॥ ४३ ॥
अखण्डैकरसो नास्ति गुरुर्वा शिष्य एव । भवद्दर्शनमात्रेण सर्वमेवं न संशयः ॥ ४४ ॥
ब्रह्मज्योतिरिदं प्राप्तो ज्योतिषां ज्योतिरस्म्यहो । नमस्ते सुगुरो ब्रह्मन् नमस्ते गुरुनन्दन ॥
एवं कृत्य नमस्कारं तूष्णीमास्ते सुखी स्वयम् ।

किं चण्डभानुकरमण्डलदण्डितानि
काष्ठामुखेषु गलितानि नमस्ततीति ।
यादृक्च तादृगथ शङ्करलिङ्गसङ्ग-
भङ्गीनि पापकलशैलकुलानि सद्यः ॥ ४६ ॥

श्रीमृत्युञ्जय रञ्जय त्रिभुवनाध्यक्ष प्रभो पाहि नः ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ग्रन्थप्रशस्तिनिरूपणं नाम एकचत्वारिंशोऽध्यायः ॥

## ॥ द्विचत्वारिंशोऽध्यायः ॥

ऋभुः —

श्रुतं किञ्चिन्मया प्रोक्तं ब्रह्मज्ञानं सुदुर्लभम् । मनसा धारितं ब्रह्म चित्तं कीदृक् स्थितं वद ॥

निदाघः —

शृणु त्वं सुगुरो ब्रह्मंस्त्वत्प्रसादाद्वदाम्यहम् । ममाज्ञानं महादोषं महाज्ञाननिरोधकम् ॥ २ ॥
सदा कर्मणि विश्वासं प्रपञ्चे सत्यभावनम् । नष्टं सर्वं क्षणादेव त्वत्प्रसादान्महद्भयम् ॥ ३ ॥
एतावन्तमिमं कालमज्ञानरिपुणा हृतम् । महद्भयं च नष्टं मे कर्मतत्त्वं च नाशितम् ॥ ४ ॥
अज्ञानं मनसा पूर्वमिदानीं ब्रह्मतां गतम् । पुराहं चित्तवद्भूतः इदानीं सन्मयोऽभवम् ॥ ५ ॥
पूर्वमज्ञानवद्भावं इदानीं सन्मयं गतम् । अज्ञानवत् स्थितोऽहं वै ब्रह्मैवाहं परं गतः ॥ ६ ॥
पुराऽहं चित्तवद्भ्रान्तो ब्रह्मैवाहं परं गतः । सर्वो विगलितो दोषः सर्वो भेदो लयं गतः ॥ ७ ॥
सर्वः प्रपञ्चो गलितश्चित्तमेव हि सर्वगम् । सर्वान्तःकरणं लीनं ब्रह्मसद्भावभावनात् ॥ ८ ॥
अहमेव चिदाकाश अहमेव हि चिन्मयः । अहमेव हि पूर्णात्मा अहमेव हि निर्मलः ॥ ९ ॥
अहमेवाहमेवेति भावनापि विनिर्गता । अहमेव चिदाकाशो ब्राह्मणत्वं न किञ्चन ॥ १० ॥
शूद्रोऽहं श्वपचोऽहं वै वर्णी चापि गृहस्थकः । वानप्रस्थो यतिरहमित्ययं चित्तविभ्रमः ॥ ११ ॥
तत्तदाश्रमकर्माणि चित्तेन परिकल्पितम् । अहमेव हि लक्ष्यात्मा अहमेव हि पूर्णकः ॥ १२ ॥
अहमेवान्तरात्मा हि अहमेव परायणम् । अहमेव सदाधार अहमेव सुखात्मकः ॥ १३ ॥
त्वत्प्रसादादहं ब्रह्मा त्वत्प्रसादाज्जनार्दनः । त्वत्प्रसादाच्चिदाकाशः शिवोऽहं नात्र संशयः ॥
त्वत्प्रसादादहं चिद्वै त्वत्प्रसादान्न मे जगत् । त्वत्प्रसादाद्विमुक्तोऽस्मि त्वत्प्रसादात् परं गतः ॥
त्वत्प्रसादाद्व्यापकोऽहं त्वत्प्रसादान्निरङ्कुशः । त्वत्प्रसादेन तीर्णोऽहं त्वत्प्रसादान्महत् सुखम् ॥
त्वत्प्रसादादहं ब्रह्म त्वत्प्रसादात् त्वमेव न । त्वत्प्रसादादिदं नास्ति त्वत्प्रसादान्न किञ्चन ॥
त्वत्प्रसादान्न मे किञ्चित् त्वत्प्रसादान्न मे विपत् । त्वत्प्रसादान्न मे भेदस्त्वत्प्रसादान्न मे भयम् ॥
त्वत्प्रसादान्न मे रोगस्त्वत्प्रसादान्न मे क्षतिः ।

> यत्पादाम्बुजपूजया हरिरभूदर्च्यो यदंघ्र्यर्चना-
> दर्च्याऽभूत कमला विधिप्रभृतयो ह्यर्च्या यदाज्ञावशात् ।
> तं कालान्तकमन्तकान्तकमुमाकान्तं मुहुः सन्ततं
> सन्तः स्वान्तसरोजराजचरणाम्भोजं भजन्त्यादरात् ॥ १९ ॥

किं वा धर्मशतायुतार्जितमहासौख्यैकसीमायुतं नाकं पातमहोग्रदुःखनिकरं देवेषु तुष्टिप्रदम् ।
तस्माच्छङ्कर लिङ्गपूजनमुमाकान्तप्रियं मुक्तिदं भूमानन्दघनैकमुक्तिपरमानन्दैकजोदं महः । २० ॥

ये शांभवाः शिवरताः शिवनामभाज-
रुद्राक्षरक्षहृदया भसितत्रिपुण्ड्राः ।
यां प्राप्नुवन्ति गतिमीशपदाम्बुजोद्यद्-
ध्यानानुरक्तहृदया न हि योगमाख्यैः ॥ २१ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे निदाघानुभववर्णनप्रकरणं नाम द्विचत्वारिंशोऽध्यायः ॥

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

निदाघः —

न पश्यामि शरीरं वा लिङ्गं करणमेव वा । न पश्यामि मनो वापि न पश्यामि जडं ततः ॥

न पश्यामि चिदाकाशं न पश्यामि जगत् क्वचित् ।
न पश्यामि हरिं वापि न पश्यामि शिवं च वा ॥ २ ॥
आनन्दस्यान्तरे लग्नं तन्मयत्वाच्च चोत्थितः ।
न पश्यामि सदा भेदं न जडं न जगत् क्वचित् ॥ ३ ॥

न द्वैतं न सुखं दुःखं न गुरुर्न परापरम् । न गुणं वा न तुर्यं वा न बुद्धिर्न च संशयः ॥ ४ ॥
न च कालं न च भयं न च शोकं शुभाशुभम् । न पश्यामि न सन्दीनं (?) न बन्धं न च संभवम् ॥
न देहेन्द्रियसद्भावो न च सद्वस्तु सन्मनः । न पश्यामि सदा स्थूलं न कृशं न च कुब्जकम् ॥
न भूमिर्न जलं नाग्निर्न मोहो न च मन्त्रकम् । न गुरुर्न च वाक्यं वा न दृढं न च सर्वकम् ॥
न श्रवणं मननं चैव निदिध्यासं न चापरः । आनन्दसागरे मग्नस्तन्मयत्वाच्च चोत्थितः ॥ ८ ॥
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् । नित्योऽहमिति निश्चित्य सदा पूर्णोऽस्मि नित्यधीः ॥
पूर्णोऽहं पूर्णचित्तोऽहं पुण्योऽहं ज्ञानवानहम् । शुद्धोऽहं सर्वमुक्तोऽहं सर्वाकारोऽहमव्ययः ॥
चिन्मात्रोऽहं स्वयं सोऽहं तत्त्वरूपोऽहमीश्वरः । परापरोऽहं तुर्योऽहं प्रसन्नोऽहं रसोऽस्म्यहम् ॥
ब्रह्माऽहं सर्वलक्ष्योऽहं सदा पूर्णोऽहमक्षरः । ममानुभवरूपं यत् सर्वमुक्तं च मद्गुरो ॥ १२ ॥
नमस्करोमि ते नाहं सर्वं च गुरुदक्षिणा । देहं त्वत्पदे दत्तं त्वया भस्मीकृतं क्षणात् ॥ १३ ॥

ममात्मा च मया दत्तः स्वयमात्मनि पूरितः । त्वमेवाहमहं च त्वमहमेव त्वमेव हि ॥ १४ ॥
ऐक्यार्णवनिमग्नोऽस्मि ऐक्यज्ञानं त्वमेव हि । एकं चैतन्यमेवाहं त्वया गन्तुं न शक्यते ॥ १५॥
गन्तव्यदेशो नास्त्येव एकाकारं न चान्यतः । त्वया गन्तव्यदेशो न मया गन्तव्यमस्ति न ॥
एकं कारणमेकं च एकमेव द्वयं नहि । त्वया वक्तव्यकं नास्ति मया श्रोतव्यमप्यलम् ॥ १७ ॥
त्वमेव सद्गुरुर्नासि [1]अहं नास्मि सच्छिष्यकः । ब्रह्ममात्रमिदं सर्वमस्मिन्मात्रोऽस्मि तन्मयः ॥
भेदाभेदं न पश्यामि कार्याकार्यं न किञ्चन । ममैव चेन्नमस्कारो निष्प्रयोजन एव हि ॥ १९ ॥
तवैव चेन्नमस्कारो भिन्नत्वान्न फलं भवेत् । तव चेन्मम चेद्भेदः फलाभावो न संशयः ॥ २० ॥
[2]नमस्कृतोहं युष्माकं भवानञ्जीति वक्ष्यति । ममैवापकरिष्यामि परिच्छिन्नो भवाम्यहम् ॥ २१ ॥
ममैव चेन्नमस्कारः फलं नास्ति स्वतः स्थिते । कस्यापि च नमस्कारः कदाचिदपि नास्ति हि ॥
सदा चैतन्यमात्रत्वात् नाहं न त्वं नहि द्वयम् । न बन्धं न परो नान्ये नाहं नेदं न किञ्चन ॥
न द्वयं नैकमद्वैतं निश्चितं न मनो न तत् । न बीजं न सुखं दुःखं नाशं निष्ठा न सत्सदा ॥
नास्ति नास्ति न सन्देहः केवलात् परमात्मनि । न जीवो नेश्वरो नैको न चन्द्रो नाग्निलक्षणः ॥
न वार्ता नेन्द्रियो नाहं न महत्त्वं गुणान्तरम् । न कालो न जगन्नान्यो नवा कारणमद्वयम् ॥
नोन्नतोऽत्यन्तहीनोऽहं न मुक्तस्त्वत्प्रसादतः । सर्वं नास्त्येव नास्त्येव सर्वं ब्रह्मैव केवलम् ॥
अहं ब्रह्म इदं ब्रह्म आत्म ब्रह्माहमेव हि । सर्वं ब्रह्म न सन्देहस्त्वत्प्रसादान्महेश्वर ॥ २८ ॥
त्वमेव सद्गुरुर्ब्रह्म न हि सद्गुरुरन्यतः । आत्मैव सद्गुरुर्ब्रह्म शिष्यो ह्यात्मैव सद्गुरुः ॥
गुरुः प्रकल्पते शिष्यो गुरुहीनो न शिष्यकः । शिष्ये सति गुरुः कल्प्यः शिष्याभावे गुरुर्न हि ॥
गुरुशिष्यविहीनात्मा सर्वत्र स्वयमेव हि । चिन्मात्रात्मनि कल्प्योऽहं चिन्मात्रात्मा न चापरः ॥
चिन्मात्रात्माहमेवैको नान्यत् किञ्चिन्न विद्यते । सर्वस्थितोऽहं सततं नान्यं पश्यामि सद्गुरोः ॥

नान्यत पश्यामि चित्तेन नान्यत् पश्यामि किञ्चन ।
सर्वाभावान्न पश्यामि सर्वं चेद् दृश्यतां पृथक् ॥ ३३ ॥

एवं ब्रह्म प्रपश्यामि नान्यदस्तीति सर्वदा । अहो भेदं प्रकुपितं अहो माया न विद्यते ॥ ३४ ॥
अहो सद्गुरुमाहात्म्यमहो ब्रह्मसुखं महत् । अहो विज्ञानमाहात्म्यमहो सज्जनवैभवः ॥ ३५ ॥
अहो मोहविनाशश्च अहो पश्यामि सन्मुखम् । अहो चित्तं न पश्यामि अहो सर्वं न किञ्चन ॥
अहमेव हि नान्यत्र अहमानन्द एव हि । ममान्तःकरणे यद्यन्निश्चितं भवदीरितम् ॥ ३७ ॥

१ न च सच्छिष्यकोऽस्म्यहं इति विवक्षितं । २ स्यादकृतनमस्कार इत्यर्थे स्यात् ।

सर्वं ब्रह्म परं ब्रह्म न किञ्चिदन्यदेवतम् । एवं पश्यामि सततं नान्यत् पश्यामि सद्गुरो ॥ ३८॥
एवं निश्चित्य तिष्ठामि स्वस्वरूपे ममात्मनि ॥ ३९ ॥
अगाध(बोध)वेदवाक्यतो न चाधिभेषजं भवेदुमाधवाङ्घ्रिपङ्कजस्मृतिः प्रबोधमोक्षदा ।
प्रबुद्धभेदवासनानिरुद्धहृत्तमोभिदे महारुजाघवैद्यमीश्वरं हृदम्बुजे भजे ॥ ४० ॥

[1]घतत्प्रदग्धकामदेह दुग्धसन्निभं प्रमुग्धसामि ।
सोमधारिणं श्रुतीड्यगद्यमंस्तुतं त्वभेद्यमेकशङ्करम् ॥ ४१ ॥

वरः कङ्कः काको भवदुमयजातेषु नियतं महाशङ्कातङ्कैर्विधिविहितशान्तेन मनसा ।
यदि स्वैरं ध्यायन्नगपतिसुतानायकपदं स एवायं धुर्यो भवति मुनिजातेषु नियतम् ॥ ४२ ॥

कः कालान्तकपादपद्मभजनादन्यद्बुधः कष्टदां
धर्माभासपरंपरां प्रथयते मूर्खो खरीं तौरगीम् ।
कर्तुं यत्नशतैरशक्यकर्णैर्विन्देत दुःखाधिकं
तद्वत् सांबपदांबुजार्चनरतिं त्यक्त्वा वृथा दुःखभाक् ॥ ४३ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्टांशे निदाघानुभववर्णनप्रकरणं नाम त्रिचत्वारिंशोऽध्यायः ॥

---

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

निदाघः —

शृणुष्व सद्गुरो ब्रह्मन् त्वत्प्रसादाद्विनिश्चितम् । अहमेव हि तद्ब्रह्म अहमेव हि केवलम् ॥ १ ॥
अहमेव हि नित्यात्मा अहमेव सदाऽजरः । अहमेव हि शान्तात्मा अहमेव हि निष्कलः ॥ २ ॥
अहमेव हि निश्चिन्तः अहमेव सुखात्मकः । अहमेव गुरुस्त्वं हि अहं शिष्योऽस्मि केवलम् ॥
अहमानन्द एवात्मा अहमेव निरञ्जनः । अहं तुर्यातिगो ह्यात्मा अहमेव गुणोज्झितः ॥ ४ ॥
अहं विदेह एवात्मा अहमेव हि शङ्करः । अहं वै परिपूर्णात्मा अहमेवेश्वरः परः ॥ ५ ॥
अहमेव हि लक्ष्यात्मा अहमेव मनोमयः । अहमेव हि सर्वात्मा अहमेव सदाशिवः ॥ ६ ॥
अहं विष्णुरहं ब्रह्मा अहमिन्द्रस्त्वहं सुराः । अहं वै यक्षरक्षांसि पिशाचा गुह्यकास्तथा ॥ ७ ॥
अहं समुद्राः सरित अहमेव हि पर्वताः । अहं वनानि भुवनं अहमेवेदमेव हि ॥ ८ ॥

---

१ अयं श्लोकः मातृकासु त्रुटित एवोपलभ्यते ।

नित्यतृप्तो ह्यहं शुद्धबुद्धोऽहं प्रकृतेः परः। अहमेव हि सर्वत्र अहमेव हि सर्वगः ॥ ९ ॥
अहमेव महानात्मा सर्वमङ्गलविग्रहः। अहमेव हि मुक्तोऽस्मि शुद्धोऽस्मि परमः शिवः ॥
अहं भूमिरहं वायुरहं तेजो ह्यहं नभः। अहं जलमहं सूर्यश्चन्द्रमा भगणा ह्यहम् ॥ ११ ॥
अहं लोका अलोकाश्च अहं लोकश्च अहं सदा। अहमात्मा पारदृश्य अहं प्रज्ञानविग्रहः ॥ १२ ॥
अहं शून्यो अशून्योऽहं सर्वानन्दमयोऽस्म्यहम्। शुभाशुभफलातीतो ह्यहमेव हि केवलम् ॥
अहमेव ऋतं सत्यमहं सच्चित्सुखात्मकः। अहमानन्द एवात्मा बहुधा चैकधा स्थितः ॥ १४ ॥
अहं भूतभविष्यं च वर्तमानमहं सदा। अहमेको द्विधाहं च बहुधा चाहमेव हि ॥ १५ ॥
अहमेव परं ब्रह्म अहमेव प्रजापतिः। स्वराट् सम्राड् जगद्योनिरहमेव हि सर्वदा ॥ १६ ॥
अहं विश्वस्तैजसश्च प्राज्ञोऽहं तुर्य एव हि। अहं प्राणो मनश्चाहं अहमिन्द्रियवर्गकः ॥ १७ ॥
अहं विश्वं हि भुवनं गगनात्माहमेव हि। अनुपाधि उपाध्यं(?)यच्चत्सर्वमहमेव हि ॥ १८ ॥
उपाधिरहितश्चाहं नित्यानन्दोऽहमेव हि। एवं निश्चयवानन्तः सर्वदा सुखमश्नुते ॥
एवं यः शृणुयान्नित्यं सर्वपापैः प्रमुच्यते ॥ १९ ॥

नित्योऽहं निर्विकल्पो जननभुवने पावनोऽहं मनीषी
विश्वो विश्वातिगोऽहं प्रकृतिविनिकृतो(?) एकधा संस्थितोऽहम्।
नानाकारविनाशजन्मरहितस्वज्ञानकार्योज्झितैः
भूमानन्दघनोऽस्म्यहं परशिवः सत्यस्वरूपोऽस्म्यहम् ॥ २० ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे निदाघानुभववर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

निदाघः—

पुण्ये शिवरहस्येऽस्मिन्नितिहासे शिवोदिते। देव्यै शिवेन कथिते देव्या स्कन्दाय मोदतः ॥
तदेतस्मिन् हि षष्ठांशे षडास्यकमलोदिते। पारमेश्वरविज्ञानं श्रुतमेतन्महाधर्मवित् ॥ २ ॥
महामायातमस्तोमविनिवारणभास्करम्। अस्याध्यायैककथनाद् (?) विज्ञानं महदश्नुते ॥ ३ ॥
श्लोकस्य श्रवणेनापि जीवन्मुक्तो न संशयः। एतद्ग्रन्थप्रवक्ता हि षण्मुखः शिव एव हि ॥
जैगीषव्यो महायोगी स एव श्रवणेऽर्हति। भस्मरुद्राक्षधृङ् नित्यं सदा सत्याश्रमी मुनिः ॥
एतद्ग्रन्थप्रवक्ता हि स गुरुर्नात्र संशयः। एतद्ग्रन्थप्रवक्ता हि परं ब्रह्म न संशयः ॥ ६ ॥
,, शिव एव न चापरः। ,, साक्षाद्देवी न संशयः ॥ ७ ॥

एतद्ग्रन्थप्रवक्ता हि गणेशो नात्र संशयः । एतद्ग्रन्थप्रवक्ता हि स्कन्दः स्कन्दिततारकः ॥
,, नन्दिकेशो न संशयः । ,, दत्तात्रेयो मुनिः स्वयम् ॥ ९ ॥
,, दक्षिणामूर्तिरेव हि । एतद्ग्रन्थार्थकथने भावने मुनयः सुराः ॥ १० ॥
न शक्ता मुनिशार्दूल त्वद्धतेऽहं शिवं शपे । एतद्ग्रन्थार्थवक्तारं गुरुं सर्वात्मना यजेत् ॥ ११ ॥
एतद्ग्रन्थप्रवक्ता तु शिवो विघ्नेश्वरः स्वयम् । पिता हि जन्मदो दाता गुरुर्जन्मविनाशकः ॥
एतद्ग्रन्थं समभ्यस्य गुरोर्वाक्यादिशेषतः । न द्रुह्येत गुरुं शिष्यो मनसा किञ्च कायतः ॥ १३ ॥
गुरुरेव शिवः साक्षात् गुरुरेव शिवः स्वयम् । शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ १४ ॥
एतद्ग्रन्थपदाभ्यासे श्रद्धा वै कारणं परम् । अश्रद्दधानः पुरुषो नैतल्लेशमिहार्हति ॥ १५ ॥
श्रद्धैव परमं श्रेयो जीवब्रह्मैक्यकारणम् । अस्ति ब्रह्मेति च श्रुत्वा भावयन् सन्त ( ? ) एव हि ॥
शिवप्रसादहीनो यो नैतद्ग्रन्थार्थनिष्ठः भवेत् । भावग्राह्योऽयमात्मायं पर एकः शिवो ध्रुवः ॥
सर्वमन्यत् परित्यज्य ध्यायेतैतानमव्ययम् । शिवज्ञानमिदं शुद्धं द्वैताद्वैतविनाशनम् ॥ १८ ॥
अन्येषु च पुराणेषु इतिहासेषु न क्वचित् । एतादृशं शिवज्ञानं श्रुतिसारमहोदयम् ॥ १९ ॥
उक्तं साक्षाच्छिवेनैतद् योगसांख्यविवर्जितम् । भावनामात्रसुलभं मार्कगम्यमनामयम् ॥ २० ॥
महानन्दप्रदं साक्षात् प्रसादेनैव लभ्यते । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २१ ॥
एतद्ग्रन्थं गुरोः श्रुत्वा न पूजां कुरुते यदि । श्वानयोनिशतं प्राप्य चण्डालः कोटिजन्मसु ॥
एतद्ग्रन्थस्य माहात्म्यं न यजन्तीश्वरं हृदि । स सूकरो भवत्येव सहस्रपरिवत्सरान् ॥ २३ ॥
एतद्ग्रन्थार्थवक्तारमभ्यसूयेत यो द्विजः । अनकल्पसहस्रं च विष्ठायां जायते क्रिमिः ॥ २४ ॥
एतद्ग्रन्थार्थनिष्ठश्च स ब्रह्म भवति स्वयम् । किं पुनर्बहुनोक्तेन ज्ञानमेतद्विमुक्तिदम् ॥ २५ ॥

यस्त्वेतच्छृणुयाच्छिरोदिमहावेदान्तवाम्बुधिं(?)
वीचिजातपुण्यं नापेक्षत्यनिशं न चान्द्रकलैः ।
षड्दानां निखिलो रसो हि स शिवः किं वा तुषाद्रि
परिखं(ङनतो) भवेत् स्वात् तण्डुलोऽपि स भूप[1] भवमोहजालम् ॥ २६ ॥
तद्वत् सर्वमशास्त्रमित्येव हि सत्यं द्वैतार्थं परिहाय वाक्यजालम् ।
एवं सं स्वनिशं भजस्व नित्यं [2]श्रान्तोधखिलवाक् समूहभावना ( ? ) ॥ २७ ॥
सत्यस्वाभावभावितोऽनुरूपशीलः संपश्यन् जगदिदमात्मसज्ज्ञं सदा हि ॥ २८ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे निदाघकृतगुरुस्तुतिवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥

---

T १ अयं श्लोकः त्रुटितत्वात् मातृकासूपलभ्यते । २ ... भासः C

## ॥ षट्चत्वारिंशोऽध्यायः ॥

निदाघः —

एतद्ग्रन्थं सदा श्रुत्वा चित्तजाड्यमकुर्वतः । यावद्देहं सदाविचैः शुश्रूषेत् पूजयेद्गुरुम् ॥ १ ॥
तत्पूजयैव सततं अहं ब्रह्मेति निश्चिनु । नित्यं पूर्णोऽस्मि नित्योऽस्मि सर्वदा शान्तविग्रहः ॥ २ ॥
एतदेवात्मविज्ञानं अहं ब्रह्मेति निर्णयः । निरङ्कुशस्वरूपोऽस्मि अतिवर्णाश्रमी भव ॥ ३ ॥
अग्निरित्यादिभिर्मन्त्रैः सर्वदा भस्मधारणम् । त्रियायुषैस्त्र्यंबकैश्च कुर्वन्ति च त्रिपुण्ड्रकम् ॥ ४ ॥
त्रिपुण्ड्रधारिणामेव सर्वदा भस्मधारणम् । शिवप्रसादसंपत्तिर्भविष्यति न संशयः ॥ ५ ॥
शिवप्रसादादेतद्धि ज्ञानं संप्राप्यते ध्रुवम् । शिरोव्रतमिदं प्रोक्तं केवलं भस्मधारणम् ॥ ६ ॥
भस्मधारणमात्रेण ज्ञानमेतद्भविष्यति । अहं वत्सरपर्यन्तं कृत्वा वै भस्मधारणम् ॥ ७ ॥
त्वत्पादाब्जं प्रपन्नोऽस्मि त्वत्तो लब्धात्मनिर्वृतिः । सर्वाधारस्वरूपोऽहं सच्चिदानन्दमात्रकम् ॥
ब्रह्मात्माहं सुलक्षण्यो ब्रह्मलक्षणपूर्वकम् ; आनन्दानुभवं प्राप्तः सच्चिदानन्दविग्रहः ॥ ९ ॥
गुणरूपादिमुक्तोऽस्मि जीवन्मुक्तो न संशयः । मैत्र्यादिगुणसंपन्नो ब्रह्मैवाहं परो महान् ॥ १० ॥
समाधिमानहं नित्यं जीवन्मुक्तेषु सत्तमः । अहं ब्रह्मास्मि नित्योऽस्मि समाधिरिति कथ्यते ॥
प्रारब्धप्रतिबन्धश्च जीवन्मुक्तेषु विद्यते । प्रारब्धवशतो यद्यत् प्राप्यं भुङ्क्ते सुखं वस ॥ १२ ॥
दूषणं भूषणं चैव सदा सर्वत्र संभवेत् । स्वस्वनिश्चयतो बुद्ध्या मुक्तोऽहमिति मन्यते ॥ १३ ॥
अहमेव परं ब्रह्म अहमेव परा गतिः । एवं निश्चयवान् नित्यं जीवन्मुक्तेति कथ्यते ॥ १४ ॥
एतद्भेदं च सन्त्यज्य स्वरूपे तिष्ठति प्रभुः । इन्द्रियार्थविहीनोऽहमिन्द्रियार्थविवर्जितः ॥ १५ ॥
सर्वेन्द्रियगुणातीतः सर्वेन्द्रियविवर्जितः । सर्वस्य प्रभुरेवाहं सर्वं मय्येव तिष्ठति ॥ १६ ॥
अहं चिन्मात्र एवास्मि सच्चिदानन्दविग्रहः । सर्वं भेदं सदा त्यक्त्वा ब्रह्मभेदमपि त्यजेत् ॥
अजस्रं भावयन् नित्यं विदेहो मुक्त एव सः । अहं ब्रह्म परं ब्रह्म अहं ब्रह्म जगत्प्रभुः ॥ १८ ॥
अहमेव गुणातीतः अहमेव मनोमयः । अहं मय्यो (?) मनोमेयः प्राणमेयः सदामयः ॥
सर्वमयो ब्रह्ममयोऽमृतमयः [1] सभूतोमृतमेवहि ।
अहं सदानन्दघनोऽव्ययः सदा । स वेदमय्यो(?) प्रणवोऽहमीशः ॥ २० ॥

अपाणिपादो जवनो गृहीता
अपश्यः पश्याम्यात्मवत् सर्वमेव ।

---

१ संभूतोऽमृत एव हि C

यत्तद्भूतं यच्च भव्योऽहमात्मा
सर्वातीतो वर्तमानोऽहमेव ॥ २१ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ज्ञानोपायभूतशिवव्रतनिरूपणं नाम षट्चत्वारिंशोऽध्यायः ॥

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

ऋभुः —

निदाघ शृणु वक्ष्यामि दृढीकरणमस्तु ते । शिवप्रसादपर्यन्तमेवं भावय नित्यशः ॥ १ ॥
अहमेव परं ब्रह्म अहमेव सदाशिवः । अहमेव हि चिन्मात्रमहमेव हि निर्गुणः ॥ २ ॥
अहमेव हि चैतन्यमहमेव हि निष्कलः । अहमेव हि शून्यात्मा अहमेव हि शाश्वतः ॥ ३ ॥
अहमेव हि सर्वात्मा अहमेव हि चिन्मयः । अहमेव परं ब्रह्म अहमेव महेश्वरः ॥ ४ ॥
अहमेव जगत्साक्षी अहमेव हि सद्गुरुः । अहमेव हि मुक्तात्मा अहमेव हि निर्मलः ॥ ५ ॥
अहमेवाहमेवोक्तः अहमेव हि शङ्करः । अहमेव महाविष्णुरहमेव चतुर्मुखः ॥ ६ ॥
अहमेव हि शुद्धात्मा ह्यहमेव ह्यहं सदा । अहमेव हि नित्यात्मा अहमेव हि मत्परः ॥ ७ ॥
अहमेव मनोरूपं अहमेव हि शीतलः । अहमेवान्तर्यामी च अहमेव परेश्वरः ॥ ८ ॥
एवमुक्तप्रकारेण भावयित्वा सदा स्वयम् । द्रव्योऽस्ति चेन्न कुर्यात्तु वंचकेन गुरुं परम् ॥ ९ ॥
कुम्भीपाके सुघोरे तु तिष्ठत्येव हि कल्पकान् । श्रुत्वा निदाघश्चोत्थाय पुत्रदारान् प्रदत्तवान् ॥
स्वशरीरं च पुत्रत्वे दत्वा सादरपूर्वकम् । धनधान्यं च वस्त्रादीन् दत्वाऽतिष्ठत् समीपतः ॥ ११ ॥
गुरोस्तु दक्षिणां दत्वा निदाघस्तुष्टवानृभुम् । सन्तुष्टोऽस्मि महाभाग तव शुश्रूषया सदा ॥ १२ ॥
ब्रह्मविज्ञानमाप्तोऽसि सुकृतार्थो न संशयः । ब्रह्मरूपमिदं चेति निश्चयं कुरु सर्वदा ॥ १३ ॥
निश्चयादपरो मोक्षो नास्ति नास्तीति निश्चिनु । निश्चयं कारणं मोक्षो नान्यत् कारणमस्ति वै ॥

सकलभुवनसारं सर्ववेदान्तसारं समरसगुरुसारं सर्ववेदार्थसारम् ।
सकलभुवनसारं सच्चिदानन्दसारं समरसजयसारं सर्वदा मोक्षसारम् ॥ १५ ॥

सकलजननमोक्षं सर्वदा तुर्यमोक्षं सकलसुलभमोक्षं सर्वसाम्राज्यमोक्षम् ।
विषयरहितमोक्षं चित्तसंशोषमोक्षं श्रवणमननमात्रादेतदत्यन्तमोक्षम् ॥ १६ ॥

तच्छुश्रूषा च भवतः तच्छ्रुत्वा च प्रपेदिरे ।

एवं सर्वंवचः श्रुत्वा निदाघऋषिदर्शितम् । शुकादयो महान्तस्ते परं ब्रह्मवाप्नुवन् ॥ १७ ॥

श्रुत्वा शिवज्ञानमिदं ऋभुस्तदा निदाघमाहेत्थं (?) मुनीन्द्रमध्ये ।
मुदा हि तेऽपि श्रुतिशब्दसारं श्रुत्वा प्रणम्याहुरतीव हर्षात् ॥ १८ ॥

मुनयः —

पिता माता भ्राता गुरुरसि वयस्योऽथ हितकृत्
अविद्याब्धेः पारं गमयसि भवानेव शरणम् ।
यलेनास्मान् [1]नीत्वा मम वचनबलेनैव सुगमं
पथं प्राप्त्यैवार्थैः शिववचनतोऽस्मान् सुखयसि ॥ १९ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे ऋभुकृतसंग्रहोपदेशवर्णनं नाम सप्तचत्वारिंशोऽध्यायः ॥

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

स्कन्दः —

ज्ञानाङ्गसाधनं वक्ष्ये शृणु वक्ष्यामि ते हितम् । यत् कृत्वा ज्ञानमाप्नोति [2]तत् प्रादात् परमेष्ठिनः ॥
जैगीषव्य शृणुष्वैतत् सावधानेन चेतसा । प्रथमं वेदसंप्रोक्तं कर्माचरणमिष्यते ॥ २ ॥
उपनीतो द्विजो वापि वैश्यः क्षत्रिय एव वा । अग्निरित्यादिभिर्मन्त्रैर्भस्मधृक् पूयते त्वघैः ॥
त्रियायुषैस्त्र्यंबकैश्च त्रिपुण्ड्रं भस्मनाऽऽचरेत् । लिङ्गार्चनपरो नित्यं रुद्राक्षान् धारयन् क्रमैः ॥
कण्ठे बाह्वोर्वक्षसी च मालाभिः शिरसा तथा । त्रिपुण्ड्रवद्धारयेत रुद्राक्षान् क्रमशो मुने ॥
एकाननं द्विवक्त्रं वा त्रिवक्त्रं चतुरास्यकम् । पञ्चवक्त्रं च षट् सप्त तथाष्टदशकं नव ॥ ६ ॥
एकादशं द्वादशं वा तथोर्ध्वं धारयेत क्रमात् । भस्मधारणमात्रेण प्रसीदति महेश्वरः ॥ ७ ॥
रुद्राक्षधारणादेव नरो रुद्रत्वमाप्नुयात् । भस्मरुद्राक्षधृङ्मर्त्यो ज्ञानाङ्गी भवति प्रियः ॥ ८ ॥
रुद्राध्यायी भस्मनिष्ठः पञ्चाक्षरजपादरः । भस्मोद्धूलितदेहोऽयं श्रीरुद्रं प्रजपन् द्विजः ॥ ९ ॥
सर्वपापैर्विमुक्तश्च ज्ञाननिष्ठो भवेन्मुने । भस्मसंछन्नसर्वाङ्गो भस्मफालत्रिपुण्ड्रकः ॥ १० ॥
वेदमौलिजवाक्येषु विचाराधिकृतो भवेत् । नान्यपुण्ड्रधरो विप्रो यतिर्वा विप्रसत्तम ॥ ११ ॥
शमादिनियमोपेतः क्षमायुक्तोऽप्यसंस्कृतः । शिरोव्रतमिदं प्रोक्तं भस्मधारणमेव हि ॥ १२ ॥

---

१ त्वं वै शिव C          २ प्रसादात् C

शिरोव्रतं च विधिवद्यैश्चीर्णं मुनिसत्तम । तेषामेव ब्रह्मविद्यां वदेत गुरुरास्तिकः ॥ १३ ॥
शांभवा एव वेदेषु निष्ठा नह्याशुभाः परम् । शिवप्रमाणसंशक्तो भस्मरुद्राक्षधारकः ॥ १४ ॥
रुद्राध्यायजपासक्तः पञ्चाक्षरपरायणः । स एव वेदवेदान्तश्रवणेऽधिकृतो भवेत ॥ १५ ॥
नान्यपुण्ड्रधरो विप्रः कृत्वापि श्रवणं बहु । नैव लभ्येत तद्ज्ञानं प्रसादेन विनेशितुः ॥ १६ ॥
प्रसादजनकं शम्भोर्भस्मधारणमेव हि । शिवप्रसादहीनानां ज्ञानं नैवोपजायते ॥ १७ ॥
प्रसादे सति देवस्य विज्ञानस्फुरणं भवेत । रुद्राध्यायजापिनां तु भस्मधारणपूर्वकम् ॥ १८ ॥
प्रसादो जायते शम्भोः पुनरावृत्तिवर्जितः । प्रसादे सति देवस्य वेदान्तस्फुरणं भवेत ॥ १९ ॥
तस्यैवाकथिता ह्यर्थाः प्रकाशन्ते महात्मनः । पञ्चाक्षरजपादेव पञ्चास्यध्यानपूर्वकम् ॥ २० ॥
तस्यैव भवति ज्ञानं शिवप्रोक्तमिदं ध्रुवम् । सर्वं शिवात्मकं भाति जगदेतत् चराचरम् ॥ २१ ॥
स प्रसादो महेशस्य विज्ञेयः शांभवोत्तमैः । शिवलिङ्गार्चनादेव प्रसादः शांभवोत्तमे ॥ २२ ॥
नियमाद्बिल्वपत्रैश्च भस्मधारणपूर्वकम् । प्रसादो जायते शम्भोः साक्षाद्ज्ञानप्रकाशकः ॥ २३ ॥
शिवक्षेत्रनिवासेन ज्ञानं सम्यक् दृढं भवेत । शिवक्षेत्रनिवासे तु भस्मधार्यधिकारवान् ॥ २४ ॥
नक्ताशनार्चनादेव प्रीयेत भगवान् भवः । प्रदोषपूजनं शम्भोः प्रसादजनकं परम् ॥ २५ ॥
सोमवारे निशीथेषु पूजनं प्रियमीशितुः । भूतायां भूतनाथस्य पूजनं परमं प्रियम् ॥ २६ ॥
शिवशब्दोच्चारणं च प्रसादजनकं महत । ज्ञानाङ्गसाधनेष्वेवं शिवभक्तार्चनं महत् ॥ २७ ॥
भक्तानामर्चनादेव शिवः प्रीतो भविष्यति । इत्येतत्त समासेन ज्ञानाङ्गं कथितं मया ॥ २८ ॥
अकैतवेन भावेन श्रवणीयो महेश्वरः ।

सूतः —

यः कोऽपि प्रसभं प्रदोषसमये बिल्वीदलालङ्कृतं
लिङ्गं तुङ्गमपारपुण्यविभवैः पश्येदथार्चेत वा ।
प्राप्तं राज्यमवाप्य कामहृदयस्तुष्येदकामो यदि
मुक्तिद्वारमपावृतं स तु लभेत शम्भोः कटाक्षाङ्कुरैः ॥ २९ ॥

अचलातुलराजकन्यकाकुचलीलामलबाहुजालमीशम् ।
भजतामनलाक्षिपादपद्मं भवलीलं न भवेत चित्तबालम् ॥ ३० ॥

भस्मत्रिपुण्ड्ररचिताङ्गकबाहुफालरुद्राक्षजालकवचाः श्रुतिसूक्तिमालाः ।
वेदोक्तरत्नपदकाङ्कितशम्भुनामलोला हि शांभववराः परिशीलयन्ति ॥ ३१ ॥

इति श्रीशिवरहस्ये शाङ्कराख्ये षष्ठांशे स्कन्दकृतशिवव्रतोपदेशवर्णनं नाम अष्टचत्वारिंशोऽध्यायः ॥

---

## ॥ नवचत्वारिंशोऽध्यायः ॥

स्कन्दः —

पुरा मगधदेशीयो ब्राह्मणो वेदपारगः। उचथ्यतनयो वाग्मी वेदार्थप्रवणे धृतः ॥ १ ॥

नाम्ना सुदर्शनो विप्रान् पाठयन् शास्त्रमुत्तमम्। वेदान्तपरया भक्त्या वर्णाश्रमरतः सदा ॥ २ ॥

मोक्षमिच्छेदपि सदा विप्रोऽपि च जनार्दनात्। विष्णुपूजापरो नित्यं विष्णुक्षेत्रेषु संवसन् ॥

गोपीचन्दनफालेऽसौ तुलस्यैवार्चयद्धरिम्। उवास नियतं विप्रो विष्णुध्यानपरायणः ॥ ४ ॥

दशवर्षमिदं तस्य कृत्यं दृष्ट्वा जनार्दनः। मोक्षेच्छोराजुहावैनं पुरतोद्भूय(?)तं द्विजम् ॥ ५ ॥

विष्णुः —

औचथ्य मुनिशार्दूल तपस्यभिरतः सदा। वृणु कामं ददाम्येव विना ज्ञानं द्विजोत्तम ॥ ६ ॥

सूतः —

इति विष्णोर्गिरं श्रुत्वा विप्रः किञ्चिद्भयान्वितः। प्रणिपत्याह तं विष्णुं स्तुवन्नाराययेति तम् ॥

सुदर्शनः —

विष्णो जिष्णो नमस्तेऽस्तु शङ्खचक्रगदाधर। त्वत्पादनलिनं प्राप्तो ज्ञानायानर्हणः किमु ॥

किमन्यैर्धर्मकामार्थैर्नश्वरैरिह शङ्खभृत्। इत्युक्तं तद्वचः श्रुत्वा विष्णुः प्राह सुदर्शनम्।

विष्णुः —

सुदर्शन शृणुष्वैतन्मत्तो नान्यमना द्विज। वदामि ते हितं सत्यं मया प्राप्तं यथा तव ॥

सदर्चनेन ध्यानेन मोक्षेच्छा जायते नृणाम्। मोक्षदाता महादेवो ज्ञानविज्ञानदायकः ॥

तदर्चनेन संप्राप्तं मया पूर्वं सुदर्शनम्। सहस्रारं दैत्यहन्तृ साक्षात् त्र्यक्षप्रपूजया ॥ १२ ॥

तमाराधय यत्नेन भस्मधारणपूर्वकम्। अग्निरित्यादिभिर्मन्त्रैस्त्रिशायुषत्रिपुण्ड्रकैः ॥ १३ ॥

रुद्राक्षधारको नित्यं रुद्रपञ्चाक्षरादरः। शिवलिङ्गं बिल्वपत्रैः पूजयन् ज्ञानवान् भव ॥ १४ ॥

वसन् क्षेत्रे महेशस्य स्नाहि तीर्थे च शाङ्करे। अहं ब्रह्मादयो देवाः पूजयैव पिनाकिनः ॥ १५ ॥

बलिनः शिवलिङ्गस्य पूजया विप्रसत्तम। यस्य फालतलं मेऽद्य त्रिपुण्ड्रपरिचिन्हितम् ॥ १६ ॥

ब्रह्मेन्द्रदेवमुनिभिस्त्रिपुण्ड्रं भस्मना धृतम्। पश्य वक्षसि बाह्वोर्मे रुद्राक्षाणां स्रजं शुभाम् ॥

पञ्चाक्षरजपासक्तो रुद्राध्यायपरायणः। त्रिकालमर्चयामीशं बिल्वपत्रैरहं शिवम् ॥ १८ ॥

कमला विमला नित्यं कोमलैर्बिल्वपल्लवैः। पूजयत्यनिशं लिङ्गं तथा ब्रह्मादयः सुराः ॥ १९ ॥

मुनयो मनवोऽप्येवं तथान्ये द्विजसत्तमाः । नृपासुरास्तथा दैत्या बलिनः शिवपूजया ॥ २० ॥
ज्ञानं मोक्षस्तथा भाग्यं लभ्यते शङ्करार्चनात् । तस्मात् त्वमपि भक्त्यैव समाराधय शङ्करम् ॥
पशवो विष्णुविधयस्तथान्ये मुनयः सुराः । सर्वेषां पतिरीशानस्तत्प्रसादाद्विमुक्तिभाक् ॥ २२ ॥
प्रसादजनकं तस्य भस्मधारणमेव हि । प्रसादजनकं तस्य मुने रुद्राक्षधारणम् ॥ २३ ॥
प्रसादजनकस्तस्य रुद्राध्यायजपः सदा । प्रसादजनकस्तस्य पञ्चाक्षरजपो द्विज ॥ २४ ॥
प्रसादजनकं तस्य शिवलिङ्गप्रपूजनम् । प्रसादे शांभवे जाते भुक्तिमुक्ती करे स्थिते ॥ २५ ॥
तस्य भक्त्यैव सर्वेषां मोचनं भवपाशतः । तस्य प्रीतिकरं साक्षाद्बिल्वैर्लिङ्गस्य पूजनम् ॥ २६ ॥
तस्य प्रीतिकरं साक्षाच्छिवक्षेत्रेषु वर्तनम् । तस्य प्रीतिकरं साक्षात् शिवतीर्थनिषेवणम् ॥ २७ ॥

| | | | |
|---|---|---|---|
| ,, | भस्मरुद्राक्षधारणम् । | ,, | प्रदोषे शिवपूजनम् ॥ २८ ॥ |
| ,, | रुद्रपञ्चाक्षरावृतिः । | ,, | शिवभक्तजनार्चनम् ॥ २९ ॥ |
| ,, | सोमे सायन्तनार्चनम् । | ,, | तन्निर्माल्यैकभोजनम् ॥ ३० ॥ |
| ,, | अष्टमीष्वर्चनं निशि । | ,, | चतुर्दश्यर्चनं निशि ॥ ३१ ॥ |
| ,, | तन्नाम्नां स्मृतिरेव हि । एतावानेन धर्मो हि शम्भोः प्रियकरो महान् ॥ | | |

अन्यदभ्युदयं विप्र श्रुतिस्मृतिषु कीर्तितम् । धर्मो वर्णाश्रमप्रोक्तो मुनिभिः कथितो मुने ॥
अविमुक्ते विशेषेण शिवो नित्यं प्रकाशते । तस्मात् काशीति तत् प्रोक्तं यतो हीशः प्रकाशते ॥
तत्रैवामरणं तिष्ठेदिति जाबालिकी श्रुतिः । तत्र विश्वेश्वरे लिङ्गे नित्यं ब्रह्म प्रकाशते ॥ ३५ ॥
तत्रान्नपूर्णा सर्वेषां भुक्त्यन्नं संप्रयच्छति । तत्रास्ति मणिकर्णाख्यं मणिकुण्डं विनिर्मितम् ॥
ज्ञानोदयोऽपि तत्रास्ति सर्वेषां ज्ञानदायकः । तत्र याहि मया सार्धं तत्रैव वस वै मुने ॥ ३७ ॥
तत्रान्ते मोक्षदं ज्ञानं ददातीश्वर एव हि । इत्युक्त्वा तेन विप्रेण ययौ काशीं हरिः स्वयम् ॥
स्नात्वा तीर्थे चक्रसंज्ञे ज्ञानवाप्यां हरिर्द्विजः (?) । तं द्विजं स्नापयामास भस्मनापादमस्तकम् ॥
धृतत्रिपुण्ड्ररुद्राक्षं कृत्वा तं च सुदर्शनम् । पूजयंश्चाथ विश्वेशं पूजयामास च द्विजान् ॥ ४० ॥
बिल्वैर्गन्धाक्षतैर्दीपैर्नैवेद्यैश्च मनोहरैः । तुष्टाव प्रणिपत्यैवं सद्विजो मधुसूदनः ॥ ४१ ॥

सुदर्शनविष्णू —

भज भज भसितानलोज्ज्वलाक्षं भुजगाभोगभुजङ्गसङ्गहस्तम् ।
भवभीममहोग्ररुद्रमीड्यं भवभर्जकतर्जकं महैनसाम् ॥ ४२ ॥

वेदघोषभटखाटकावधृक् देहदाहदहनामल काल ।
जूटकोटिसुजटातटिदुद्यद्रागरञ्जितटिनीशशिमौले ॥ ४३ ॥

शंवराङ्कवरभूष पाहि मामम्बरान्तरचरस्फुटवाह ।
वारिजाद्यघनघोष शङ्कर त्राहि वारिजमवेक्ष्य महेश ॥ ४४ ॥

मदगजवरकृत्तिवास शंभो मधुमदनाक्षिसरोरुहार्च्यपाद ।
यममददमनान्धशिक्ष शंभो पुरहर पाहि दयाकटाक्षसारैः ॥ ४५ ॥

अपां पुष्पं मौलौ हिममथहरः फालनयनः
जटाजूटे गङ्गाऽम्बुजविकसनः सव्यनयनः ।
गरं कण्ठे यस्य त्रिभुवनगुरोः शंबरहर
मतङ्गोद्यत्कृत्तेर्भवहरणपादाब्जभजनम् ॥ ४६ ॥

श्रीबिल्वमूलशितिकण्ठमहेशलिङ्गं बिल्वाम्बुजोत्तमवरैः परिपूज्य भक्त्या ।
स्तम्बेरमाङ्गवदनोत्तमसङ्गभङ्ग राजद्विषाङ्गपरिसङ्गमहेशशाङ्गम् ॥ ४७ ॥

यो गौरीरमणार्चनोद्यतमतिर्भूयो भवेच्छांभवो
भक्तो जन्मपरंपरासु तु भवेन्मुक्तोऽथ मुक्त्यङ्गना-
कान्तस्वान्तनितान्तशान्तहृदये कार्तान्तवार्तोज्झितः ।
विष्णुब्रह्मसुरेन्द्ररञ्जितमुमाकान्तांघ्रिपङ्केरुह-
ध्यानानन्दनिमग्नसर्वहृदयः किंञ्चिन्न जानात्यपि ॥ ४८ ॥

कामारातिपदाम्बुजार्चनरतः पापानुतापाधिकव्यापारप्रवणप्रकीर्णमनसा पुण्यैरगण्यैरपि ।
नो दूयेत विशोषसन्ततिमहासारानुकारादरादाराग्राहकुमारमारसुभराघापातभीतैरपि ॥ ४९ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे विष्णूवध्यसंवादे शिवस्य ज्ञानदातृत्वनिरूपणं नाम
एकोनपञ्चाशोऽध्यायः ॥

## ॥ पञ्चाशोऽध्यायः ॥

स्कन्दः —

विष्णुस्तवान्ते विप्रोऽसौ सुदर्शनसमाह्वयः । स्नात्वाऽथ मणिकर्ण्यां स भस्मरुद्राक्षभूषणः ॥
सञ्जपन् शतरुद्रीयं पञ्चाक्षरपरायणः । संपाद्य बिल्वपत्राणि कमलान्यमलान्यपि ॥ २ ॥
गन्धाक्षतैर्धूपदीपैर्नैवेद्यैर्विविधैरपि । विष्णूपदिष्टमार्गेण नित्यमन्तर्गृहस्य हि ॥ ३ ॥
प्रदक्षिणं चकारासौ लिङ्गान्यभ्यर्चयंस्तथा । विश्वेश्वराविमुक्तेशौ वीरेशं च त्रिलोचनम् ॥ ४ ॥
कृत्तिवासं वृद्धकाले केदारं शूलटङ्ककम् । रत्नेशं भारभूतेशं चन्द्रेशं सिद्धकेश्वरम् ॥ ५ ॥
घण्टाकर्णेश्वरं चैव नारदेशं यमेश्वरम् । पुलस्तिपुलहेशं च विकर्णेशं फलेश्वरम् ॥ ६ ॥
कर्द्रेशमखण्डेशं केतुमालिं गभस्तिकम् । यमुनेशं वर्णकेशं भद्रेशं जेष्ठशङ्करम् ॥ ७ ॥
नन्दिकेशं च रामेशं करमर्देश्वरं तथा । आवर्देशं मतङ्गेशं वासुकीशं द्रुतीश्वरम् ॥ ८ ॥
सूर्येश्वमर्यमेशं च तूणीशं गालवेश्वरम् । कण्वकात्यायनेशं च चन्द्रचूडेश्वरं तथा ॥ ९ ॥
उदावर्तेश्वरं चैव तृणज्योतीश्वरं सदा । कङ्कणेशं तक्षणेशं स्कन्देशं तारकेश्वरम् ॥ १० ॥
जम्बुकेशं च ज्ञानेशं नन्दीशं गणपेश्वरम् । एतान्यन्तर्गृहे विप्रः पूजयन् परया मुदा ॥ ११ ॥
ढुण्ढ्यादिगणपांश्चैव भैरवं चापि नित्यशः । अन्नपूर्णामन्नदात्रीं साक्षाल्लोकैकमातरम् ॥ १२ ॥
दण्डपाणिं क्षेत्रपालं सम्यगभ्यर्च्य तस्थिवान् । तीर्थान्यन्यान्यपि मुनिर्मणिकर्ण्यादि सत्तम ॥
ज्ञानोदं सिद्धकूपं च वृद्धकूपं पिशाचकम् । ऋणमोचनतीर्थं च गर्गतीर्थं महत्तरम् ॥ १४ ॥
स्नात्वा सनियमं विप्रो नित्यं पञ्चनदे ह्रदे । किरणां धूतपापां च पञ्चगङ्गामपि द्विजः ॥ १५ ॥
गङ्गां मनोरमां तुङ्गां सर्वपापप्रणाशिनीम् । मुक्तिमण्टपमास्थाय स जपन् शतरुद्रियम् ॥ १६ ॥
अष्टोत्तरसहस्रं वै जपन् पञ्चाक्षरं द्विजः । पक्षे पक्षे तथा कुर्वन् पञ्चक्रोशप्रदक्षिणम् ॥ १७ ॥
अन्तर्गृहाद्बहिर्देशे चकारावसथं तदा । एवं संवसतस्तस्य कालो भूयानवर्तत ॥ १८ ॥
तत्र दृष्ट्वा तपोनिष्ठं सुदर्शनसमाह्वयम् । विष्णुस्तदा वै तं विप्रं समाहूय शिवार्चकम् ॥ १९ ॥
पुनः प्राह प्रसन्नेन चेतसा मुनिसत्तमम् ।

विष्णुः —

भोः सुदर्शनविप्रेन्द्र शिवार्चनपरायण । ज्ञानपात्रं भवानेव विश्वेशकृपयाऽधुना ॥ २० ॥
त्वया तपांसि तप्तानि इष्टा यज्ञास्त्वयैव हि । अधीताश्च त्वया वेदाः काश्यां वासो यतस्तव ॥

बहुभिर्जन्मभिर्येन कृतं क्षेत्रे महत्तपः । तस्यैव सिद्ध्यत्यमला काशीयं मुक्तिकाशिका ॥ २२ ॥
तव भाग्यस्य नान्तोऽस्ति मुने त्वं भाग्यवानसि । किञ्चैकं तत्र वक्ष्यामि हितमात्यन्तिकं शृणु ॥
विश्वेशकृपया तेऽद्य मुक्तिरन्ते भविष्यति । रुद्राक्षनामपुण्यं यत् नाम्नां साहस्रमुत्तमम् ॥ २४ ॥
उपदेक्ष्यामि ते विप्र नामसाहस्रमीशितुः । तेनार्चयेशं विश्वेशं बिल्वपत्रैर्मनोहरैः ॥ २५ ॥
वर्षमेकं निराहारो विश्वेशं पूजयन् सदा । संवत्सरान्ते मुक्तस्त्वं भविष्यति न संशयः ॥ २६ ॥
त्वद्देहापगमे मन्त्रं पञ्चाक्षरमनुत्तमम् । ददाति देवो विश्वेशस्तेन मुक्तो भविष्यति ॥ २७ ॥
शैवेभ्यः सन्नतीवेभ्यो ददातीमं महामनुम् ।

स्कन्दः —

इति विष्णुवचः श्रुत्वा प्रणम्याह हरिं तदा । सुदर्शनो यथाचेत्थं नाम्नां साहस्रमुत्तमम् ॥ २८ ॥
भगवन् दैत्यवृन्दघ्न विष्णो जिष्णो नमोऽस्तु ते । सहस्रनाम्नां यद्दिव्यं विश्वेशस्याशु तद्वद ॥
येन जप्तेन देवेशः पूजितो बिल्वपत्रकैः । ददाति मोक्षसाम्राज्यं देहान्ते तद्वदाशु मे ॥ ३० ॥
तदा विप्रवचः श्रुत्वा तस्मै चोपादिशत् स्वयम् । सहस्रनाम्नां देवस्य हिरण्यस्येत्यादि सत्तम ॥
तेन संपूज्य विश्वेशं वर्षमेकमतन्द्रितः । कोमलारक्तबिल्वैश्च स्तोत्रेणानेन तुष्टुवे ॥ ३२ ॥

सुदर्शनः —

आशीविषाङ्गपरिमण्डलकण्ठभाग राजत्सुसागरभवोग्रविषोरुशोभ ।
फालस्फुरज्ज्वलनदीप्तिविदीपिताशाशोकावकाश तपनाक्ष मृगाङ्कमौले ॥ ३३ ॥

क्रुद्धोडुजायापतिधृतार्धशरीरशोभ पाह्याशु शासितमखान्धकदक्षसत्रो ।
सुत्रामवज्रकरदण्डविखण्डितोरुपक्षाद्यघक्षितिधरोर्ध्वशयाव शंभो ॥ ३४ ॥

उत्फुल्लहल्लकलसत्करवीरमालाभ्राजत्सुकन्धरशरीर पिनाकपाणे ।
चञ्चत्सुचन्द्रकलिकोत्तमचारुमौलिं लिङ्गं कुलुञ्चपतिमम्बिकया समेतम् (?) ॥

छायाधवानुजलसच्छदनैः परिपूज्य भक्त्या मुकवेन स्वस्य च विराजितवंशकोट्या ।
सायं सङ्गवपुङ्गवोरुवहनं श्रीतुङ्गलिङ्गार्चकः शाङ्गः पातकसङ्गभङ्गचतुरश्वासङ्गनित्यान्तरः ॥ ३६ ॥

फालाक्षस्फुरदक्षिजस्फुरदुरुस्फुलिङ्गदग्धाङ्गका-
नङ्गोत्तुङ्गमतङ्गकृत्तिवसनं लिङ्गं भजे शाङ्करम् ।
अच्छाच्छागवहां सुरतामीक्षाशिनान्ते विभो
वृष्यं शाङ्करवाहनामनिरताः सोमं तथा वाजिनम् ॥ ३७ ॥

त्यक्त्वा जन्मविनाशनं त्विति मुहुस्ते जिह्वया सत्तमाः
ये शंभोः सकृदेव नामनिरताः शाक्ताः स्वतः पावनाः ॥ ३८ ॥

मृगाङ्कमौलिमीश्वरं मृगेन्द्रशत्रुजत्वचं वसानमिन्दुमप्रभं मृगाद्यबालहस्तकम् ।
भजे मृगेन्द्रसप्रभं[1] ... ... ॥ ३९ ॥

स्कन्दः —

एवं स्तुवन्तं विश्वेशं सुदर्शनमतन्द्रितम् । प्राहेत्थं शौरिमाभाष्य शंभोर्भक्तिविवर्धनम् ॥ ४० ॥

विष्णुः —

अत्रैवामरणं विप्र वस त्वं नियताशनः । नाम्नां सहस्रं प्रजपन् शतरुद्रीयमेव च ॥ ४१ ॥

अन्तर्गृहात् बहिः स्थित्वा पूजयाशु महेश्वरम् तवान्ते भूरिकरुणो मोक्षं दास्यत्यसंशयम् ॥

स प्रणम्याह विश्वेशं दृष्ट्वा प्राह सुदर्शनम् ।

धन्यस्त्वं लिङ्गेऽप्यनुदिनगलितस्वान्तरङ्गाघसङ्घः
पुंसां वर्याद्यभक्त्या यमनियमवरैर्विश्ववन्द्यं प्रभाते ।
दत्त्वा बिल्ववरं सदंबुजदलं किञ्चिज्जलं वा मुहुः
प्राप्नोतीश्वरपादपङ्कजमुमानाथाद्य मुक्तिप्रदम् ॥ ४३ ॥

को वा त्वत्सदृशो भवेद्गणपतिप्रेमैकलिङ्गार्चको
मुक्तानां प्रवरोऽर्ध्वकेशविलसच्छ्रीभक्तिबीजाङ्कुरैः ।
देवा वाप्यसुराः सुरा मुनिवरा भाग भुवः केवलं
वीरा वा करवीरपुष्पविलसन्मालाप्रदे नो समः ॥ ४४ ॥

वने वा राज्ये वाप्यगपतिसुतानायकगृहो स्फुरल्लिङ्गार्चायां नियममतभावेन मनसा ।
हरं भक्त्या साध्य त्रिभुवनतृणाडम्बरवरप्ररूढर्भोगैर्वा नहि खलु स सज्जेन भुवने ॥ ४५ ॥

न दानैर्योगैर्वा विधिविहितवर्णाश्रमभरैरपारैर्वेदान्तप्रतिवचनवाक्यानुसरणैः ।
न मन्येऽहं स्वान्ते भवभजनभावेन मनसा मुहुर्लिङ्गं श्राङ्गं भजति परमानन्दकुहरः ॥ ४६ ॥

शर्वं पर्वतनन्दिनीपतिमहानन्दाम्बुधेः पारगा रागत्यागहृदा विरागपरमा भस्माङ्करागादराः ।
मारापारशराभिघातरहिता घोरोरुधारारसैः पारावारमहाघसंसृतिभरं तीर्णाः शिवाभ्यर्चनात् ॥

---

१ इतःपरं मातृकासु श्लोकभागो नोपलभ्यते ।

मार्कण्डेयसुतं पुराऽन्तकमयाद्योऽरक्षदीशो हरस्तत्पादाम्बुजरागरञ्जितमना नाप्नोति किं वा फलम् ।
तं मृत्युञ्जयमञ्जसा प्रणमतामोजोजिमध्ये जयं [1]जेतारोऽपराजयो जनिजरारोगैर्विमुक्तिं लभेत ॥

भूनाथां भुवनाथं त्वघमतितिलकाकारमिल्लोऽन्यथन्यैः
धावन् भल्लूकपृष्ठे निशि किल समहाद्व्याघ्रभीत्या रुरोह ।
बिल्वं नल्वप्रमं तच्छदघनममकृत पातयामास मूले
निद्रातन्द्रोज्झितोऽसौ मृगगणकलने मूललिङ्गेऽथ शार्ङ्गे ॥ ४९ ॥

तेनाभूद्भगवान् गणोत्तमवरो भ्रक्षाघसङ्घस्तदा चण्डांशोस्तनयेन पूजितपदः सारूप्यमापेशितुः ।
गङ्गाचन्द्रकलाकपर्दविलसत्फालस्फुलिङ्गोज्ज्वलद्वालव्यङ्कुरागप्रसंगनमहाशूलाहि [2]टंकोद्यतः ॥

चैत्रे चित्रैः पातकैर्विप्रमुक्तो वैशाखे वै दुःखशाखाविमुक्तः ।
ज्येष्ठे श्रेष्ठो भवतैषाढमासि पुत्रप्राप्तिः श्रावणे श्रान्तिनाशः ॥ ५१ ॥

भाद्रे भद्रो भवते चाश्विने वै अश्वप्राप्तिः कार्तिके कीर्तिलाभः ।
मार्गे मुक्तेर्मार्गमेतल्लभेत पुष्ये पुण्यं माघके चाघनाशः ॥ ५२ ॥

फल्गु त्वंहो फाल्गुने मासि नश्येदीशार्चातो बिल्वपत्रैश्च लिङ्गे ।
एवं तत्तन्मासि पूज्येशलिङ्गं चित्तः पापैर्विप्रमुक्तो द्विजेन्द्रः ॥ ५३ ॥

दूर्वाङ्कुरैरभिनवैः शशिधामचूडलिङ्गार्चनेन परिशोषयदङ्कुराणि ।
संसारघोरतरूपकराणि सद्यो मुक्त्यङ्कुराणि परिवर्धयतीह धन्यः ॥ ५६ ॥

गोक्षीरेक्षुक्षौद्रखण्डाज्यदध्ना सन्नारेलैः पानसाम्राद्विसारैः ।
विश्वेशानं सत्सितारत्नतोयैर्गन्धोदैर्वा सिञ्च्य दोषैर्विमुक्तः ॥ ५७ ॥

लिङ्गं चन्दनलेपसङ्गतमुमाकान्तस्य पश्यन्ति ये ते संसारभुजङ्गमङ्गपतनातङ्काङ्कसङ्गोज्झिताः ।
व्यङ्गं सर्वसमर्चनं भगवतः साङ्गं भवेच्छाङ्करं गङ्गापाङ्गकृपाकटाक्षलहरी तस्मिंश्चिरं तिष्ठति ॥

मुरलिसरलिरागैर्मर्दलैस्तालशङ्खैः पटुपटहनिनादध्वान्तसन्धानघोषैः ।
दुन्दुभ्याघातवादैर्वरयुवतिमहानृत्तसंरंभरङ्गैः दर्शोऽप्यादर्शदर्शो भगवति गिरिजानायके मुक्तिहेतुः ॥

स्वच्छच्छत्रच्छवीनां विविधजितमहाच्छायया छत्रमैशं
शीर्षे विच्छिन्नपापो भवति भवहरः पूजकः शम्भुभक्त्या ।

---

१ जेतावेत्यपराजितो C  २ कण्ठोद्यतः C

षश्चन्द्राभकाण्डप्रविलसदमलस्वर्णरत्नाग्रभाभि-
दींप्यद्धामरकोटिभिः स्फुटपटघटितैश्चाकचक्यैः पताकाः ॥ ६० ॥

संपश्याङ्गणभूरुहोत्तमशिखासंलेढिनागगणं तारानाथकलाधरोरुसुमहालिङ्गौघसंसेवितम् ।
बिल्वानां कुलमेतदत्र सुमहापापौघसंहारकृद् वाराणां निखिलप्रमोदजनकं शम्भोः प्रियं केवलम् ॥

अन्नं पोत्रिमलायते धनरसं कौलेयमूत्रायते मंवेशो निगलायते मम सदानन्दो कन्दायते ।
शम्भो ते स्मरणान्तरायमरित प्राणः कृपाणायते ॥ ६२ ॥

कः कल्पद्रुमुपेक्ष्य चित्तफलदं तूलादिदानक्षयं बब्बूलं परिसेवते क्षुदधिको वातूलदानक्षमम् ।
तद्वच्छङ्करकिङ्करो विधिहरिब्रह्मेन्द्रचन्द्रानलान सेवेद्यो विधिवञ्चितः कलिबलप्राचुर्यतो मूढधीः ॥

सुवर्णाण्डोद्भूतस्तुतिगतिसमर्च्याण्डजवरप्रणादं त्वां कश्चिद्भजति भुवने भक्तिपरमः ।
महाचण्डोद्दण्डप्रकटितभुवं ताण्डवपरं विभुं सन्तं नित्यं भज भगणनाथामलजटम् ॥ ६४ ॥

अजगरकर विष्णुबाण शम्भो दुरितहरान्तकनाश पाहि मामनाथम् ।
भवदभयपदाब्जवर्यमेव मम चित्तसरस्तटान्नयातु चाद्य ॥ ६५ ॥

इत्थं विष्णुश्च काश्यां प्रमथपतिमगात् पूज्य विश्वेश्वरं तं क्षितिसुरवरवर्यं चानुशास्येत्थमिष्टम् ।
स च मुनिगणमध्ये प्राप्य मुक्तिं तथान्ते प्रमथपतिपदाब्जे लीनाहीनाङ्गसङ्गः ॥ ६६ ॥

सूतः —

इत्थं श्रुत्वा मुनीन्द्रोऽसौ जैगीषव्योऽब्रवद्विभुम् । प्रणिपत्य प्रहृष्टात्मा षष्ठांशं वै षडाननतः ॥

जैगीषव्यः —

मारमारकजानन्दवनमतेर्महिमा कथम् । नाम्नां सहस्रमेतच्च वद मे करुणानिधे ॥ ६८ ॥
क्षेत्राणां चाप्यथान्यानां महिमां वद सद्गुरो । शूरतारकसंहर्तस्त्वत्तो नान्यो गुरुर्मम ॥ ६९ ॥
तच्छ्रुत्वा तु मुनेर्वाक्यं स्कन्दः प्राहाथ तं मुनिम् ।

स्कन्दः —

आगामिन्यंशकेऽस्मिंस्तव हृदयमहानन्दसिन्धौ विधूत्थ-
प्राचुर्यप्रकटैः करोपममहासप्तमांशे विशेषे ।
नाम्नां चापि सहस्रकं भगवतः शम्भोः प्रियं केवलं
अस्यानन्दवनस्य चैव महिमा त्वं वै शृणुष्वादरात् ॥ ७० ॥

उग्रोंऽशः शशिशेखरेण कथितो वेदान्तसारात्मकः
   षष्ठः षण्मुखसत्तमाय स ददौ तद्ब्रह्मणे सोऽप्यदात् ।
पुत्रायात्मभवाय तद्भवहरं श्रुत्वा भवेद् ज्ञानवित्
   चोक्त्वा जन्मशतायुतार्जितमहापापैर्विमुक्तो भवेत् ॥ ७१ ॥

श्रुत्वांशमेतद् भवतापपापहं शिवास्पदज्ञानदमुत्तमं महत् ।
ध्यानेन विज्ञानदमात्मदर्शनं ददाति शम्भोः पदभक्तिभावतः ॥ ७२ ॥

सूतः —

अध्यायपादाध्ययनेऽपि विद्या बुद्धया हृदि ध्यायति बन्धमुक्त्यै ।
स्वाध्यायतान्ताय शमान्विताय दद्याद्दद्यान्न विभेद्यमेतत् ॥ ७३ ॥

इत्थं सूतवचोद्यतमहानन्दैकमोदप्रभा
   भास्वद्भास्करसप्रभा मुनिवराः संतुष्टुवुस्तं तदा ।
वेदोद्यद्वचनाशिषा प्रहृपिताः सूतं जयेत्युच्चरन्
   त्याहो(?) जग्मुरतीव हर्षितहृदा विश्वेश्वरं वीक्षितुम् ॥ ७४ ॥

इति श्रीशिवरहस्ये शङ्कराख्ये षष्ठांशे सुदर्शनस्य मुक्तिलाभवर्णनं अंशश्रवणफलनिरूपणं च नाम पञ्चाशोऽध्यायः ॥

शङ्कराख्यः षष्ठांशः समाप्तः ॥

---

मातृकाग्रन्थस्यान्ते एवं ग्रन्थस्वामिन उल्लेखो दृश्यते
"विजयाब्दे सिते पक्षे एकादश्यां मधौ विधौ
षष्ठांशोऽयं प्रलिखितो दादाख्येन शिवाय तु ॥

यो रुद्राक्षविभूतिभूषिततनुर्विप्रः सदा हस्तकं
   चासक्तं शिवपूजने हि तनुते ध्याने मनः शास्तकम् ।
दादाख्यः सुगृणन् शिवं च भटगोस्वामी जटामस्तकं
   तस्यैवामृतदायकं शिवरहस्याख्यं त्विदं पुस्तकम्" ॥